| कर्म. | प्र० | ब्रा० | क० |
|---|---|---|---|
| मृतकावसजनम् ... | ५ | ३ | १७ |
| मृताग्निहोत्रिप्रक्षेपः | ३ | १ | ५ |
| मेषमेषीनिर्माणम् ... | ४ | ३ | १५ |
| मेषमेषीप्रक्षेपः ... | ४ | ३ | १७ |
| मेषावदानम् ... ... | ४ | ३ | ३८ |
| मेषीप्रत्यञ्जनम् ... | ४ | ३ | ३८ |
| यजमानमन्त्रजपः ... | ५ | ३ | ११ |
| रुद्रावसदानम् ... | ५ | ३ | १८ |
| वरुणप्रघासेष्टिः ... | ४ | ३ | १ |
| वसिष्ठयज्ञः ... ... | ४ | १ | २ |
| विपरिहरणम् ... | ४ | ३ | ३६ |
| व्रीह्यवहननम् ... | ३ | ४ | ६ |
| वैश्वदेवदक्षिणा ... | ४ | २ | २२ |
| वैश्वदेवपर्व ... | ४ | २ | ७ |
| वैश्वदेवपर्व ... | ४ | ३ | १ |
| शमीपर्णावपनम् ... | ४ | ३ | १२ |
| शाकमेधपर्व ... ... | ४ | ४ | १ |
| शुनासीर्यदक्षिणा ... | ५ | ४ | ६ |
| शुनासीर्ययागः ... | ५ | ४ | २ |
| शुनाशीर्ययागः ... | ५ | ४ | ११ |

| कर्म. | प्र० | ब्रा० | क० |
|---|---|---|---|
| सर्पिरासेचनम् ... | ४ | ४ | ६ |
| समिदाधानम् ... | ३ | ३ | ८ |
| समिष्टयजुःप्रयोगः ... | ४ | ३ | ४६ |
| समिष्टयजुर्यजनम् ... | ४ | २ | २१ |
| सम्भरणम् ... ... | १ | १ | १ |
| स्तम्बयजुर्हरणम् ... | ५ | २ | १८ |
| सद्योर्वाहननम् ... | ५ | ३ | ११ |
| सान्तपनेष्टिः ... | ४ | ४ | ३ |
| सान्नाय्ययागः ... | ४ | १ | १५ |
| सामिधेन्यनुवचनम् ... | ५ | ३ | २१ |
| सारस्वतयागः ... | ४ | २ | ११ |
| सावित्रयागः ... | ४ | २ | १० |
| स्थानसंस्कारः ... | ३ | ४ | १३ |
| सुग्व्यूहनम् ... | ४ | ३ | ४२ |
| सुग्व्यूहनम् ... | ५ | २ | ४५ |
| सोमपायजनम् ... | ५ | २ | ४ |
| सौम्ययागः ... ... | ४ | २ | ६ |
| हविर्निर्वपणम् ... ... | १ | १ | ५ |
| हविर्यज्ञः ... ... | ४ | २ | २ |
| हविरासादनम् ... | ४ | ३ | १८ |
| हुतशिष्टप्राशनम् ... | ५ | २ | ४८ |
| हुतशेषप्राशनम् ... | ५ | २ | ४८ |
| हुतशेषस्याग्नौप्रक्षेपः | ५ | २ | ४८ |
| होतृप्रवेशनम् ... | ५ | २ | २३ |

## ॥ अथ सर्वव्यालोच्यवचनसूची ॥

"अक्षय्यं ह वै सुकृतं चातुर्मास्ययाजिनो भवति" ५. ४. १.
"अग्ने रेतो हिरण्यम्" २. १. २८.
"अथास्य शरीर मेवाग्निर्दहति ; तद्यथा पितुर्वा मातुर्वा जायेतैव मेषोऽग्नेरधिजायते ; शश्वद्ध वा एषः" २. २. ८.
"अन्नं वा आपः" १. १. ३.
"अयं वै यज्ञो योऽयं पवते" १. ४. २१.
"अयं वै वायुर्योऽयं पवते, एष वा इदं सर्वं प्रच्यावयति यदिदं किञ्च ; वर्षति, वृष्टादोषधयो जायन्ते ; ओषधीर्जग्ध्वापः पीत्वा तत एतदन्नरसोऽधि पयः सम्भवति ; एष हि वा एतज्जनयति, तस्माद् वायव्यं भवति" ५. ४. ७.
"असौ (मृगशिराः) अमुष्यार्द्दस्य शिर इत्याहुः" १. २. ८.

"आदित्यस्त्वेव सर्वे ऋतवः" २. १. ६.

"इन्द्रो वा एष पुरा वृत्रस्य वधात्, वृत्रं हत्वा यथा महाराजो विजिग्यान एवं महेन्द्रोऽभवत्" ५. १. ६.
"इन्द्रो वै यजमानः" १. २. ११.
"इयं वै पृथिवी पूषा" ५. १. ७.
"इयं वै पृथिव्यदितिः" १. ५. १६.

"उत्तरतो हि स्त्री पुमांस मुपशेते" ४. ३. १७.

"उत्तरा हि सप्तर्षय उद्यन्ति" १. २. ४.

"उपहूय प्राश्नन्ति। यावन्तो गृह्या हविरुच्छिष्टाशाः स्युस्तावन्तः प्राश्नीयुः, अथो अप्यृत्विजः प्राश्नीयुः, अथो अप्यन्ये ब्राह्मणाः प्राश्नीयुः, यदि बहुरोदनः स्यादथैतां कुम्भी मपिधाय निदधति" ४. ४. १६.

'उभये ह वा इद मग्रे सहासुर्देवाश्च मनुष्याश्च" ३. २. ४.

"ऋतवः पितरः" ३. ४. २४ ; ५. २. ४२.

"एता ह वै देवता योऽस्ति तस्मिन् वसन्ति, इन्द्रो यमो राजा नडो नैषिधः" २. ४. १, २.

"एते वै विश्वेदेवा रश्मयः। योऽथ परं भाः प्रजापतिर्वा स इन्द्रो वा" २. ३. ७.

"एष एव मृत्युर्य एष तपति ०—० अमुष्मिं ल्लोके पुनः पुनरेव प्रमारयति" ३. १. ७, ९.

"एष वै यज्ञो यदग्निः" १. ४. १९.

"कं वै प्रजापतिः" ४. ३. १३.

"कनीयांसो हि देवा मनुष्येभ्यः ०—० भूयांसो हि मनुष्या देवेभ्यः ०—० भूयांसो हि पशवो मनुष्येभ्यः ०—० कनीयांसो ह वा अस्य भार्या भवन्ति, भूयांसः पशवः" २. ४. १८.

"काल्वालीकृता हैव तर्हि पृथिव्यास, नौषधय आसुः, न वनस्पतयः" २. २. ३.

"छाययेव वा अयं पुरुषः" २. १. १०.

"तदग्निहोत्राच्छिष्टं ०—० नाब्राह्मणः पिबेत्" २. ३. ३९.

"तस्मादेतदृषिणाभ्यनूक्तम्— 'प्रजा ह तिस्रोऽत्याय मीयुरिति" ( ऋ० सं० ८. १०१. १४. ) ४. २. ४.

"तान् द्वयोर्मूतकयोरुपनह्य वेणुयष्ट्यां वा कुपे वोभयत आबध्योदङ् परेत्य यदि वृक्षं वा स्थाणुं वा वल्मीकं वा विन्देत, तस्मिन्नासजति ;— 'एतत् ते रुद्रावसं तेन परो मूजवतोऽतीहि' -इति" ५. ३. १७.

"तिर इव वै पितरो मनुष्येभ्यः" ३. ४. २१.

"देवाः सन्ति ०—० पितरश्चौषधयश्च सन्ति ०—० मनुष्याः सन्ति" २. ३. १९.

"द्यौर्बह्वी नक्षत्रैः" १. ४. २८.

"द्वयं वा इदं जीवनम्, मूलि चैवामूलञ्च" २. ३. १०.

"द्वया वै देवाः। अहैव देवाः, अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः ;०—० आहुतिभिरेव देवान् प्रीणाति, दक्षिणाभिर्मनुष्यदेवान्" १. ६. ६ ; ३. ५, १४.

"न श्वः श्व मुपासीत को हि मनुष्यस्य श्वो वेद" १. ३. ९.

"नो ह्यनाहिताग्नेर्व्रतचर्यास्ति" १. ४. ७.

"नौर्ह वा एषा स्वर्ग्या यदग्निहोत्रम्" ३. १. १५, १६.

"पतयो ह्येव स्त्रियै प्रतिष्ठा" ५. २. १४.

"पयसो वै प्रजाः सम्भवन्ति" ४. ३. ९.

"परमां गतिं गच्छति" ५. ५. ९.

"पुत्रासो यत्र पितरो भवन्ति ( ऋ० सं० १. ८९. ९. )" ३. १. ६.

"पूर्वाह्णो वै देवानाम्, मध्यन्दिनो मनुष्याणाम् अपराह्णः पितॄणाम्" ३. ४. ८.

"प्रजापतिं ०—० देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदंस्तानब्रवीद् यज्ञो वोऽन्न ममृतत्वं व ऊर्ग वः सूर्यो वो ज्योतिरिति" ३. ४. १.

"( प्रजापतिं ) पशव उपासीदन् तेभ्यः स्वैष मेव चकार यदैव यूयं कदा च लभध्वै यदि काले यद्यनाकालेऽथैवाश्नाथेति" ३. ४. ४.

"( प्रजापतिं ) पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदंस्तानब्रवीन् मासि मासि वोऽन्नं स्वधा वो मनोजवो वश्चन्द्रमा वो ज्योतिरिति" ३. ४. २.

"( प्रजापतिं ) मनुष्याः प्रावृता उपस्थं कृत्वोपासीदंस्तानब्रवीत् सायम्प्रातर्वोऽशनं प्रजा वो मृत्युर्वोऽग्निर्वो ज्योतिरिति" ३. ४. ३.

"( प्रजापतिं ) शश्वदप्यसुरा उपसेदुरित्याहुस्तेभ्यस्तमश्च मायाञ्च प्रददौ" ३. ४. ५.

"प्रथमदुग्ध मुष्णं भवति ; अग्नेर्हि रेतः" २. २. १५.

"मनो ह वै देवा मनुष्यस्याजानन्ति ३. ३. ११.

"माता धेनुर्मातेव वा इयं मनुष्यान् बिभर्त्ति" १. ५. २१.

"मेधो वै पयः, मेधस्तण्डुलाः, त मुभयं मेध मात्मन् धत्ते, तस्मात् क्षीरौदनो भवति ४. ४. ४.

"यत्रैतत् प्रतितरा मिव तिरश्चीवार्च्चिः संशाम्यतो भवति, तर्हि हैष भवति मित्रः" २. ४. १२.

"यत्रैतत् प्रथमं समिद्धो भवति, धूप्यत एव, तर्हि हैष भवति रुद्रः" २. ४. ९.

"यत्रैतत् प्रदीप्ततरो भवति, उच्चैर्धूमः परमया जूत्या बल्बलीति, तर्हि हैष भवतीन्द्रः" २. ४. ११.

"यत्रैतत् प्रदीप्तो भवति, तर्हि हैष भवति वरुणः" २. ४. १०.

"यत्रैतदङ्गाराश्चाकश्यन्त इव, तर्हि हैष भवति ब्रह्म" २. ४. १३.

"यथैवासौ सूर्य एवं (नक्षत्रम्)" १. २. १८.

"योषा वा आपः, वृषाग्निः" १. १. ४.

"वर्षा ह त्वेव सर्वेषा ऋतूनां रूपम्" २. १. ७, ८.

"वसन्तो ग्रीष्मो वर्षास्ते देवा ऋतवः" १. ३. १.

"वीर्य्यं वा अश्वः" १. ४. २४.

"शरद्धेमन्तः शिशिरस्ते पितरः (ऋतवः)" १. ३. १.

"शाखया वत्सानपाकृत्य पवित्रवति सन्दोह्य, तं चरुं श्रपयति, चरुरु ह्येव स यत्र क्व च तण्डुलानापयन्ति" ४. ४. ४.

"स उत्तरस्या मेव पयस्यायां मेषी मवदधाति, दक्षिणस्यां मेषम्" ४. ३. १७.

"स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त" १. ५. १४.

"स एष पुत्रः सन् पिता भवति" ३. १. ५.

"स पत्नी मुदानेष्यन् पृच्छति केन चरसीति; वरुण्यं वा एतत् स्त्री करोति, यदन्यस्य सत्यन्येन चरति" ४. ३. २०.

"सप्त च वै शतान्यशीतीना ऋचो विंशतिश्च" ३. १. १९.

"स यत्रोदङ्ङावर्त्तते देवेषु तर्हि भवति ०—० अथ यत्र दक्षिणावर्त्तते पितृषु तर्हि भवति" १. ३. ३.

"स यो हैवं विद्वान् सायम्प्रातराशी भवति, सर्वं हैवायुरेति" ३. ४. ६.

"सर्वतोमुखो वा असावादित्यः ०—० सर्वतोमुखोऽय मग्निः०—० अन्यतोमुखः पुरुषः" ५. ४. १४—१६.

"सर्वाणि ह वा अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते" १. २. ३.

"सायुज्यं सलोकतां जयति" ५. ५. ८.

"सोमो राजा देवाना मन्नं यच्चन्द्रमाः" ४. १. १५.

"स्वो वै मा महिमाहेति स स्वाहेति" २. २. ६.

"हिरण्यम् ०—० अग्नेर्हि रेतः" १. १. ५.

---

## ॥ ऋषिनामादिसूची ॥

| ऋषिनामादि. | प्र० | ब्रा० | क० |
|---|---|---|---|
| अग्रवान: ... ... | ३ | २ | १४ |
| अम्बिका ... ... | ५ | ३ | ८ |
| अरुण: ... ... | १ | ६ | २० |
| आरुणि: ... ... | २ | ३ | ३१ |
| आरुणि: ... ... | २ | ३ | ३४ |
| आसुरि: ... ... | १ | ४ | २७ |
| आसुरि: ... ... | २ | ३ | ८ |
| आसुरि: ... ... | ३ | ३ | २ |
| आसुरि: ... ... | ५ | २ | २५ |
| आसुरि: ... ... | ५ | २ | ३३ |
| आसुरि: ... ... | ५ | ४ | १७ |
| इन्द्र: ... ... ... | २ | ४ | १, २ |

| ऋषिनामादि. | प्र० | अ० | क० |
|---|---|---|---|
| उर्वारुकम् ... ... | ५ | ३ | १२ |
| ऋषयः ... ... | १ | ५ | १४ |
| ऋषयः ... ... | ३ | २ | २४ |
| ऋषिः ... ... ... | ४ | २ | ४ |
| एके ... ... ... | ५ | २ | ३३ |
| औपवेशिः ... ... | १ | ६ | २० |
| औशिजः ... ... | ३ | २ | ३५ |
| कक्षीवान् ... ... | ३ | २ | ३५ |
| कहोड़ः ... ... | ३ | ५ | १ |
| कुमार्यः ... ... | ५ | ३ | १३ |
| कुरवः ... ... | ४ | १ | ५ |
| कौषीतकिः ... | ३ | ५ | १ |
| चैलकिः ... ... | २ | ३ | ३४ |
| जीवलः ... ... | २ | ३ | ३४ |
| ज्ञातयः ... ... | १ | ६ | २० |
| तक्षा ... ... ... | २ | ३ | ३१ |
| दक्षः ... ... ... | ४ | १ | १, ६ |
| दाक्षायणाः ... | ४ | १ | ६ |

| ऋषिनामादि. | प्र० | अ० | क० |
|---|---|---|---|
| देवभागः ... ... | ४ | १ | ५ |
| नड़ः ... ... ... | २ | ४ | १, २ |
| नैषिधः ... ... | २ | ४ | १, २ |
| पाक्षिः ... ... | १ | ४ | २७ |
| पार्वतिः ... ... | ४ | १ | ६ |
| प्रतीदर्शः ... ... | ४ | १ | ३ |
| भाल्लवेयः ... ... | १ | ४ | ६ |
| भृगवः ... ... | ३ | २ | १४ |
| माधुकिः ... ... | १ | ४ | २७ |
| यमः ... ... ... | २ | ४ | १, २ |
| याज्ञवल्क्यः ... | २ | ३ | २१ |
| याज्ञवल्क्यः ... | ३ | ५ | २ |
| श्रौतर्षिः ... ... | ३ | १ | ५ |
| श्वैक्नः ... ... ... | ४ | १ | ३ |
| सहदेवः ... ... | ४ | १ | ४ |
| साञ्जयः ... ... | ४ | १ | ४ |
| सुप्ला ... ... ... | ४ | १ | ४ |
| सृञ्जयाः ... ... | ४ | १ | ४, ५ |

# ॥ सर्वसूची ॥



| | पृष्ठे | | पृष्ठे |
|---|---|---|---|
| अथ सम्पादकोक्तिः ... | अ, आ | अथ कण्डिकासूची ... | ३ |
| अथ मूलशुद्धिपत्रम् ... | क, ख | अथ विषयसूची ... | १५ |
| अथ प्रपाठकसूची ... | १ | अथ कर्मसूची ... | २४ |
| अथाध्यायसूची ... | १ | अथ सर्त्तव्यालोच्यवचनसूची | २६ |
| अथ ब्राह्मणसूची ... | २ | अथर्षिनामादिसूची ... | ३४ |

# शतपथब्राह्मणम्।



अथ

# द्वितीयकाण्डम्।

## ॥ अथ प्रथमः प्रपाठकः ॥

### ॥ प्रथमं ब्राह्मणम् ॥

॥ अपि वा प्रथमाध्याये प्रथमं ब्राह्मणम् ॥



॥ हरिः ॐ ॥

स यद्वा ऽइतश्चेतश्च सम्भरति। तत्सम्भाराणाᳪ सम्भारत्वं यत्र-यत्राग्नेर्न्यक्तं ततस्ततः सम्भरति तद्यशसेव त्वदेवैन मेतत् समर्द्धयति पशुभिरिव त्वन्मिथुनेनेव त्वत् सम्भरन् ॥ १ ॥

अथोल्लिखति। तद्यदेवास्यै पृथिव्या ऽअभिष्ठितं व्वाभिष्ठूतं* वा तदेवास्या ऽएतदुद्धन्त्यथ यज्ञियाया मेव पृथिव्या माधत्ते तस्माद्वा ऽउल्लिखति ॥ २ ॥

---

* 'वाभिष्ठ्यूतं'—इति घ। एवं सर्वत्र बोध्यम्।

अथाग्निरभ्युक्षति । एष वा अपाᳪ सम्भारो यद-ग्निरभ्युक्षति तद्यदपः सम्भरत्यन्नं वा ऽआपोऽन्नᳪ हि वा ऽआपस्तस्माद्यदेमं लोक माप आग*च्छन्त्यथेहान्नाद्यं जायते तदन्नाद्येनैवैन मेतत् समर्द्धयति ॥ ३ ॥

योषा वा ऽआपः। वृषाग्निर्म्मिथुनेनैवैन मेत-त्प्रजननेन समर्द्धयत्यग्निर्व्वा ऽइदᳪ सर्व्वं माप्त मग्नि-रेवैन मेतदाप्त्वाधत्ते तस्मादपः सम्भरति ॥ ४ ॥

अथ हिरण्यᳪ सम्भरति। अग्निर्ह वाऽअपोऽभि-दध्यौ मिथुन्याभिः स्या मिति ताः सम्बभूव तासु रेतः प्रासिञ्चत्तद्धिरण्य मभवत्तस्मादेतदग्निसङ्काश मग्ने-र्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि प्रासिञ्चत्तस्मादेनेन न धावयति न किञ्चन करोत्यथ यशो देवरेतसᳪ हि तद्यशसैवैन मेतत् समर्द्धयति सरेतस मेव कृत्स्न मग्नि माधत्ते तस्माद्धिरण्यᳪ सम्भरति ॥ ५ ॥

अथोषान्त्सम्भरति। असौ ह वै द्यौरस्यै पृथिव्या ऽएतान् पशून् प्रददौ तस्मात्पशव्य मूषर मित्याहुः पशवो ह्येवैते साक्षादेव तत् पशुभिरेवैन मेतत् समर्द्ध-यति तेऽमुत ऽआगता ऽअस्यां पृथिव्यां प्रतिष्ठितास्त

* 'आग'—इति क ।

मनयोर्द्यावापृथिव्यो रसं मन्यन्ते तदनयोरेवैनमेतद् द्यावापृथिव्यो रसेन समर्द्धयति तस्मादूषान्त्स-म्भरति ॥ ६ ॥

अथाखुकरीषꣳ सम्भरति । आखवो ह वा ऽअस्यै पृथिव्यै रसं व्विदुस्तस्मात् तेऽधोऽध ऽइमां पृथिवीं चरन्तः पीविष्ठा ऽअस्यै हि रसं व्विदुस्ते यत्र ते ऽस्यै पृथिव्यै रसं व्विदुस्तत उत्किरन्ति तदस्या* ऽएवैन मेतत् पृथिव्यै रसेन समर्द्धयति तस्मादाखुकरीषꣳ सम्भरति पुरीष्य ऽइति वै त माहुर्यः श्रियं गच्छति समानं वै पुरीषं च करीषं च तदेतस्यैवावरुद्ध्यै तस्मादाखु-करीषꣳ सम्भरति ॥ ७ ॥

अथ शर्कराः सम्भरति । देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे सा हेयं पृथिव्यलेलायद्यथा पुष्करपर्णमेवं ताꣳ ह स्म व्वातः संव्वहति सोपैव देवान् जगामोपासुरान्त्सा यत्र देवानुपजगाम ॥ ८ ॥

तद्धोचुः । हन्तेमां प्रतिष्ठां दृꣳहामहै तस्यां ध्रुवा-या मशिथिलाया मग्नी ऽआदधामहै ततोऽस्यै सपत्नान् न्निर्भक्ष्याम ऽइति ॥ ९ ॥

---

* 'तस्मादस्या'—इति ख ।

तद्यथा शङ्कुभिश्चर्म्म व्विहन्यात्। एव मिमां प्रतिष्ठाᳩ शर्क्कराभिः पर्य्यबृᳩहन्त सेयं ध्रुवाशिथिला प्रतिष्ठा तस्यां ध्रुवाया मशिथिलाया मग्नी ऽआदधत ततोऽस्यै सपत्नान् निरभजन् ॥ १० ॥

तथो ऽएवैष ऽएतत्। इमां प्रतिष्ठाᳩ शर्क्कराभिः परिबृᳩहति तस्यां ध्रुवाया मशिथिलाया मग्नी ऽआधत्ते ततोऽस्यै सपत्नान्निर्भजति तस्माच्छर्क्कराः सम्भरति ॥ ११ ॥

तान्वा ऽएतान्। पञ्च सम्भारान्त्सम्भरति पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्त्तवः संव्वत्सरस्य ॥ १२ ॥

तदाहुः। षडेवऽर्त्तवः संव्वत्सरस्येति न्यून मु तर्हि मिथुनं प्रजननं क्रियते न्यूनाद्वा ऽइमाः प्रजाः प्रजायन्ते तच्छ्रेयस मुत्तरावत् तस्मात् पञ्च भवन्ति यद्यु षडेव ऽर्त्तवः संव्वत्सरस्येत्यग्निरेवैतेषाᳩ षष्ठस्तथो ऽएवैतदन्यूनं भवति ॥ १३ ॥

तदाहुः। नैवैकञ्चन सम्भारᳩ सम्भरेदित्यस्यां वा ऽएते सर्व्वे पृथिव्यां भवन्ति स यदेवास्या माधत्ते तत् सर्व्वान्सम्भारानाप्नोति तस्मान्नैवैकञ्चन सम्भारᳩ सम्भरेदिति तदु समेव भरेद्यदहैवास्या माधत्ते तत्

सर्वान्त्सम्भारानाप्नोति यदु सम्भारैः सम्भृतैर्भवति तदु भवति तस्मादु स मेव भरेत् ॥ १४ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् [१.१.] ॥

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थाना मुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
आद्ये काण्डे प्रपञ्चेन पौर्णमासेष्टिरीरिता ।
सा सम्पूर्णोपदेशत्वादन्यासां प्रकृतिर्मता * ॥ ३ ॥
पवमानेष्ट्यादिकानां द्वितीये त्वग्निसिद्धये ।
आधानं पवमानेष्टिरग्निहोत्र मुपस्थितिः ॥
चातुर्मास्यादिकः सर्वो हविर्यज्ञोऽत्र वर्ण्यते ॥ ४ ॥

---

* अथ यत्र सर्वं कर्त्तव्यं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते, सा प्रकृतिः। यत्र विशेषरूप मेव कर्त्तव्यं श्रुत्योपदिश्यते इतरत् सर्वं प्रकृतेरतिदिश्यते, सा विकृतिः। प्रकृतिश्च द्विविधा; मूलप्रकृतिरवान्तरप्रकृतिश्चेतिभेदात्। सर्वात्मना कर्मान्तरनिरपेक्षा मूलप्रकृतिः। कतिपयेष्वङ्गेषु कर्मान्तरस्यापेक्षते स्वयञ्च कैश्चित् कर्मभिरपेक्षणीया भवति, सेय मवान्तरप्रकृतिः। सर्वञ्चेदं मीमांसायाः सप्तमाष्टमाध्यायाभ्यां विचार्य निरूपितम्। तथाच न्यायमालाया मष्टमाध्यायस्य प्रथमपादीयतृतीयाधिकरणद्वितीयवर्णके इष्ट्यग्निहोत्रसोमाना मेव सर्वयागमूलप्रकृतित्वं निर्णीतम्।

तत्र तावत् सर्वेष्टिप्रकृतित्वेन प्राक् प्रतिपादिताया दर्शपूर्णमासेष्टेः, विधास्यमानाना मग्निहोत्रादिकर्मणां च त्रेताग्निसाध्यत्वात् * तद्धेतुभूत माधानं प्रतिपाद्यते। तत्र चोदकहिरण्यादिसम्भाराणां पञ्चानां † सम्भरणं विधित्सुः सम्भारनामनिर्वचनं करोति—"स यद्' इति। 'इतश्च' अस्माद् वक्ष्यमाणादुदकहिरण्यादिद्रव्यजातात् 'सः' अध्वर्युस्तदेकदेश माहृत्य 'यद्' यस्मादेकस्थाने 'सम्भरति' समूहीकरोति, 'तत्' तस्मात् सम्भ्रियन्त इति सम्भाराः, इति व्युत्पत्त्या तेषां 'सम्भार'-नाम सम्पन्न मित्यर्थः। "इतश्चेतश्चेति। "नित्यवीप्सयोः"—इति ‡ द्विर्वचनम्।

एतदेव विशदयन् सम्भरणं विक्रियते— "यत्र-यत्रेति। यस्मिन् यस्मिन् पदार्थे 'अग्नेः' सम्बन्धि तेजो 'न्यक्तं' निलीनं भवति, तस्मात् सर्वस्मात् अपि सम्भरणं कार्य मित्यर्थः॥

एतत् सम्भरणीयद्रव्यविशेषोपजीवनेन प्रशंसति— "तद्यशसैवेति। सम्भरतीत्युपरिष्टात्सर्वशेषतया श्रुतत्वात् त्रिष्वपि वाक्येषु त्वदित्यनन्तरं सम्बध्यते। त्वच्छब्दश्च एकशब्दपर्यायः; "उत त्वः पश्यन्"—इत्यादौ § तथा दर्शनात्। "अप्येकः पश्यन् न पश्यति वात मिति यास्कः ¶। 'तत्' तत्र 'तत्' एकं हिरण्याख्यं

---

* "दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः। अग्नित्रय मिदं त्रेता"—इति अ० को० २, ७, २०।

† १ उदकम्, २ हिरण्यम्, ३ ऊषाः ( पशवः ), ४ आखुकरीषम् ( आखुपुरीषम् ), ५ शर्कराः ( कङ्करिति ख्याताः )।

‡ पा० सू० ८, १, ४। § ऋ० सं० १०, ७१, ४।

¶ निरु० १, ६, ३।

वस्तु 'सम्भरन्' 'एनम्' अग्निम् एतेन सम्भरणेन 'यशसैव समर्द्धयति'। हिरण्यस्य यशोरूपत्व मग्रे वक्ष्यते *।

एव मुत्तरवाक्ययोरपि योजना। तत्र त्वदितिपदाभ्यामुषोदकद्रव्यौ विवक्षितौ। तयोश्च पशुमिथुनरूपत्वे † उपरिष्टात् समाम्नास्येते ‡॥ १॥

तस्य च हिरण्यादिसम्भारस्य निवपन मुल्लेखनाभ्युक्षणसंस्कृतेष्वेव गार्हपत्याद्यायतनेषु कार्य मित्यभिप्रेत्य प्रथम मुल्लेखनं विधाय प्रशंसति— "अथोल्लिखतीति। 'अस्यै पृथिव्यै'-इति षष्ठ्यर्थे चतुर्थी §। 'अस्याः पृथिव्याः' सम्बन्धि, यत् 'अभिष्ठितम्' उपर्यवस्थानेन पादस्पर्शजनितम्, 'अभिष्ठ्यूतम्' तदुपरि निष्ठीवनादिजनितञ्चेत्यर्थः। 'वा'-शब्दौ चार्थौ। "यज्ञियाया मिति। यज्ञार्हाया मित्यर्थः॥ २॥

उल्लिखिताना मग्न्यायतनाना मभ्युक्षणं विधत्ते—"अथेति। एतदभितः सर्वतो यदभ्युक्षणम्, 'एष वा अपां सम्भारः'; न तु हिरण्यादिवत् पृथगुपादाय तासां निवपनं कार्य मित्यर्थः। "अन्नं वा इत्यादि। निगदसिद्धम्॥ ३॥

एव मन्नाद्यहेतुत्वेनाभ्युक्षणं प्रशस्य मिथुनरूपेण प्रशंसति— "योषा वा इति। अपां स्त्रीलिङ्गत्वादग्नेश्च पुंलिङ्गत्वादुभयमिलितं सदेकं मिथुनम्, तच्च पुत्रपौत्रादिप्रजननहेतुरिति

---

* 'अथ यशः'—इत्यादि द्रष्टव्यम् (५ क०)।

† यदि च श्रुतौ मिथुनस्याग्रे विधानम्, पशूनां तत उत्तरम्; तथापि "अल्पाच्तरम् (पा० सू० २, २, ३४.)—इतिशासनात्पशुशब्दस्येह द्वन्द्वनिमित्तः पूर्वनिपातो बोध्यः।

‡ इहैवानुपदं चतुर्थषष्ठकण्डिकयोर्द्रष्टव्यौ। § पा० २, ३, ६१ सू० वा०।

'एनम्' अग्निं 'समर्धयति' एतेन 'मिथुनेन'। त्वदिति प्रागुक्तं तद्विवृतं भवति।

एवं लिङ्गोपजीवनेन प्रशस्य अप्शब्दप्रतिपादितार्थपर्यालोचनयापि प्रशंसति— "अद्भिर्वा इति। "आपो वा इद मग्रे सलिल मासीत्"—इति श्रुतिः *। सर्वम् 'इदम्' जगत् 'अद्भिः' खलु 'आप्तम्' अत आपनशीलाभिस्ताभिरद्भिः 'एनम्' अग्निं प्राप्य 'आधत्ते' इत्यर्थः। यस्मादेवं तस्मात् सम्भारनिवपनसमयेऽभ्युक्षणार्थं कस्मिंश्चित् पात्रे अपः सम्भरेदिति निगमयति— "तस्मादिति ॥ ४ ॥

हिरण्यस्य सम्भरणं विधत्ते—"अथ हिरण्य मिति। तस्य हिरण्यस्याग्निरेतस्त्वं प्रतिपादयति— "अग्निर्ह वा इत्यादिना। 'अभिदध्यौ' अभिध्यातवानित्यर्थः। "ध्यै चिन्तायाम् †"—इत्यस्माल्लिटि "आत औ णलः"—इत्यौत्वम् ‡। अभिध्यानप्रकार माह— "मिथुन्याभिरिति। 'आभिः' अद्भिः अभ्युक्षणाद्भिः स्त्रीभिः 'मिथुनीस्याम्' प्रयोगमिथुनं तत्संयोगान्मिथुनं भवानीत्यर्थः। मिथुनशब्दादभूततद्भावे च्विः §। "तस्मादेतदिति। यस्मादग्निवीर्यं हिरण्यात्मना परिणतम्, 'तस्मात्' एतत् हिरण्यम् 'अग्निसङ्काशम्' अग्नेः सदृश मेव वर्णेन उपलभ्यते। यस्माच्चाप्सु निषिक्तम्, 'तस्मात्' तत् हिरण्यम् 'अप्सु' 'विन्दन्ति' लभन्ते इत्यर्थः। "तस्मादेनेनेति। यस्मादाग्नेयं हिरण्यम् 'तस्मादेनेन' दन्तान् 'न धावयेत्'। तथा यदन्यत् किमपि हीनं कर्म, तदपि तेन न कुर्यादित्यर्थः।

---

* तै० ब्रा० १.१.३.५। † भ्वा० प० ६३३ धा०।

‡ पा० सू० ७.१.३४। § पा० ५.४.५० सू० २ वा०।

"अथ यश इति। 'अथ'-शब्दो वाक्यालङ्कारे। यस्मात्तद्धिरण्यं 'देवरेतसं' देवस्याग्नेर्वीर्यम्, तस्माद् यशोरूपम्। देवरेतस मिति "अनसन्तात्"-इत्यकारः समासान्तः *। तथाच हिरण्यसम्भरणेन 'यशसैव' 'एनम्' अग्निं समृद्धं करोति। एतेन "यशसैव त्वदिति प्रागुक्तं † व्याख्यातं भवति। "सरेतस मेवेति। हिरण्यस्य सम्भरणाभावे हि रेतसोऽन्यत्र स्थितत्वात् तद्रहित आहितोऽग्नि-रकृत्स्न एव भवति; तत्सम्भरणे तु सरेतसः सः ॥ ५ ॥

"अथोषानिति। ऊषाणां पशुरूपत्वं प्रतिपादयन् तत् समृद्धिहेतुत्वेन स्तौति—"असौ ह वा इति। यस्मात् 'पृथिव्यै' द्युलोकेन इमे पशवो दत्ताः, 'तस्मात्' तत्सम्बन्धि 'ऊषरम्' ऊषयुक्तं स्थानं 'पशव्यम्' पशुभ्यो हितम् 'इति' ब्रह्मवादिनः 'आहुः'। 'पशवो हि' तादृशं स्थान मासाद्य लिहन्ति; अतः पशुहितत्वात् पश्वात्मकाः 'एवैते' ऊषाः। "ऊषर मिति। "ऊषसुषिमुष्कमधो रः"-इति ‡ मत्वर्थीयो रः। स्पष्ट मन्यत्। द्यावापृथिव्यो रसत्वेनैतान् प्रशंसति—"तेऽमुत इति। 'अमुतः' अमुष्माद् द्युलोकात् 'आगताः', 'अस्यां पृथिव्यां प्रतिष्ठिताः' च; अतः पश्वात्मकस्य ऊषद्रव्यस्य द्यावापृथिवीरसत्वम्। किं मतः इत्याह— "तदनयोरिति ॥ ६ ॥

द्रव्यान्तरस्य सम्भरणं विधत्ते — "अथाखुकरीष मिति। (आखुभिः खननेन विलात् बहिर्नीताः पांशव आखुकरीषम्)¶। "आखवो हेति। यस्मात् 'आखवः' पृथिवीरसजाताः,

---

* पा० सू० ५, ४, १०३।

† १ पृ० १२पं०, ७ पृ० * इति च द्रष्टव्यम्। ‡ पा० सू० ५, २, १०७।

¶ बन्धन्यन्तर्गतग्रन्थोऽयं च-पुस्तकमात्रे विद्यते।

'तस्मात्' एव पृथिवीमध्ये 'अर्वाऽधः' खनन्तः, पृथिव्या अन्तरधस्तात् समीपे 'चरन्तः' तद्रसास्वादनसम्बन्धिनि 'यत्र' यत्स्थाने 'रसं' 'विदुः' जानन्ति, तत् स्थानं गत्वा 'रसम्' उपजीव्य पांसून् बहिः 'उत्किरन्ति' उत्क्षिपन्ति। "कॄ विक्षेपे"—इति * धातुः। अत आखूत्करस्य पृथिवीरसत्वात् तेनैव 'एनम्' अग्निं समृद्धं करोति। प्रकारान्तरेण स्तौति—"पुरीष्य इतीति। 'यः' खलु 'श्रियं' सम्पदं 'गच्छति', 'तं पुरीष्य इति' लोका वर्णयन्ति। तच्चैवं पुरीषस्यैव श्रीप्राप्ति-हेतुता, करीषस्य कि मायात मित्यत आह— "समान मिति। पुरीषकरीषशब्दावत्र समानार्थावित्यर्थः। अतः करीषसम्बन्धा-दग्निः श्रियं प्राप्नोति। तादृशस्याग्नेरवरोधाय करीषसम्भरणं कार्य मित्यर्थः ॥ ७ ॥

शर्कराणां सम्भरणं विधत्ते—"अथ शर्करा इति। मृन्मिश्रिताः सूक्ष्मपाषाणाः शर्कराः। तेषा मधिश्रितानां दार्ढ्यहेतुत्व मितिहासेन दर्शयति—"देवाश्च वा इति। देवासुरा उभये स्पर्द्धाञ्चक्रिरे। देवासुरेषु युद्धाय कृतोद्यमेषु तद्भयात् 'पृथिवी अलेलायद्' चाञ्चल्यं प्राप्नोति। तत्र दृष्टान्त माह—"यथेति। 'यथा' जलस्योपरि 'पुष्करपर्णम्' इतस्ततः चञ्चलं भवति, 'एवम्' पृथिव्यपि इतस्ततः कम्पिता। 'तां' तदवस्था मापन्नां पृथिवीं 'वातः' वायुः पुष्करपर्णवदेव 'संवहति स्म'। यथा दारुमयीं (नावं) कश्चित् परपारं नयति, स्थानात् स्थानान्तरं प्रापयति। 'सा' त्वेवं कम्पमाना पृथिवी उभय-विधानपि तान् 'उपाजगाम' ॥ ८ ॥

---

* तु० प० १३६ धा०।

यदा च सा देवानप्राप्नोत्, तदा तत्कृतं परिहारं दर्शयति — "तद्वोचुरिति। 'प्रतिष्ठां' प्रतिष्ठितां 'दृंहामहै' दृढ़ीकरवामहै। 'ध्रुवायां' निश्चलायाम्, 'अशिथिलायां' दृढ़ायाम्। वाक्यार्थः स्पष्टः। 'ततः' तस्मात् अग्न्याधानात् 'अस्यै' अस्याः पृथिव्याः सकाशात् शत्रुभूतानसुरान् 'निर्भक्ष्यामः' निर्भक्तान् भागरहितान् कुर्यामित्यर्थः। इत्थं प्रतिज्ञायथाः ॥ ९ ॥

प्रतिज्ञातैः कृतं दर्शयति— "तद्यथेति। 'यथा' आर्द्रं 'चर्म' भूमौ प्रसार्य 'शङ्कुभिः' परितो 'विहन्यात्', 'एवं' 'प्रतिष्ठां' सर्वप्राण्यास्पदभूताम् 'इमां' पृथिवीं शर्कराभिः 'पर्यबृंहन्त' परितः शर्करास्थापनेन दृढीकृतवन्तः। निगदसिद्ध मन्यद् ॥ १० ॥

एवं पुरावृत्त मुदाहृत्यैतद्दृष्टान्तेन प्रकृत मनुसन्धत्ते — "तथो एवेति। उक्तार्थ मेतत् ॥ ११ ॥

विहितसम्भरण मनूद्य तत्सङ्ख्योपजीवनेन प्रशंसति— "तान् वा एतानिति। 'तान्' पूर्वोक्तान् 'पञ्च सम्भारान्' 'सम्भरति'। उदकहिरण्योषाखुकरीषशर्कराः पञ्च सम्भाराः। "पाङ्क्तो यज्ञ इति। पञ्चपदा पङ्क्तिः *; 'यज्ञः' अपि धानाकरम्भादिपञ्चहविष्क इति † पञ्चसङ्ख्यायोगात् 'पाङ्क्तः'। अस्थिमज्जेतिपञ्चधातुमयत्वात् 'पशुः' अपि 'पाङ्क्तः' ‡। संवत्सरसम्बन्धिनः 'ऋतवः' वसन्ताद्या अपि पञ्चसङ्ख्याकाः। हेमन्तशिशिरयोः समासाभिप्राय मेतत्। तथा चैतरेयकम्— "हेमन्तशिशिरयोः समासेन"–इति ¶ ॥ १२ ॥

---

* ऐ० ब्रा० ६, ४, ४ ; ५, ४, २।

† "धानाः, करम्भः, परिवापः पुरोडाशः, पयस्येति" ऐ० ब्रा० २, ३, ६।

‡ ऐ० ब्रा० ६, ५, ३। ¶ ऐ० ब्रा० १, १, १।

तदेतत् पञ्चत्वं लोकप्रसिद्धिविरुद्ध मित्याक्षिपति— "तदाहु-रिति। हेमन्तशिशिरौ हि पृथक्त्वेन लोके प्रसिद्धौ; अतस्तयो-रैक्यं न युक्त मिति भावः। परिहरति—"न्यून मिति। 'तर्हि' तथा सति ऋतुषट्के मिथुनत्रयसम्पत्तिः; पञ्चके तु तन्मिथुनत्रय मेकेन 'न्यूनं' भवति, तच्च प्रजननसाधनम् *। अत्र लोक-प्रसिद्धि माह— "न्यूनादिति। स्त्रीपुंसयोर्वीर्यस्य परस्परन्यूनत्वे सति तस्मात् 'न्यूनात्' मिथुनात् स्त्रीपुंसलक्षणानि अपत्यानि 'जायन्ते'। यस्मादेवं 'तस्मात्' पञ्चसम्भारलक्षणेन यत् मिथुनस्य न्यूनत्वम्, 'तत्' 'श्वःश्रेयसम्', 'श्वः' परदिवसे श्रेयसो जनकम्। "श्वसो वसीयःश्रेयसः"–इत्यच् समासान्तः †। तथा 'उत्तरा-वत्', 'उत्तरा' आगामिनी अभिवृद्धिः, तयोपेत मित्यर्थः। एव मृतूनां षट्केऽपि सम्भाराणां पञ्चसङ्ख्याकत्वं मुपपाद्याथापि न्यूनत्वं नाम कश्चित् नेष्ट इत्याशङ्क्य ‡ परिहरति—"यद्यु इति। यदि षड्तुत्वं संवत्सरस्य सङ्ख्यास्ति, तर्हि एतेषां सम्भाराणा माधीयमानः 'अग्निरेव' 'षष्ठः' षट्सङ्ख्यापूरकः॥ १३॥

असम्भार पक्ष माह— "तदाहुरिति। "एकञ्चनेति। एक मपीत्यर्थः। अत्रोपपत्ति माह— "अस्या मिति। आरोपित सर्वसम्भारभूतायां पृथिव्या माधानादेव तत्कार्यप्राप्तेर्न पृथक् सम्भारापेक्षेत्यर्थः। सम्भरणपक्ष मेव निगमयति— "तदु स मेवेति। "यदु सम्भारैरिति। 'यत्' खल्वाधाने सम्भृतैः 'सम्भारैः' निष्पन्नं भवति, 'तत्' खल्वाधानं भवति; सम्भारविरहे तु

---

* 'तच्चाप्रजननसाधनम्"—इति च।

† पा० सू० ५,४,८०।

‡ 'कश्चिन्नन्वेतत्याशङ्का'– इति च।

तदाधान मेव न भवतीति कुतस्तस्य पृथिवीसम्बन्धवशात् सम्भरणप्राप्तिरित्यर्थः ॥ १४ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे प्रथमाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम्. )

कृत्तिकास्वग्नी ऽआदधीत। एता वा ऽअग्निनक्षत्रं यत्कृत्तिकास्तद्दै सलोम योऽग्निनक्षत्रेऽग्नी आदधातै तस्मात् कृत्तिकास्वादधीत * ॥ १ ॥

एकं द्वे त्रीणि। चत्वारीति वा ऽअन्यानि नक्षत्राण्यथैता एव भूयिष्ठा यत् कृत्तिकास्तद्भूमान मेवैतदुपैति तस्मात् कृत्तिकास्वादधीत ॥ २ ॥

एता ह वै प्राच्यै दिशो न च्यवन्ते। सर्व्वाणि ह वा ऽअन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते तत् प्राच्या मेवास्यैतद्दिश्याहितौ भवतस्तस्मात् कृत्तिकास्वादधीत † ॥ ३ ॥

अथ यस्मान्न कृत्तिकास्वादधीत। ऋक्षाणाᳪ ‡

---

* 'दधीत'—इति ग, घ, ङ। † 'दधीत'—'इति ग, घ, ङ।
‡ 'ऽर्क्षाणां'— इति ग, घ, ङ।

ह वा ऽएता अग्रे पत्न्य आसुः सप्तऽर्षीनु ह स्म वै पुराऽर्क्षा इत्याचक्षते ता मिथुनेन व्यार्ध्यन्तामी ह्युत्तराहि सप्तऽर्षय उद्यन्ति पुर एता अश मिव वै तद्यो मिथुनेन व्यृद्धः स नेन् मिथुनेन व्यृद्ध्या ऽइति तस्मान्न कृत्तिकास्वादधीत ॥ ४ ॥

तद्वेव दधीत । अग्निर्व्वा ऽएतासां मिथुन मग्नि-नैता मिथुनेन समृद्धास्तस्मादेव दधीत ॥ ५ ॥

रोहिण्या मग्नी ऽआदधीत । रोहिण्याꣳ ह वै प्रजापतिः प्रजाकामो*ऽग्नी ऽआदधे स प्रजा असृजत ता अस्य प्रजाः सृष्टा एकरूपा उपस्तब्धास्तस्थू रोहिण्य इवैवं तद्वै रोहिण्यै रोहिणीत्वं बहुर्हैव प्रजया पशुभिर्भवति य एवं विद्वान् रोहिण्या माधत्ते ॥ ६ ॥

रोहिण्या मु ह वै पशवः । अग्नी ऽआदधिरे मनुष्याणां कामꣳ रोहेमेति ते मनुष्याणां काम मरोहन् य मु हैव तत् पशवो मनुष्येषु काम मरोहँस्त मु हैव पशुषु कामꣳ रोहति य एवं विद्वान् रोहिण्या माधत्ते ॥ ७ ॥

मृगशीर्षेऽग्नी ऽआदधीत । एतद्वै प्रजापतेः

* 'प्रजाकामो,— इति ग, घ ।

शिरो यन् मृगशीर्षꣳ श्रीर्व्वै शिरः श्रीर्हि वै शिर-
स्तस्माद्योऽर्द्धस्य श्रेष्ठो भवत्यसावमुष्यार्द्धस्य शिर
इत्याहुः श्रियꣳ ह गच्छति य एवं विद्वान् मृगशीर्ष
ऽआधत्ते ॥ ८ ॥

अथ यस्मान्न मृगशीर्ष ऽआदधीत । प्रजापतेर्वा
एतच्छरीरं यत्र वा ऽएनं तदविध्यंस्तदिषुणा त्रिकाण्डे-
नेत्याहुः स एतच्छरीर मजहाद्वास्तु वै शरीर मय-
ज्ञियं निर्व्वीर्यं तस्मान्न मृगशीर्ष ऽआदधीत ॥ ९ ॥

तद्वेव दधीत । न वा ऽएतस्य देवस्य वास्तु
नायज्ञियं न शरीर मस्ति यत् प्रजापतेस्तस्मादेव
दधीत पुनर्वस्वोः पुनराधेय मादधीतेति ॥ १० ॥

फल्गुनीष्वग्नी ऽआदधीत । एता वा ऽइन्द्र-
नक्षत्रं यत् फल्गुन्योऽप्यस्य प्रतिनाम्न्योऽर्जुनो ह वै
नामेन्द्रो यदस्य गुह्य नामार्जुन्यो वै नामैतास्ता
एतत् परोऽक्ष माचक्षते फल्गुन्य इति को ह्येतस्या-
र्हति गुह्यं नाम ग्रहीतु मिन्द्रो वै यजमानस्तत्स्व ऽएवै-
तन्नक्षत्रेऽग्नी आधत्त ऽइन्द्रो यज्ञस्य देवतैतेनो हास्यै-
तत्सेन्द्र मग्न्याधेयं भवति पूर्वयोरादधीत पुरस्तात्
क्रतुर्हैवास्मै भवत्युत्तरयोरादधीत श्वःश्रेयसꣳ हैवा-
स्मा ऽउत्तरावद् भवति ॥ ११ ॥

हस्तेऽग्नी ऽआदधीत। य इच्छेत्प्र मे दीये-तेति तद्वा ऽअनुष्ठ्या यद्धस्तेन प्रदीयते प्र हैवास्मै दीयते ॥ १२ ॥

चित्रायामग्नी ऽआदधीत। देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे त ऽउभय ऽएवामुं लोकꣳ समारुरुचाञ्चक्रुर्दिवमेव ततोऽसुरा रौहिण मित्यग्निं चिक्यिरेऽनेनामुं लोकꣳ समारोक्ष्याम इति ॥ १३ ॥

इन्द्रो ह वा ऽईक्षाञ्चक्रे। इमं चेद्वाऽइमे चिन्वते तत एव नोऽभिभवन्तीति स ब्राह्मणो ब्रुवाण एकेष्टकां प्रबध्येयाय* ॥ १४ ॥

स होवाच। हन्ताह मिमामप्युपदधा ऽइति तथेति तामुपाधत्त तेषा मल्पकादेवाग्निरसञ्चित आस ॥ १५ ॥

अथ होवाच। अन्वा ऽअहं तां दास्ये या ममेहेति तामभिपद्या बवर्ह† तस्यामावृढायामग्नि-र्व्यवशशादाग्नेर्व्यवशाद मन्वसुरा व्यवशेदुः स ता एवेष्टका वज्रान् कृत्वा ग्रीवाः प्रचिच्छेद ॥ १६ ॥

ते ह देवाः समेत्योचुः। चित्रं वा ऽअभूम य

---

* 'प्रवध्येयाय'— इति ग, घ। † 'ववर्ह'— इति क, ख।

ऽङ्गुयतः सपत्नानवधिष्वोति तद्वै चित्रायै चित्रात्व॑*
चित्र॒ᳫं॑ ह भवति हन्ति सपत्नान् हन्ति द्विषन्तं
भ्रातृव्यं य एवं विद्वांश्चित्राया माधत्ते तस्मादेतत्
क्षत्रिय एव नक्षत्र मुपेत्सेज्जिघाᳫंसतीव ह्येष सपत्नान्
वीव जिगीषते ॥ १७ ॥

नाना ह वा ऽएतान्यग्रे क्षत्राण्यासुः। यथैवासौ
सूर्य्य एवं तेषा मेष उद्यन्नेव वीर्य्यं क्षत्र मादत्त
तस्मादादित्यो नाम यदेषां वीर्य्यं क्षत्र मादत्त ॥१८॥

ते ह देवा ऊचुः। यानि वै तानि क्षत्राण्य-
भूवन् न वै तानि क्षत्राण्यभूवन्निति तद्वै नक्षत्राणां
नक्षत्रत्वं तस्मादु सूर्य्यनक्षत्र ऽएव स्यादेष ह्येषां वीर्य्यं
क्षत्र मादत्त यद्यु नक्षत्रकामः स्यादेतद्वा ऽअनपराद्धं
नक्षत्रं यत् सूर्य्यः स एतेनैव पुण्याहेन यदेतेषां नक्ष-
त्राणां कामयेत तदुपेत्सेत्तस्मादु सूर्य्यनक्षत्र ऽएव
स्यात् ॥ १९ ॥ २ ॥

॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् [१. २] ॥

कर्म्मणः कालसापेक्षत्वात् आधानस्य नक्षत्रं† विधत्ते—
"कृत्तिकास्वित्यादिना। 'अग्नी' गार्हपत्याहवनीयावित्यर्थः।

---

* 'चित्रात्वᳫं'—ग, घ।  † 'नक्षत्राणि'— इति च।

अग्निदेवताकत्वादग्निनक्षत्रं कृत्तिकाख्यम्। श्रूयते हि—"कृत्तिकानक्षत्र मग्निर्देवतेति *। तस्मिन्नग्निनक्षत्रेऽग्न्याधानं 'सलोम' सदृशं, योग्य मिति यावत् ॥ १ ॥

अथैतस्य नक्षत्रस्य बहुत्वोपजीवनेन प्रशंसति—"एक मिति। कृत्तिकातः 'अन्यानि नक्षत्राणि' एक-द्वि-त्रि-चतुः-सङ्ख्याकाधिष्ठानान्यल्पीयांसि, कृत्तिकास्तु षट्सङ्ख्याधिष्ठानयोगात् 'भूयिष्ठाः' बहुतराः। तत्रार्द्रादीनाम् 'एकम्' अधिष्ठानम्, फल्गुन्यादीनां 'द्वे', अश्विन्यादीनां 'त्रीणि', पुनर्वस्वादीनां 'चत्वारि'। 'तत्' तस्मात्, एभ्यो भूयिष्ठनक्षत्राधानात् यजमानोऽपि 'भूमानं' बहुत्व मेवोपगच्छतीत्यर्थः ॥ २ ॥

नियतदिक्सम्बन्धवशेनैताः प्रशंसति—"एता ह वा इति। 'प्राच्यै' प्राच्याः 'दिशः' सकाशात् 'न च्यवन्ते' दक्षिणत उत्तरतो वा विक्षेपवसात् न चलन्ति, किन्तु नियमेन शश्वत्प्राच्या मेवोद्यन्ति; 'अन्यानि' तु 'नक्षत्राणि' प्राचीदिग्भागाद् दक्षिणत उत्तरतो वा विक्षेपवशात् चलन्ति, प्राचीदिग्भागाद् दक्षिणत उत्तरतश्च नियमेन परिवर्त्तन्ते। "तत् प्राच्या मित्यादि। निगदसिद्धम् ॥ ३ ॥

कृत्तिकास्वाधानपक्षं मिथुनव्यृद्धिहेतुत्वान्निषेधति—"अथ यस्मादिति। 'यस्माद्' वक्ष्यमाणदोषोऽस्ति, तस्मात् 'कृत्तिकासु न आदधीत'। कोऽसौ दोषः ? त मुपन्यस्यति—"ऋक्षाणां हेति। ऋक्षशब्दार्थ माह—"सप्तर्षीनिति। 'ऋक्षं' नक्षत्रम्; तद्रूपेणावस्थानात्। इह 'ऋक्ष'-शब्देन सप्तर्षयोऽभिधीयन्ते। "पुर

* 'एतद्वा अग्नेर्नक्षत्रं यत् कृत्तिकाः'—इति तै० ब्रा० १. १. २. १।

त्सवा इति * प्रकृतिभावो ह्रस्वश्च† । 'व्याद्दीरन्त' विगतद्दिका अभवन् । व्यृद्धि मेव‡ देशभेदोदयेन स्पष्टयति—"अमी ह्रीति । 'अमी' खलु 'सप्तर्षयः' 'उत्तराहि' । "आहि च दूरे"—इति § आहिप्रत्ययः । दूरदेशे उत्तरदिग्भागे 'उद्यन्ति' । 'एताः' कृत्तिकाः 'पुरः' पूर्वस्यां दिशि । अत एव तासां विभिन्नदेशावस्थानेन ¶ पुरुषसम्भोगविरहात् मिथुनव्यृद्धिः । तच्चासमीचीन मित्याह—"अश मिव वै तदिति । अतः कृत्तिकास्वाधानं कुर्वन्नपि तद्वत् मिथुनेन व्यृध्यते, अतो 'न इत्' नैवाहं 'मिथुनेन' 'व्यृध्येय' व्यृद्धो भवानीत्यभिप्रेत्य तत्र नादधातीत्यर्थः ॥ ४ ॥

अथैतद्दोषं परिहरन्नाधानपक्ष मेव निगमयति—"तद्वेति । 'तत् उ ह्या एव' तस्मिन्नपि नक्षत्रे आदधीतैव । "अग्निर्वा इत्यादि, स्पष्टम् ॥ ५ ॥

नक्षत्रान्तरं विधाय प्रशंसति—"रोहिण्या मिति । 'आदधे' आधानं कृतवान् । 'उपस्तब्धाः' प्रतिबद्धगतयो: ‖ विनाशरहिताः पुत्रपौत्रादिरूपेणैकरूपा अविच्छिन्नप्रवाहा: 'तस्थुः' स्थितवत्यः ** । ताश्च 'रोहिण्यः' स्वर्गादिलोकारोहणसाधनभूता इति स्थिताः †† । एतदुपजीवनेन नामनिर्वचनं करोति—"तद्दा इति । स्पष्टार्थ मन्यत् ॥ ६ ॥

रोहिण्याधानं प्रकारान्तरेण प्रशंसति—"रोहिण्या मु हेति ।

---

* पुरश्चर्या इत्येव पाठो दृश्यते मूलपुस्तकेषु ।

† पा० ६. १. १२७ सूत्रं द्रष्टव्यम् । ‡ 'व्यृद्धि मिव'—इति च ।

§ पा० सू० ५. ३. ३७. ।

¶ 'अत एवातीवसम्भिन्नदेशावस्थानेन'—इति च ।

‖ 'प्रतिबद्धजातयो'—इति च । ** 'स्थितवन्तः'—इति च ।

†† 'साधना इति'—इति च ।

मनुष्याणां कामं रोहेमेति। 'मनुष्याणां' 'कामः' भोग्यवस्तु-विषयः, तत्पूरणसामर्थ्ययोग्येन तं प्राप्नुयामेत्यर्थः। "य मु हैवेति। रोहिण्याधानेन काम्यमानं भोग्यवस्तुजातं पूरण-सामर्थ्यायोगात् 'मनुष्येषु' अवस्थितं 'य मु' य मेव 'कामं' प्राप्नुवन्, 'तम्' एव 'पशुषु' अवस्थितं रोहिण्या माधानतः प्राप्नोति *। एत मेव सर्वे जना उपजीव्यत्वेन कामयन्त इति भावः ॥ ७ ॥

नक्षत्रान्तरं विधाय प्रशंसति—"मृगशीर्षं इति। पुरा खलु प्रजापतिः मृगरूप † मास्थाय मृगीभूतां स्वदुहितर मभ्या-गमत् ‡। "एतद्वा इति। एतत् ज्ञात्वा अकार्यकारिणः प्रजापतेः शिरः छेत्तुं देवाः कञ्चित् क्रोधमयं पुरुषं निर्माय प्रत्यतिष्ठन्। स चेषुणा तस्य शिरश्चिच्छेद। तच्च मृग-शरीर मिषुच्छिन्नशिरश्चेत्येतदुभय § मन्तरिक्ष मुत्प्लुत्य नक्षत्रात्म-नावस्थितं सन्दृश्यते। तथा चैतरेयकम्— "प्रजापतिर्वै स्वां दुहितर मभ्यध्यायत्"—इत्युपक्रम्य "सो एवेषुस्त्रिकाण्डा"—इत्यन्ते-नाय मर्थः प्रतिपादितः ¶। ईदृशी श्रुत्यन्तरप्रसिद्धिरत्र 'वै'-शब्देन द्योत्यते ‖। "शीर्वै शिर इत्यादि। व्याख्यातम् ॥ ८ ॥

तदेतन्मृगशीर्षाधानं निषेधति—'अथ यस्मान्नेति। मृग-शीर्षाधानं न कार्यम्, अत्र हेतुः प्रतिपाद्यत इत्यर्थः। कोऽसौ हेतुः? त माह— "प्रजापतेरिति। मृगशीर्षाख्यस्य नक्षत्रस्य

---

* "यो रोहिण्या मग्नि माधत्ते,ऋघ्नोत्येव"—इति तै० ब्रा० १.१.२.२।

† 'ऋष्यो मृगरूप'—इति च। ‡ 'मेवोपागमत्'—इति च।

§ 'इषुः शिरश्चेत्येतदुभय'—इति च। ¶ ऐ० ब्रा० ३. ३. ६।

‖ 'प्रतिपाद्यते'—इति क, ज।

प्रजापतिशरीरत्व माह— 'यत्र' यस्मिन् समये 'एनं' प्रजापतिं मृगरूपम्, * 'तत्' तेन स्वदुहितृगमनरूपेण दोषेण हेतुना देवाः 'अविध्यन्', 'तत्' तदानीं पत्त्रदारुशल्यरूपावयवत्रयोपेतेन † 'इषुणा' खलु तच्छिरश्छिन्नम् ‡ 'इत्याहुः' ब्रह्मवादिनः। 'सः' च प्रजापतिस्तदानीम् 'एतच्छरीरम्' त्यक्तवान्। अतो निरात्मकत्वात् 'निर्वीर्यं' नक्षत्रात्मनावस्थितं मृगशिरः 'वास्तु' शून्यस्थानम्। यत एवात्मना त्यक्तम्, अत एव 'शरीरं' विशरणशीलम्; अतएव च 'अयज्ञियं' यज्ञानर्हम्, न हि मृगशरीरस्य यज्ञात्मत्वं सम्भवति। 'तस्मात्' तदात्मके मृगशीर्षाख्ये नक्षत्रे आधानं न युक्त मित्यर्थः ॥ ९ ॥

इमं दोषं परिहरन् प्रागुक्त मेव पक्षं निगमयति— "तद्वेवेति। "देवस्येति। मनुष्येण त्यक्तस्य वास्त्वादिरूपत्वम्, अयं हि प्रजापतिर्देवः, तेन त्यक्तस्य तत्त्वाभावात् वास्त्वादिरूपो दोषो नास्ति; मृगरूपस्य शिरः स्वमहिम्नैव नक्षत्ररूपत्वं सम्पन्नम्, न खलु मानुषं शिरस्तथा भवितु मर्हति। तस्मात् तत्राधाने नोक्तदोष इत्यर्थः॥

पुनर्वस्वाख्यस्य नक्षत्रस्य लिङ्गवशात् पुनराधेय-विषयता माह— "पुनर्वस्वोरिति। आहिताना मग्नीनां पुनर्वस्वाभिन्नवशादाधानं पुनराधेयम् §। नक्षत्रं चैतत् नष्टस्य वसुनः

---

* 'कृष्णाश्वरूपम्'—इति च।

† " 'त्रिकाण्डा' अनीकं, शल्यः, तेजन मित्यवयवत्रयोपेता"— इति ऐ० ब्रा० ३. ३. ९. सा० भा०।  ‡ 'च्छिनन्ति'—इति क. ज।

§ 'पुनराधेय माधानप्रतिज्ञातस्य"— इत्यादीनि सूत्राणि द्रष्टव्यानि (का० श्रौ० सू० ११. १.—१५.)।

पुनःप्राप्तिहेतुत्वात् पुनर्वस्वाख्यम् *। तथाच तैत्तिरीयकै स्पष्ट माम्नातम्—"स पुनर्वस्वोरग्नि मादधीत, पुनरेवैनं वामं वसूपावर्त्तते"–इति † ॥ १० ॥

"फल्गुनीष्वग्नी इति। पूर्वोत्तरफल्गुन्याख्ययोर्नक्षत्रयोः प्रत्येक मधिष्ठानद्वित्वयोगात् द्वित्वम्। फल्गुनीनामोपजीवनेन प्रशंसति—"एता वा इति। कथ मस्य नक्षत्रस्येन्द्रसम्बन्ध इत्यत आह—"अप्यस्येति। 'अस्य' इन्द्रस्य प्रतिनिधिभूताः फल्गुन्यः सम्भाव्यते। 'अपि' सम्भावनार्थः। प्रतिनिधित्वं च समान-शब्दाभिधेयत्वादित्याह—"अर्जुनो हेति। 'अर्जुनः' 'इति' हि इन्द्रस्य रहस्यं नाम; अत एव खलु तत्पुत्रे पाण्डुमध्यमे प्रवृत्तिः। अर्जुनफल्गुनशब्दौ च पर्यायौ; अर्जुनः फल्गुनः पार्थ इति समानार्थपरिगणनात्। 'अर्जुन्यः' एव 'एताः', पारोक्ष्येण 'फल्गुन्य इति' उच्यन्ते। न तु किं पारोक्ष्येणेत्यत आह—"कोऽर्हतीति। अतः फल्गुनीशब्दस्य परम्परयेन्द्रोप-लक्षकत्वात् तन्नामकं नक्षत्रम्। "इन्द्रो वा इत्यादि, स्पष्टम्। फल्गुनीषु पूर्वोत्तरत्व मुपजीव्य द्वित माधानं प्रशंसति—"पूर्वयोरित्यादिना ‡। "पुरस्तात् क्रतुरिति। पूर्वस्मिन्ना-गामिनि कालेऽग्निष्टोमादिलक्षणः 'क्रतुः' शीघ्र' मिज्यतीत्यर्थः। "श्वःश्रेयस मित्यादि। उक्तार्थम् § ॥ ११ ॥

---

* 'पुनर्वस्वोः'—इति का० श्रौ० सू० ४. ११. ५।

† तै० ब्रा० १. १. २. ३।

‡ "पूर्वयोः फल्गुन्योरग्नि मादधीत"—इत्यादि, "उत्तरयोः फल्गुन्यो-रग्नि मादधीत"—इत्यादि च तै० ब्रा० १. १. २. ४।

§ "कृत्तिकारोहिणीमृगशिरःफल्गुनीषु"— इति का०श्रौ०सू० ४. ७. २।

"हस्तोऽग्नीत्यादि। निगदसिद्धम्। स्वहस्तेन 'यत्' खलु दानम्, 'तद्' एव 'अनुष्ठ्या' अनुष्ठानेन समीचीनम्। अतो हस्तनक्षत्रे अग्न्याधानात् परकर्त्तृकं हस्तेन दानं प्राप्नोतीति तात्पर्यार्थः * ॥ १२ ॥

"चित्राया मित्यादि। "आरुरुक्षाञ्चक्रुरिति। आरोढु मिच्छां कृतवन्त इत्यर्थः। अमु मिति 'अदस्'-शब्देन पारोक्षेण यो लोको निर्द्दिष्टः, तं विशिनष्टि— "दिव मेवेति। 'ततः' अनन्तरम् 'असुराः' 'रौहिण मिति' एतन्नामकं रोहणसाधनम् 'अग्निं' 'चिक्ये'। व्यत्ययेनैकवचनम्, † 'चिक्यिरे' चितवन्तः। "अनेनेत्यादि। स्पष्टम् ॥ १३ ॥

"इन्द्रो हेति। "इमं चेत्यादि। यम् 'इमम्' अग्निं वयं चेष्यामः, इम मेव चेदसुरा अपि चिन्वीरन्, 'ततः' तस्मात् 'एव' साधनात् 'नः' अस्मान् 'अभिभवन्ति' असुराः, अभिभवितुं समर्था भवन्ति। 'इति' विचार्य, 'सः' इन्द्रः 'ब्राह्मणः' भूत्वा असुरान्तिकं ब्रुवाण एव 'एका मिष्टकां' 'प्रबध्य' गृहीत्वा 'इयाय' जगाम ॥ १४ ॥

"स होवाचेति। गत्वा च तान् असुरान् 'उवाच'। 'अहम्' अपि 'इमाम्' इष्टकां भवदीयेऽग्नौ 'उपदधै' उपधानं करवाणि 'इति'। 'तथा इति' तैरनुज्ञातः, 'ताम्' इष्टकां तत्र 'आधत्त'। अन्यदीये चयने अन्यदीयेष्टकोपधान मशास्त्रीय मित्येतस्मात् 'अल्पकादेव' भ्रेषात् ‡ 'तेषाम्' असुराणाम् 'अग्निः' असम्यक् चितो विकल्पो बभूव ॥ १५ ॥

---

* "हस्तो लाभकामस्य"— इति का० श्रौ सू० ४. ७. ३।

† पा० सू० १. ४. ६। ‡ 'भ्रेषो भ्रंशो यथोचितात्'— इत्यमरः, २. ८, २३।

"अथ होवाचेति। 'अथ' कालान्तरे स एव ब्राह्मणरूप इन्द्रः तानसुरान् 'उवाच'। 'इह' अस्मिन् चितप्रदेशे 'या' 'मम' इष्टका, 'ताम्' 'आदास्ये' इत्युक्त्वा तत्समीप मभिप्राप्य, 'ताम्' इष्टकाम् 'आबवर्ह' * उद्ययाम, तस्मात् स्थानादचालय-दित्यर्थः। "बृहु उद्यमने"–इति † धातुः। 'तस्यां' चेष्टकायां चित्याग्नेः सकाशाच्चालितायां सत्यां, सः 'अग्निः' 'व्यवशशाद'‡ विशीर्णो बभूव। तदनन्तरं तच्चेतारः 'असुराः' च 'व्यवशेदुः'§ व्यवसन्नाः ¶ शिथिला बभूवुः। "स ता इत्यादि स्पष्टम्। "ग्रीवा इति। असुरसम्बधिनीः ॥ १६ ॥

"ते ह देवा इति। चित्राख्येष्टका। अस्या एवं चित्र-हेतुत्वात् 'चित्रा' नाम सम्पन्न मित्यर्थः। "चित्रं हेत्यादि निगद-सिद्धम्। "तस्मादेतदित्यादि। यस्मादुक्तरीत्या चित्रा-नक्षत्रस्य शत्रुहननसाधनत्वम्, 'तस्मात्' आधाने 'क्षत्रिय एव' 'एतत्' नक्षत्रं ('उपेक्षेत्') स्वीकुर्यात् ‖। तत्र कारण माह—"जिघांसतीवेति। 'एषः' खलु क्षत्रियः अन्यान् शत्रून् 'जिघांसति' हन्तु मिच्छति 'इव', तथा 'विजिगीषते 'इव' विजेतु मिच्छतीव। तस्माच्छत्रुहननकामस्य क्षत्रियस्यैवैतन्नक्षत्रम्, नान्यस्येत्यर्थः ** ॥ १७ ॥

---

*—† 'आववर्ह'—इति, 'वृहु'—इति च क—पाठौ, मतान्तरे त्वि चैष धातुरन्त्यस्यपूर्वोऽपि। ‡ 'व्यवस्रसाद'— इति क।

§—¶ 'व्यवसेदुः'— इति च। 'व्यवपन्नाः'— इति क, ज।

‖ "स चित्रायामग्नि मादधीत"— इत्यादि तै० ब्रा० १. १. २. ६।

** "चित्रायां क्षत्रियस्य"— इति का० श्रौ० सू० ४. ७. ४।

सूर्येणापहृतवीर्याणि कृत्तिकादिनक्षत्राण्यनादृत्य तेजस्विनि सूर्यात्मके नक्षत्रे उद्यति सति आधानं कार्य मित्याह—"नाना ह वा इति। पुरा खलु कृत्तिकादिनक्षत्रमण्डलानि सूर्यमण्डलवत् तेजस्विन्येव बभूवुः। 'एषः' खलु 'सूर्यः' 'उद्यन्' क्षत्रं तेजः सामर्थ्यं च उदय माप्नुवन् 'एव' 'तेषां' 'वीर्यं' 'आदत्त' स्वीकृतवान्। 'तस्मात्' आदानात् 'आदित्यः' इति उच्यते॥ १८॥

नक्षत्रनामधेयं निर्वक्ति— "ते हेति। 'यानि' खलु पुरा 'क्षत्राणि' 'अभूवन्', 'तानि' इदानीं सूर्येण क्षत्रगुणस्यापहृतत्वात्, न विद्यते क्षत्र मेषा मिति व्युत्पत्त्या 'नक्षत्राणि' सम्पन्नानीत्यर्थः। यस्मादेवं कृत्तिकादीन्यपहृतवीर्याणि, 'तस्मात्' एव कारणात् सूर्यात्मके 'एव' तेजस्विनि नक्षत्रे आधानं स्यात् *। तत्र हेतु माह— "एष हीति। 'हि' यस्मात् 'एषः' सूर्यः 'एषां' नक्षत्राणां वीर्यादिकम् 'आदत्ते', तस्मात् सवीर्ये तस्मिन्नाधानं युज्यत इत्यर्थः। यदि च यजमानः तत्तत्पूजार्थं नक्षत्रकामः स्यात्, तदानी मपि सूर्यात्मक मेव नक्षत्र मुपाददीतेत्याह— "एतद्वा इति। 'अनपराद्धम्'—इति हेतुगर्भविशेषणम्। यतस्तेजोवियोगलक्षणापराधरहितम्, अतस्तदेव सूर्यात्मकं नक्षत्रं कामयेतेत्यर्थः। तेन कृत्स्ननक्षत्राणां प्राप्ति माह—"स एतेनैवेति। 'एतेनैव' सूर्येणोद्यता पुण्यकालात्मना

---

* सूर्यो नक्षत्रं कालोपलक्षणं यस्य सोऽयं सूर्यनक्षत्रः; सूर्यापेक्षिते एव काले आदधीत, न नक्षत्रोपलक्षिते इत्यर्थः। कथं तत् सूर्यकालं लक्षयति? उदगयनम्"—इत्याद्याहेह हरिस्वामी।

कृत्स्नन्नक्षत्रेऽप्याधानफल मुपगच्छेत्। ‘तस्मात्’ सूर्यात्मके एव नक्षत्रे उद्यति सति आधानं स्यात्, न रात्रावित्यर्थः * ॥ १९ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥

---

* (१) “अग्नेः कृत्तिकाः ०००। (२) प्रजापते रोहिणी०००। ३) सोमस्येन्वका [ मृगशिराः ] ०००। (४) रुद्रस्य बाहू [ आर्द्रा] ०००। (५) अदित्यै पुनर्वसू०००। (६) बृहस्पते स्तिष्यः [ पुष्यः ] ०००। (७) सर्पाणा मश्लेषाः०००। (८) पितृणां मघाः०००। (९) अर्यम्णः पूर्वे फल्गुनी ०००। (१०) भगस्योत्तरे ०००। (११) देवस्य सवितुर्हस्तः०००।(१२) इन्द्रस्य चित्रा०००। (१३) वायोर्निष्ट्या [ स्वाती ] ०००। (१४) इन्द्राग्नियोर्विशाखे०००। (१५) मित्रस्यानूराधाः०००। (१६) इन्द्रस्य रोहिणी [ज्येष्ठा] ०००। (१७) निर्ऋत्यै मूलबर्हिणी०००। (१८) अपां पूर्वाषाढाः ०००।(१९) विश्वेषां देवाना मुत्तराः०००। (२०) विष्णोः श्रोणा [ श्रवणा ]०००। (२१) वसूनां श्रविष्ठाः [ धनिष्ठाः ] ०००। (२२) इन्द्रस्य शतभिषक् ०००। (२३) अजस्यैकपदः पूर्वे प्रोष्ठपदाः ०००। (२४) अहिर्बुध्नियस्योत्तरे ०००। (२५) पूष्णो रेवती०००। (२६) अश्विनीरश्वयुजौ०००। (२७) यमस्यापभरणीः०००।— “इति तै० ब्रा० १.५.१ अ०। ततोऽग्रे २अ०— (२८) “अभिजिन्नाम नक्षत्र मुपरिष्टादषाढाना मधस्ताच्छ्रोणायै”—इत्यादि उत्तराषाढानक्षत्रस्य यश्चतुर्थः पादः, श्रवणनक्षत्रस्य च यः प्रथमः पादः, तदुभयं मिलित्वा नक्षत्रसन्धिरूप मभिजिदाख्यं किञ्चिन्नक्षत्रम्’— इति च तत्र सा०। अत्र च “कृत्तिकाः प्रथमं विशाखे उत्तमम्, तानि (१—१४) देवनक्षत्राणि; अनूराधाः प्रथम मपभरणी-

( अथ तृतीयं ब्राह्मणम्. )

व्वसन्तो ग्रीष्मो व्वर्षाः *। ते देवा ऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य एवापूर्यतेऽर्द्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्व्वाह्णो देवा अपराह्णः पितरः ॥१॥

ते वा ऽएत ऽऋतवः। देवाः पितरः स यो हैवं व्विद्वान् देवाः पितर इति ह्वयत्या हास्य देवा देवहूयं गच्छन्त्या पितरः पितृहूय मवन्ति हैनं देवा देवहूयेऽवन्ति पितरः पितृहूये य एवं व्विद्वान् देवाः पितर इति ह्वयति ॥ २ ॥

स यत्रोदङ्ङावर्त्तते†। देवेषु तर्हि भवति‡ देवांस्तर्ह्यभिगोपायत्यथ यत्र दक्षिणावर्त्तते पितृषु तर्हि भवति पितॄंस्तर्ह्यभिगोपायति ॥ ३ ॥

स यत्रोदङ्ङावर्त्तते§। तर्ह्यग्नी ऽआदधीतापहत-

---

त्तमम्, तानि (१५—२८) यमनक्षत्राणि। यानि देवनक्षत्राणि, तानि दक्षिणेन परियन्ति ; यानि यमनक्षत्राणि, तान्युत्तरेण। ०००। यान्येव देवनक्षत्राणि, तेषु कुर्वीत यत्कारी स्यात् ; पुण्याह एव कुरुते"—इति च तत्रैव तत उत्तरम्।

* 'व्वर्षाः'—इति ग, घ।

†, § 'दङ्ङावर्त्तते'—इति क। 'दगावर्त्तते'—इति ग, घ।

‡ 'भवति'—इति च दृष्टो डा०-वेबरेण।

पाप्मानो देवा अप पाप्मानꣳ हतेऽमृता देवा नामृतत्वस्याशास्ति सर्व्व मायुरेति यस्तस्यांधत्तेऽथ यत्र दक्षिणावर्त्तते यस्तर्ह्याधत्तेऽनपहतपाप्मानः पितरो न पाप्मान मपहते मर्त्त्याः पितरः पुरा हायुषो म्रियते यस्तर्ह्याधत्ते ॥ ४ ॥

ब्रह्मैव व्वसन्तः । क्षत्त्रं ग्रीष्मो व्विडेव व्वर्षा-स्तस्माद् ब्राह्मणो व्वसन्त ऽआदधीत ब्रह्म हि व्वसन्त-स्तस्मात् क्षत्त्रियो ग्रीष्म ऽआदधीत क्षत्त्रꣳ हि ग्रीष्म-स्तस्माद्वैश्य व्वर्षास्वादधीत व्विड्ढि व्वर्षाः ॥ ५ ॥

स यः कामयेत । ब्रह्मवर्च्चसी स्या मिति व्वसन्ते स आदधीत ब्रह्म वै व्वसन्तो ब्रह्मवर्च्चसी हैव भवति ॥ ६ ॥

अथ यः कामयेत । क्षत्त्रꣳ श्रिया यशसा स्या मिति ग्रीष्मे स आदधीत क्षत्त्रं वै ग्रीष्मः क्षत्त्रꣳ हैव श्रिया यशसा भवति ॥ ७ ॥

अथ यः कामयेत । बहुः प्रजया पशुभिः स्या मिति व्वर्षासु स आदधीत व्विड् वै व्वर्षा अन्नं विशो बहुर्हैव प्रजया पशुभिर्भवति य एवं व्विद्वान् वर्षास्वाधत्ते ॥ ८ ॥

ते वा ऽएत ऽऋतवः। उभय ऽएवापहतपाप्मानः सूर्य्य एवैषां पाप्मनोऽपहन्तोद्यन्नेवैषा मुभयेषां पाप्मान मपहन्ति तस्माद्यद्दैवैनं कदा च यज्ञ ऽउपनमेद्‌थाग्नी ऽआदधीत न श्वः श्व मुपासीत को हि मनुष्यस्य श्वो वेद ॥ ९ ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [१.३.] ॥

अथाधानस्य वसन्ताद्यृतुविध्यर्थं ऋत्वादीनां देवपित्रात्मना द्वेधा विभाग माह— "वसन्त इत्यादिना। वसन्ताद्यृतुसमये देवानां सूर्यदर्शनादहर्भवतीति तेषां तादात्म्यम्; शरदादीनां तद्वैलक्षण्यात् पितृरूपत्वम्। "य एवापूर्य्यते"—इत्यादि, निगदसिद्धम् ॥ १ ॥

"ते वा एत ऋतव इति। "स यो हैवं विद्वानित्यादि। एव मृतूनां देवत्वं पितृत्वं च 'विद्वान्' तान् ऋतून् 'देवाः पितरः' 'इति' 'ह्वयति' व्यवहरेदित्यर्थः। तस्य फल माह— "आ हास्येति। 'अस्य' आह्वातुः 'देवहूयं देवाह्वानं प्रति देवा आगच्छन्ति, तथा 'पितृहूयं' पैतृक माह्वानं प्रति पितरोऽप्यागच्छन्ति। आगताश्च ते स्वसम्बद्धे कर्म्मणि 'एनम्' आह्वातारम् 'अवति' इत्यर्थः ॥ २ ॥

आधानस्योदगयनं कालं विधित्सुर्द्दयोरप्यनयोर्देवपितृसम्बन्धं क्रमेणाह— "स यत्रेति। 'सः' सूर्यो यस्मिन् काले दक्षिणगोलादुत्तरगोलं प्रति 'उदङ्' पर्यावर्त्तते, 'तर्हि' तदा, तस्मिन् समये मेरोरुपरिभागेऽवस्थितानां देवानां स दृष्टि-

गोचरो भवतीति तेषु उदङ् 'देवेषु' प्रकाशो भवतीति। 'अथ' 'यत्र' यस्मिन् काले पुनरुत्तरगोलाद् दक्षिणगोलं पर्यावर्त्तते, तदा दक्षिणदिगवस्थितस्य प्रकाशः, स तु तेषु 'पितृषु' भवति ॥ ३ ॥

एव मुत्तरायणे दक्षिणायने च देवपितृसम्बन्ध मभिधाय, तत्सम्बद्ध माधान मपि तत्रैव कार्य मिति विधत्ते—"स यत्रेति। "अपहतपाप्मान इति। देवानां पापराहित्यात् मरणधर्मराहित्याच्च तत्सम्बन्धिन्ययनेऽग्न्याधानकारिणोऽपि तदुभयं सिद्ध्यती-त्यर्थः। दक्षिणायने आधातुरुक्तवैपरीत्य माह—"अथ यत्रेति ॥४॥

एव मुदगयनं विधाय तत्रापि ब्रह्मक्षत्रादिवर्णानुसारेण ऋतुव्यवस्थां करोति— "ब्रह्मैव वसन्त इत्यादिना। वसन्ताद्या ऋतवः जात्या ब्रह्मक्षत्राद्यात्मकाः, अतस्तेषां क्रमेण तत्तज्जात्या-धानकालत्वम् * ॥ ५ ॥

एवं नित्यपक्ष मभिधाय काम्यपक्ष माह— "स य इति। "ब्रह्मवर्चसी हैवेति। ब्राह्मणजात्यात्मके वसन्ते आधानात् क्षत्रियादिरपि ब्राह्मणतेजस्सम्पन्नो भवतीत्यर्थः। एव मुत्तर-त्रापि योज्यम् ॥ ६ ॥

"अथ यः कामयेतेति। "क्षत्रं श्रियेति। क्षत्रियजाते-रपि 'श्रिया' सम्पदा कीर्त्या च क्षत्रात्मकः स्या मिति कामय-मानस्य ब्राह्मणादेः ग्रीष्म आधानकाल इत्यर्थः ॥ ७ ॥

---

* "वसन्तो ब्राह्मण-ब्रह्मवर्चसकामयोः, ग्रीष्मः क्षत्रिय-श्रीकामयोः, वर्षाः प्रजापशुकाम—वैश्यरथकृताम्"—इति का० श्रौ० सू० ४. ७. ५, ६, ७। "शिशिरः सार्ववर्णिकः"— इति च शाखान्तरम्।

"अथ यः कामयेतेति। बहुप्रजापश्वादिसमृद्धिकामस्य वैश्यस्यापि तत्फलप्राप्तये वर्षास्वाधानं सम्पद्यत इत्यर्थः ॥ ८ ॥

एव मयनविशेष मृतुविशेषं चाभिधाय पक्षान्तरं च वक्तुं सर्वेंषा मप्यृतूनां पापसम्बन्धराहित्य माह— "ते वा एत इति। "उभय एवेति। देवपितृसम्बन्धितया द्विधा प्रतिपादिता एवेत्यर्थः। पापराहित्ये कारण माह— "सूर्य एवेति। यस्मा-देव सर्वेऽप्यृतवः पापराहित्येन शुद्धाः, 'तस्मात्' यस्मिन् कस्मिं-श्चिदृतौ सोमयाग मभिगच्छेत्, 'अथ' अनन्तर मेव अग्न्या-धानं कुर्यात्; "न श्वः–श्व मुपासीतेति। 'श्वः करवाणि'–इत्येवं कालान्तरप्रतीक्षा न कुर्यात्। तत्र हेतु माह— "को हीति। 'मनुष्यस्य' 'श्वः' श्वःकालसम्बन्धि जीवनं 'कः' नाम 'वेद' जानीयात्? आयुषोऽस्थिरत्वादित्यर्थः ॥ ९ ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे प्रथमाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम्. )

यदहरस्य श्वोऽग्न्याधेयꣳ स्यात्। दिवैवाग्नी-याग्मनो ह वै देवा मनुष्यस्याजानन्ति तेऽस्यैतच्छ्वो-

ऽग्न्याधेयं विदुस्तेऽस्य व्विश्वे देवा गृहानागच्छन्ति तेऽस्य गृहेषूपवसन्ति स उपवसथः ॥ १ ॥

तन्न्वे*वानवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्व्वोऽश्नीयादथ किमु यो देवेष्वनश्नत्सु पूर्व्वोऽश्नीयात् तस्मादु दिवैवाश्नीयात्तदपि† काम मेव नक्त मश्नीयान्नो ह्यनाहिताग्नेव्व्रतचर्यास्ति मानुषो ह्येवैष तावद्भवति यावदनाहिताग्निस्तस्माद्दपि काम मेव नक्त मश्नीयात् ॥ २ ॥

तद्धैकेऽज मुपव्वध्नन्ति। आग्नेयोऽजोऽग्नेरेव सर्व्वत्वायेति व्वदन्तस्तदु तथा न कुर्याद्यद्यग्नाजः स्यादग्नीध ऽएवैनं प्रातर्द्दद्यात्तेनैव तं काम माप्नोति तस्मादु तन्नाद्रियेत‡ ॥ ३ ॥

अथ चातुष्प्राश्य मोदनं पचन्ति। छन्दाꣳस्यनेन प्रीणीम इति यथा येन व्वाहनेन स्यन्त्स्यन्त्स्यात्तत् सुहितं कर्त्तवै ब्रूयादेव मेतदिति व्वदन्तस्तदु तथा न कुर्याद्यद्वा ऽअस्य ब्राह्मणाः कुले व्वसन्त्यृत्विजस्या-

* 'तन्वे'—इयि क, ख, ङ।

† 'तदपि'—इति च डा०-वेबर-इष्टः।

‡ 'तं नाद्रियेत'—इति ख, डा०-वेबरेण च इष्टः।

न्नृत्विजश्च तेनैव तं काम माप्नोति तस्मादु तन्ना-
द्रियेत * ॥ ४ ॥

तस्य सर्पि†रासेचनं कृत्वा । सर्पिरासिच्याश्व-
त्थीस्तिस्रः समिधो घृतेनान्वज्य समिद्वतीभिर्घृत-
वतीभिर्ऋग्भिरभ्यादधति शमीगर्भ मेतदाप्नुम इति
वदन्तः स यः पुरस्तात्संवत्सर मभ्यादध्यात् स ह तं
काम माप्नुयात् तस्मादु तन्नाद्रियेत ‡ ॥ ५ ॥

तदु होवाच भाल्लवेयः § । यथा वा ऽअन्यत्-
करिष्यन्त्सोऽन्यत् कुर्याद्यथान्यद्वदिष्यन्त्सोऽन्यद्वदेद्य-
थान्येन पथैष्यन्त्सोऽन्येन प्रतिपद्येतैवं तद्य एतं चातु-
ष्प्राश्य मोदनं पचेत्पराङिवैव सेति न हि तदव-
कल्पते यस्मिन्नग्नावृचा वा साम्ना वा यजुषा वा
समिधं वाभ्यादध्यादाहुतिं वा जुहुयाद्यत्तं दक्षिणा
वा हरेयुरनु वा गमयेयुर्दक्षिणा वा ह्येनꣳ हरन्त्य-
न्वाहार्यपचनो भविष्यतीत्यनु वा गमयन्ति ॥ ६ ॥

अथ जायति जायति देवाः¶ । ता‖ह देवानेवैतदुपा-

---

*, ‡ ‘तं नाद्रियेत’— इति ख, डा०-वेबरेण च दृष्टः ।

† ‘सर्पि’— इति च दृष्टो वे० । § ‘भाल्लवेयो’— इति क, ङ ।

¶ ‘देवाः’— इति ग, घ । ‖ ‘देवा। स्त’— इति क, ङ ।

वर्त्तते स सदेवतरः * शान्ततरस्तपस्वितरोऽग्नी ऽआधत्ते तद्दपि काम मेव स्वप्यान्नो ह्यनाहिताग्नेर्व्व्रतचर्य्यास्ति मानुषो ह्येवैष तावद् भवति यावदनाहिताग्निस्तस्मादपि काम मेव स्वप्यात् ॥ ७ ॥

तद्वैकेऽनुदिते मथित्वा †। त मुदिते प्राञ्च मुद्धरन्ति तदु तदुभे ऽअहोरात्रे परिगृह्य होमः प्राणोदानयोर्मनसश्च व्वाचश्च पर्य्याप्त्या ऽइति व्वदन्तस्तदु तथा न कुर्यादुभौ हैवास्य तथानुदित ऽआहितौ भवतोऽनुदिते हि मथित्वा त मुदिते प्राञ्च मुद्धरन्ति स य उदित ऽआहवनीयं मन्येत् स ह तत्पर्य्याप्नुयात् ॥ ८ ॥

अहर्व्वै देवाः ‡। अनपहतपाप्मानः पितरो न पाप्मान मपहते मर्त्त्याः पितरः पुरा हायुषो म्रियते योऽनुदिते मन्थत्यपहतपाप्मानो देवा अप पाप्मानꣳ हतेऽमृता देवा नामृतत्वस्याशास्ति सर्व्व मायुरेति श्रीर्द्देवाः श्रियं गच्छति यशो देवा यशो ह भवति य एवं व्विद्वानुदिते मन्थति ॥ ९ ॥

---

* 'सदेवतरः'— इति ग, घ। † 'मथित्वा'—इति ग, घ। ‡ 'देवाः'—इति ग, घ।

तदाहुः। यन्नऽर्चा न साम्ना न यजुषाग्नि-राधीयतेऽथ केनाधीयत ऽइति ब्रह्मणो हैवैष ब्रह्म-णाधीयते व्वाग्वै ब्रह्म तस्यै व्वाचः सत्य मेव ब्रह्म ता वा ऽएताः सत्य मेव व्याहृतयो भवन्ति तदस्य सत्येनैवाधीयते ॥ १० ॥

भूरिति वै प्रजापतिः। इमा* मजनयत भुव इत्यन्तरिक्षꣳ स्वरिति दिव मेतावद्वा ऽइदꣳ सर्व्वं यावदिमे लोकाः सर्व्वेणैवाधीयते ॥ ११ ॥

भूरिति वै प्रजापतिः। ब्रह्मा†जनयत भुव इति क्षत्रꣳ स्वरिति व्विश मेतावद्वा ऽइदꣳ सर्व्वं यावद् ब्रह्म क्षत्रं विट् सर्व्वेणैवाधीयते ॥ १२ ॥

भूरिति वै प्रजापतिः। आत्मान‡ मजनयत भुव इति प्रजाꣳ स्वरिति पशूनेतावद्वा ऽइदꣳ सर्व्वं यावदात्मा प्रजा पशवः सर्व्वेणैवाधीयते ॥ १३ ॥

स वै भूर्भुव इति। एता§वतैव गार्हपत्य माद-धात्यथ यत्सर्व्वैरादध्यात्केनाहवनीय मादध्याद् द्वे

* 'प्रजापति। रिमा'— इति क, ङ।

† 'प्रजापति। र्ब्रह्मा'— इति क, ङ।

‡ 'प्रजापति। रात्मान'— इति क, ङ। § 'इत्ये। ता'— इति ङ।

ऽअक्षरे परिशिनष्टि तेनो ऽएतान्ययातयामानि भवन्ति तैः सर्व्वैः पञ्चभिराहवनीय मादधाति भूर्भुवः स्वरिति तान्यष्टावक्षराणि सम्पद्यन्तेऽष्टाक्षरा वै गायत्री गायत्र मग्नेश्छन्दः स्वेनैवैन मेतच्छन्दसा-धत्ते ॥ १४ ॥

देवान्ह वा ऽअग्नी ऽआधास्यमानान् । तान*-सुररक्षसानि ररक्षुर्नाग्निर्जनिष्यते नाग्नी आधा-स्यध्व ऽइति तद्यदरक्षंस्तस्माद्रक्षाꣳसि ॥ १५ ॥

ततो देवा एतं व्वज्रं ददृशुः । यदश्वं† तं पुर-स्तादुदश्रयंस्तस्याभयेऽनाष्ट्रे निवातेऽग्निरजायत तस्मा-द्यत्राग्निं मन्थिष्यन्त्स्यात्तदश्व मानेतवै ब्रूयात् स पूर्व्वेणोपतिष्ठते व्वज्र मेवैतदुच्छ्रयति तस्याभयेऽनाष्ट्रे निवातेऽग्निर्जायते ॥ १६ ॥

स वै पूर्व्ववाट् स्यात् । स ह्यपरिमितं व्वीर्य्य मभिवर्द्धते‡ यदि पूर्व्ववाहं न विन्देदपि य एव कश्चाश्व स्याद्यद्यश्वं न विन्देदप्यनड्वानेव स्यादेष ह्येवानडुहो बन्धुः ॥ १७ ॥

---

* 'मानां । स्तान'—इति क, ङ ।

† 'ददृशुः । यदश्वं'—इति क, ङ । ‡ 'वर्त्तते'—इति ङ ।

तं यत्र प्राञ्चꣳ हरन्ति। तत्पुरस्तादश्वं नयन्ति तत्पुरस्तादेवैतन्नाष्ट्रा रक्षाꣳस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण हरन्ति ॥ १८ ॥

तं वै तथैव हरेयुः। यथैन * मेष प्रत्यङ्ङुपाचरे-देष वै यज्ञो यदग्निः प्रत्यङ् हैवैनं यज्ञः प्रविशति तं क्षिप्रे यज्ञ उपनमत्यथ यस्मात्पराङ् भवति पराङु हैवास्माद्यज्ञो भवति स यो हैनं तत्रानुव्याहरे-त्पराङस्माद्यज्ञोऽभूदितीश्वरो ह यत्तथैव स्यात् ॥ १९ ॥

एष उ वै प्राणः †। तं ‡ वै § तथैव हरेयु-र्यथैन मेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं प्राणः प्रवि-शत्यथ यस्मात् पराङ् भवति पराङु हैवास्मात् प्राणो भवति स यो हैनं तत्रानुव्याहरेत् पराङस्मात् प्राणोऽभूदितीश्वरो ह यत् तदेव स्यात् ॥ २० ॥

अयं वै यज्ञो योऽयं पवते। यं त्वै तथैव हरेयु-र्यथैन मेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं यज्ञः प्रवि-

---

* हरेयु। यथैन'— इति ख, ङ।

† 'प्राणः'— इति ग, घ।

‡ 'प्राण। त्वं"— इति क, ङ।

§ 'तैं'— इति च इस्तो डा०-वेबरेण।

शति तं च्छिप्रे यज्ञ उपनमत्यथ यस्मात् पराङ् भवति पराङु हैवास्माद् यज्ञो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्माद् यज्ञोऽभूदितीश्वरो ह यत् तथैव स्यात् ॥ २१ ॥

एष उ वै प्राणः । तं * वै † तथैव हरेयुर्यथैन मेष प्रत्यङ्ङुपाचरेत्प्रत्यङ् हैवैनं प्राणः प्रविशत्यथ यस्मात् पराङ् भवति पराङु हैवास्मात् प्राणो भवति स यो हैनं तत्रानुव्याहरेत्पराङस्मात् प्राणोऽभूदितीश्वरो ह यत् तथैव स्यात्तस्मादु तथैव हरेयुः ॥ २२ ॥

अथाश्व माक्रमयति । त माक्रमय्य प्राञ्च मुन्नयति तं पुनरावर्त्ततति त मुदञ्चं प्रमुञ्चति व्वीर्य्यं वा ऽअश्वो नेदस्मादिदं पराग्वीर्य्यं मसदिति तस्मात् पुनरावर्त्तयति ॥ २३ ॥

त मश्वस्य पद ऽआधत्ते । व्वीर्य्यं वा ऽअश्वो व्वीर्य्यं ऽएवैन मेतदाधत्ते तस्मादश्वस्य पद ऽआधत्ते ॥ २४ ॥

---

* 'प्राण । स्तं'—इति क, ङ ; प्राणः । ते—इति ग, घ ।

† 'वै' इति च दृष्टो डा० वेबरेण ।

स वै तूष्णी मेवाग्र ऽउपस्पृशति । अथोद्यच्छत्यथोपस्पृशति भूर्भुवः स्वरित्येव तृतीयेनादधाति त्रयो वा ऽइमे लोकास्तदिमानेवैतल्लोकानाप्नोत्येतन्न्वेकम् * ॥ २५ ॥

अथेदं द्वितीयम् । तूष्णी मेवाग्र ऽउपस्पृशत्यथोद्यच्छति भूर्भुवः स्वरित्येव द्वितीयेनादधाति यो वा ऽअस्या मप्रतिष्ठितो भार मुद्यच्छति नैनꣳ शक्नोत्युद्यन्तुꣳ सꣳ हैनꣳ शृणाति ॥ २६ ॥

स यत्तूष्णी मुपस्पृशति । तदस्यां प्रतिष्ठायां प्रतितिष्ठन्ति सोऽस्यां प्रतिष्ठित आधत्ते तथा न व्यथते तदु हैतत्पश्येव दध्रिर ऽआसुरिः पाञ्चिर्माधुकिः सर्व्वं वा ऽअन्यदियसित मिव प्रथमेनैवोद्यत्यादध्याद् भूर्भुवः स्वरिति तदेवानियसित मित्यतो यतमथा कामयेत तथा कुर्यात् ॥ २७ ॥

अथ पुरस्तात्परीत्य । पूर्व्वार्द्ध मुल्मुकाना मभिपद्य जपति द्यौरिव भूम्ना पृथिवीव वरिम्णेति यथासौ द्यौर्बह्वी नक्षत्रैरेवं बहुर्भुयास मित्येवैतदाह यदाह द्यौरिव भूम्नेति पृथिवीव वरिम्णेति यथेयं

* 'तं न्वेकम्'—इति क, ङ ; 'तं न्वेकम्'— इति ख।

पृथिव्युर्व्वैवमुरुर्भूयास मित्येवैतदाह तस्यास्ते पृथिवि देवयजनि पृष्ठ ऽइत्यस्यै ह्येनं पृष्ठ ऽआधत्तेऽग्नि मन्नाद मन्नाद्यायादध ऽइत्यन्नादोऽग्निरन्नादो भूयास मित्येवैतदाह सैषाशीरेव स यदि कामयेत जपेदेतद्यद्यु कामयेतापि नाद्रियेत ॥ २८ ॥

अथ सर्पराज्ञ्या * ऋग्भिरुपतिष्ठते। आयं गौः पृश्नीरक्रमीदसदन्मातरं पुरः †। पितरं च प्रयन्त्स्वः। अन्तश्चरति रोचनास्य प्राणादपानती। व्यख्यन्महिषो दिवम् ॥ त्रिंशद्धाम व्विराजति व्वाक्पतङ्गाय धीयते। प्रति वस्तोरह द्युभिरिति तद्यदेवास्यात्र सम्भारैर्व्वा नक्षत्रैर्व्वर्तुभिर्व्वाधानेन वानाप्तं भवति तदेवास्यैतेन सर्व्वं माप्तं भवति तस्मात् सर्पराज्ञ्या ऋग्भिरुपतिष्ठते ॥ २९ ॥

तदाहुः। न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेतीयं व्वै पृथिवी सर्पराज्ञी स यदेवास्या माधत्ते तत् सर्व्वान् कामानाप्नोति तस्मान्न सर्पराज्ञ्या ऋग्भिरुपतिष्ठेतेति ॥ ३० ॥ ५ ॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [१. ४.] ॥

---

* 'सर्पराज्ञा'—इति ङ, एवमिहोत्तरत्रापि सर्वत्र। † 'पुरः'—इति क,ख।

अग्न्याधेयदिवसात् पूर्वस्मिन् उपवसथदिवसे कर्त्तव्यं व्रत मुपदिशति— "यदहरस्येति। 'दिवैव'-इत्येवकारेण रात्रा-वशनं व्यावर्त्तते। "मनो ह वै देवाः"-इत्यादि दर्शपूर्णमासिक-प्रस्तावे प्रागेव व्याख्यातम् * ॥ १ ॥

दिवैव भोजनं न रात्राविति प्रतिपाद्य पक्षान्तर माह— "तन्न्वेवेति। "तदपीति। 'तत्' तत्र विषये 'कामं' यथोक्तं रात्रावपि 'अश्नीयात्'। तत्र कारण माह— "नो ह्यना-हिताग्नेरिति। 'न' खलु 'अनाहिताग्नेः' व्रतचरणम् 'अस्ति'; तस्येतरपुरुषवन्मानुषत्वात्, आहिताग्निर्हि संस्कारेण देवभावं प्राप्तो व्रतचरण मर्हतीति भावः ॥ २ ॥

"तद्वैक इति। "अज मुपबध्नन्तीति। उपवसथदिवसस्य रात्रौ गार्हपत्यागारे कस्यचिदजस्य बन्धनं कार्य मित्येकेषां मतम्। तेषा मभिप्राय माह— "आग्नेयोऽज इति। अग्निना सह प्रजापतिमुखजातत्वात् 'अजः आग्नेयः' †; अतोऽजस्य सम्बन्ध माधीयमानस्य 'अग्नेः' 'सर्वत्वाय' कार्त्स्न्याय सम्पद्यते, 'इति' इम मभिप्रायं वदन्त इत्यर्थः। तदेतन्निरस्यति— "तदु तथा नेति। कथं तर्हि कार्य मिति, तदाह— "यदीति। 'अस्य' यजमानस्य 'अजः' विद्यते चेत्, 'एनम्' अजम् 'प्रातः' आधानदक्षिणाकाले 'अग्नीधे' आग्नीध्राय 'दद्यात्'। तथाच

---

* १. १. १. ७, ८ ( १भा० २३९० )।

† "प्रजापतिरकामयत प्रजायेयेति, स मुखतस्त्रिवृतं निरमिमीत त मग्निर्देवता मन्वसृज्यत, गायत्रीच्छन्दो रथन्तरं साम, ब्राह्मणो मनुष्याणा मजः पशूनाम्। तस्मात् ते मुख्या मुखतो ह्यसृज्यन्त"— इति तै० सं० ७. १. १. ६।

कात्यायनः— "गार्हपत्यागारेऽजं बध्नाति न वा, विद्यमानं प्रातरग्नीधे दद्यात्"—इति *। तेनैवेत्यादि, निगदसिद्धम् ॥ ३॥

ब्रह्मौदनपाकविधिं मतभेदकथनेनोक्तं प्रतिपादयति— "अथ चातुष्प्राश्य मोदन मिति। चतुर्भिः अध्वर्युब्रह्मादिभिर्ऋत्विग्भिः प्राशितव्य मित्यर्थः। "छन्दांस्यनेनेति। 'अनेन' ब्रह्मौदनपाकेन गायत्रीत्रिष्टुब्जगत्याख्यानि छन्दांसि 'प्रीणीमः' तर्पयाम इत्यभिप्रायः। अस्यौदनस्य चतुर्भिर्ऋत्विग्भिः प्राशनं युक्त मिति दृष्टान्तेनोपपादयति— "यथेति। 'येन वाहनेन' अश्वादिना 'स्यन्त्स्यन्' यास्यन् 'स्यात्', 'तद्' वाहनं 'सुहितं' सुतृप्तं कर्त्तुं यथा ब्रूयात्, 'एव मेतत्'; आदौ ऋत्विजां कर्मोपयुक्तानां प्राशनं युक्त मित्यर्थः। स्यन्त्स्यन्निति "स्यन्दू स्रवणे †"—इत्यस्माल्लटः सत्रादेशः।

इमं प्राशनपक्षं निषिध्योपपादयति—"तदु तथेति। 'ऋत्विजश्च अनृत्विजश्च ब्राह्मणाः' 'अस्य' यजमानस्य 'कुले वसन्ति' इति 'यत्', 'तेनैव' वासेन 'तं काम माप्नोति', यः कामः प्राशननिमित्तकः प्रागुक्त इत्यर्थः ॥ ४ ॥

अथ पक्वस्यौदनस्य कस्तर्ह्युपयोग इत्याह— "तस्य सर्पिरासेचन मिति। सर्पिरासिच्यतेऽस्मिन्निति सर्पिरासेचनम्, घृतधारणार्थं मोदनं निम्नं 'कृत्वा' इत्यर्थः। "सर्पिरासिच्येत्यादि स्पष्टम्। "समिद्वतीभिर्घृतवतीभिरिति। समिच्छब्दयुक्ताभिर्घृतशब्दयुक्ताभिश्चेत्यर्थः। ताश्च कात्यायन उदाजहार— "आश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्नि मिति

---

* का० श्रौ० सू० ४. ८. १, २। † भ्वा० आ० ७६२ धा०।

प्रत्यृच मिति”–इति *। समिदाधानं कुर्वता मभिप्राय माह— “शमीगर्भ मिति। शमीगर्भो योऽश्वत्थः, तत्रस्थो योऽग्निः, तम्, ‘एतत्’ एतेनाश्वत्थसमिदाधानेन ‘आप्नुमः’ ‘इति’ ब्रुवाण इत्यर्थः। तस्य च समिदाधानस्य कालविशेष माह— “स य इति। अग्न्याधानस्य ‘पुरस्तात्’ ‘यः’ यजमानः समिधः ‘अभ्यादध्यात्’, ‘सः’ खलु ‘तं कामम्’ प्राप्नुयात्। ‘तस्मात्’ समिदाधानार्थं एव ‘तत्’ प्राशनं नादरणीय मिति। निगमयति— “तस्मादिति ॥ ५ ॥

अस्मिन्नर्थे संवादं दर्शयति— “तदु होवाच भाल्लवेय इति। ‘तत्’ तत्र विषये इन्द्रद्युम्नः ‘भाल्लवेयः’ उक्तवान् †। कथ मिति; तदाह— “यथा वा इत्यादि। ‘यथा’ ‘अन्यत्’ चिकीर्षतः; तदनुपयुक्तस्यान्यस्य करणं यथा व्यधिकरणत्वा-दसङ्गतम्, तथा अग्नीनाधित्सताग्नावेव किञ्चित् कर्त्तव्यम् ‘एतत्’ चातुष्प्राश्यकरण मसङ्गतम्; अतोऽसम्बद्धिक एव तथा-विधौदनपाक इति भाल्लवेयाभिप्रायः॥

त मिमं दोषं परिहृत्य प्राशनपक्ष मेव निगमयति— “न हि तदित्यादिना। ऋक्सामादिमन्त्रैर्यस्मिन्नग्नौ समिध माहुतिं च प्रक्षिपेत्, तस्याग्नेर्दक्षिणाहरण मनुगमनं च यदि स्यात्, सोऽग्निरन्वाहार्यपचनः। अन्वाहार्यः ओदनः, तस्य पाकहेतु-र्भविष्यति। अतो दक्षिणाहरण मनुगमनं वाहुतिसंस्कृतस्या-

---

* का० श्रौ० सू० ४. ८. ५।

† इहैव पुनरुपरिष्टादाम्नास्यते “इन्द्रद्युम्नो भाल्लवेयः”— इति (१०. ६. १. १.)। अन्यत्र च— छा० उप० ५. ११. १।

नावकल्पते। अतः पक्वतण्डुलो न होमार्थः, किन्तु प्राशनार्थ इत्यभिप्रायः। गत मन्यत् ॥ ६ ॥

तस्यां रात्रौ यजमानस्य जागरणं विधत्ते—"अथ जाग्रतीति। व्यत्ययेन बहुवचनम्, जागर्त्तीत्यर्थः। "जाग्रति देवा इत्यादि। श्वः करिष्यमाणेष्वाधानादिकर्मस्वङ्गभूता ये देवा उपवसथेऽहनि यजमानगृह मागताः, ते खल्वस्यां रात्रौ 'जाग्रति' जागरणं कुर्वन्ति। तेषु च जाग्रत्सु यजमानस्य स्वापो न युक्त इति तेन जागरणेन यजमानो 'देवानेव' जाग्रतः 'उपावर्त्तते' उपगता भवन्ति। 'सः' च यजमानः 'सदेवतरः' अतिशयेन देवसहितः। निद्राभावादिना अतिशयितं श्रम माप्तः। अग्न्याधानयोग्यतां जागरणवशात् प्राप्नोतीत्यर्थः। अथ स्वाप मप्यनुजानाति—"तद्वपीति ॥ ७ ॥

एवं रात्रौ नीताया माधास्यमानस्याग्नेर्मन्थनविषय मेकीयं मत मुपन्यस्यति— "तद्वैक इति। 'अनुदिते' सूर्योदयात् प्रागेवोषाकाले मन्थनं कार्यम्। सूर्ये चोदिते आहवनीयार्थं तस्य प्रागुद्धरणम्। एवं वदता मभिप्राय माह— "तदिति। तेन मन्थनोद्धरणयोः अहोरात्रसम्बन्धित्वेन, अत एव 'अहोरात्रे' 'परिगृह्णीमः' कर्माङ्गतया स्वीकुर्मः। तस्यापि प्रयोजन माह— "प्राणोदानयोरिति। अहोरात्रे परिग्रहस्य तद्रूपयोः 'प्राणोदानयोः' वाङ्मनसयोश्च 'पर्याप्तिः' प्रयोजन मित्येवं प्रतिपादयन्त इत्यर्थः। त मिमं पक्षं निषेधति— "न कुर्यादिति। तत्र दोष माह — "उभौ हैवेति। गार्हपत्याहवनीयौ 'उभौ' अपि 'अस्य' यजमानस्य 'अनुदिते' रात्रावेव 'आहितौ' भवतः। कथ मुभयोरनुदिते आधान मिति, तत्राह— 'अनुदिते हीति।

'अनुदिते' मथितो योऽग्निः, स एवाहवनीयत्वेन स्थाप्यत इति तस्यापि रात्रिसम्बन्धो दुर्निवारः। तस्मात् 'उदिते' एव 'आहवनीयम्' अग्निं 'मन्थेत्' ॥ ८ ॥  ॥ ९ ॥

रात्रौ मन्थनस्य दोषाभिधानसाधनत्वं विधातुं प्रस्तौति—"तदाहुरिति। ऋक्सामयजुरात्मकास्त्रिविधामन्त्राः, तैः 'यद्' यस्मात् 'अग्निः न आधीयते', केन तर्हि स आधेय इति ब्रह्मवादिनां प्रश्नः। तस्योत्तरम्— "ब्रह्मणो हेति। ब्रह्मणः सम्बन्धि यद् ब्रह्म तेनाधानं कार्यम्। किमिति, तदुभयं दर्शयति— "वाग्वा इति। षष्ठ्यन्तेन निर्दिष्टं यद् ब्रह्म, तद् वागात्मकम्; तस्या वाचः सम्बन्धि यद् वाक्यम्, 'सत्यम्' विद्यमानार्थप्रतिपादि, तत् 'एव' 'ब्रह्म'। तत्र वाचः सत्यं किमिति, तद् दर्शयति— "ता वा एता इति। 'ताः' एताः भूरादिव्याहृतयो यदुदीरितसत्यरूपाः, 'तत्' तस्मात् 'अस्य' यजमानस्य व्याहृतिभिरग्न्याधाने 'सत्येनैव' सोऽग्निराहितो भवति ॥ १० ॥

व्याहृतीनां सत्यरूपत्व मुपपादयंस्तत्कारणक माधानं प्रशंसति— "भूरिति वा इति। सृष्टिसमये प्रजापतिः 'भूरिति' अनया व्याहृत्या 'इमां' भूमिम् 'अजनयत्'। "भुव इत्यन्तरिक्ष मित्यादावप्येवं योजना। "इमे त्रयो लोका इति। यावदस्ति, एतावदेव हीदं सर्वं जगदतो भूरादिलोकहेतुभिराधीयमानोऽग्निरनेन 'सर्वेणैव' जगता आहितो भवति ॥ ११ ॥

ब्रह्मक्षत्रादिवर्णत्रयोत्पत्तिहेतुत्वेन तत्कारणक माधानं प्रशंसति— "भूरिति वा इति। 'ब्रह्म' ब्राह्मणजातिः, 'क्षत्रं' क्षत्रियजातिः ॥ १२ ॥

आत्मप्रजापशुसर्जनहेतुत्वेन तत् प्रशंसति— "भूरिति वा

इति। “एतावद्वा इति। ‘इदं सर्वं’ सर्वंजगत् ‘एतावद् वै’ एतावदेव। ‘यावत्’ स्वरूपेणावस्थितं स्वात्मभोगसम्पादनहेतवः ‘प्रजाः’ ‘पशवः’ चेति एतच्चितयान्तर्गत मेव सर्वं जगत्, अनेन ‘सर्वेण’ सोऽग्निराहितो भवतीत्यर्थः ॥ १३ ॥

एवं साधारण्येन व्याहृतीना माधानसाधनत्वं प्रतिपाद्य, गार्हपत्याधाने विशेष माह— “स वा इति। द्वाभ्या मेव व्याहृतिभ्यां ‘गार्हपत्यम्’ ‘आदधाति’। तिसृभिरपि व्याहृतिभिः गार्हपत्याधाने आहवनीयाधानस्य मन्त्रो न स्यात्, अतः सुवरिति ‘द्वे अक्षरे’ परिशेषयेत्। ‘तेन’ कारणेन परिशिष्टाक्षरद्वयसहितानि भूराद्यक्षराणि ‘अयातयामानि’ अगतसाराणि ‘भवन्ति’। आहवनीयाधाने तिसृणां व्याहृतीनां विनियोग माह—सर्वैरिति। “तान्यष्टाक्षराणि”–इत्यादि निगदसिद्धम्। “गायत्र मग्नेश्छन्द इति। उभयोः प्रजापतिमुखजातत्वात् * ॥ १४ ॥

अग्निमन्थनसमये तस्य पुरस्तादश्वस्य धारणं विधित्सुरितिहासं दर्शयति— “देवानिति। ‘अग्नी’ गार्हपत्याहवनीयौ। ‘ररक्षुः’ निरुद्धवन्त इत्यर्थः। निरोधप्रकार माह— “नाग्निरिति ॥ १५ ॥

देवैः कृतं परिहारं दर्शयति— “ततो देवा इति। अश्वाख्यं यं ‘तं’ मन्थनदेशस्य ‘पुरस्तात्’ ‘उदश्रयन्’ उच्छ्रित मस्थापयन्। ‘तस्य’ वज्रस्य सम्बन्धिनि, ‘अभये’ भयरहिते, ‘अनाष्ट्रे’ रक्षःप्रभृतिनाशकरहिते, ‘निवाते’ वातरहिते एवम्भूते स्थाने मन्थनाद् ‘अग्निः’ उदपद्यतेत्यर्थः। एव मितिहास मुपन्यस्य

* तै० सं० ७. १. १. ६. द्रष्टव्यम्।

प्रकृते योजयति— "तस्मादिति। 'आनेतवै' आनेतु मित्यर्थः। तुमर्थे तवैप्रत्ययः *। "स पूर्वेणेत्यादि उक्तप्रायम् ॥ १६ ॥

स चाश्वः पूर्ववयस्क एवानेतव्य इत्याह— "स वै पूर्ववाडिति। पूर्वे वयसि वहतीति पूर्ववाट्'। 'वहश्च'-इति ण्विः †। तस्यालाभे पक्षान्तर माह— "अपि य एवेति। निगदसिद्ध मन्यत्। "एष ह्येवेति। अश्वविधेयः स्तावकोऽर्थवादः, अनडुद्विधेरपि एष एव स्तावक इत्यर्थः ॥ १७ ॥

आहनीयदेशं प्रत्यग्नेर्हरणं समाम्याश्वस्यापि पुरस्तात् नयनं विधत्ते— "त मिति। तस्य प्रयोजन माह— "तत्पुरस्तादिति। स चाश्वोऽग्नेः पुरस्तात् गमनमार्गे विद्यमानं रक्षःप्रभृतिकम् 'अपघ्नन्' हिंसन् 'एति' गच्छति। तथा च भयादिरहितेन मार्गेण तस्याग्नेर्हरणं सिध्यतीत्यर्थः ॥ १८ ॥

तस्मिन् हरणे विशेष माह— "तं वा इति। 'यथा' 'एनं' यजमानम् 'एषः' अग्निः 'प्रत्यङ् 'उपाचरेत्' अभिमुख मुपावर्त्तेत, 'तम्' अग्निम् 'अवहरेयुः' आहवनीयायतनस्य पूर्वभागं प्रापयेयुरित्यर्थः। तस्य प्रयोजन माह— "एष वा इति। 'एषः' 'वै' खलु अग्निः 'यज्ञः' तन्निष्पादकत्वात्। तस्य प्रत्यगावर्त्तनेन 'एनं' यजमानं 'यज्ञः एव प्रत्यङ् प्रविशति' अभिमुख आवर्त्तते। तथा च 'तं' यजमानं 'क्षिप्रे' अल्पकाले एव, शीघ्रं यज्ञः उपगच्छति। एतद् व्यतिरेकमुखेनोपपादयति—"अथ यस्मादिति। सः अग्निः 'यस्मात्' बहुयजमानात् 'पराङ्' पराङ्मुखः भवति, तर्हि 'अस्मात्' 'यज्ञः' अपि पराङ्मुखो

---

* पा० सू० ३. ४. ९। † पा० सू० ३. २. ६४।

'भवति'। 'तत्र' तथा सति 'यः' कश्चिद् द्वेष्यः 'एनं' यजमानम् 'अनुव्याहरेत्'। किमिति—"यज्ञोऽस्मात् पराङ् अभूत्"–इति। स यजमानः 'तथैव' भवितुम् 'ईश्वरः' 'स्यात्' ॥ १९ ॥

एव मग्नेर्यज्ञरूपत्वेन प्रत्यगावर्त्तनं प्रतिपाद्य प्राणात्मकत्वादपि तत् प्रतिपादयति— "एष उ वा इति। 'एषः' खल्वग्निः 'प्राणः'। "तं वा इत्यादि, पूर्ववत् ॥ २० ॥

अथैनं यज्ञात्मक मग्निं वायुतादात्म्येन स्तौति —"अयं वा इति। "तं वा इत्यादि, पूर्ववत् ॥ २१ ॥

वाय्वात्मक मग्निं प्राणरूपतया स्तौति— "एष उ वा इति। अन्यत् पूर्ववत् ॥ २२ ॥

एव मग्नेर्हरणप्रकारं प्रतिपाद्य तदनन्तरकर्त्तव्यता माह— "अथाश्व मिति। आहवनीयायतने सम्भारान् निधाय दक्षिणपूर्वपादेन 'अश्व माक्रमयति'। एवम् 'आक्रमय्य' 'प्राञ्चं' नीत्वा 'तम्' अश्वम् 'पुनरावर्त्तयति' आवृत्य स्थापयति। अनन्तर मश्वम् 'उदञ्चम्' उदङ्मुखं प्रमुञ्चति। सूत्रते हि कात्यायनेन— "सम्भारानधिष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं नीत्वावर्त्त्य स्थापयति"– इति *। पुनरावर्त्तनस्य प्रयोजन माह— "वीर्यं वेत्यादि। अश्वलक्षणं यत् 'इदं' वीर्यम्, तत् 'नेत्' नैव 'अस्मात्' 'पराग्'–भूतम् भवेदित्यनेनाभिप्रायेण तस्याश्वस्य पुनरावर्त्तनं कार्य मित्यर्थः ॥ २३ ॥

आहृतस्याग्नेराधानं विधत्ते— "त मश्वस्येति। आहवनीयायतने यदश्वस्य पदम्, तस्मिन् 'तम्' अग्निं मन्त्रेण स्थापयेत्। तदेतत् प्रशंसति— "वीर्यं वा इति ॥ २४ ॥

---

* का० श्रौ० सू ४. ९. १४।

तत्र विशेष माह – "स वा इति। 'अग्रे' प्रथमम् अश्वस्य पद मग्निना 'तूष्णीम्' 'उपस्पृशति'। त मग्नि मुद्यम्य पुनरपि 'उपस्पृशति'। एवं द्विरुपस्पृश्य तृतीयेनोपस्पर्शनेन व्याहृतिभिः त मग्निं तस्मिन् पदे स्थापयति। व्याहृतिगतं त्रित्वं प्रशंसति—"त्रयो वा इति। इमं पक्षं निगमयति—"एतदिति। 'एतत्' खल्वाहवनीयाधानस्य 'एकं' विधान मित्यर्थः ॥ २५ ॥

पक्षान्तर मपि वक्तुं प्रतिजानीते – "अथेदं द्वितीय मिति। "तूष्णी मेवेत्यादि। अश्वपदं 'तूष्णीं' सकृदेवाग्निनोपस्पृश्य, त मुद्यम्य द्वितीयेनोपस्पृशति। न व्याहृतिभिः तत्र स्थापयेदित्यर्थः। एतस्योपस्पर्शनस्य प्रयोजन माह—"यो वा अस्या मिति। 'अस्यां' भूम्यां दृढ़ मनवस्थितः सन् 'यः' वोढा 'भारम् उद्यच्छति', सः 'एनं' भारम् 'उद्यन्तु'' 'न शक्नोति'; प्रत्युत निपततोऽस्योपरि निपतन् भार एव 'एनं' पुरुषं हिनस्ति ॥ २६ ॥

"स यत् तूष्णी मुपस्पृशतीति। यस्तु भूम्यां प्रतिष्ठाय भार मुद्यच्छति, स भारं वोढुं शक्नोतीति। तत्समान मेवैतद् भूमेः सकृदुपस्पर्शनम्। तथा च तेन स्पर्शनेन भूम्यां प्रतिष्ठित एवाग्निराहितो भवति, 'न व्यथते' न चलते। "व्यथ भयचलनयोः"— इति * धातुः। पक्षान्तरं वक्तु मन्यस्मिन् पक्षे दोष माह—"तदु हैतदिति। आसुरिप्रभृतयस्त्रयो मुनयः तदेतदुपस्पृश्योद्यम्य द्वितीयस्पर्शनेनाधानं 'पशेव' पश्चाद्भूत मिव 'दध्रिरे' अधारयन्। एतावता को दोष इति। अग्निनोप-

---

* भ्वा॰ आ॰ ७६५ धा॰।

स्थस्य पुनस्तस्योद्यमनेन तद्व्यतिरिक्तं सर्व मायतनस्थं सम्भारादिकम् 'इयसितम्' इयत्तया परिच्छिन्नं व्यक्त मिव भवति। अतोऽग्नि मुद्यम्य प्रथमेनैवोद्यमनेन व्याहृतिभिः 'आदध्यात्'। तथा एवं सति 'अनियसितम्' * अव्यक्त मेव सर्वं भवति।

उक्तानां पक्षाणा मिच्छया विकल्प माह— "यतमथेति। एतत् पक्षत्रय मपि सूचितं कात्यायनेन— "अग्निना पदं द्विरूपस्थस्य तृतीयेनादधाति, द्वितीयेन प्रथमेन वा भूर्भुवः-स्वरिति"-इति † ॥ २७ ॥

आहितस्याग्नेः पूर्वभागस्य मुल्मुक मन्वारभ्य मन्त्रस्य जपं विधत्ते— "अथ पुरस्तादिति ‡। मन्त्रतात्पर्य माह— "यथासाविति। बहुभिः 'नक्षत्रैः' 'यथासौ द्यौः' 'बह्वी' बहुत्वोपेता, 'एवम्' अह मपि पुत्रपौत्रादिबहुत्वेन 'बहुः भूयासम्' इति, "द्यौरिव भूम्ना"— इत्यस्य भागस्य अर्थः। पृथिवीत्यादिक मनूद्य तात्पर्य माह – 'यथा इयं पृथिवी' 'उर्वी' विस्तीर्णा, 'एवम्' अह मपि 'वरिम्णा' उरुत्वेन सुविस्तीर्णो भूयास मिति। भागान्तर मनूद्य व्याचष्टे— "तस्यास्त इति। उरुत्वं प्रति उपमानभूतायाः 'तस्याः' 'ते' तव 'पृष्ठे' उपरि भागे "अग्निम् आदधे"-इत्युत्तरत्र सम्बन्धः। "अस्यै ह्येति। अस्या एव खलु पृथिव्याः 'पृष्ठे' उपरि आधत्ते, अतो युक्तं तस्यास्ते इति वाक्य मिति भावः। अन्तिमं भाग मनूद्य व्याचष्टे— "अग्नि मन्नाद मिति। आहवनीयादिरूपेण हवि-

---

* पूर्वस्मिन् काण्डे ( ६१० पृ० ५ पं० ) "इयसितं" द्रष्टव्यम्।

† का० श्रौ० सू० ४. ६. १६ ; मन्त्रस्त्वेषः वा० सं० ३. ५. १।

‡ का० श्रौ० सू० ४. ६. १७। मन्त्रस्तु— वा० सं० ३. ५. २।

लक्षणम्, तद्विलक्षणं च सर्वं मन्न मतीत्य 'अन्नादोऽग्निः'। एव मन्नादशब्देनाग्नेर्विशेषणादहं मप्यन्नादो भूयास मिति तात्पर्यगम्योऽर्थः। "सैषाशीरित्यादि। 'एषा' मन्त्रात्मिका ऋक् 'आशीः' फलप्रार्थन मेव; अतः सत्यां कामनायां तस्य मन्त्रस्य जपः; तदभावे तु जपोऽपि न कर्त्तव्य इत्यर्थः॥ २८॥

अथ तस्याग्नेः सार्पराज्ञीभिरुपस्थानं विधत्ते— "अथ सर्पराज्ञ्या इति *। सर्पणशीलानां प्राणिनां राज्ञी 'सर्पराज्ञी', तत्सम्बन्धिनीभिर्ऋग्भिरग्नि मुपतिष्ठते। का पुनस्ता इति तिस्र-ऋचः पठति—"आयं गौरिति प्रथमा †, "अन्तश्चरति रोचनेति द्वितीया ‡, त्रिंशद्धामेति तृतीया §। अस्योपस्थानस्य प्रयोजन माह— "तद् यदेवेति। 'अस्य' यजमानस्य 'अत्र' अग्निन्याधाने सम्भारादिभिर्विकल्पनिमित्तेन यत् 'अनाप्तम्' अप्राप्तं भवति, 'एतेन' उपस्थानेन 'अस्य' तत् 'सर्वम्' आप्यते सर्पराज्ञ्याः सर्वाधिष्ठानभूतत्वात्। अत एव तन्नामनिर्वचन मन्यत्राम्नातम्— "इयं वै सर्पराज्ञी, देवा वै सर्पाः, तेषा मियं राज्ञीति ¶॥ २९॥

तेषां पृथिव्या माधानादेव सम्भारादीनां सर्वेषा मवाप्तत्वात्,

---

* का० श्रौ० सू० ४. ६. १८।

†, ‡, § वा० सं० ३. ६, ७, ८।

¶ "इयं वै सर्पराज्ञी"— इत्यादि ऐ० ब्रा० ५. ४. ४। अत्र 'सर्पराज्ञी'-शब्देन काचिद् ब्रह्मवादिनी गम्यते। "इयं वै सर्पतो राज्ञी"— इति तै० ब्रा० १. ४. ६. ६। "देवा वै सर्पास्तेषा मियं राज्ञी"— इत्यादि च तै० ब्रा० २. २. ६. १। ता० ब्रा० ६. ८. ७ (ब्रह्मवादिनी)। आर्षे० ब्रा० ३. २६ (सर्पाणाम्)। ऋ० सं० १०, १८६ सा० भा० (ऋषिः)।

तदवासये सर्पराज्ञीभिरुपस्थानं न कार्यमिति पचान्तर माह — "तदाहुरिति ॥ ३० ॥ ४ [ १. ६. ] ॥

इति श्रीसायणार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणः सिङ्गणार्यौ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा * लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

* 'प्राज्यबुद्धिर्'— इति च ।

( अथ द्वितीयाध्याये प्रथमं ब्राह्मणम्. )

उद्धृत्याहवनीयं पूर्णाहुतिं जुहोति। तद्यत्पूर्णाहुतिं जुहोत्यन्नादं व्वा ऽएत मात्मनो जनयते* यदग्निं† तस्मा ऽएतदन्नाद्य मपिदधाति यथा कुमाराय जाताय व्वत्साय वा स्तन मपिदध्यादेव मस्मा ऽएतदन्नाद्य मपिदधाति ॥ १ ॥

स एतेनान्नेन शान्तः। उत्तराणि हवीꣳषि‡ श्रप्यमाणान्युपरमति शश्वद्ध वा ऽअध्वर्युं वा यजमानं वा प्रवहेत्तौ ह्यस्य नेदिष्ठं चरतो यदस्मिन्नेता माहुतिं न जुहुयात् तस्माद्वा ऽएता माहुतिं जुहोति ॥ २ ॥

तां व्वै पूर्णां जुहोति। सर्व्वं वै पूर्णꣳ सर्व्वेणैवैन मेतच्छमयति स्वाहाकारेण जुहोत्यनिरुक्तो वै स्वाहाकारः सर्व्वं वा ऽअनिरुक्तꣳ सर्व्वेणैवैन मेतच्छमयति ॥ ३ ॥

यां व्वै प्रजापतिः। प्रथमा माहुति मजुहोत्

---

* 'जनयते'— इति क, ख, ग।

† 'यदग्निं'— इति च दृष्टो डा०-वेबरेण।

‡ 'हवीꣳषि'— इति च दृष्टो डा०-वेबरेण।

स्वाहेति वै ता मजुहोत्स्वो स्विदेषा निदानेन तस्मात् स्वाहेति जुहोति तस्यां व्वरं ददाति सर्व्वं वै व्वरः सर्व्वेणैवैन मेतत्समयति ॥ ४ ॥

तदाहुः । एता मेवाहुतिꣳ हुत्वाथोत्तराणि हवीꣳषि नाद्रियेतैतयैव तं काम माप्नोति य मभिकाम मुत्तराणि हवीꣳषि निर्व्वपतीति ॥ ५ ॥

स वा ऽअग्नये पवमानाय निर्व्वपति । प्राणो वै पवमानः प्राण मेवास्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधात्यन्नꣳ हि प्राणोऽन्न मेषाहुतिः ॥ ६ ॥

अथाग्नये पावकाय निर्व्वपति । अन्नं वै पावक मन्न मेवास्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधात्येषा ह्येव पत्यक्ष मन्न माहुतिः ॥ ७ ॥

अथाग्नये शुचये निर्व्वपति । व्वीर्य्यं वै शुचि यद्वा ऽअस्यैतदुज्ज्वलत्येतदस्य व्वीर्य्यꣳ शुचि व्वीर्य्य मेवास्मिन्नेतद्दधाति तद्वेतयैवास्मिंस्तद्दधाति यदा ह्येवास्मिन्नेता माहुतिं जुहोत्यथास्यैतद् व्वीर्य्यꣳ शुच्युज्ज्वलति* ॥ ८ ॥

तस्मादाहुः । एता मेवाहुतिꣳ हुत्वाथोत्तराणि

---

* 'ज्वलति'— इति घ, ङ ।

हवीꣳषि नाद्रियेतैतयैव * तं काम माप्नोति य मभि-
काम मुत्तराणि हवीꣳषि निर्व्वपतीति तदु निर्व्वपे-
देवोत्तराणि हवीꣳषि परोऽक्ष मिव वा ऽएतद्यदद-
स्तदिद मितीव ॥ ९ ॥

स यदग्नये पवमानाय निर्व्वपति । प्राणा वै
पवमानो यदा वै जायतेऽथ प्राणोऽथ यावन् न
जायते मातुर्व्वैव तावत् प्राण मनु प्राणिति यथा
वा तस्मात ऽएवास्मिन्नेतत् प्राणं दधाति ॥ १० ॥

अथ यदग्नये पावकाय निर्व्वपति । अन्नं वै
पावकं तस्मात ऽएवास्मिन्नेतदन्न दधाति ॥ ११ ॥

अथ यदग्नये शुचये निर्व्वपति । व्वीर्य्यं व्वै
शुचि यदा वा ऽअन्नेन व्वर्द्धतेऽथ व्वीर्य्यं तदन्नेनैवैन
मेतद् वर्द्धयित्वाथास्मिन्नेतद् व्वीर्य्यꣳ शुचि दधाति
तस्मादग्नये शुचये ॥ १२ ॥

तद्वैतदेव सद्विपर्य्यस्त मिव । अग्निर्ह यत्र
देवेभ्यो मनुष्यानभ्युपाववर्त्त तद्धेक्षाञ्चक्रे मैव सर्व्वे-
णेवात्मना मनुष्यानभ्युपावृत मिति ॥ १३ ॥

स एतास्तिस्रस्तनूरेषु लोकेषु व्विन्यधत्त ।

* 'तैतयैव'— इति च दृष्टो डा०-वेबरेण ।

यदस्य पवमानꣳ रूप मासीत्तदस्यां पृथिव्यां न्यधत्ताथ यत् पावकं तदन्तरिक्षेऽथ यच्छुचि तद् दिवि तद्वा ऽऋषयः प्रतिबुबुधिरे य ऽउ तर्ह्यृषय आसुरसर्व्वेण वै न आत्मनाग्निरभ्युपावृतदिति * तस्मा ऽएतानि हवीꣳषि निरवपन् ॥ १४ ॥

स यदग्नये पवमानाय निर्व्वपति। यदेवास्यास्यां पृथिव्याꣳ रूपं तदेवास्यैतेनाप्नोत्यथ यदग्नये पावकाय निर्व्वपति यदेवास्यान्तरिक्षे रूपं तदेवास्यैतेनाप्नोत्यथ यदग्नये शुचये निर्व्वपति यदेवास्य दिवि रूपं तदेवास्यैतेनाप्नोत्येव मु कृत्स्न मेवाग्नि मनपनिहित माधत्ते तस्मादु† निर्व्वपेदेवोत्तराणि हवीꣳषि ॥ १५ ॥

केवलबर्हिः‡ प्रथमꣳ हविर्भवति। समानबर्हिषी ऽउत्तरे ऽअयं वै लोकः प्रथमꣳ हविरथेदमन्तरिक्षं द्वितीयं द्यौरेव तृतीयं बह्वुलेव वा ऽइयं पृथिवी लेलयेवान्तरिक्षं लेलयेवासौ द्यौरुभे

* 'वृत्तदिति'— इति ख।

† 'तस्मादु'— इति च दृष्टो डा०-वेबरेण।

‡ अत्रैव छेदचिन्हः (।) क-पुस्तके।

चिदेनां प्रत्युद्यामिनी* स्या मिति तस्मात् समान-
बर्हिंषि ॥ १६ ॥

अष्टाकपालाः सर्व्वे पुरोडाशा भवन्ति। अष्टा-
क्षरा वै गायत्री गायत्र मग्नेश्छन्दः स्वेनैवैन मेतच्छन्द-
साधत्ते तानि सर्व्वाणि चतुर्व्विंᳪशतिः कपालानि
सम्पद्यन्ते चतुर्व्विंᳪशत्यक्षरा वै गायत्री गायत्र
मग्नेश्छन्दः स्वेनैवैन मेतच्छन्दसाधत्ते गायत्र्यो याज्या-
नुवाक्या भवन्ति गायत्र मग्नेश्छन्दः स्वेनैवैन मेत-
च्छन्दसाधत्ते† ॥ १७ ॥

अथादित्यै चरुं निर्व्वपति। प्रच्यवत ऽइव
वा ऽएषोऽस्माल्लोकाद्य एतानि हवीᳪषि निर्व्वपती-
मान् हि लोकान्त्समारोहन्नेति॥ १८ ॥

स यददित्यै चरुं निर्व्वपति। इयं व्वै पृथिव्य-
दितिः सेयं प्रतिष्ठा तदस्या मेवैतत् प्रतिष्ठायां प्रति-
तिष्ठति तस्माददित्यै चरुं निर्व्वपति ॥ १९ ॥

तस्यै व्विराजौ संयाज्ये स्याता मित्याहुः। व्विरा-

---

* 'प्रत्युद्यामिनी'— इति घ।

† "गायत्र्यो०——०साधत्ते"— इत्येष ग्रन्थभागो च-पुस्तके नास्ति।

ष्टीय* मित्यथो त्रिष्टुभौ त्रिष्टुभीय मित्यथो जगत्यौ जगती ह्यीय मिति विराजाविव्येव† स्याताम् ॥ २० ॥

तस्यै धेनुर्दक्षिणा। धेनुरिव वा ऽइयं मनुष्येभ्यः सर्व्वान् कामान् दुहे माता धेनुर्मातेव वा ऽइयं मनुष्यान् बिभर्त्ति तस्माद् धेनुर्दक्षिणैतन्न्वेक‡मयनम् ॥ २१ ॥

अथेदं द्वितीयम्। आग्नेय मेवाष्टाकपालं पुरोडाशं निर्व्वपति परोऽक्ष मिव वा ऽएतद्यदग्नये पवमानायाग्नये पावकायाग्नये शुचय ऽइतीवाथाग्नसैवैन मेतत् प्रत्यक्ष माधत्ते तस्मादग्नयेऽथादित्यै चरुं निर्व्वपति स य एव चरोर्बन्धुः स बन्धुः ॥ २२ ॥ ५ ॥

॥ इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् [२.१.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्म्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

आदित आरभ्यैतावत्पर्यन्तं तात्पर्यार्थाभिधानविनियोगादिप्रदर्शनपुरस्सरं वाक्ययोजनं कृतम् ; उपरितनाध्यायगतानि §

---

* 'ष्टीय'— इति क, ख, ग। † 'विव्येव'— इति क, ख, ग।

‡ 'तन्वेक'— इति क, ग ; 'तं न्वेक'— इति ख।

§ 'ततोध्यायगतानि'— इति च।

यानि वाक्यानि, तानि समानन्यायतया * पूर्ववदेव योजयितुं शक्यानीति ग्रन्थविस्तरभयात् केवलं प्रकटार्थकथनं विषमपद-विवरणं च क्रियते ।

एवं गार्हपत्याद्यग्निषु स्वरूपेण सिद्धेषु क्षुधितस्याग्नेः शमनाय पूर्णाहुतिं विधत्ते— "उद्धृत्याहवनीय मित्यादिना † ॥ १ ॥

"स एतेनान्नेन शान्त इति । "शश्वद्ध वा अध्वर्यु मिति । अशान्तो खल्वग्निः 'शश्वत्' ध्रुवम् अध्वर्युयजमानयोरन्यतरं प्रदहेत् ; 'तौ' खलु 'अस्य' अग्नेः 'नेदिष्ठम्' अन्तिकतमम्, समीपे सञ्चरेते इत्यर्थः । "अन्तिकबाढयोर्नेदसाधौ"—इती-ष्ठनि अन्तिकस्य नेदादेशः ‡ ॥ २ ॥ ॥ ३ ॥

मन्त्ररहितेन स्वाहाकारमात्रेण होम मुपपादयति— "यां वा इति । पुरा खलु प्रजापतिः पुरुषाश्वादि§–सर्वजगत्-सर्जनहेतुभूतां 'प्रथमा माहुतिं' स्वाहाकारेणैव 'अजुहोत्', 'एषा' अपि पूर्णाहुतिः तथा क्रियमाणा 'निदानेन' ( निदान-भूतेन ¶ ) कारणेन 'सो खित्' सैव, प्रजापतिना हुता प्रथमा-हुतिः खल्वित्यर्थः ‖ ॥ ४ ॥

पूर्णाहुतेः सकलकामावाप्तिहेतुत्व माह— तदाहुरिति । 'यं' 'कामम्' 'अभि'-लक्ष्य 'उत्तराणि' पवमानादीनि 'हवींषि'

---

* 'सोमानं धायतया ( ? )'— इति च ।

† का० श्रौ० सू० ५. १०. ५ क। "उद्धरेति यजमानो ब्रूयात् साय-म्प्रातरग्निहोत्रे । गार्हपत्यादाहवनीयस्योद्धरण मनस्तमितानुदितयोः"— इति च का० श्रौ० सू० ४. १२. १, २ । ‡ पा० सू० ५. ३. ६३ ।

§ 'पश्वादि-'— इति च । ¶ नास्त्येतत्पदं च पुस्तकादन्यत्र ।

‖ का० श्रौ० सू० ४. १०. ५ ख ।

निरूप्यन्त। 'तं' कामम् 'एतयैव' पूर्णाहुत्या प्राप्नोतीत्यर्थः ॥ ५ ॥

तत्रासिक्कारण माह— "स वा इत्यादिना *। पवमानहविर्भिर्जातेऽग्नौ प्राणान्नवीर्या यथाक्रमं स्थाप्यन्ते। 'तत्' सर्वम् 'एतयैव' पूर्णाहुत्या ॥ ६ ॥ ॥ ७ ॥ ॥ ८ ॥

तस्मादाहुरिति। भच्च मेव सिद्धान्तयति— "उत्तराणीति। आधानान्तरभावीनि अग्नये–पवमानाय–इत्यादीनि विधेयानीत्यर्थः। "परोच्च मिव वेति। 'यदहः' † प्राणान्नवीर्यधारणं पूर्णाहुत्याग्नौ क्रियते, 'एतत्' 'परोच्च मिव', पवमानेष्टिभिः 'तत् ‡ इदम् इति इव' प्रत्यक्षत एव क्रियते ; पवमानपावकशुचिशब्दैः प्राणान्नवीर्याणां प्रतिपादनात्। अतस्ता इष्टयो नियमेन कर्त्तव्या इत्यर्थः ॥ ९ ॥

ता इष्टीर्विधाय प्रशंसति— "स यदित्यादिना। "प्राणा वै पवमान इति। पवनक्रिया हि वायुधर्मः, प्राणश्च वाय्वात्मक इति पवमानशब्देन तत्प्रतिपादनम्। एतेन चाग्निं विशिंषन् प्राण मेवास्मिन् जातेऽग्नौ स्थापितवान् भवति। जननात् पूर्वन्तु मातुर्गर्भावस्थस्य तु प्राणो मातुः प्राणादभिन्न इति न तत्र पृथक् तद्धारणापेक्षेत्यर्थः ॥ १० ॥ ॥ ११ ॥

"अथ यदग्नये शुचय इति। "यदा वा अन्नेनेति। लौकिकदृष्टान्तकथनम्। "अन्नेनैवैन मिति। पावकेष्टिरूपेणान्नेनाग्निं 'वर्द्धयित्वा' अनन्तर मेव 'अस्मिन्' अग्नौ अनया तृतीयेष्ट्या 'शुचि' दीप्यमानं 'वीर्यं' च धारयतीत्यर्थः ॥ १२ ॥

---

* का० श्रौ० सू० ४, १०. ८, ९।

† 'यददः'— इति च।  ‡ 'तत'—इति च।

"तद्वैतदिति। 'तदेतत्' सर्वं पूर्णाहुतिपक्षे 'सत्' विद्यमान मपि 'विपर्यस्त मिव' भवति। अतो नासौ पक्षो युक्त इत्यर्थः। न केवल मेतावदेवेष्टीनां * प्रयोजनम्, अपि तु मनुष्यैराधीयमानस्याग्नेः कात्स्न्यर्थ मप्याभिः सम्पद्यत इत्याख्यायिकापुरस्सर माह – "अग्निर्ह यत्रेति। "अभ्युपावृत मिति। अभ्युपागम मित्यर्थः। वृतेर्लुङि उत्तमैकवचने द्युतादित्वात् च्लेरङ् † ॥ १३ ॥

"स एतास्तिस्र इति ‡। 'सः' अग्निर्हि मनुष्यान् प्रत्यागमनसमये 'एताः' पवमानपावकशुच्याख्याः 'तिस्रः' आत्मीयाः 'तनूः' पृथिव्यन्तरिक्षद्युलोकेषु यथाक्रमं निधाय 'न' 'सर्वेण' कृत्स्नेनैव 'आत्मना' स्वरूपेण अस्मान् 'अभि'-लक्ष्य 'उपावृतत्' उपागमत्। 'इति' इम मर्थम् 'ऋषयः' अबुध्यन्त। 'तस्मै' अग्नये कात्स्न्र्यसम्पादनाय पवमानहवींषि निरवपन्नित्यर्थः ॥ १४ ॥

"स यदग्नये पवमानायेत्यादि, स्पष्टम्। "अनपनिहित माधत्त इति। यत् पृथिव्यादिष्वग्निना निक्षिप्त मात्मीयं रूपम्, तद् आभिः पवमानेष्टिभिः स्वीकृत्य 'कृत्स्न मेव' तम् 'अग्निम्' आहितवान् भवतीत्यर्थः। "तस्मादिति, निर्वापपक्षनिगमनम्। कात्यायनोऽपि "द्वादशाहान्ते तनूहवींषि निर्वपति"–इति § तनुरूपपवमानेष्टिनिर्वापं प्रक्रम्य "सद्यो वा न वा"–इत्यकरणपक्ष मपि ¶ सूत्रयामास ॥ १५ ॥

---

* 'मेतावदिष्टीनां'– इति च। † पा० सू० ३, १, ५५।
‡ का० श्रौ० सू० ४, १०, ११। § का० श्रौ० सू० ४, १०, ७ क।
¶ का० श्रौ० सू० ४, १०, ७ ग।

"केवलबर्हिरिति। अग्नये पवमानायैतत् यत् 'प्रथमं हविः', तत् 'केवलबर्हिः' यजनम्, न साधारणं तन्त्रयुक्तं कर्त्तव्यम्; हविरन्तरेण न समुच्चित्यानुष्ठेय मित्यर्थः। "समानबर्हिषी इति। 'उत्तरे' तु हविषी समानतन्त्रे कार्ये इत्यर्थः। तदेतद् द्वय मुपपादयति— "अयं वा इत्यादिना। "लेलयेवान्तरिक्ष मिति। लीन मिव ह्यन्तरिक्षं नीरूपत्वात्। तथा 'द्यौः' अपि विप्रकृष्टत्वात् लीयमानैव भवति। अत एते 'उभे' अपि 'एनां' पृथिवीं 'प्रति' 'उद्यामिनो स्ताम्' बाधितु मुद्युक्ते भवेताम्। अतः प्रथमं हविः पृथक्तन्त्रं कार्यम्, उत्तरे तु समानतन्त्रे कार्ये इति। निगमयति— "तस्मादिति ॥ १६ ॥

"अष्टाकपालाः सर्वे इत्यादि, स्पष्टम्। "गायत्र्यो याज्यानुवाक्या भवन्तीति। यागान्तरेषु * हि पुरोनुवाक्या गायत्री, याज्या त्रिष्टुप्; अत्र तु पुरोनुवाक्या याज्याः सर्वा गायत्र्यः कर्त्तव्याः। अतएवाश्वलायनेन तथैव सूत्रितम्— "अग्न आयूंषि पवसेऽग्ने पवस्व स्वपाः ० — ० स नः पावक दीदिवोऽग्ने पावक रोचिषाग्निः शुचिव्रततम उदग्ने शुचयस्तवेति † ॥ १७ ॥

"अथादित्यै चरु मिति ‡। "इमान् हि लोकान्समारोहन्नेतीति। पृथिव्यन्तरिक्षद्युलोकात्मकानि पवमानहवींषि क्रमेण निर्वपंस्तद्द्वारा इमानेव पृथिव्यादिलोकान् सोपानक्रमेण सम्यगारोहंस्तस्माल्लोकात् 'प्रच्यवते'। अतस्तत्परिहारायादित्येष्टिः कर्त्तव्येत्यर्थः ॥ १८, १९ ॥

---

* 'यागान्तरेष्वा'— इति च। † आश्व० श्रौ० सू० २. १. २०—२५।

‡ का० श्रौ० सू० ४. १०. १०।

"तस्यै विराजौ संयाज्ये इति। "प्रेद्धो अग्ने*"—"इमो अग्ने"† इत्येते स्विष्टकृतो याज्यानुवाक्ये 'स्याताम्' इत्यर्थः। "विराजावित्त्वेवेति, तु-शब्देन त्रिष्टुब्जगतीपक्षौ व्यावर्त्त्येते ॥ २० ॥

"तस्यै धेनुरिति‡। "एतन्न्वेक मयन मिति। पवमानेष्टियजताम् 'एतत् नु एकम्' अनुष्ठानस्य विधानम् ॥ २१ ॥

अन्यदप्यस्तीत्याह—"अथेद मिति। "आग्नेय मेवेति। न तु पवमानादिविशेषण मादरणीय मित्येवकारार्थः। "परोक्ष मिव वा इति। पवमानादिविशेषणैर्विशेष्यमाणोऽग्निस्तत्र वैशिष्ट्यद्वारा पारोक्ष्य मापद्यते; अतस्तत्परिहारेण 'अञ्जसा' ऋजुनैव मार्गेण केवलाग्नये निर्वपन् तं प्रत्यक्षत एव स्वीकरोतीत्यर्थः। अस्मिन्नपि पक्षे आदित्ययागः कर्त्तव्य इत्याह—"अयादित्या इति। "स य एवेति। प्रागुक्तब्राह्मणातिदेशः ॥ २२ ॥ ५ [ २. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम्. )

घ्न॒न्ति॒ वा॒ ऽए॒त॒द्य॒ज्ञं। य॒दे॒नं त॒न्व॒ते य॒न्न्वे॒व§

---

* ऋ० सं० ७. १. ३ ( सां० सू० २, २, १५. )।

† ऋ० सं० ७. १. १८ ( सां० सू० २. २. १५. )।

‡ का० श्रौ० सू० ४. १०. १४ ।

§ 'यन्वेव'— इति क, ग ; 'यं न्वेव'— इति ख।

राजान मभिषुण्वन्ति तत्तं* घ्नन्ति यत् पशुꣳ सञ्ज्ञप-
यन्ति विशासति तत्तं† घ्नन्त्युलूखलमुसलाभ्यां दृष-
दुपलाभ्याꣳ हविर्यज्ञं‡ घ्नन्ति ॥ १ ॥

स एष यज्ञो हतो न ददक्षे । तं देवा दक्षि-
णाभिरदक्षयंस्तद्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा
नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदेवास्यैत-
द्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञो भवति तस्माद्
दक्षिणा ददाति ॥ २ ॥

ता वै षड्§ दद्यात्¶ । षड् वा ऽऋतवः संव्व-
त्सरस्य संव्वत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो
यावत्यस्य मात्रा तावतीभिर्दक्षयति ॥ ३ ॥

द्वादश दद्यात् । द्वादश वै मासाः संव्वत्सरस्य
संव्वत्सरो यज्ञः प्रजापतिः स यावानेव यज्ञो याव-
त्यस्य मात्रा तावतीभिर्दक्षयति ॥ ४ ॥

चतुर्व्विꣳशतिं दद्यात् । चतुर्व्विꣳशतिर्व्वै संव्व-
त्सरस्यार्द्धमासाः संव्वत्सरो यज्ञः प्रजापतिः यावानेव

---

*, † 'तत्तँ'— इति क ।

‡ 'ज्ञँ'— इति क । "हविर्यज्ञं'— इति च इष्टो-डा०-वेबरेण ।

§ 'षट्'— इति क । ¶ 'दध्यात्'— इति ग ।

यज्ञो यावत्यस्य मात्रा तावतीभिर्दक्षयत्येषा मात्रा दक्षिणानां दद्यात् त्वेव* यथाश्रद्धं भूयसीस्तद्यद्दक्षिणा ददाति ॥ ५ ॥

द्वया वै देवा देवाः। अहैव देवा अथ ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा† विभक्त एव यज्ञ आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाꣳ शुश्रुवुषा मनूचानाना माहुतिभिरेव देवान् प्रीणाति दक्षिणाभिर्मनुष्य-देवान् ब्राह्मणाञ्छुश्रुवुषोऽनूचानांस्त ऽएन मुभये देवाः प्रीताः सुधायां दधति ॥ ६ ॥

तद्यथा योनौ रेतो दध्यात्। एव मेवैतदृ-त्विजो यजमानं लोके दधति तद्यदेभ्य एतद् ददाति ये मेदꣳ सम्प्रापिपन्निति नु दक्षिणा-नाम् ॥ ७ ॥

देवाश्च वा ऽअसुराश्च। उभये प्राजापत्याः पस्पृधिरे त ऽउभय ऽएवानात्मान आसुर्मर्त्या ह्यासु-रनात्मा हि मर्त्यस्तेषूभयेषु मर्त्येष्वग्निरेवामृत

* 'दद्यान्वेव'— इति च इष्टो डा०-वेबरेण।

† 'द्वेधा'— इति घ, ङ।

आस तꣳ ह स्माभयेऽमृत मुपजीवन्ति स यꣳ ह स्मैषां* घ्नन्ति तद्ध स्मैव† स भवति ॥ ८ ॥

ततो देवाः । तनीयाꣳस इव परिशिशिषिरे तेऽर्चन्तः श्राम्यन्तश्चेरुरुतासुरान्त्सपत्नान् मर्त्या-नभिभवेमेति त एतदमृत मग्न्याधेयं ददृशुः ॥ ९ ॥

ते होचुः । हन्तेद ममृत मन्तरात्मन्नादधा-महै त इद ममृत मन्तरात्मन्नाधायामृता भूत्वा-स्तर्य्या भूत्वा स्तर्य्यान्त्सपत्नान्मर्त्यानभिभविष्याम इति ॥ १० ॥

ते होचुः । उभयेषु वै नोऽय मग्निः प्रब्रवा-सुरेभ्यो ब्रवामेति ॥ ११ ॥

ते होचुः । आ‡ वै व्वय मग्नी धास्यामहेऽथ यूयं किं करिष्यथेति ॥ १२ ॥

ते होचुः । अथैनं व्वयं न्येव§ धास्यामहेऽत्र

---

* 'स्मैष' इति क, ग; डा०-वेवरेण च दृष्टः।

† 'स्म वै'— इति घ, ङ।

‡ 'होचु। रा'— इति ग। तत्पुस्तके त्वेव मेव विच्छेदेऽपि सन्धि-रूपं सर्वत्र ( पूर्वत्र च परत्र च ) दृश्यते।

§ 'नेव'— इति च दृष्टो डा०-वेबरेण।

तृणानि दहात्र दारूणि दहातौदनं पचात्र माꣳसं पचेति स यं त मसुरा न्यदधत तेनानेन मनुष्या भुञ्जते ॥ १३ ॥

अथैनं देवाः। अन्तरात्मन्नादधत त ऽइम ममृत मन्तरात्मन्नाधायामृता भूत्वाऽस्तर्य्या भूत्वा स्तर्य्यान्त्सपत्नान्मर्त्त्यानभ्यभवंस्तथो ऽएवैष एतदमृत मन्तरात्मन्नाधत्ते नामृतत्वस्याशास्ति सर्व्व मायुरेत्यस्तर्य्यो हैव भवति न हैनꣳ सपत्नस्तुस्तूर्षमाणश्चन स्तृणुते तस्माद् यद्याहिताग्निश्चानाहिताग्निश्च स्पर्द्धेते ऽआहिताग्निरेवाभिभवत्यस्तर्य्यो हि खलु स तर्हि भवत्यमृतः ॥ १४ ॥

तद्यत्रैन मदो मन्थन्ति। तज्जात मभिप्राणिति प्राणो वा ऽअग्निर्जात मेवैन मेतत्सन्तं जनयति स पुनरपानिति तदेन मन्तरात्मन्नाधत्ते सोऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १५ ॥

त मुद्दीप्य समिन्धे। इह यच्च ऽइह सुकृतं करिष्यामीत्येवैन मेतत् समिन्धे योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १६ ॥

अन्तरेणागाद् व्यद्रुतदिति। न ह वा ऽअस्यैतं

कश्चनान्तरेणैति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति तस्मादु तन्नाद्रियेत यदनुगच्छेन्न ह वा ऽअस्यैषोऽनुगच्छति यावज्जीवति योऽस्यैषोऽन्तरात्मन्नग्निराहितो भवति ॥ १७ ॥

ते वा ऽएते प्राणा एव यदग्नयः। प्राणोदानावेवाहवनीयश्च गार्हपत्यश्च व्यानोऽन्वाहार्य्यपचनः ॥ १८ ॥

तस्य वा ऽएतस्याग्न्याधेयस्य। सत्य मेवोपचारः स यः सत्यं वदति यथाग्निꣳ समिद्धं तं घृतेनाभिषिञ्चेदेवꣳ हैनꣳ स उद्दीपयति तस्य भूयो भूय एव तेजो भवति श्वः-श्वः श्रेयान् भवत्यथ योऽनृतं वदति यथाग्निꣳ समिद्धं त मुदकेनाभिषिञ्चेदेवꣳ स जासयति तस्य कनीयः-कनीय एव तेजो भवति श्वः-श्वः पापीयान् भवति तस्मादु सत्य मेव वदेत् ॥ १९ ॥

तदु* हाप्यरुणं† मौपवेशिं‡ ज्ञातय ऊचुः।

---

* 'तदु'— इति घ, ङ।

† 'हाप्यरुण'— इति घ, ङ।

‡ 'मौपविवेशिं'— इति ग; क-ख-ग-पुस्तकेष्वित उत्तर मेव छेदः (।)।

स्थविरो* वा ऽअस्याग्नी ऽआधत्स्वेति स होवाच ते मैतद् ब्रूथ व्वाचंयम एवैधि न वा ऽआहिताग्निनानृतं व्वदितव्यं न वदञ्जातु† नानृतं व्वदेत्तावत् सत्य मेवोपचार इति ॥ २० ॥ ६ ॥

॥ इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् [ २. २. ] ॥

षड्द्वादशादिदक्षिणा आधानस्य विधास्यन् तन्नाम निर्वक्तुं प्रस्तौति— "घ्नन्तीति। "यदेनं तन्वत इति। समान्येनोक्तं विभजति— "यज्ञ्वेवेति। यज्ञे सोमाभिषवपशुसञ्ज्ञपनावहननादिकरणात् तद्द्वारा तत्सम्बन्धी यज्ञ एव हतो भवतीत्यर्थः ॥ १ ॥

"स एष यज्ञ इति। "न ददक्ष इति। फलं जनयितुं न शशाकेत्यर्थः। 'अदक्षयन्' दक्षं समर्थ मकुर्वन्। "तद्येन मित्यादि, दक्षिणानामनिर्वचनम्। एवं पुरावृत्त मुपन्यस्य प्रकृते योजयति — "तद्यदिति ॥ २ ॥

"ता वा इति, दक्षिणादानविधिः। द्वादशचतुर्विंशतिपक्षावत्र वैकल्पिकौ द्रष्टव्यौ। अतएवोक्तं सूत्रकृता— "षट् दक्षिणाः प्रविभज्य ददाति, द्वादश, चतुर्विंशतिं वा"— इति ‡। आपस्तम्बोऽप्याह स्म— "षड् देया द्वादश देया-

---

* 'ऋजु स्थविरो'— इति क, ख, ग।

† 'वदन् जातु'— इति घ, ङ।

‡ का० श्रौ० सू० ४, १०. १२।

श्चतुर्विंशतिर्देया इति ता विकल्पयन्ते"—इति *। "एषा मात्रेति। एतद् दक्षिणानां परिमाण मित्यर्थः। इतोऽधिक मपि यथाविभव मिच्छानुसारेण देय मिति विधत्ते— "दद्यात् त्वेवेति † ॥ ३, ४, ५ ॥

"द्वया वा इति। द्वैविध्य मेव दर्शयति – "देवा ग्रहैवेति। अग्न्यादिदेवरूपा एव देवाः केचित्, अपरे तु ब्राह्मणरूपाः। देवा विशिष्यन्ते— "शुश्रुवांस इत्यादिना। "शुश्रुवांसः' बहुश्रुताः, 'अनूचानाः' साङ्गवेदाध्ययनेन ज्ञातार्थानुष्ठानपराः। एते मनुष्यरूपा देवाः। अत एव तैत्तिरीयकम् — "एते वै देवाः प्रत्यक्षं यद् ब्राह्मणाः"–इति ‡। यथा आहुतिभिरग्न्यादिदेवानां प्रीतिर्यज्ञे, एवं मनुष्यदेवान् प्रीणयितुं दक्षिणादान मित्यर्थः ॥ ६ ॥

"तद्यथा योनाविति। यथा गर्भाशये सिक्तं रेतो गर्भरूपेण परिणमति, न व्यर्थो भवति; एव मेवर्त्त्विजो यजमानं कर्मफले स्वर्गलोके स्थापयन्तीत्यर्थः। "ये मेद मिति। 'ये' खलु ऋत्विजो 'मा' माम् 'इदं' कर्मफलं 'सम्प्रापिपन्' सम्यक् प्रापितवन्तः 'इति' अनेनाभिप्रायेणैभ्यो दक्षिणा देयेत्यर्थः ॥ ७ ॥

अथाधानस्य भ्रातृव्यजयहेतुत्वं वक्तु माख्यायिका माह— "देवाश्चेति। "अनात्मान आसुरिति। आत्मज्ञानरहिता अविवेकिनो जाताः। अनात्मत्वादेव 'मर्त्त्याः' मरणधर्माश्च

---

* आप० श्रौ० सू० ५. २०. १३, १४।

† "भूयसीश्च यथाश्रद्धम्"— इति का० श्रौ० सू० ४. १०. १३।

‡ तै० सं० १. ७. ३. २।

सञ्जाताः। 'तेषु' भूतेषु देवासुरेषु 'मर्त्त्येषु' सत्सु 'अग्निरेव' अमरणशीलः 'आस'। "यं ह स्मैषा मिति। 'एषां' देवानां मध्ये 'यम्' एव असुराः 'घ्नन्ति', 'तत्' तत्र सर्वंहत* एव 'भवति' ॥ ८ ॥

"ततो देवा इति। एवं क्रमेणासुरैर्हतेषु देवाः अल्पीयांस एव परिशिष्टा बभूवुः। 'ते' देवाः 'अर्चन्तः' तपस्यन्तः, 'श्राम्यन्तः' श्रमं प्राप्नुवन्तः 'चेरुः'। त एतदित्यादि, स्पष्टम् ॥ ९ ॥

"ते होचुरिति। "अमृत मन्तरात्मन्निति। मरणरहित मग्निम् 'आत्मनि' हृदये आधाय वय मप्यमृता भूताः, अत एव 'अस्तर्य्याः' अहिंस्याश्च भूता इत्यर्थः ॥ १० ॥

"ते होचुरिति। "उभयेषु वा इति। देवासुरेषु 'उभयेषु' अस्मासु स्थितः, 'अय मग्निः' अतः 'असुरेभ्यः' निवेद्यैवास्माभिः स आधातव्य इति विचारितवन्त इत्यर्थः ॥ ११ ॥

"ते होचुरित्यादि, निगदसिद्धम् ॥ १२ ॥

"ते होचुरिति। "न्येव धास्यामह इति। यदि यूयं देवा अग्निं धास्यध्वम्, तर्हि वय मपि त मेवाग्निं धास्यामहे। "तृणानि दह"—इत्याद्यसुरवाक्यम्। हे अग्ने! पृथिव्यां तृणानि दह, दारूणि दहेत्येव मग्निं प्रेषयन्तो भूमौ त मस्थापयत् ॥ १३ ॥

"अथैन मित्यादि। 'देवाः' तु 'एनम्' अग्निम् 'आत्मन्' आत्मनि, 'अन्तः' हृदयमध्ये 'आधाय' यथासङ्कल्प मकल्पतेत्यर्थः। आख्यायिकासिद्ध मर्थं प्रकृते योजयति— "यथो एवैष

---

* 'स स्म हत'— इति च।

इति। "अस्तर्यो हीति। अस्तरूपाग्निधारणेन यस्मात् आहिताग्निरहिंस्यः, तस्माद् विवदमानोऽप्यनाहिताग्नि मभि-भवितुं शक्नोतीत्यर्थः ॥ १४ ॥

नन्वग्निर्गार्हपत्याद्यायतने बहिराधीयते, कथं तस्यान्त-र्द्धारण मिति, तत्राह – "तद्यत्रेति। "अभिप्राणितीति। मन्थ-नात् 'जातं' 'तम्' अग्निम् 'अभि' उपरि प्राणनं करोति। "स पुनरपानितीति। अग्नेरुपरि श्वास मुत्सृज्य, त मेव श्वासं पुनरन्तर्नयेत्। तेन सार्द्धं मग्निरपि अन्तः प्रविशन् यजमानस्य हृदये आहितो भवतीत्यर्थः ॥ १५ ॥

नियतस्यावाह्यस्याग्नेरुद्दीपनं समिन्धनं विधत्ते — "त मिति। उद्दीपनं काष्ठप्रक्षेपः, समिन्धनं सम्यक् प्रज्वलनम्, तदुभय मन्त-रग्नौ * दर्शयति — "इहेति। 'इह' अस्मिन् बाह्येग्नौ 'यक्ष्ये' यागं करिष्ये, तत्फलञ्च सम्पादयिष्यामीति यौ मनोव्यापारौ सङ्कल्पौ, ते एवान्तराहितस्याग्नेरुद्दीपनसमिन्धने इत्यर्थः। "यो-ऽस्यैषोऽन्तरात्मनग्निराहितो भवतीत्युपसंहारः ॥ १६ ॥

एव मन्तरग्नि मादधानस्य व्यवायादिदोषोऽपि नास्तीति प्रतिपादयति — "अन्तरेणेत्यादिना। अग्नियजमानयोर्मध्ये देवदत्तादेरागतेन च व्यवायादिभिः 'व्यवृतत्' व्यावृत्तो विमुखो-ऽभूदिति यो दोषः, सोऽप्यत्र नास्ति। तत्र हेतु माह— "न ह वा इति। न खलु हृदयमध्ये स्थापितस्य अग्नेर्यजमानस्य च मध्ये कोऽपि गच्छति यावज्जीवम्; अतो वृथा शङ्का न कार्येति। एवंविदुषोऽग्न्यनुगमनशङ्कापि न कार्येत्याह—"तस्मा-दिति। न ह वा अस्येति बाह्यस्याग्नेरनुगमेऽपि अन्तराहित-

* 'मान्तराग्नौ'— इति च।

स्याग्नेयाविज्जीव मवस्थानात्, न खल्वस्य यजमानस्यैषोऽग्नि रनुगच्छत्युपशाम्यति ॥ १७ ॥

नन्वन्तर्गार्हपत्याद्यग्नयो न सन्ति, कथं तेषा मनुगम इत्यत आह— "ते वा इति। गार्हपत्यादीनां प्राणोदानव्यानात्मनावस्थितत्वात् नोक्तदोष इत्यर्थः ॥ १८ ॥

आहिताग्निना सत्य मेव वदितव्यम्, न कदाचिदप्यनृत मित्युभयं प्रतिपादयति — "तस्य वेत्यादिना * ॥ १९ ॥

एतत्सत्यवदनस्याग्निसमिन्धनहेतुत्व मृषिवाक्यसम्बन्धेन द्रढ़यति — "तदु हेति। 'तत्' तत्रोक्तविषयेऽपि खल्वेवं पूर्ववृत्तान्तः सञ्जातः। उपवेशो नाम कश्चित्, तस्य पुत्रम् 'अरुणम्' तदीयाः 'ज्ञातयः' उक्तवन्तः। किमिति— हे अरुण! 'स्थविरः' वृद्धः 'असि' अत आमुष्मिक-सिद्धये अग्न्याधानं कुर्विति। स चैवं प्रत्युक्तवान्। कथ मिति— "मैतद् ब्रूथेति तद्वचनम्। 'वाचंयम एवैधि' वाग्यत एव भवति। कुत एवं प्रार्थ्यते? तत्राह— 'न वा इति। आहिताग्निना हि अनृतं न वदितव्यम्। वाग्व्यवहारं कुर्वतस्तु अनृतवदननिषेधो

---

* एतस्याः कण्डिकाया व्याख्यान मेव मकारि हरिस्वामिना— "तस्य वा एतस्येति। वाह्याभ्यन्तरस्याग्न्याधेयस्य; तेषा माहितानां मग्नीनां वाह्याभ्यन्तराणा मित्यर्थः। 'सत्य मेव' नानृतम्, उपधायाचरण मुपचारः; सत्येनैव घृतवचनेन ते अग्नी यज्ञे आधीयन्तेत्यर्थः। कथम्? यः सत्यं वदति आहिताग्निः, स एन मग्नि माहित मन्तर्वहिश्च घृतेनाभिषिञ्चति; अनृतवादी तूदकेनाभिषिञ्चन् 'जासयति'। "जासु हिंसायाम्"। हिनस्ति क्षययति। तस्य चाधातुरनेन कारणेनैव तेजसो वृद्धिहानी भवतः। तस्मादाहिताग्नेः रक्षणाय सत्यविधिः"— इति।

न सम्भवति । यस्मादेव मृषिणोक्तम् -- "न वदन् जातु"-इत्यादि, तस्मात् सत्यवचन मेवाग्न्याधेयस्याङ्ग मित्यर्थः*॥ २० ॥ ६ [२. २.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥

## ॥ इति द्वितीयकाण्डे प्रथमः प्रपाठकः † ॥

---

* "अनृतातिथ्यापनोदपूतिदार्वाधानवीसपक्वगाद्युदकानि वर्जयेत्"—इति का० श्रौ० सू० ४. १०. १५। "यजमानः आधानानन्तर मेतानि यावज्जीवं वर्जयेत्"— इत्यादि च तत्र या० दे०।

† "कण्डिकासङ्ख्या ११४"— इति क, ख, घ, ङ। "काण्डी ११४"-- इति ग। तत्र १ ब्रा० १४ क०, २ ब्रा० १६ क०, ३ ब्रा० ६ क०, ४ ब्रा० ३० क०, ५ ब्रा० २२ क०, ६ ब्रा० २० क०; सङ्कलनया ११४ इति सिद्धम्॥

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

द्वितीयाध्याये तृतीयं ब्राह्मणम् ।

॥ हरिः ॐ ॥

व्वरुणो हैन्द्राज्यकाम आदधे । स राज्य मगच्छत्तस्माद्यश्च व्वेद यश्च न व्वरुणो राजेत्येवाहुः सोमो यशस्कामः स यशोऽभवत्तस्माद्यश्च सोमे लभते यश्च नोभावेवागच्छतो यश एवैतद् द्रष्टु मागच्छन्ति यशो ह भवति राज्यं गच्छति य एवं व्विद्वानाधत्ते* ॥ १ ॥

अग्नौ ह वै देवाः† । सर्व्वाणि रूपाणि निद-

* 'धत्ते'—इति घ, ङ । † 'वाः'— इति घ, ङ ।

धिरे यानि च ग्राम्याणि यानि चारण्यानि व्विजयं वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा ॥ २ ॥

तान्यु हाग्निर्निचक्रमे । तैः सङ्गृह्यऽर्त्तून् प्रविवेश पुनरेम इति देवा एदग्निं तिरोभूतं तेषाᳪ हेयमेवास किमिह कर्त्तव्यं क्वेह प्रज्ञेति वा* ॥ ३ ॥

तत एतत् त्वष्टा पुनराधेयं ददर्श । तदादधे तेनाग्नेः प्रियं धामोपजगाम सोऽस्मा ऽउभयानि रूपाणि प्रतिनिःससर्ज यानि च ग्राम्याणि यानि चारण्यानि तस्मादाहुस्त्वाष्ट्राणि वै रूपाणीति त्वष्टुर्ह्येव सर्व्वᳪ रूप मुप ह त्वेवान्याः प्रजा यावत्यो यावत्य† इव तिष्ठन्ते‡ ॥ ४ ॥

तस्मै वा पुनराधेय मादधीत । एवᳪ हैवाग्नेः प्रियं धामोपगच्छति सोऽस्मा ऽउभयानि रूपाणि प्रतिनिःसृजति यानि च ग्राम्याणि यानि चार-

---

* 'प्रज्ञेतीव'— इति क, ख, ग।

† 'यावच्छो यावच्छ'— इति क, ख, ग; डा०-वेबरेण च दृष्टः।

‡ 'उपतिष्ठन्ते'— इति सा०-सम्मत इति डा०-वेबरः।

ख्यानि तस्मिन्नेतान्युभयानि रूपाणि दृश्यन्ते पर-मता वै सा स्पृहयन्त्यु हास्मै तथा पुष्यति लोक-स्यैवापि ॥ ५ ॥

आग्नेयोऽयं यज्ञः* । ज्योतिरग्निः पाप्मनो दग्धा सोऽस्य पाप्मानं दहति स इह ज्योतिरेव श्रिया यशसा भवति ज्योतिरमुत्र पुण्यलोकत्वै-तन्नु तद्यस्मादादधीत ॥ ६ ॥

स वै वर्षास्वादधीत । वर्षा वै सर्व्वऽऋ-तवो वर्षा हि वै सर्व्वऽऋतवोऽथाद्यो वर्षमकुर्मादो† वर्षमकुर्मेति संवत्सरान्त्सम्पश्यन्ति वर्षा ह‡ त्वेव सर्व्वेषामृतूनाꣳ रूपमुत हि तद्वर्षासु भवति यदाहु-र्ग्रीष्म ऽइव वा ऽअद्येत्युतो तद्वर्षासु भवति यदाहुः शिशिर ऽइव वा ऽअद्येति वर्षादिद्वर्षाः§ ॥ ७ ॥

अथैतदेव परोऽक्षꣳ रूपम्¶ । यदेव पुरस्ताद्वाति

---

* 'यज्ञः'— इति घ, ङ ।

† 'द्यो'— इति ग ।

‡ 'हि'— इति च दृष्टो डा०-वेबरेण ।

§ 'र्षा'— इति घ, ङ ।

¶ 'पम्'— इति घ, ङ ।

तद्वसन्तस्य रूपं यत् स्तनयति तद् ग्रीष्मस्य यद्वर्षति तद् व्वर्षाणां यद् विद्योतते तच्छरदो यद् वृष्टोद्-गृह्णाति तद्धेमन्तस्य व्वर्षाः सर्व्वं ऽऋतव ऋतून् प्राविशदृतुभ्य एवैन मेतन्निर्म्मिमीते ॥ ८ ॥

आदित्यस्त्वेव सर्व्वं ऽऋतवः। यदैवोदेत्यथ व्वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ व्वर्षा यदापराह्णोऽथ शरद्यदैवास्त मेत्यथ हेमन्त-स्तस्मादु मध्यन्दिन ऽएवादधीत तर्हि ह्येषोऽस्य लोकस्य नेदिष्ठं भवति तन्नेदिष्ठादेवैन मेतन्मध्या-न्निर्म्मिमीते ॥ ९ ॥

छाययेव वा ऽअयं पुरुषः। पाप्मनानुषक्तः सोऽस्यात्र कनिष्ठो भवत्यधस्पद मिवेयस्यते तत् कनिष्ठ मेवैतत्पाप्मान मवबाधते तस्मादु मध्यन्दिन ऽएवा-दधीत॥ १० ॥

तं वै दर्भैरुद्धरति। दारुभिर्व्वै पूर्व्व मुद्धरति दारुभिः पूर्व्वं दारुभिरपरं जामि कुर्य्यात्समदं कुर्य्यादापो दर्भा आपो व्वर्षा ऋतून् प्राविशदद्भि-रेवैन मेतदद्भ्यो निर्म्मिमीते तस्माद्दर्भैरुद्धरति ॥११॥

अर्कपलाशाभ्याम्। व्रीहिमय मपूपं कृत्वा यत्र

गार्हपत्य माधास्यन् भवति तन्निदधाति तद्-गार्हपत्य मादधाति ॥ १२ ॥

अर्कपलाशाभ्याम् । यवमय मपूपं कृत्वा यत्रा-हवनीय माधास्यन् भवति तन्निदधाति तदाहवनीय मादधाति पूर्वाभ्या मेवैनावेतदग्निभ्या मन्तर्दध्म इति वदन्तस्तदु तथा न कुर्य्याद्ग्राग्निभिर्ह्येवान्तर्हितौ भवतः ॥ १३ ॥

आग्नेय मेव पञ्चकपालं पुरोडाशं निर्व्वपति । तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति पञ्च वा ऽऋतव ऋतून् प्रविशद्दतुभ्य एवैन मेतन्निर्म्मि-मीते ॥ १४ ॥

सर्व्व आग्नेयो भवति । एवꣳ हि त्वष्टाग्नेः प्रियं धामोपागच्छत् तस्मात् सर्व्व आग्नेयो भवति ॥ १५ ॥

तेनोपाꣳशु चरन्ति । यद्वै ज्ञातये वा सख्ये वा निष्केवल्यं चिकीर्षति तिर इव वैतेन* बोभवद्वैश्वदेवो-ऽन्यो यज्ञोऽथैष निष्केवल्य आग्नेयो यद्वै तिर इव तदुपाꣳशु तस्मादुपाꣳशु चरन्ति ॥ १६ ॥

---

* 'इवैतेन'— इति घ, ङ ।

उच्चैरुत्तम मनुयाजं यजति। कृतकर्मेव हि स तर्हि भवति सर्व्वो हि कृत मनुबुध्यते ॥ १७ ॥

स आश्राव्याह। समिधो यजेति तदाग्नेयꣳ रूपं परोऽक्षं त्वग्नीन्यजेति त्वेव ब्रूयात्तदेव प्रत्यक्ष माग्नेयꣳ रूपम्* ॥ १८ ॥

स यजति। अग्न ऽआज्यस्य व्यन्तु व्वौषगग्निमाज्यस्य व्वेतु व्वौषगग्निनाज्यस्य व्यन्तु व्वौषगग्निराज्यस्य व्वेतु व्वौषगिति ॥ १९ ॥

अथ स्वाहाग्नि मित्याह। आग्नेय माज्यभागꣳ स्वाहाग्निं पवमान मिति यदि पवमानाय ध्रियेरन्त्स्वाहाग्नि मिन्दुमन्त मिति यद्यग्नय ऽइन्दुमते ध्रियेरन्त्स्वाहाग्निꣳ स्वाहाग्नीनाज्यपाञ्जुषाणो† ऽअग्निराज्यस्य व्वेत्विति यजति ॥ २० ॥

अथाहाग्नयेऽनुब्रूहीति। आग्नेय माज्यभागꣳ सोऽन्वाहाग्निꣳ स्तोमेन बोधय समिधानो ऽअमर्त्यम्। हव्या देवेषु नो दधदिति स्वपितीव खलु वा ऽएतद्यदुद्वासितो भवति सम्प्रबोधयत्येवैन

---

* 'रूपꣳ'— इति क, घ, ङ ॥

† 'पान् जुषाणो'— इति घ, ङ ।

मेतत्समुदीर्यंयति* जुषाणो ऽग्निराज्यस्य व्वेत्विति यजति ॥ २१ ॥

अथ यद्यग्नये पवमानाय भ्रियेरन्। अग्नये पवमानायानुब्रूहीति ब्रूयात्सोऽन्वाहाग्न ऽआयूंषि पवस ऽआसुवोर्ज्जमिषं च नः। आरे बाधस्व दुच्छुनामिति तथाहाग्नेयो भवति सोमो वै पवमानस्तदु सौम्यादाज्यभागान्नयन्ति जुषाणो ऽग्निः पवमान आज्यस्य व्वेत्विति यजति ॥ २२ ॥

अथ यद्यग्नय ऽइन्दुमते भ्रियेरन्। अग्नय ऽइन्दुमतेऽनुब्रूहीति ब्रूयात्सोऽन्वाहेह्यू षु ब्रवाणि तेऽग्न ऽइत्थेतरा गिरः। एभिर्व्वर्द्धास† ऽइन्दुभिरिति तथा ह्याग्नेयो भवति सोमो वा ऽइन्दुस्तदु सौम्या-दाज्यभागान्नयन्ति जुषाणो ऽग्निरिन्दुमानाज्यस्य व्वेत्विति यजत्येव मु सर्व्वं माग्नेयं करोति ॥ २३ ॥

अथाहाग्नयेऽनुब्रूहीति हविषः। अग्निं यजाग्नये स्विष्टकृतेऽनुब्रूह्यग्निं स्विष्टकृतं यजेत्यथ यद् देवान् यजेत्यग्नीन् यजेत्येवैतदाह ॥ २४ ॥

---

* 'दीप्प्यति'— इति क; 'दीपयति'— इति ख, ग।

† 'व्वर्द्धस'— इति घ, ङ।

स यजति। अग्ने व्वँसुवने व्वसुधेयस्य व्वेतु व्वौषगग्ना ऽउ व्वसुवने* व्वसुधेयस्य व्वेतु व्वौषग् देवो ऽअग्निः स्विष्टकृदिति स्वय माग्नेयस्तृतीय एव म्वाग्नेयाननुयाजान् करोति ॥ २५ ॥

ता वा ऽएताः† । षड् विभक्तीर्य्यँजति चतस्रः प्रयाजेषु द्वे ऽअनुयाजेषु षड् वा ऽऋतव ऋतून् प्राविशद्दतुभ्य एवैन मेतन्निर्म्मिमीते ॥ २६ ॥

द्वादश वा त्रयोदश व्वाचुराणि भवन्ति। द्वादश वा वै त्रयोदश वा संव्वत्सरस्य मासाः संव्वत्सर मृतून् प्राविशद्दतुभ्य एवैन मेतत् संव्वत्सरान्निर्म्मि-मीते न द्वे चन सहाजामितायै जामि ह कुर्य्याद्यद् द्वे चित् सह स्यातां व्यन्तु व्वेत्वित्येव प्रयाजानाꣳ रूपं वसुव्वने व्वसुधेयस्येत्यनुयाजानाम् ॥ २७ ॥

तस्य हिरण्यं दक्षिणा। आग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा-नड्वान्वा स हि व्वहेनाग्नेयोऽग्निदग्ध मिव ह्यस्य व्वहं भवति देवानाꣳ हव्यवाहनोऽग्निरिति

* 'व्वसुव्वने'— इति ख।

† 'ताः'— इति घ, ङ।

व्वहति वा ऽएष मनुष्येभ्यस्तस्मादनड्वान् दक्षिणा ॥ २८ ॥ १ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२.३.] ॥

अथ पुनराधेयं * विधित्सुः स्वपक्षातिभूत मुक्त मग्न्याधेयं प्रकृतिरूपार्थवादेन † राज्ययशोहेतुत्वेन प्रशंसति— "वरुण इति। "सोमो यशस्काम इति। आदध इत्यनुषङ्गः। उक्त मर्थं प्रकृते योजयति— "यशो हेति। 'यशः' यशस्वी भवतीत्यर्थः ‡ ॥ १ ॥

पुनराधेयं विधातु माख्यायिकया प्रस्तौति— "अग्नौ हेति। निधाने कारणानि वैकल्पिकानि त्रीण्युपन्यस्यति— "विजयं वेति। असुरान् विजेतु मुपगमनसमये पूर्वसिद्धाग्न्याधान-स्यार्थे मर्थनिधान मित्येकः पक्षः। 'कामचारस्य' कामाय यथेच्छं क्रीड़ितुं सञ्चरणस्य यः कामः, तदर्थं वा तन्निधान मिति द्वितीयः। गृहे एव स्थितानां 'नः' अस्माकं देवानां मध्ये अय मग्निः 'गोपिष्ठः' गोपायितृतमो रक्षणकुशलोऽस्मदीयं धनं गोपायितुं § रक्षितुं शक्नोतीत्यनेनाभिप्रायेण वा तन्निधान मिति तृतीयः पक्षः ॥ २ ॥

---

* "पुनराधेय माधानाप्रतिज्ञातस्य"— इति का० श्रौ० सू० ४.१०.१।

† 'परकृतिरूपार्थवादेन'— इति क।

‡ "राज्ययशस्कामस्य वा"— इति का० श्रौ० सू० ४.१०.२।

§ 'गोपायत्'— इति च।

"ताञ्चु हेत्यादि। 'तानि' देवैर्निहितानि 'ग्राम्यारण्यानि' रूपाणि सः 'अग्निः' नितरां कामितवान्, अह मेवैतत् सर्वं मुपभोक्ष्ये इति। 'तैः' निक्षेपैः सह विद्यमानं सर्वं सङ्गृह्य वसन्ताद्यान् 'ऋतून्' चोरादिः पर्वत मिव प्रविष्टवान् (अन्तर्दधे*) देवा अपि अस्मदीयं स्थानं 'पुनः' आगच्छामः 'इति' अनेनाभिप्रायेण तं 'तिरोभूतम्' 'अग्निम्' आगच्छन्। पूर्वं यस्मिन् स्थाने सोऽग्निः स्थितः, तत्र त मपश्यतां 'तेषां' देवानां 'इयसा इव आस' विहीनावस्थां प्राप †। अग्निरस्मदीयं सर्वं धन मपहृत्य गतः, 'इह' अस्मिन् विषये 'किम्' अस्माभिः 'कर्त्तव्यम्', 'का वा' बुद्धिः ? 'इति' ॥ ३ ॥

"तत एतदिति। एवं विचारयतां मध्ये 'ततः' अनन्तर मेव 'त्वष्टा' 'एतद्' वक्ष्यमाणं 'पुनराधेयं' 'ददर्श'। "तदादध इत्यादि, निगदसिद्धम्। "उप ह त्वेवेति। 'उप ह तु एव'। 'यावच्छः' ‡ यावत्प्रकारविशिष्टं त्वाष्ट्रं रूपम् 'अन्याः प्रजाः' 'उपतिष्ठन्ते', तावत्यो जायन्ते इत्यर्थः। वीप्सा तु सर्वसङ्ग्रहार्था ॥ ४ ॥

"तस्मा इति, पुनराधेयविधिः। यदाख्यायिकया प्रति-

---

* नास्तीदं तत् पदं च-पुस्तकादन्यत्र।

† इयसा—चिन्ता, इत्याह हरिस्वामी। प्रथमकाण्डेऽप्युक्तं तेन—'इयस्'-शब्दोऽवसानवचनः कण्ड्वादिषु पठ्यत इति (१भा० ६१० पृ०)। तदेतत्तु इयस्यते, इयसा, इयसित मिति त्रीण्यपि रूपाण्येकधातुजानि समानार्थानि। इहैवोत्तरत्र (१० क०) 'इयस्यते'— इति च विवेच्यम्।

‡ "यावच्छो यावच्छ इव। यावच्छब्दोऽल्पवचनः, अल्प मल्प मित्यर्थः"— इति हरिस्वामी।

पन्नं प्रयोजनम्, अग्निप्रियधामोपगमनादिलक्षणम्, तदर्थं पुनराधानं कुर्यादित्यर्थः। प्रथमाहितस्याग्नेः * विधानान्तरेण पुनस्तेष्वायतनेषु स्थापनं पुनराधेयम्। "एवं ह्रेत्यादि, निगदसिद्धम्। "परमता वै सेति। येयं ग्रामारण्योभयप्राप्तिः 'सा' 'परमता' परमत्वं सर्वोत्कृष्टत्वम्। किञ्च 'अस्मै' पुनराधेयं कृतवते सर्वे जनाः 'स्पृहयन्ति' आद्रियन्ते। "स्पृहेरीप्सितः"-इति † सम्प्रदानसञ्ज्ञा ‡। तथा अय मपि 'लोक्यम्' लोकनीयम् उत्कर्षं प्राप्य 'पुष्यति' प्रवृद्धो भवति ॥ ५ ॥

विहितं पुनराधेय मग्निसम्बन्धोपजीवनेन प्रशंसति—"आग्नेयोऽयं यज्ञ इति। ज्योतिरात्मको ह्यग्निः 'पाप्मनः' 'दग्धा' दाहकः। अतः 'सः' अग्निः स्वसम्बन्धि-यज्ञं कुर्वतः 'अस्य' पापं निर्दहति। "एतन्नु तदिति। यस्मै फलाय आदधीत, 'एतत्' उक्तविधिफलं खलु 'तत्' इत्यर्थः ॥ ६ ॥

तस्य पुनराधेयस्य त्रैवर्णिकसाधारण्येन ऋतुविशेषं विधत्ते—"स वा इति। ऋत्वन्तरं परित्यज्य वर्षर्त्तुविधाने कारण माह—"वर्षा वा इति §। एतदुपपादयति—"वर्षा हि वा इत्यादिना। यस्मादेवं वर्षर्त्तुः सर्वात्मकः, तस्मात् समुदायात्मकं संवत्सरं वर्षशब्देन लोको व्यवहरतीति दर्शयति—"अथेति। सर्वर्त्तुरूपा वर्षा इति प्रतिपादयितुं प्रतिजानीते—"वर्षा ह त्वेवेति। एतदुपपादयति— "तदिति। ग्रीष्म-

---

* "प्रथम माहितस्याग्नेः"— इति च।

† पा० सू० १. ४. ३६।

‡ 'स्पृहेरीप्सिततम मिति सम्प्रदानसञ्ज्ञा'— इति च।

§ का० श्रौ० सू० ४. ११. ६ क।

शिशिरधर्मयोः प्रकाशशैत्ययोः वर्षासु सद्भावात्, वर्षयोगाच्च * वर्षर्त्तोस्तावदुभयात्मकत्वम्। तत्र † ग्रीष्मे वसन्तस्य, वर्षासु शरदः, शिशिरे हेमन्तस्य, समानधर्मतयान्तर्भावात् सर्वर्त्तु-रूपत्वं सिद्ध मित्यर्थः ॥ ७ ॥

एवं प्रत्यक्षविषयं प्रकाशादिधर्मयोगेन सर्वत्व मभिधाय परोक्षधर्मवशादपि तत् प्रतिपादयति— "अथैतदिति। पुरो-वातादयो ‡ हि वसन्तादीनां परोक्षभूता धर्माः। तेषां च सर्वेषां वर्षासु सद्भावात् सर्वर्त्तुरूपतेत्यर्थः। "ऋतून् प्राविशदि-त्यादि। यस्मादग्निः प्रागुक्तरीत्या ऋतून् प्राविशत्, तस्मादेनं वर्षास्वादधानस्तेभ्य एवर्त्तुभ्यः पुनरुत्पादयतीत्यर्थः ॥ ८ ॥

तच्च पुनराधान महनि मध्यन्दिने कार्य्य मिति § विधित्सु-स्तदर्थं मादित्यस्य सर्वर्त्तुरूपता माह— "आदित्यस्त्वेवेति। प्रातः-सङ्गव-मध्याह्न-पराह्न-सायङ्कालात्मकाः अह्नोऽवयवाः सूर्य-सम्बन्धिनः पञ्चर्त्तवः; तत्र वर्षास्वाधानस्य विहितत्वात् तदात्मके मध्यन्दिने एव तत् कुर्यादित्यर्थः। तदेतन्मध्यन्दिनाधानं प्रशं-सति— "तर्हीति। 'तर्हि' तस्मिन् मध्यन्दिने समये 'एषः' आदित्यः 'अस्य लोकस्य' 'नेदिष्ठम्' अन्तिकतमो 'भवति'। सिद्ध मन्यत् ॥ ९ ॥

प्रकारान्तरेण तन्मध्यन्दिनाधानं प्रशंसति— "छाययेवेति। "सोऽस्येति। 'अस्य' पुरुषस्य छायारूपः 'सः' पाप्मा 'अत्र'

---

* 'घृथियोगाच्च (?)'— इति च।

† 'ततः'— इति च।

‡ 'पुरोवात इत्यादयो'— इति च।

§ का० श्रौ० सू० ४, ११, ६ ख।

अस्मिन् मध्यन्दिने 'कनिष्ठः' अल्पतमः 'भवति'। स च (पाप्मा *) पुरुषस्य † पादयोरधस्तादिव 'इयस्यति' प्राप्नोति ‡। "इण् गतौ"—इति धातुः §। "तत् कनिष्ठ मित्यादि सुगमम् ॥ १० ॥

तस्य पुनराधित्सितस्याग्नेर्दर्भैरेवोद्धरणं कार्यमिति¶ विधत्ते—"तं वा इति। आधानवत् पुनराधानेऽपि दारुभिरुद्धरणे दोष माह—"दारुभिः पूर्व मिति ‖। उभयोरैकरूप्ये जामितादोषः स्यात्। तथा 'समदं' दारुविषयं परस्परं तयोः कलह मपि जनयेदित्यर्थः। विहितं दर्भैरुद्धरणं प्रशंसति—'आप इति। दर्भाणा मब्विकारत्वं प्रथमकाण्डे प्रतिपादितम्—"ता उपर्य्युपर्यतिपुप्लुविरेऽत इमे दर्भाः"—इति ** ॥ ११ ॥

व्रीहियवमययोरपूपयोरर्कपर्णद्वयसङ्गृहीतयोर्गार्हपत्याहवनीयायतनयोर्निधानं विधत्ते—"अर्कपलाशाभ्या मित्यादिना। अतएवोक्तं कात्यायनेन—"वर्षासु मध्यन्दिने वा कुशैराधानं

---

* नास्त्येतत् पदं च-पुस्तकादन्यत्र।

† 'पुरुषरूपस्य'—इति च।

‡ 'प्रद्यौति—इति च।

§ अदा० प० १४ धा०। हरिस्वामिमते तु कण्ड्वादेरियसशब्दजधातोमेवेदं रूपम्; अतएवेह 'इयस्यते = अवसीदति'— इति व्याख्यातं तेन। १ भा० ६१० पृ० ५ पं० "इयसितं" द्रष्टव्यम्, द्रष्टव्यश्चेहापि पुरस्तात् तृतीयकण्डिकाम् (८४पृ०) 'इयसा'-पदव्याख्यानम्।

¶ का० श्रौ० सू० ४. ११. ७।

‖ का० श्रौ० सू० ४. ६. १०; "नेध्मे न"—इति च तत्र ४. ६. ११।

** १ भा० ६०, ६५ पृ० (१ प्र० ३ ब्रा० ५ क०) द्रष्टव्यम्।

व्रीह्यपूप मर्कपलाशयोः पक्वं गार्हपत्यस्य स्थाने निदधात्येव माहवनीयस्य याव मिति * ॥

अपूपनिधानस्य प्रयोजन माह — "पूर्वाभ्या मिति। पूर्व माहितौ यौ गार्हपत्याहवनीयौ ताभ्या मित्यर्थः। तदेतन्निषेधति— "तदु तथेति। "रात्रिभिर्ह्येवेति। अनुगतयोः रात्रिभिरेव व्यवधानात् नापूपव्यवधानेन प्रयोजन मित्यर्थः ॥ १२, १३ ॥

'आग्नेय मेवेति। यदाग्न्याधेयपवमानेष्टिकार्यम् †, तदाग्नेय एवकपालः करोतीति न पृथक्तया कर्त्तव्या इत्येवकारार्थः ॥ १४ ॥

"सर्व आग्नेयो भवतीति। अस्यां पञ्चकपालेष्टौ आज्यभागादिः सर्वोऽपि यागोऽग्निदेवत्यः कार्य इत्यर्थः ‡ ॥ १५ ॥

"तेनोपांशु चरन्तीति §। विहित मुपांशुत्व मुपपादयति— "ज्ञातये वेति। 'यद्' हुतं 'निष्केवल्यम्' इतरेभ्यो निष्कृष्य केवलम्, तदेकभागं 'चिकीर्षति' कर्त्तु मिच्छति, 'एतेन' 'तिर इव' 'बोभवद्' भवति, तिरोहितं परोक्ष मेव तत् प्रतीयत इत्यर्थः। "यद्वै तिर इवेति। 'यत्' खलु तिरोहितवत् 'उपांशु' भवति, उपांशूच्चार्यमाणस्यापि परश्रोत्रग्राह्यत्वाभावेन तिरोहितत्वादित्यर्थः ॥ १६ ॥

"उच्चैरुत्तम मनुयाजं करोतीति ¶। यावत् 'उत्तमः'

---

* का० श्रौ० सू० ४. ११. ६—८। "सद्यश्चेत्"—इति सूत्रशेषः। 'चेद्यदि सद्योऽग्न्य उत्सन्नास्तदायं विशेषः'— इति तट्टीकायां या० दे०।

† 'यदग्न्याधेये पवमानादि कार्यम्'— इति च।

‡ का० श्रौ० सू० ४. ११. ६ क।

§ का० श्रौ० सू० ४. ११. ६ ख। ¶ का० श्रौ० सू० ४. ११. ६ ग।

तृतीयः अनुयाजः, तावत्पर्यन्त मुपांशुस्वरः, तत ऊर्द्ध मुच्चै-रेव मन्त्र प्रयोग इत्यर्थः *। तत्र कारण माह— "कृतकर्मे-वेति ॥ १७ ॥

प्रयाजादिषु सर्वाग्नेयकरणं प्रतिपादयति-- "स आश्राव्ये-त्यादिना। प्रथमप्रयाजे यत् "समिधो यज"–इति प्राकृतं वचनम् †, 'तत् आग्नेयं रूपम्'; समिन्धनप्रत्यभिज्ञानात्; किन्तु तत् 'परोक्षम्'। अतः समिध इत्येतस्य स्थाने "अग्नीन् यज"– 'इत्येव' 'ब्रूयात्' ॥ १८ ॥

प्रयाजयाज्यास्वपि क्रमेणाग्निविभक्तिं योजयति ‡— "स यजतीति। प्रकृतिषु याज्यासु आज्यशब्दात् पूर्वं यथाक्रमम् 'अग्ने', 'अग्निम्', 'अग्निना', 'अग्निः'— एताश्चतस्रो विभक्तीः विहिताः §; एताभिर्यजेदित्यर्थः ¶ ॥ १९ ॥

पञ्चमप्रयाजानुयाजयो ‖ विशेष माह – "अथ स्वाहेति। प्रकृतिवत् प्रथमाज्यभागदेवतां सङ्कीर्त्त्य द्वितीयाज्यभागदेवतायाः सोमस्य स्थाने अग्निः पवमानोऽग्निरिन्दुमान् वा अध्वर्युप्रयो-गानुसारेण विकल्पेन निर्द्दिष्टव्य इत्यर्थः। स्वाहा देवानाज्य-

---

* यावदित्यादीनां स्थाने "उत्तमं तृतीयम्"—इत्येतन्मात्र मेव च-पुस्तके।

† 'बन्धनम्'— इति च।

‡ '०विभक्तियोजनं प्रतिपादयति'— इति च।

§ का० श्रौ० सू० ४. ११. ११, १२।

¶ अत्र मूले यद् वौभगित्यसकृदाम्नातम्, तस्य व्याख्यान मिह नाकारि भाष्यकारेण कथ मिति चिन्तनीय मेव; पूर्वन्तु वौगित्यस्य व्याख्यानं कृत मेवेति तद् द्रष्टव्यम् ( १भा० ४६० पृ० ३पं० )।

‖ 'पञ्चमप्रयाजानुयाज्यायां'— इति च।

पानिति * प्रयाजदेवतानिर्द्देशेऽपि "स्वाहाग्नीनाज्यपान्"-इति प्रयोक्तव्यम् ॥ २० ॥

"अथाहाग्नय इति। प्रथमाज्यभागस्य 'अग्निं स्तोमेन बोधय"-इति † बुधिधातुयुक्ता मनुवाक्यां दर्शयित्वा तस्याः पुनराधेयानुकल्प माह— "स्वपितीवेति। 'समुद्दीर्यंयति' समुद्गमयतीत्यर्थः ॥ २१ ॥

द्वितीयाज्यभागस्य प्रागुक्तपक्षद्वयेऽपि ‡ याज्यानुवाक्ये दर्शयति— "अथ यदीत्यादिना। निगदसिद्धोऽर्थः ॥ २२ ॥

"अथ यद्यग्नय इति। "एव मु सर्व मिति। उक्तरीत्या प्रयाजाना माज्यभागयोश्चाग्निसम्बन्धकरणात् तत् सर्वं माग्नेयं भवतीत्यर्थः ॥ २३ ॥

आधानस्विष्टकृतोस्त्वग्निसम्बन्ध § इति दर्शयति— "अथा हाग्नय इति। प्रथमप्रयाजवत् प्रथमानुयाजेऽपि "देवान् यज"-इत्यस्य स्थाने "अग्नीन् यज"-इत्यग्निविभक्तिः कार्या ¶ ॥ २४ ॥

तथा द्वितीयेऽप्यनुयाजे "अग्नाउ"-इति विभक्तिः प्रयोक्तव्येति प्रतिपादयति— "स यजतीत्यादिना। "स्वय माग्नेय इति। 'तृतीयः' त्वनुयाजः 'स्वय माग्नेयः' स्वय मेवाग्निशब्दवानिति न पृथक् तत्राग्निविभक्तिः प्रक्षेप्तव्येत्यर्थः ॥ २५ ॥

एवं प्रयाजानुयाजेषु प्रक्षिप्ताः सम्भूयानूद्य प्रशंसति— "ता वा इति ॥ २६ ॥

---

* 'देवां आज्यपानिति'— इति च। † ऋ० सं० ५. १४. १।

‡ 'प्रागुक्तपक्षद्वयार्थाय'— इति च।

§ 'अधुना स्विष्टकृतोऽप्यग्निसम्बन्ध'—इति च।

¶ का० श्रौ० स० ४. ११. ११।

तासां विभक्तीना मक्षरसङ्ख्या मुपजीव्य प्रशंसति — "द्वादश वेति। 'अग्नाउ'—इत्यत्रान्तिमाक्षरत्यागे सति द्वावशाक्षराणि भवन्ति, तेन सह त्रयोदश भवन्तीत्यर्थः। "न द्वे चनेति। चनशब्दोऽप्यर्थः *। 'द्वे' अपि वक्ष्यमाणे 'न' 'सह' प्रयुञ्जीत, किमर्थम्? 'अजामितायै' जामितादोषराहित्याय। व्यतिरेके तत्सद्भाव माह— "जामि हेति। के पुनस्ते द्वे? इति, ते विभज्य दर्शयति — "व्यन्तु-वेत्वित्यादिना ॥ २७ ॥

पुनराधेयस्य दक्षिणां विधत्ते— "तस्येति। "स हि वहेनेति। 'सः' खलु अनड्वान् 'वहेन' स्कन्धेन अग्निसम्बद्धो भवति †। तस्योपपातम्— "अग्निदग्ध मिवेति ‡। अनडुहश्च साम्य माह— "देवाना मिति। अतो वहनं स्यात्। पुनराधीयमानस्याग्नेः 'अनड्वान् दक्षिणा' § उत्कृष्टतरा इत्यर्थः ॥ २८ ॥ १ [ २. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥

---

* "अस्माकल्पे तु चिच्चन"— इति अम० को० ३. ४. ३।

†, ‡ पूर्वस्मिन् काण्डे १प्र० २ब्रा० ६ कण्डीम्, तद्व्याख्यानञ्च पश्यतु

§ का० श्रौ० सू० ३. ११. १३।

(अथ चतुर्थं ब्राह्मणम्.)

प्रजापतिर्ह वा ऽइद मग्र ऽएक एवास। स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत्स तपोऽतप्यत सोऽग्नि मेव मुखाज्जनयाञ्चक्रे तद्यदेनं मुखाद्-जनयत तस्मादन्नादोऽग्निः स यो हैव मेत मग्नि मन्नादं वेदान्नादो हैव भवति॥ १॥

तद्वा ऽएन मेतदग्रे देवाना मजनयत। तस्मा-दग्निरग्निर्ह वै नामैतद्यदग्निरिति स जातः पूर्व्वः प्रेयाय यो वै पूर्व्वं एत्यग्र ऽएतीति वै त माहुः सो ऽएवास्याग्निता॥ २॥

स ऐक्षत प्रजापतिः। अन्नादं वा ऽइम मात्म-नोऽजीजने यदग्निं न वा ऽइह मदन्यदन्न मस्ति यं वा ऽअयं नाद्यादिति काल्वालीकृता हैव तर्हि पृथिव्यास नौषधय आसुर्न वनस्पतयस्तदेवास्य मनस्यास॥ ३॥

अथैन मग्निर्व्यात्तेनोपपर्य्याववर्त्त। तस्य भीतस्य स्वो महिमापचक्राम वाग्वा ऽअस्य स्वो महिमा वागस्यापचक्राम स आत्मन्येवाहुति* मीषे स उदमृष्ट

* 'आत्मन्नेवाहुति'— इति घ, ङ।

तद्यदुदमृष्ट तस्मादिदं चालोमकं मिदं च तन्न व्विवेद घृताहुतिं वैव पयआहुतिं वोभयꣳ ह त्वेव तत्पय एव * ॥ ४ ॥

सा हैनं नाभिराधयाञ्चकार। केशमिश्रेव हास तां वीक्ष्यदोषं धयेति तत ओषधयः समभवंस्तस्मादोषधयो नाम स द्वितीय मुदमृष्ट तन्नापरा माहुतिं विवेद घृताहुतिं वैव पयआहुतिं वोभयꣳ ह त्वेव तत्पय एव † ॥ ५ ॥

सा हैन मभिराधयाञ्चकार। स व्यचिकित्सञ्जुहवानी३ मा हौषा३ मिति तꣳ स्वो महिमाभ्युवाद जुहुधीति स प्रजापतिर्व्विदाञ्चकार स्वो वै मा महिमाहेति स स्वाहेत्येवाजुहोत् तस्मादु स्वाहेत्येव हूयते तत एष उदियाय य एष तपति ततोऽयं प्रबभूव योऽयं पवते‡ तत एवाग्निः पराङ् पर्य्यावर्त्त§ ॥ ६ ॥

स हुत्वा प्रजापतिः। प्र चाजायतात्स्यतश्चा-

---

*, † 'एव'— इति घ, ङ।

‡ 'पुवते'— इति च दृष्टो डा०-वेबरेण।

§ 'पर्य्यवर्त्तत'— इति ग।

ग्नेर्मृत्योरात्मान मन्वायत स यो हैवं विद्वानग्निहोत्रं जुहोत्येताᳩ हैव प्रजातिं प्रजायते य प्रजापतिः प्राजायतैव मु हैवात्यतोऽग्नेर्मृत्योरात्मानं त्रायते ॥ ७ ॥

स यत्र म्रियते । यत्रैन मग्नावभ्यादधति तद्देषो*ऽग्नेरधिजायतेऽथास्य शरीर मेवाग्निर्दहति तद्यथा पितुर्वा मातुर्वा जायेतैव मेषोऽग्नेरधिजायते शश्वद्ध वा ऽएष न सम्भवति योऽग्निहोत्रं न जुहोति तस्माद् वा ऽअग्निहोत्रᳩ होतव्यम् ॥ ८ ॥

तद्वा एतत् । एव व्विचिकित्सायै जन्म यत् प्रजापतिर्व्विचिकित्सत्स व्विचिकित्सञ्छ्रेयस्यध्रियत यः प्र चाजायतात्यतस्याग्नेर्मृत्योरात्मान मन्वायत स यो हैव मेतद्विचिकित्सायै जन्म व्वेद यद्व किञ्च व्विचिकित्सति श्रेयसि हैव ध्रियते ॥ ९ ॥

स हुत्वा न्यमृष्ट । ततो व्विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो वृक्षस्तत एते देवानां वीरा अजायन्ताग्निर्योऽयं पवते सूर्य्यः स यो हैव

* 'तद्देषो'—इति च द्दष्टो डा०-वेबरेण ।

मेतान् देवाना वीरान् वेदाहास्य व्वीरो जायते ॥ १० ॥

त ऽउ हैत ऽऊचुः। व्वयं वै प्रजापतिं पितर मनु स्मो हन्त व्वयं तत् सृजामहै यदस्मानन्वस-दिति ते परिश्रित्य गायत्रेणापहिङ्कारेण तुष्टुविरे तद्यत्पर्य्यँश्रयन्त्स समुद्रोऽथेय मेव पृथिव्या स्तावः* ॥ ११ ॥

ते स्तुत्वा प्राञ्च उच्चक्रमुः। पुनरेम इति देवा एतांऽ सम्भूतांऽ सा हैनानुदीच्य हिङ्चकार ते देवा व्विदाञ्चक्रुरेष साम्नो हिङ्कार इत्यपहि-ङ्कारंऽ हैव पुरा ततः सामास स एष गवि साम्नो हिङ्कारस्तस्मादेषोपजीवनीयोपजीवनीयो ह वै† भवति य एव मेतं गवि साम्नो हिङ्कारं वेद ॥ १२ ॥

ते होचुः। भद्रं वा ऽइद मजीजनामहि ये गा मजीजनामहि यज्ञो ह्येवेयं नो ह्यृते गोर्यज्ञ-स्तायतेऽन्नंऽ ह्येवेयं यद्धि किञ्चान्नं गौरेव तदिति ॥ १३ ॥

---

* 'पृथिव्यास्तावः'— इति घ, ङ।

† 'हैव'— इति ग।

तद्वा ऽएतदेवैतासां नाम। एतद्यज्ञस्य तस्मा-देतत्परिहरेत्साधु पुण्य मिति वह्नयो ह वा अस्यैता भवन्त्युपनामुक एनं यज्ञो भवति य एवं विद्वानेतत्परिहरति साधु पुण्य मिति ॥ १४ ॥

ता सु हाग्निरभिदध्यौ। मिथुन्यनया स्या मिति ताꣳ सम्बभूव तस्याꣳ रेतः प्रासिञ्चत्तत्पयो-ऽभवत्तस्मादेतदामायां गवि सत्याꣳ शृत मग्ने र्हि रेतस्तस्माद्यदि कृष्णायां यदि रोहिण्याꣳ शुक्ल मेव भवत्यग्निसङ्काश मग्ने र्हि रेतस्तस्मात् प्रथम-दुग्ध मुष्णं भवत्यग्ने र्हि रेतः ॥ १५ ॥

ते होचुः। हन्तेदं जुहवामहा ऽइति कस्मै न इदं प्रथमाय होष्यन्तीति मह्य मिति हैवाग्नि-रुवाच मह्य मिति योऽयं पवते मह्य मिति सूर्य्यस्ते न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुः प्रजापति मेव पितरं प्रत्ययाम स यस्मै न इदं प्रथमाय होतव्य वक्ष्यति तस्मै न इदं प्रथमाय होष्यन्तीति ते प्रजापतिं पितरं प्रतीत्योचुः कस्मै न इदं प्रथमाय होष्यन्तीति ॥ १६ ॥

स होवाच। अग्नयेऽग्निरनुष्ठा स्वꣳ रेतः

प्रजनयिष्यते तथा प्रजनिष्यध्व ऽइत्यथ तुभ्य मिति सूर्य्य मथ यद्देव हूयमानस्य व्यश्नुते तद्देवैतस्य योऽयं पवत ऽइति तद्देभ्य इद मप्येतर्हि तथैव जुह्वत्यग्नय ऽएव सायꣳ सूर्य्याय प्रातरथ यद्देव हूयमानस्य व्यश्नुते तद्देवैतस्य योऽयं पवते ॥ १७ ॥

ते हुत्वा देवाः । इमां प्रजातिं प्राजायन्त यैषा मियं प्रजातिरिमां विजितिं व्यजयन्त येय मेषां विजितिरिम मेव लोक मग्निरजयदन्तरिक्षं वायुर्दिव मेव सूर्यः स यो हैवं विद्वानग्निहोत्रं जुहोत्येताꣳ हैव प्रजातिं प्रजायते या मेत ऽएतत् प्राजायन्तैतां विजितिं विजयते या मेत ऽएतद्व्यजयन्तैतैरु हैव सलोको भवति य एवं विद्वानग्निहोत्रं जुहोति तस्माद् वा ऽअग्निहोत्रꣳ होतव्यम् ॥ १८ ॥ २ ॥

॥ इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् [२.४.] ॥

एव माधानपुनराधाने विधाय तन्निष्पन्नाना मग्नीनां फलवत्कर्मार्थत्वात् तत्साध्यं सायम्प्रातरनुष्ठेय मग्निहोत्राख्यं * कर्म विधित्सुस्तदर्थ माख्यायिका माह— "प्रजापतिर्ह वा इत्यादिना ॥ १ ॥

* 'तत्साधनचतुष्टय मग्निहोत्राख्यं'—इति च ।

"तद्वा इति। अग्रे जातत्वात् अग्निः; स एवाग्निरिति पारोक्ष्येणोच्यत इति नामनिर्वचनं कृत्वा प्रकारान्तरेणापि निर्ब्रूयात्। "स जात इति। 'अग्रे' 'एति' गच्छतीति अग्निः। 'अस्य' अग्नेः साधिका 'अग्निता' इत्यर्थः ॥ २ ॥

एवं साय मग्निहोत्रदेवताया अग्नेरुत्पत्ति मभिधाय, होम इत्यस्योत्पत्तिं प्रतिपादयति — "स ऐक्षतेत्यादिना। "अजीजन इति। अजनय मित्यर्थः। मया सृष्टोऽग्निरयमन्नादः, तस्य चान्नेन भवितव्यम्। न च मत्तोऽन्यदन्न मिह विद्यते, यदन्न मसावद्यादित्यर्थः। ननु भूम्या मोषधयो विद्यन्ते, तदेव तस्यान्नं भविष्यतीत्यत आह — "काल्वालीकृतेति *। 'तर्हि' तस्मिन् समये, यदहन्येव पृथिवी बभूव, तत ओषधिवनस्पतयः। एवं सति 'तत्' वक्ष्यमाण मन्नम् 'एव' 'अस्य' प्रजापतेः 'मनसि' बभूव ॥ ३ ॥

"अथैन मिति। 'अथ' अस्मिन्नवसरे 'अग्निः' 'एनम्' 'व्यात्तेन' प्रजापतिविवृतेन † मुखेन भक्षयितुं पर्यावृत्तो बभूव। तस्माद् 'भीतस्य' प्रजापतेः। "सो महिमेत्यादि, स्पष्टम्। "स आत्मन्येवेति। 'सः' प्रजापतिः 'आत्मनि' स्वशरीरे 'एव' आहुतिद्रव्यं सम्पादयितु मिच्छां कृतवान्। कृत्वा च 'सः' 'उदमृष्ट' हस्ताभ्यां स्वाङ्गस्योन्मार्जनं कृतवान्। ( यस्मादेवं ‡ ) तस्मादेव कारणात् 'इदञ्च इदञ्च' उभय मपि पाणितलम् 'अलो-

---

* "अपनीतवालाः काल्वालाः" —इत्यादि हरिस्वामी। तदेवं खल्वालाः खल्वाटाः काल्वाला इति समानार्थाः।

† 'व्यात्तेन=विवृतेन'—इति च।

‡ नास्त्येतत् पदद्वयं च-पुस्तके।

मत्रं' रोमरहितं दृश्यते। उन्मार्जनेन 'ललाहुतिं' 'विवेद' लेभे। तां विशिनष्टि— "घृताहुति मिति। "उभयं हेति। यदेतत् पयोघृतसाध्य माहुतिद्वयम् 'तत् उभयम्' अपि 'पय एव'; घृतस्य पयोविकारत्वादित्यर्थः॥ ४ ॥

"सा हैन मित्यादि। 'नाभिराधयाञ्चकार' अभिराद्धं तृप्तं न चकारेत्यर्थः। तत्र दृष्टान्तः—"केश मिश्रेवेति। कीटादि-दूषिता आहुतिर्न तृप्तिम्, प्रत्युत बीभत्सा मेव जनयति। एवं प्रजापतिशरीरजं द्रव्य माहुतियोग्यं नासीदित्यर्थः। 'तां' चाहुतिं तस्मिन्नग्नौ 'व्योषत्' अत्यजत्। इद माहुतिद्रव्यम् 'ओषं' पक्वं कृत्वा 'धय' पिब 'इति'। एव मग्नौ प्रक्षिप्तात् तस्मात् 'ओषधयः' पृथिव्यां समभवन्। एव मोषधिरूपस्य द्रव्यस्योत्पत्ति मुक्त्वा प्रातराहुतिदेवतायाः सूर्यस्योत्पत्ति माह— "स द्वितीय मिति। पूर्ववद् योज्यम्॥ ५ ॥

"सा हैन मित्यादि। "स व्यचिकित्सदिति। अस्यां द्विती-यस्या माहुतौ स प्रजापतिः विचिकित्सां कृतवान्,— किं मिदं मदङ्गाज्जातं द्रव्यं जुहवानि, किं वा नेति। एवं संशयापन्ने अग्निमयात् प्राङ् निर्गतो वायुरूपः स्वकीयो 'महिमा' 'अभ्युवाद' अभिलक्ष्योक्तवान्,—'संशयं मा कार्षीः होमं कुरु' इति। "स्वो वा इति। यस्मात् 'स्वो महिमा आह', तस्मात् 'सः' प्रजापतिः 'स्वाहेत्येव' 'तत्' द्रव्यम् 'अजुहोत्'। "तत एष इति। तस्मा-द्धोमात् 'एषः' सूर्यः उदितः, उत्पन्नो बभूव। पवमानो वायुरपि तत एवोत्पन्नः। एव मनयोरुत्पन्नयोः सतोः सः 'अग्निः'( अपि *)

---

* नास्त्येतत् पदं च-पुस्तके।

प्रजापतिसकाशात् भक्षणात् उपरतः पराङ्मुखः पर्यावृत्तो बभूवेत्यर्थः ॥ ६ ॥

"स हुत्वेत्यादि। यस्मादेवं प्रजापतिराहुत्या सूर्यादिलक्षणां प्रजा मुद्पादयत् 'अत्स्यतः' भक्षणं करिष्यतः 'अग्नेः' 'आत्मानम्' 'अत्रायत'। तस्माद् विदुषोऽप्येवं भवतीत्याह—"स य इति ॥ ७

"स यत्र म्रियत इति। अग्निहोत्रहोमं कुर्वन्, देहावसाने 'अग्नौ' प्रक्षिप्तः मातापितृशरीरादिवत् तस्मादग्नेः सकाशात् दिव्यशरीरोऽभिनव उत्पद्यते। यस्त्वग्निहोत्रं न जुहोति, स त्वेवं नोत्पद्यत इत्यर्थः ॥ ८ ॥

"तद्वा एतदित्यादि। विचिकित्सापुरस्सर माहुत्यनुष्ठानेन प्रजापतेः श्रेयःप्राप्तिर्जाता, 'एवञ्चिद्' इदानीन्तनोऽपि यजमानो विमर्शपूर्वकानुष्ठानेन श्रेयः प्राप्नोतीत्यर्थः ॥ ९ ॥

अग्निहोत्रहवणी स्रुक् विकङ्कतवृक्षेण निर्मातव्येत्यभिप्रेत्य * तस्योत्पत्ति माह— "स हुत्वेति। प्रागुक्त मग्निवायुसूर्याणां जन्म अनुद्य, तद्वेदनफल माह— "तत एत इति। 'देवानां' मध्ये 'वीराः' प्रबला इत्यर्थः ॥ १० ॥

अथ होमद्रव्यस्य पयस उत्पत्तिं वक्तुं प्रथमतो गोरुत्पत्ति माह— "त उ हेति। यथास्मदीयः पिता प्रजापतिः अस्मान् सृष्टवान् 'वयं' तम् 'अनु' 'स्मः' भवामः। 'यत्' यत 'अस्मान्' 'अनु' अनन्तरम् 'असद्' भवेत्, जायेत, 'तद्' वयं सृजामहै'। एवं प्रतिज्ञाय गां संसृजन्तः हिङ्कारवर्जितेन गायत्रसाम्ना वहिष्पव-

---

* १ भा० १० पृ० २२ कं०, ५६ पृ० १ टीप्पनी च द्रष्टव्या। ततः का० श्रौ० ४, १४, ७ सू० द्रष्टव्यम्।

† 'वक्ष्यन्'—इति च।

मानेन 'तुष्टुविरे' स्तुवन्तः। 'तस्य' स्तोत्रदेशस्य 'यत्' परिस्रवणं 'स समुद्रः' अभवत्। यश्च 'स्तावः' स्तोत्रदेशः, सा 'पृथिवी' जातेत्यर्थः ॥ ११ ॥

[ "ते खल्वेति। ] "पुनरेम इति। पुनरागच्छाम इति। स्तोत्रदेशात् प्रागुत्क्रम्य * तस्मात् स्तोत्रात् 'सम्भूतां' 'गां' 'ते' 'देवाः' प्राप्नुवन्नित्यर्थः। "सा हैनानित्यादि। निगदसिद्धम् ॥ १२ ॥

"ते होचुरित्यादि। 'भद्रम्' उत्कृष्टं खलु 'इदम्' 'अजीजनामहि' अजनयाम। तदेतद् भद्रत्व माह— "यज्ञो हीति। यस्माद् गोर्व्यतिरेके सा शरघृतादिहविषोऽभावात् यज्ञो न विस्तीर्यते, तत इयं गौः यज्ञात्मिका। अन्नरूपत्वेनापि स्तौति — "अन्नं हीति ॥ १३ ॥

तासां गवां यज्ञस्य च साधारण मेकं नामोपदिश्य प्रशंसति— "तद्वा इति। गां यज्ञं च एतदुभय मुत्कृष्टं पुण्यरूप मिति अनेनाभिप्रायेण 'परिहरेत्' रक्षेत्। तस्य परिहरणस्य फल माह— "बह्वरो हेति। 'उपनामुकः' उपनमनशीलः, यज्ञ एव मुपगतो भवतीत्यर्थः ॥ १४ ॥

पयस उत्पत्ति माह — "ता मु हेति। 'अभिदध्यौ' अभिधानं कृतवान्। कथ मिति — 'एनया' गवा 'मिथुनी' भवानीति। "तां सम्बभूवेत्यादि, स्पष्टम् ॥ १५ ॥

एवं पयोरूपस्य हविष उत्पत्ति मभिधाय, अग्निसूर्यवायूनां मध्ये कस्मै प्रथमं देयं कस्मै चानन्तर मित्येतद् विभजति — "ते होचुरिति। 'ते' देवाः 'ऊचुः' अस्मदीयः पिता प्रजापतिः यथा अजुहोत्, एव मिदं वयं 'जुहवामहै'। किञ्चेमे यजमानाः 'नः'

* 'प्रागुक्तात्' — इति ङ।

अस्माकं मध्ये 'कस्मै' 'प्रथमाय' 'होष्यन्ति ?' 'इति' उक्तवन्तः । "मह्य मित्यादि, निगदसिद्धम् । "तेन सम्पादयाञ्चक्रुरिति । 'ते' देवाः परस्परं सम्पन्नाः ऐकमत्यं गता न बभूवुरित्यर्थः ॥ १६

"स होवाचेति । "अग्निरनुष्ठेति । एवं विवदमानेषु आगतेषु स प्रजापतिरेव मुक्तवान्-- 'अग्नेः प्रथमं होतव्यम्' । 'अग्निर्हि' 'अनुष्ठ्या' अनुष्ठानेन प्रयत्नेन स्वकीयं 'रेतः' गवि पयोरूपेण निर्वर्त्तयन् * ; 'तथा' यूयमपि । तस्मादग्नेरनन्तर मेव 'प्रजनिष्यध्वे' प्रजाता भवथ । तस्मादग्नय एव प्रथमं होतव्य मित्युक्त्वा, प्रजापतिः 'अथ' अनन्तरं 'तुभ्यं' होतव्यम् 'इति' 'सूर्यम्' प्रति उक्तवान् । हूयमानस्य च पयसः 'यद्' 'व्यश्नुते' विशुद्ध माप्नोति †, स एव वायोर्भाग इति वायु' प्रत्यब्रवीत् । "तदेभ्य इत्यादि । यस्मादेवं प्रजापतिनोक्तम्, तस्मादेव कारणात् तत् पय एव ‡ 'अग्नये सायं जुह्वति', 'प्रातः सूर्याय' इति विभागः सम्पन्नः ॥ १७ ॥

---

* 'निवर्त्तयति'—इति च ।

† 'मेति'—इति च ।

‡ तदुक्तं कात्यायनेन "क्षीरहोमी"—इति श्रौ० सू० ४, १०, १६ । "वाग्यतो दोहप्रभृत्या होमात् क्षीरहोता चेत्"—इति च तत्रैव ४, १४, ६१ सूत्रम् । दोहप्रकारस्त्वेतत्पूर्व मेवोपदिष्टः ( १ सू० ) । "पयसा स्वर्ग-कामः पशुकामो वा, यवाग्वा ग्रामकामः, तण्डुलैर्बलकामः, दध्नेन्द्रियकामः, अनधिश्रयणं च श्रुतिसामर्थ्याभ्याम्, घृतेन तेजस्कामः, संवत्सरं जुहुयादेतेषा मेकैकेन कामसंयोगे"— इति च तत्रैव काम्यकर्मसु द्रव्य-विधायक सूत्राणि ( ४, १५, २१—२७, ) ।

"ते हुत्वा देवा इति । 'ते' च 'देवाः' एवं 'हुत्वा' प्रजात्यादि फलं प्राप्नुवन् । एतत् ज्ञात्वा इदानीन्तनोऽपि यजमानो 'यः' 'अग्निहोत्रं जुहोति', सः 'एताम्' अग्निसूर्यादिभिः प्राप्तां प्रजातिम् । इतः सुगमम् ॥

एतावता अग्निहोत्राख्यस्य कर्मणः पयो द्रव्यम्, तच्च सायम्प्रातःकालयोरनुष्ठेयम् * । तत्र सायङ्कालीनस्य अग्निर्देवता †, प्रातःकालीनस्य सूर्यः ‡, इत्येतत् प्रतिपादितं भवति ॥ १८ ॥ ३ [२. ४.] ॥

इति श्रीसायणार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

---

* तच्चोक्तम् का० श्रौ० सू० ४, १३, २ द्रष्टव्यम् । काम्यकालविधयस्तु उपरिष्टात् पञ्चमकण्डी-टीप्पन्यां द्रष्टव्याः ।

† का० श्रौ० सू० ४, १४, १४ ।

‡ का० श्रौ० सू० ४, १५, ६ ।

धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

* इहत्यपाठभेदास्तु पुरस्ताद् द्रष्टव्याः ।

[ अथ तृतीयाध्याये प्रथमं ब्राह्मणम्. ]

सूर्यो ह वा ऽअग्निहोत्रम् *। तद्यदेतस्या अग्र ऽआहुतेरुदैत्तस्मात्सूर्योऽग्निहोत्रम् † ॥ १ ॥

स यत्सायमस्तमिते जुहोति। य इदं तस्मिन्निह सति जुहवानीत्यथ यत् प्रातरनुदिते जुहोति य इदं तस्मिन्निह सति जुहवानीति तस्माद्वै सूर्यो ऽग्निहोत्रमित्याहुः ॥ २ ॥

अथ यदस्तमेति। तदग्नावेव योनौ गर्भो भूत्वा प्रविशति तं गर्भं भवन्तमिमाः सर्व्वाः प्रजा अनु गर्भा भवन्तीलिता हि शेरे सञ्जानाना अथ यद्रात्रिस्तिर एवैतत्करोति तिर इव हि गर्भाः ॥ ३ ॥

स यत्सायमस्तमिते जुहोति। गर्भमेवैतत् सन्तमभिजुहोति गर्भꣳ सन्तमभिकरोति स यद्गर्भꣳ सन्तमभिजुहोति तस्मादिमे गर्भा अनश्नन्तो जीवन्ति ॥ ४ ॥

अथ यत् प्रातरनुदिते जुहोति। प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा व्विभ्राजमान उदेति शश्वद्ध वै

* 'त्रम्'—इति ग, घ। † 'त्रम्'—इति ग, घ।

नोदियाद्यदस्मिन्नेतामाहुतिं न जुहुयात्तस्माद्वा ऽएता माहुतिं जुहोति ॥ ५ ॥

स यथाहिस्त्वचो निर्मुच्येत। एवꣳ रात्रेः पाप्मनो निर्मुच्यते यथा ह वा ऽअहिस्त्वचो निर्मुच्येतैवꣳ सर्व्वस्मात्पाप्मनो निर्मुच्यते य एवं विद्वानग्निहोत्रं जुहोति तदेतस्यैवानु प्रजातिमिमाः सर्व्वाः प्रजा अनु प्रजायन्ते व्वि हि सृज्यन्ते यथार्थम् * ॥६॥

स यः पुरादित्यस्यास्तमयात्। आहवनीय मुद्धरत्येते वै व्विश्वे देवा रश्मयोयोऽथ यत्परं भाः प्रजापतिर्व्वा स इन्द्रो वैतदु ह वै व्विश्वे देवा अग्निहोत्रं जुह्वतो गृहानागच्छन्ति स यस्यानुद्धृत मागच्छन्ति तस्माद् देवा अपप्रयन्ति तद्वा ऽअस्मै तद् व्यृध्यते यस्माद् देवा अपप्रयन्ति तस्यानु व्यृद्धिं यश्च वेद यस्य नानुद्धृत मभ्यस्त मगादित्याहुः ॥ ७ ॥

अथ यः पुरादित्यस्यास्तमयात्। आहवनीय मुद्धरति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्स यस्योद्धृत मागच्छन्ति तस्याहवनीयं प्रविशन्ति तस्याहवनीये निविशन्ते ॥ ८ ॥

---

* 'यथार्थꣳ'—इति क, घ, ङ।

स यत्सायमस्तमिते जुहोति। अग्नावेवैभ्य एतत्प्रविष्टेभ्यो जुहोत्यथ यत्प्रातरनुदिते जुहोत्यग्नेतेभ्य एवैभ्य एतज्जुहोति तस्मादुदितहोमिनां व्विच्छिन्न मग्निहोत्रं मन्यामह ऽइति ह स्माहासुरिर्यथा शून्य मावसथ माहरेदेवं तदिति ॥ ९ ॥

इयं वा ऽइदं जीवनम्। मूलि चैवामूलं च तदुभयं देवानाᳪ सन्मनुष्या उपजीवन्ति पशवो मूला ओषधयो मूलिन्यस्ते पशवो मूला ओषधीर्मूलिनीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति ॥ १० ॥

स यत्सायमस्तमिते जुहोति। अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषा मिदᳪ सदुपजीवाम इति स यत्ततो रात्र्याश्नाति हुतोच्छिष्ट मेव तन्निरवत्तवत्यश्नाति हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुह्वदशिता * ॥ ११ ॥

अथ यत् प्रातरनुदिते जुहोति। अस्य रसस्य जीवनस्य देवेभ्यो जुहवानि यदेषा मिदᳪ सदुपजीवाम इति स यत्ततोऽह्नाश्नाति हुतोच्छिष्ट मेव तन्निर-

* 'ता'—इति घ, ङ।

वत्तवत्यश्नाति हुतोच्छिष्टस्य ह्येवाग्निहोत्रं जुहुद-शिता * ॥ १२ ॥

तदाहुः। स मेवान्ये यज्ञास्तिष्ठन्तेऽग्निहोत्र मेव न सन्तिष्ठतेऽपि द्वादशसंवत्सर मन्तवदेवाथैतदेवानन्तꣳ सायꣳ हि हुत्वा वेद प्रातर्होष्यामीति प्रातर्हुत्वा वेद पुनः सायꣳ होष्यामीति तदेतदनुपस्थित मग्निहोत्रं तस्यानुपस्थिति मन्वनुपस्थिता इमाः प्रजाः प्रजायन्तेऽनुपस्थितो ह वै श्रिया प्रजया प्रजायते य एव मेतदनुपस्थित मग्निहोत्रं वेद ॥ १३ ॥

तद्दुग्ध्वाधिश्रयति। शृत मसदिति तदाहुर्यद्युदन्तं तर्हि जुहुयादिति तद्वै नोदन्तं कुर्यादुप ह दहेद्यदुदन्तं कुर्यादप्रजज्ञि वै रेत उपदग्धं तस्मान्नोदन्तं कुर्यात् ॥ १४ ॥

अधिश्रित्यैव जुहुयात्। यन्न्वे † वैतदग्ने रेतस्तेन न्वेव शृतं यद्वेनदग्नावधिश्रयन्ति तेनो एव शृतं तस्मादधिश्रित्यैव जुहुयात् ॥ १५ ॥

तदवज्योतयति। शृतं वेदानीत्यथापः प्रत्या-

---

* 'ता'—इति ग, घ।

† 'युन्वे'—इति क, ग; डा०-वेबरेणापि दृष्टः।

नयति शान्त्यै न्वेव रसत्त्वो चैव सर्व्वत्वायेदᳪ हि यदा व्वर्षत्यथौषधयो जायन्त ऽओषधीर्जग्ध्वाप: पीत्वा तत एष रस: सम्भवति तस्माद् रसत्त्वो चैव सर्व्वत्वाय तस्माद्यद्येनं चीरं केवलं पानेऽभ्याभवेदुद स्तोक मास्त्रोतयितवै ब्रूयाच्छान्त्यै न्वैव रसत्त्वो चैव सर्व्वत्वाय * ॥ १६ ॥

अथ चतुरुन्नयति। चतुर्द्धाव्विहितᳪ होदं पयोऽथ समिध मादायोदाद्रवति समिद्धहोमायैव सोऽनुपसाद्य पूर्व्वा माहुतिं जुहोति स यदुपसादयेद्यथा यस्मा ऽअशन माहरिष्यन्स्यात्तदन्तरा निदध्यादेवं तदथ यदनुपसाद्य यथा यस्मा ऽअशन माहरेत्तस्मा ऽआहृत्यैवोपनिदध्यादेवं तदुपसाद्योत्तर। नानाव्वीर्ये ऽएवैने ऽएतत् करोति मनश्च ह वै व्वाक् चैते ऽआहुती तन्मनश्चैवैतद्वाचं च व्यावर्तयति तस्मादिदं मनश्च व्वाक् च समान मेव सन्नानेव ॥ १७ ॥

स वै द्विरग्नौ जुहोति। द्विरुपमार्ष्टि द्वि: प्राश्नाति चतुरुन्नयति तद्दश दशाक्षरा वै व्विराड्विराड्

* 'त्वाय'—इति घ, ङ।

वै यज्ञस्तद्विराज मेवैतद्यज्ञ मभि सम्पादयति ॥ १८ ॥

स यदग्नौ जुहोति । तद्देवेषु जुहोति तस्मा-द्देवाः सन्त्यथ यदुपमाष्टि तत्पितृषु चौषधीषु च जुहोति तस्मात्पितरश्चौषधयश्च सन्त्यथ यद्धुत्वा प्राश्नाति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्ति ॥ १९ ॥

या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता एव मेवैतद्या इमाः प्रजा अपराभूतास्ता यज्ञमुख ऽआभजति तेनो ह पशवोऽन्वाभक्ता यन्मनुष्यानन्नु पशवः ॥ २० ॥

तदु होवाच याज्ञवल्क्यः । न वै यज्ञ इव मन्तवै पाकयज्ञ इव वा ऽइतीदꣳ हि यदन्यस्मिन्यज्ञे स्रुच्यव-द्यति सर्व्वं तदग्नौ जुहोत्यथैतदग्नौ हुत्वोत्सृप्याचामति निर्लेढि तदस्य पाकयज्ञस्येवेति तदस्य तत्पशव्यꣳ रूपं पशव्यो हि पाकयज्ञः * ॥ २१ ॥

सैषैकाहुतिरेवाग्रे । या मेवामूं प्रजापतिरजुहो-दथ यदेतऽएतत्पश्चेवाध्रियन्ताग्निर्योऽयं पवते सूर्यस्त-स्मादेषा द्वितीयाहुतिर्हूयते ॥ २२ ॥

* 'यज्ञः'—इति घ, ङ ।

सा या पूर्व्वाहुतिः। साग्निहोत्रस्य देवता तस्मात्तस्यै जुहोत्यथ योत्तरा स्विष्टकृद्भाजन मेव सा तस्मात्ता मुत्तरार्द्धे जुहोत्येषा हि दिक् स्विष्टकृतस्तन्मिथुनायैवैषा द्वितीयाहुतिर्हूयते द्वन्द्वꣳ हि मिथुनं प्रजननम् ॥ २३ ॥

तद् द्वय मेवैते ऽआहुती। भूतं चैव भविष्यच्च जातं च जनिष्यमाणं चागतं चाशाद् चाद्य च श्वश्च तद्द्वय मेवानु * ॥ २४ ॥

आत्मैव भूतम्। अद्धा हि तद्यद्भूत मद्धो तद्यदात्मा प्रजेव भविष्यदनद्धा हि तद्यद्भविष्यदनद्धो तद्यत् प्रजा † ॥ २५ ॥

आत्मैव जातम्। अद्धा हि तद्यज्जात मद्धो तद्यदात्मा प्रजेव जनिष्यमाण मनद्धा हि तद्यज्जनिष्यमाण मनद्धो तद्यत् प्रजा ‡ ॥ २६ ॥

आत्मैवागतम्। अद्धा हि तद्यदागत मद्धो तद्यदात्मा प्रजैवाशानद्धा हि तद्यदाशानद्धो तद्यत् प्रजा § ॥ २७॥

आत्मैवाद्य। अद्धा हि तद्यदद्याद्धो तद्यदात्मा

---

* 'मेवानु'—इति घ, ङ। †, ‡, § 'प्रजा'—इति घ, ङ।

प्रजैव स्वोऽनद्धा हि तद्यच्छ्वोऽनद्धो तद्यत् प्रजा * ॥ २८ ॥

सा या पूर्वाहुतिः। सात्मानमाथे हूयते तां मन्त्रेण जुहोत्यद्धा हि तद्यन्मन्त्रोऽद्धो तद्यदात्मा-ऽथ योत्तरा सा प्रजा मभि हूयते तां तूष्णीं जुहोत्य-नद्धा हि तद्यत्तुष्णी मनद्धो तद्यत् प्रजाः † ॥ २९ ॥

स जुहोति। अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहे-त्यथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तत्स-त्येनैव हूयते यदा ह्येव सूर्योऽस्त मेत्यथाग्निर्ज्योति-र्यदा सूर्य उदेत्यथ सूर्यो ज्योतिर्यद्वै सत्येन हूयते तद् देवान् गच्छति ॥ ३० ॥

तदु हैतद्देवारुणये ब्रह्मवर्चसकामाय तत्रानू-वाचाग्निर्व्वर्चो ज्योतिर्व्वर्चः सूर्यो व्वर्चो ज्योतिर्व्वर्च इति ब्रह्मवर्चसी हैव भवति य एवं विद्वानग्नि-होत्रं जुहोति ॥ ३१ ॥

तद्वस्त्येव प्रजननस्येव रूपम्। अग्निर्ज्योति-र्ज्योतिरग्निः स्वाहेति तदुभयतो ज्योती रेतो देवतया परिगृह्णात्युभयतः परिगृहीतं वै रेतः

---

*, † 'प्रजा'—इति घ, ङ।

प्रजायते तदुभयत एवैतत्परिगृह्य प्रजनयति ॥ ३२ ॥

अथ प्रातः । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तदुभयतो ज्योति रेतो देवतया परिगृह्णात्युभयतः परिगृहीतं वै रेतः प्रजायते तदुभयत एवैतत्परिगृह्य प्रजनयति तत् प्रजननस्य रूपम् * ॥ ३३ ॥

तदु होवाच जीवलश्चैलकिः । गर्भं मेवारुणिः करोति न प्रजनयतीति स एतेनैव सायं जुहुयात् ॥ ३४ ॥

अथ प्रातः । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहेति तद् बहिर्द्धा † ज्योती रेतो देवतया करोति बहिर्द्धा ‡ वै रेतः प्रजातं भवति तदेनत् प्रजनयति ॥ ३५ ॥

तदाहुः । अग्नावेवैतत्सायꣳ सूर्यं जुहोति § सूर्ये प्रातरग्नि मिति तद्वै तदुदितहोमिना मेव यदा ह्येष सूर्योऽस्त मेत्यथाग्निर्ज्योतिर्यदा सूर्य उदेत्यथ सूर्यो ज्योतिर्नाग्नि सा परिचक्षेय मेव परिचक्षा यत्तस्यै नाद्धा देवतायै हूयते याग्नि-

---

* 'रूपम्'—इति घ, ङ। †, ‡ 'वहिर्द्धा'—इति घ, ङ।

§ 'जुहोति'—इति घ, ङ।

होत्रस्य देवताग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति तत्र नाग्नये स्वाहेत्यथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति तत्र न सूर्याय स्वाहेति ॥ ३६ ॥

अनेनैव जुहुयात्। सजूर्देवेन सवित्रेति तत्सवितृमत्प्रसवाय सजू रात्र्येन्द्रवत्येति तद्रात्र्या मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता जुषाणो ऽग्निर्वेतु स्वाहेति तदग्नये प्रत्यक्षं जुहोति ॥ ३७ ॥

अथ प्रातः। सजूर्देवेन सवित्रेति तत्सवितृमत्प्रसवाय सजूरुषसेन्द्रवत्येत्यह्नेति वा तदह्ना वोषसा * वा मिथुनं करोति सेन्द्रं करोतीन्द्रो हि यज्ञस्य देवता जुषाणः सूर्यो वेतु स्वाहेति तत्सूर्याय प्रत्यक्षं जुहोति तस्मादेव मेव जुहुयात् ॥ ३८ ॥

ते होचुः। को न इदं होष्यतीति ब्राह्मण एवेति ब्राह्मणेदं नो जुहुधीति किं मे ततो भविष्यतीत्यग्निहोत्रोच्छिष्टमेवेति स यत् स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टमथ यत् स्थाल्यां यथा परीणाहो निर्वपेदेवं तत् तस्मात्तस्य एव कश्च पिबेत्

* 'तदह्ना वोषसा'—इति घ, ङ।

तद्वै नाब्राह्मणः पिबेदग्नौ ह्यधिश्रयन्ति तस्माद्ब्राह्मणः पिबेत् ॥ ३९ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् [३.१.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

सायम्प्रातर्होमयोः * कालविशेषं विधित्सुरग्निहोत्रम् सूर्यात्मना प्रशंसति— "सूर्यो हेति । तदुपपादयति— "एतस्या इति । प्रजापतिना प्रथमं हुताया इत्यर्थः ॥ १ ॥

प्रकारान्तरेण सूर्य्यात्मकतां ब्रुवन् सायम्प्रातर्होमयोः कालविशेषं विधत्ते— "स यदिति । 'यः' यजमानः 'इह' अग्नौ 'तस्मिन्' सूर्य्ये 'सति' 'इदं' हविः 'जुहवानि इति' मन्यते, सः साय मग्निहोत्र मस्तमिते † कुर्य्यात्, प्रातर्होमञ्चानुदिते ‡ । अनुदितो हि सूर्य्योऽग्निनैकीभूतो वर्त्तते ; "अग्निर्वादित्यः सायम् प्रविशति"–इति § श्रुतेः । यस्मादेवं अग्निहोत्रं सूर्य्यसम्बद्धम्, तस्मात् तादात्म्येन स्तुतिः ॥ २ ॥

रात्रौ सूर्य्यस्याग्न्यवस्थानं प्रतिपादयति— "अथ यदिति । सूर्य्यस्य गर्भभाव मनु रात्रौ 'सर्व्वाः प्रजाः' 'गर्भाः' एव 'भवन्ति' ।

---

* "उद्धरेति यजमानो ब्रूयात् सायम्प्रातयोरग्निहोत्रे"–इति का० श्रौ० सू० ४.१३.१ ।

† "अस्तमिते जुहोति"—इति का० श्रौ० सू० ४.१४.६ ।

‡ "प्रातर्जुहोत्यनुदिते"—इति का० श्रौ० सू० ४.१५.१ ।

§ तै० ब्रा० २.१.२.६ ।

तासां गर्भसाम्य माह— "ईलिता हीति। रात्रौ हि सर्वाः प्रजाः 'सञ्जानानाः' समान मेकविधं ज्ञानं प्राप्ताः 'ईलिताः' सुप्ता हृष्टाः 'शेरते'। "लोपस्त आत्मनेपदेषु"–इति * त-लोपः। पुनरपि गर्भसाम्य माह— "अथ यदिति। गर्भरूपेणाग्नाववस्थितं सूर्यं 'रात्रिः' 'तिर एव' तिरोहित माच्छादितं करोति। यस्मादेवं तस्मात् असौ 'गर्भः' 'तिर इव हि'। लौकिकगर्भस्य प्रसिद्धिर्हि-शब्देनोक्ता ॥ ३ ॥

एवं गर्भरूपत्वं प्रतिपाद्य अस्तमिते होम मुपपादयति— "स यन्नाय मिति। "गर्भं सन्त मिति। अस्तमयात् पूर्वं हि सूर्यस्याकाशेऽवस्थानात् गर्भभावो नास्ति, तदूर्द्ध्वन्तु अग्नौ गर्भरूपेण प्रविशन्तम् 'अभि' होमं कुर्वन् परस्मिन् दिवसे पुनर्जनयितुं वर्द्धयति। "यद् गर्भ मित्यादि। यस्माद् गर्भभूतस्य सूर्यस्य रात्रावग्निहोत्रहविषा वर्द्धनम्, तस्मादेवञ्जातीया इतरे गर्भाः 'अनश्नतः' अशन मकुर्वन्तोऽपि 'जीवन्ति' वर्द्धन्ते ॥ ४ ॥

एवं सायं-होमस्य गर्भवृद्धिहेतुता मभिधाय, प्रातर्होमस्य तज्जननहेतुत्व मुपपादयन्, तस्य ततः प्रागेवानुदिते कर्त्तव्यता माह— "अथ यत् प्रातरिति। अन्वयव्यतिरेकाभ्यां प्रातराहुतेर्जननहेतुता मुपपादयति— "सोऽय मिति। "तेजो भूत्वेति। आहुत्या वर्द्धिततेजस्वी भूत्वेत्यर्थः। "शश्वद्ध वा इति। नित्य मेवेत्यर्थः † ॥ ५ ॥

---

* पा० सू० ७. १. ४१.।

† सन्ति चात्र बहवः काम्यकालविधयः। तद्यथा— "प्रथमास्तमिते पर्युदयं च स्वर्गकामस्य, तमोऽत्यये सायं जुहुयाद् वियति प्रातरायुष्कामस्य, अन्तःपशौ पशुकामस्य सायम्प्रातः, शयाने श्रीकामस्य प्रातः"– इति का० श्रौ० सू० ४. १५. १२–१५। "शयाने, सुप्ते एव, समस्तलोकेऽप्रबुद्धे"–

उद्यतः सूर्यस्य तेजःप्राप्तिं दृष्टान्तेनोपपादयति—"स यथेति। "रात्रेः पाप्मन इति। रात्रिरूपात् तेजःप्रतिबन्धकात् पापादित्यर्थः। एवं सूर्यस्याग्निहोत्रहोमात्ययनिर्मोकं प्रतिपाद्य विदुषोऽपि प्रतिपादयति—"यथा ह वा इति। "वि हि सृज्यन्त इति। अनुदितहोमान्ते सूर्यस्योदये सति 'यथार्थं' यथाप्रयोजनं 'सर्वाः प्रजाः' 'वि सृज्यन्ते' प्रवर्त्तन्त इत्यर्थः ॥ ६ ॥

सायमग्निहोत्रस्याहवनीयविहरणमस्तमयात् प्रागेव कर्त्तव्यमिति विधिमभिप्रेत्य सिद्धवदनुवदति—"स यः पुरेति। आहवनीयमुद्धरन्तीति। गार्हपत्यादाहवनीयं प्रणयेदित्यर्थः *। एतदुपपादयितुं यजमानगृहं प्रति देवानामागमनमाह—"एते वा इत्यादिना। 'एते' खलु सूर्यस्य 'रश्मयः' 'विश्वे देवाः', 'अथ' 'यत्' 'परं भाः' रश्मीनामुपर्यवस्थितं सूर्याख्यं ज्योतिः 'स प्रजापतिर्वा इन्द्रो वा' तत् ज्योतिः प्रजापत्यात्मकमिन्द्रात्मकं च विकल्पेन भवतीत्यर्थः। तेऽस्तमयात् प्रागवस्थिताः 'विश्वे देवाः' अग्निहोत्रिणो यजमानस्य 'गृहान् आगच्छन्ति'। ते चागताः आहवनीयानुद्धरणे सत्याश्रयाभावात् निवर्त्तन्ते, उद्धृते त्वाहवनीयं तं प्रविश्य निविशन्त इत्याह—"स यस्यानुद्धृत मित्यादिना †।

---

इति तत्र या० दे०। तत्रैव तत उत्तरं होमायाग्न्यवस्था अपि बहुविधा उक्ताः—"प्रथमसमिद्धे धूप्यमाने प्रजासु निहत्यैव सहसान्न मत्सातः, भूयिष्ठार्चिषि गृहीत्वैव सहसा, प्रदीप्ततमे श्रीयशस्कामस्य, अर्चिःप्रत्यवाये मैत्रेणान्न मत्सातः, अङ्गारेषु चाकश्यमानेषु ब्रह्मवर्चसकामस्य"—इति ( ४. १५. १६—२० )।

* 'गार्हपत्यादाहवनीयं प्रणीयोद्धरन्ति'—इति च।

† "गार्हपत्यादाहवनीयस्योद्धरण मनस्तमितानुदितयोः"—इति का० श्रौ० सू० ४. १३. ३।

"तद्वा अस्मा इति। आगतानां देवानां यदगमनम्, तेन 'अस्मै' यजमानाय 'तद्', अग्निहोत्रं 'वृश्चते' विगतर्द्धिकं भवतीत्यर्थः। "तस्यानुवृद्धि मिति। 'तस्य' अग्निहोत्रस्य 'वृद्धिम्' 'अनु'-लक्ष्य, 'यश्च' एवं 'वेद', 'यश्च' ['न' वेद, ते सर्वे अनुद्धृत माहवनीय मभिलक्ष्य सूर्योऽस्त मगादिति सर्वे * निन्दन्तीत्यर्थः ॥ ७ ॥

"अथ यः पुरेति। "आवसथेनोपक्लृप्तेनेति। आवसन्त्य-स्मिन्निति 'आवसथम्' आसनम्, तेनोपक्लृप्तेन आयास्यन्तं श्रेयांसं यथोपासीत, 'एवं' 'तत्' अस्तमयात् प्राक् आहवनीयोद्धरण मित्यर्थः। "निविशन्त इति। "नेर्विशः"–इत्यात्मने-पदम् † ॥ ८ ॥

"स यत् साय मित्यादि। निगदसिद्धम्। तस्मादुदितहो-मिना मित्यादि। यस्मात् सूर्यरश्मिरूपा विश्वे देवा उदयात् प्राक् अग्नौ आसते, उदिते च सूर्ये ततोऽपगच्छन्ति, तस्मात् उदयात् परं प्रातर्होमं कुर्वताम् 'अग्निहोत्रं' 'विच्छिन्नम्' एव भवति। कथं विच्छिन्न मित्यत ऊर्द्ध्वं दर्शयति—"यथा शून्य मिति। 'यथा' आगतेऽतिथौ गृहादपगते सति 'शून्यं' तदावास-स्थानं प्रतिपन्न मिति न तर्पणीयान्नपानादिकम् ‡ 'आहरेत्', 'एवम्' आहवनीयाद्रश्मिरूपेषु देवेषु 'तत्' उदितं सूर्यं प्रति गतेषु तदुद्देशेनाहवनीयहोम इत्यर्थः ॥ ९ ॥

एतावेवास्तमितानुदितहोमौ प्रकारान्तरेण प्रशंसति—"इयं वा इद मित्यादिना। "देवानां सदिति। 'देशानां' स्वभूतं

---

* 'सर्वेत्र'—इति क।

† पा० सू० १. ३. १७।

‡ 'प्रतिपंतर्पणियान्नयादिकम् (?)"—इति च।

सदित्यर्थः। किं तत्? मूलं किं वा मूलयुक्तम्?। "एष रस इति। क्षीरात्मको रस इत्यर्थः॥ १०॥

"स यत् साय मस्तमित इति। "अस्य रसस्य जीवनस्येति। मूल्यमूलोभयनिष्पन्नस्य सर्वप्राणिजीवनहेतोः क्षीरात्मकस्य * रसस्य भागं प्रथमं 'देवेभ्यः' तत्स्वामिभ्यः 'जुहवानि' पश्चात् तदुपभुक्तशेषैः सर्वं वयम् 'उपजीवामः' 'इति' अनेनाभिप्रायेण पयसा 'अग्निहोत्रं' जुहुयादित्यर्थः। तस्य प्रयोजन माह—"स यदिति। 'ततः' अतो होमानन्तरं रात्र्याः' काले 'यत्' † अशितं भवति, 'तत्' सर्वं 'हुतोच्छिष्ट मेव' भुक्तं ‡ भवति। "निरवत्तबलीति। निष्कृष्यावत्तो बलिर्देवभागो यस्मात्, तन्निरवत्तबलि। एवम् 'अग्निहोत्रं जुह्वत्' पुरुषः हुतोच्छिष्टस्यैव रात्रौ 'अशिता' भोक्ता भवति॥ ११॥

प्रातर्होमेऽप्येव माह—"अथ यदिति॥ १२॥

अग्निहोत्रहोमस्येतरयज्ञवैलक्षण्येनासंस्थितत्वं प्रतिपादयति—"तदाहुरिति। 'अन्ये' ज्योतिष्टोमादयो 'यज्ञाः' 'सन्तिष्ठन्ते' समाप्यन्त एव। यत्तु द्वादशसंवत्सरसाध्यं सत्रम्, तदप्यवसानवदेव; अग्निहोत्रं तु 'अनन्तम्'। तदेवानन्त्यं दर्शयति—"सायं हीति। अस्त्वेव मग्निहोत्रस्यासंस्थितयज्ञत्वम्, किं तत इत्याह—"तस्यानुपस्थिति मन्विति। अनुपस्थिताः परिसमाप्तिरहिताः। 'श्रिया' 'अनुपस्थितः' अपरिसमाप्तः, सर्वदा तद्युक्त इत्यर्थः॥ १३॥

---

* 'प्ररात्मकस्य (?)'—इति च।

† 'तत्'—इति च।

‡ 'तत्सर्वं हुतशिष्ट मेव भुक्तं'—इति च।

एवं पयसो होमसाधनत्वं विधाय तस्य दोहनानन्तर मग्नावधिश्रयणं विधत्ते—"तद् दुग्ध्वाधिश्रयतीति *। 'शृत मसत्' पक्वं भवेदित्यनेनाभिप्रायेणेत्यर्थः। "शृतं पाके"–इति † निपात्यते। कियदवधिकः ‡ पाक इत्याशङ्क्य तत्रैकं मत मुपन्यस्यति—"तदाहुरिति। 'यर्हि' यस्मिन् काले तत् पयः 'उदन्तं' पाकवशादुन्नतान्तं बुद्बुदवद् भवति, 'तर्हि' तस्मिन् काले तच्छृतं भवति। तदवस्थापन्नेन पयसा 'जुहुयात्' इत्यर्थः। तदेतन्निषिध्यते; पक्षान्तर माह— "तद्वा इति। 'उप ह दहेत्' एव। को दोष इति, तत्राह—"अप्रजन्नीति। 'रेतः' संस्रुतं § ह्येतत् पयः, तच्च 'उपदग्धम्', 'अप्रजन्नि' अप्रजननशीलम्, प्रजोत्पादकं न भवतीत्यर्थः॥ १४॥

कथन्तर्हि दातव्य ‖ मित्याह— "अधिश्रित्यैवेति ¶। अधि-श्रयणानन्तर मेव 'जुहुयात्'; न तु पाकेनोदन्तं कुर्यात्। नन्वशृतस्य होमयोग्यत्वं नास्तीति चेत्, तत्राह— "यन्न्वेवेति। पयसोऽग्निरेतस्त्वं प्रागाम्नातम्— "तस्याग्नि रेतः प्रासिञ्चत्, तत् पयोऽभवत्'–इति **। तथा चाग्निरेतस्त्वादेव पयः शृत मेव सर्वदा। अतश्चाग्नावधिश्रयणमात्रादेव तच्छृतं भवतीति तदवस्थेनैव जुहुयादित्यर्थः॥ १५॥

"तदवज्योतयतीति। ज्वालायुक्तेन दर्भाग्रेण †† अवाङ्मुखं प्रकाशयतीत्यर्थः। "अथापः प्रत्यानयतीत्यादि, स्पष्टम्। "उद-

---

* का० श्रौ० सू० ४. १४. १, २।　　† पा० सू० ३. १. २७।

‡ 'कियदवधिः'—इति च।　　§ 'रेतःसंस्रुतं'—इति च।

‖ 'दग्धव्य'—इति च।　　¶ का० श्रौ० सू० ४. १४. ५।

** २प्र० २ब्रा० १५क० ६६पृ०, ६पं०।　　†† 'मार्गेण'—इति च।

स्तोक माश्चोतयितवा इति। उदकस्य विन्दुराश्चोतयितव्य श्चासेक्तव्य इति ब्रूयादित्यर्थः ॥ १६ ॥

"अथ चतुरुन्नयतीति *। "चतुर्द्धा विहितं ह्रीति। चतुर्भ्यः स्तनेभ्यो दुग्धत्वात् चतुर्द्धा विहितत्वम्। "समिद्धहोमार्थेवेति। समिद्धेऽग्नौ होमार्थं मुन्नीतपयस्कायां † वैकङ्कत्यां स्रुचि एकां समिध मुपरि निधाय गार्हपत्यदेशादाहवनीयं प्रति गच्छेदित्यर्थः। गत्वा च तस्मिन्नाहवनीयापरभागे होमद्रव्यम् 'अनुपसाद्य' अभिधाय, हस्ते धृत्वैव 'पूर्वा माहुतिं' जुहुयात् ‡।

"होष्यन्नुपसादयति"–इति § यदुपसादनं तैत्तिरीयके समाम्नातम्, तदनूद्य तस्यायुक्ततां दृष्टान्तेनोपपादयति—"स यदुपसादयेदिति। "अन्तरा मिदध्यादिति। भोक्तु मुपविष्टस्य पुरःस्थितं पात्र मप्राप्य मध्ये मार्गे अशनम् अन्नादिकं निदध्यात् ‖ 'एवं' 'तत्' उपसादन मित्यर्थः। अनुपसादनस्यानुगुण्य माह— "यदनुपसाद्येति।

एवं प्रथमाहुतिं हुत्वा उपसादनपुरस्सर मेव द्वितीया माहुतिं जुहुयादिति विधत्ते—"उपसद्योत्तरा मिति। जुहोतीत्यनुषङ्गः। एव मनुपसादनोपसादनलक्षणधर्म्मभेदादेते आहुती 'नानावीर्य्ये' नानासामर्थ्ये एव करोतीत्यर्थः ॥

---

* का० श्रौ० सू० ४, १४. १०।

† 'मुन्नीतपयस्काय'—इति, च।

‡ 'गार्हपत्यदेशादाहवनीयं प्रतिस्थित्वैव पूर्वा माहुतिं जुहुयात्' च।

§ तै० ब्रा० २. १. ५. ८। "उन्नीयोपसादयति, पृथिवी मेव प्रीणाति। होष्यन्नुपसादयति, अन्तरिक्ष मेव प्रीणाति। हुत्वोपसादयति, दिव मेव प्रीणाति"—इति।

‖ 'मध्ये मार्गे स्थित मन्नादिं च निदध्यात्'—इति छ।

एते अनुपसादनोपसादने प्रकारान्तरेण प्रशंसति—"मनश्च ह वा इति। 'व्यावर्त्तयति' धर्मभेदेन पृथक् करोतीत्यर्थः ॥ १७ ॥

होमोपमार्जनप्राशनोन्नयनानां सङ्ख्यां समुच्चित्य प्रशंसति—"स वै हविरिति। "विराड् वै यज्ञ इति। सर्वप्रकृतिभूतस्याग्निष्टोमस्य शतस्तोत्रियायोगेन विराट्सम्पत्तेर्यज्ञस्य विराट्त्वमित्यर्थः। अनयोः स्रुच्योपमार्जनप्राशनयोरविहितयोः स्तोतुमयोग्यत्वात् तयोर्विधिरुन्नेतव्या ॥ १८ ॥

तेषां होमोपमार्जनप्राशनाना मुपयोग माह—"स यदिति। "देवाः सन्तीति। अग्नौ प्रक्षिप्तेनाग्निहोत्रहविषोपचितावयवाः सन्तः सर्वदा विद्यन्त इत्यर्थः। "पितृषु चौषधीषु चेति। तत्र प्रथमोपमार्जनेन ओषधीनां तृप्तिः, द्वितीयेन पितॄणा मिति द्रष्टव्यम्। "ओषधयश्च सन्तीति। सर्वदा विद्यन्त इत्यर्थः ॥ १९ ॥

"या वै प्रजा इति। 'अनन्वाभक्ताः' भागरहिताः, 'ताः पराभूताः' खलु। अत एव प्राशने सति 'या इमाः' सर्वाः प्रजाः 'यज्ञमुखे' यज्ञानां मुखभूतेऽग्निहोत्रे यजमान आहुतिभागयुक्ताः करोतीत्यर्थः। कस्तर्हि पशूनां भाग इति, तत्राह—"तेनो हेति। 'मनुष्यान् अनु' मनुष्याधीनतया यतो गवाद्याः 'पशवः तिष्ठन्ति, तेनैव कारणेन मनुष्यद्वारा तेऽपि भागयुक्ता इत्यर्थः ॥ २० ॥

अस्याग्निहोत्रस्य याज्ञवल्क्याभिमतं पाकयज्ञत्व मुपन्यस्यति—"तदु होवाचेति। न खल्वग्निहोत्रहोमो दर्शपूर्णमासादियज्ञवत् * केवलयज्ञत्वेन मन्तव्यः, अयं खलु पाकयज्ञ इव

* 'वत्'-शब्दो नास्ति च-छ-पुस्तकयोः।

भतवि। 'इति'-शब्दो वाक्यसमाप्तौ। एतदुपपादयति— "इदं ह्योति *। इदं खल्वग्निहोत्रं वक्ष्यमाणरूपम्। तत्र पशव्याव-दानादिकं ( कर्म ) केवलो यज्ञधर्मः; अग्नौ किञ्चिद्धुत्वा, किञ्चिदवशेष मुत्सृप्य † वहिर्निर्गम्य, आचमननिर्लेहनादिकः पाकयज्ञधर्मः; तस्याग्निहोत्रस्य पाकयज्ञस्य सतो रूपम्। अस्त्वेवम्, किं तत इत्याह— "तदस्येति। 'तत्' पाकयज्ञियम् 'अस्य' अग्निहोत्रस्य 'रूपं' 'पशव्यम्' पशुभ्यो हितम्, पशुप्राप्तिसाधन मित्यर्थः ॥ २१ ॥

"सैषेत्यादि। 'अमूं' विप्रकृष्टां 'याम्' आहुतिं 'प्रजापतिः' सृष्टिकाले प्रथमम् 'अजुहोत्', 'सैषा' 'एका' अग्निहोत्रस्य पूर्वाहुतिः। अनन्तरञ्च 'यदेते' ‡ अग्निवायुसूर्याः 'पश्चा' पश्चात् 'इव' 'आभ्रियन्त' अवस्थिताः ॥ २२ ॥

"सा येति। द्वितीया तु स्विष्टकृत्स्थानीयेत्याह— "अथ येति। "एषा हि दिगिति। 'स्विष्टकृतः' स्विष्टकृदाहुतेः 'उत्तरार्द्धे' यथाक्रमेण "भूतञ्चैव भविष्यच्च"-इत्यादिवक्ष्यमाण-द्वयात्मके इत्यर्थः ॥ २३ ॥

"तद् द्वय मेवेति। "भूत मित्यादि। 'भूतम्' अतीत-कालावच्छिन्नम्। 'भविष्यत्' आगामिकालावच्छिन्नम्। एवं जातादिषु योज्यम्। "आशा चेति। आशागोचरं प्रार्थ्य मित्यर्थः। "अद्य च श्वश्चेति। वर्त्तमानानागतकालौ। एवं

---

* का० श्रौ० सू० ४. १४. २७।

† 'मुत्सृप्य'—इति क. 'मुत्सृष्य'—इति च दृष्टो डा०-वेवरेण। 'उत्सृप्य, वहिर्निर्गम्येति माधवः'—इति या० दे०।

‡ 'यदतो'—इति च। 'यदेतो'—इति च दृष्टो डा०-वेवरेण।

यद्वविधं 'तद् द्वय मेवानु' तद्भागरूपे यथाक्रमे ते आहुती भवत इत्यर्थः ॥ २४ ॥

अथ तयोराहुत्योः समन्त्रकामन्त्रकत्वे विधास्यन् भूतभविष्य-दादिद्वन्द्वस्यात्मप्रजारूपत्वम्, श्रद्धानश्रद्धारूपत्वं च दर्शयति— "आत्मैव भूत मित्यादिना। 'आत्मा' स्वयं पिता 'एव', 'भूतम्' यद्व भूतम्, तत् 'श्रद्धा'; अनुभूतत्वात् प्रत्यक्षम्। एव मात्मनो भूतस्य च श्रद्धात्वसाम्यात् आत्मभूत मिति तादात्म्य मित्यर्थः। "प्रजैव भविष्यदिति, प्रतिज्ञा। तदुपपादनम्— "अनद्धा हीत्यादि। 'अनद्धा' अप्रत्यक्षम्; प्रजाभविष्यतोरप्रत्यक्षत्व-साम्यात् तादात्म्य मित्यर्थः ॥ २५ ॥

एवम् "आत्मैव जात मित्यादिषु द्वन्द्वान्तरेषु योजना ॥ २६ ॥

"आत्मैवागत मिति। आत्मप्रजारूपेण श्रद्धानश्रद्धारूपेण चाहुती स्तुत्वा हूयते, स चाद्धारूपः; मन्त्रोऽपि देवताप्रकाशकत्वात् तथा ॥ २७ ॥

"आत्मेवाद्येति। अद्येति वर्त्तमानकालः, श्व इत्यागामिकालः ॥२८॥

"सा या पूर्वाहुतिरिति। 'तां' पूर्वाहुतिं मन्त्रेण जुहुया-दित्यर्थः। उत्तराहुतिस्तु भविष्यज्जनिष्यमाणा अनागताद्यात्मक-प्रजास्थानीया, सा चानद्धारूपा; अमन्त्रकत्व मपि तथैति। तूष्णीं तु भविष्यज्जनिष्यमाणानागताद्यात्मकप्रजास्थानीया, सा चानद्धारूपा; अमन्त्रक मपि तथैति तूष्णी मेव सा होतव्ये-त्यर्थः * ॥ २९ ॥

कालद्वयेऽपि पूर्वस्या आहुतेः क्रमेण मन्त्रौ दर्शयति— "स

---

* "तूष्णीं द्वितीयाम्"—इति का० श्रौ० सू० ४.१४.२४।

जुहोतीति *। मन्त्रयोः सत्यरूपत्व मुपपादयितु मर्थसद्भाव माह— "यदा हीत्यादिना। अस्तङ्गतः सूर्योऽग्नि मेवानु प्रविशतीति रात्रावग्निर्ज्योतीरूपो भवति। यदेतन्मन्त्रवाक्यद्वयं तत् समवेतार्थत्वात् सत्यम् ॥ ३० ॥

अनयोः सामम्नातहोमयोर्ब्रह्मवर्च्चसकामस्य कर्त्तव्यतोपन्यास-पुरस्सरं मन्त्रविशेषौ दर्शयति— "तदु हैतदिति। अग्निर्ज्योतिः सूर्यो ज्योति रिति चत्वारो वर्च्चश्शब्दाभिधेयस्य तेजसः प्रतिपादकाः। अत एवाभ्यां मन्त्राभ्यां जुह्वतः पुरुषस्य ब्रह्म-तेज. सम्पद्यत इत्यर्थः। तदुक्तं कात्यायनेन— "अग्निर्वर्च्च इति ब्रह्मवर्च्चसकामस्य"-इति † ॥ ३१ ॥

"तद्वस्यैवेत्यादि। तस्मिन् होममन्त्रे 'प्रजननस्य' रूप मिव 'रूपम्' विद्यते। ज्योतिश्शब्दाभिधेयं मध्येऽवस्थितं 'रेतः' 'उभयतः' 'देवतया' देवतावाचिपदाभ्यां 'परिगृह्णाति'। उभयतः परिगृहीतत्वं रेतसः प्रजननरूपम्। अतः "अग्निर्ज्योतिः"- "सूर्यो ज्योतिः"—इति मन्त्रयोः ‡ प्रजननरूपसद्भावात् ताभ्यां होमे प्रजासम्पत्तिर्भवतीत्यर्थः ॥ ३२ ॥ ॥ ३३ ॥

"तदु होवाचेत्यादि। एलकस्य पुत्रः 'ऐलकिः', 'जीवलः' इति तस्य नाम। "गर्भ मेवेति। कालद्वयेऽपि ज्योतिश्-शब्दस्य देवतावाचिपदगृहीतत्वात् रेतः परिगृहीत मन्तरवस्थितं गर्भावस्थ मेव भवति; न तु प्रजारूपेणोत्पद्यत इत्यादिः तद्दोषोपन्यासः, "स एतेनेत्यादिः, तत्परिहारः॥

"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा"-इत्येतेनैव § सायं जुहु-

---

* का० श्रौ० सू० ४. १४. १४। † का० श्रौ० सू० ४. १४. १५।

‡ वा० सं० ३. ६. १, २। § वा० सं० ३. ६. १।

यात्, तेन गर्भो धृतो भवति। प्रातःकाले तु "ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा"–इत्यनेन * मन्त्रेण होमे सति रेतोरूपस्य ज्योतिश्शब्दस्य हिङ्करणात् अन्तर्गतो गर्भो वहिः प्रजोत्पत्तिर्भवति † ॥ ३४ ॥

"अथ प्रातरिति। स्पष्टम् ॥ ३५ ॥

"तदाहुरिति। "अग्नावेवैतदिति। अग्निर्ज्योतिरिति-मन्त्रेण जुह्वन् 'अग्नावेव' सन्तं 'सूर्यं' 'जुहोति'; अतः सूर्यो ज्योतिरिति ज्योतिश्शब्दोऽग्निवचनः। अतो यथापठिताभ्या मेव मन्त्राभ्यां होम इत्यभिप्रायः।

"तदुदितहोमिना मित्यादि। 'तत्' उक्तविधानाम् 'उदित-होमिना मेव', नानुदितहोमिनां सम्भवति। कथ मिति चेत्, उच्यते—सूर्ये ह्यस्तङ्गते 'अग्निः ज्योतिः' प्रकाशमानो भवति, उदिते त्वाग्नेयतेजस्सङ्क्रमात् सूर्यश्च प्रकाशवान् भवति। तस्मात् "अग्निर्ज्योतिः—सूर्यो ज्योतिः"–इतिमन्त्रनिष्पाद्यस्याग्निहोत्र-होमस्य अग्नौ पूर्वोक्तरूपं ‡ "गर्भ मेव करोति, न प्रजनयतीति एवंरूपा निन्दा नास्तीत्यर्थः।

तर्ह्युदितहोमपक्ष एवाश्रयणीय इत्याशङ्क्य § तत्र दोषान्तर माह—"इय मेव परिचक्षेति। 'यद्' यस्मात् 'अग्नये स्वाहा', 'सूर्याय स्वाहा' इति 'तस्यै' देवतायै प्रत्यक्षं न हूयते, किन्तु "अग्निर्ज्योतिः – सूर्योज्योतिः"–इति प्रथमान्तत्वेन सम्प्रदान-

---

* वा० सं० ३. ६. ५।

† का० श्रौ० सू० ४. १५. ११।

‡ पुरस्तादिहैव ११३ पृ० ६ पं द्रष्टव्यम्।

§ "प्रातर्जुहोत्यनुदिते"—इत्येव विधिः का० श्रौ० सू० ४.१५.।

विभक्तेरभावात् देवतात्वस्य परोक्ष मेवास्य पक्षस्य निर्द्दे-
त्यर्थः ॥ ३६ ॥

एवं निरुद्यनिरुद्यं प्रदर्श्य, अनिरुद्यं पक्षान्तर माह— अने-
नैवेति। तदुक्तं सूत्रकृता— "प्रदीप्ता * मभिजुहोति अग्नि-
र्ज्योतिरिति † सजूरिति ‡ वा"–इति §। "तत् सविष्टम-
दित्यादि, सुगमम्। "प्रत्यक्षं जुहोतीति। 'जुषाणः' हविः
सेवमानः 'अग्निः' 'वेतु' कामयता मिति प्रतिपादनात् अग्नेर्होमः
प्रत्यक्ष इति प्रागुक्तात् पक्षात् वैलक्षण्य मित्यर्थः। प्रातःकालीन-
मन्त्रोऽप्येवं द्रष्टव्यम् ॥ ३७, ३८ ॥

हुतशिष्टस्य स्थालीमध्यस्य पयसो ब्राह्मणानां पानं विधित्सुः
ततोऽन्य एव ब्राह्मणोऽग्निहोत्रहोमस्याध्वर्युरिति प्रतिपादयति—
"ते होचुरित्यादिना। "अथ यत् स्थाल्या मिति। अग्निहोत्र-
होमसाधनभूतायां स्रुचि यत् हुतशिष्टम्, तस्यैव हिः प्राश्नातीति
प्राशनं विहितम्; यत्तु स्थाल्या मवशिष्यते, तत्तु नाग्निहोत्रो-
च्छिष्टम्। तत्र दृष्टान्तः— "यथा परिणह इति। परितो नद्धं
परिश्रितं ‖ धान्यपूर्णं शकटस्योपरि स्थापितम्; यथा तस्माद्धविषो
निर्वापयितुं तद्गतं धान्यं न शेष्यते, किन्तु पुनरपि यागान्तरयोग्य
मेव। 'एवं तत्' स्थाल्यां पय इत्यर्थः। तथा चाध्वर्योरेव तत्

* 'प्रदीप्ताया मिति क्व।

† वा० सं० ३. ९. १, २।

‡ वा० सं० ३. १०. १, २।

§ का० श्रौ० सू० ४. १४. १४।

‖ 'परिवीतं'–इति च। 'परिश्रितं'–इति च इस्तो डा०-वेबरेण।

पान मिति नियमाभावात् यः कोऽपि ब्राह्मणस्तत् पिबेदित्यर्थः * ॥ ३८ ॥ ३ [ २. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे तृतीयाध्यायस्य प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम्. )

एता ह वै देवता योऽस्ति। तस्मिन्वसन्तीन्द्रो यमो राजा नडो नैषिधो ऽनश्नन्त्स्माङ्गमनोऽसन् पाᳪसवः † ॥ १ ॥

तद्वा ऽएष एवेन्द्रः। यदाहवनीयो ऽथैष एव गार्हपत्यो यमो राजाथैष एव नडो नैषिधो यदन्वाहार्यपचनस्तद्यदेतमहरहर्दक्षिणत आहरन्ति तस्मादाहुरहरहर्वै नडो नैषिधो यमᳪ राजानं दक्षिणत उपनयतीति ‡ ॥ २ ॥

---

* "स्थाल्यां परिशिनष्टि तद् ब्राह्मणः पिबेत्"—इति का० श्रौ० सू० ४. १४. ११। "नायं ब्राह्मणस्य पाने नियमः, किं तर्ह्यब्राह्मणस्य प्रतिषेधोऽयम्"—इति च तट्टीकायां या० दे०।

† 'पाᳪसवः'—इति घ, ङ।

‡ 'तीति'—इति घ, ङ।

अथ य एष सभाया मग्निः। एष एवान-स्न त्सङ्गमन* स्तद्यदेत मनशित्वेवोपमङ्गच्छन्ते तस्मा-देषो ऽनश्नन्नथ यदेतद् भस्मोद्धृत्य परावपन्त्येष एवा-सन् पांसवः स यो हैव मेतद्वेदैवं मय्येता देवता व्वसन्तीति सर्वान्हैवैतांल्लोकान् जयति सर्वांल्लोका-ननुसञ्चरति ॥ ३ ॥

तेषा मुपस्थानम्। यदेव सायं प्रातराहवनीय मुप च तिष्ठत ऽउप चास्ते तदेव तस्योपस्थान मथ यदेव प्रतिपरेत्य गार्हपत्य मास्ते वा शेते वा तदेव तस्योपस्थान मथ यच्चैव संव्रजन्नन्वाहार्यपचन मुपस्मरेत् तदेव तं मनसोपतिष्ठेत तदेव तस्योपस्था-नम् ॥ ४ ॥

अथ प्रातः †। अनशित्वा मुहूर्तं सभाया मासित्वापि कामं पल्ययेत तदेव तस्योपस्थान मथ यच्चैव भस्मोद्धृत मुपनिगच्छेत्तदेव तस्योपस्थान मेव मु हास्यैता देवता उपस्थिता भवन्ति ॥ ५ ॥

यजमानदेवत्यो वै गार्हपत्यः। अथैष भ्रातृव्य-देवत्यो यदन्वाहार्यपचनस्तस्मादेतं नाहरहराहरेयुर्

* 'अनग्नाङ्गमन'—इति घ, ङ। † 'प्रातः'—इति घ, ङ।

ह वा ऽअस्य सपत्ना भवन्ति यस्यैवं व्विदुष एतं नाहरहराहरन्त्यन्वाहार्यपचनो वा ऽएषः ॥ ६ ॥

उपवसथ ऽएवैन माहरेयुः। यत्रैवास्मिन्यक्ष्यन्तो भवन्ति तथो हास्यैषो ऽमोघायाहृतो भवति ॥ ७ ॥

नवावसिते * वैन माहरेयुः। तस्मिन् पचेयुस्तद् ब्राह्मणा अश्नीयुर्यद्यु तन्न विन्देद्यत्पचेदपि गोरेव दुग्ध मधिश्रयितवै ब्रूयात्तस्मिन् ब्राह्मणान्पाययितवै ब्रूयात्पापीयाꣳसो ह वा ऽअस्य सपत्ना भवन्ति यस्यैवं व्विदुष एवं कुर्व्वन्ति तस्मादेव मेव चिकीर्षेत् ॥ ८ ॥

तद्यत्रैतत्प्रथमꣳ समिद्धो भवति। धूप्यत † ऽइव तर्हि हैष भवति रुद्रः स यः कामयेत यथेमा रुद्रः प्रजा अश्रद्धयेव त्वत्सहसेव त्वन्निघात मिव त्वत्सचत ऽएव मन्न मद्या मिति तर्हि ह स जुहुयात्प्राप्नोति हैवैतदन्नाद्यं य एवं व्विद्वांस्तर्हि जुहोति ‡ ॥ ९ ॥

अथ यत्रैतत्प्रदीप्ततरो भवति। तर्हि हैष

* "नवावसथे"—इति स्यात् सायणसम्मतः।

† 'धूप्यत'—इति च ङा०-वेबरेण दृष्टः।

‡ 'जुहोति'—इति ग, 'जुहोति'—इति घ, ङ। इहोपरिष्टाच्चैवम्।

भवति व्वरुणः स यः कामयेत यथेमा व्वरुणः प्रजा गृह्णन्निव त्वत्सहसेव त्वन्निघात मिव त्वत्सचत ऽएव मन्न मद्या मिति तर्हि ह स जुहुयात् प्राप्नोति हैवैतदन्नाद्यं य एवं व्विद्वांस्तर्हि जुहोति ॥ १० ॥

अथ यत्रैतत्प्रदीप्तो भवति। उच्चैर्धूमः परमया जूत्या बल्बलीति * तर्हि हैष भवतीन्द्रः स यः कामयेतेन्द्र इव श्रिया यशसा स्या मिति तर्हि ह स जुहुयात् प्राप्नोति हैवैतदन्नाद्यं य एवं व्विद्वांस्तर्हि जुहोति ॥ ११ ॥

अथ यत्रैतत्प्रतितरा मिव। तिरश्चीवार्च्चिः सं शाम्यतो † भवति तर्हि हैष भवति मित्रः स यः कामयेत मैत्रेणेद मन्न मद्या मिति य माहुः सर्व्वस्य वा ऽअयं ब्राह्मणो मित्रं न वा ऽअयं कं चन हिनस्तीति तर्हि ह स जुहुयात् प्राप्नोति हैवैतदन्नाद्यं य एवं व्विद्वांस्तर्हि जुहोति ॥ १२ ॥

अथ यत्रैतदङ्गारास्त्राकश्यन्त ऽइव। तर्हि हैष भवति ब्रह्म स यः कामयेत ब्रह्मवर्चसी स्या मिति

---

* 'बल्वलीति —इति च इष्टो डा०-वेबरेण।

† 'संशाम्यतो'—इति घ, ङ।

तर्हि ह स जुहुयात् प्राप्नोति हैवैतदन्नाद्यं य एवं विद्वांस्तर्हि जुहोति ॥ १३ ॥

एतेषा मेकᳩ संवत्सर मुपेत्सेत् । स्वयं जुहुयादि वाश्चान्यो जुहुयादथ योऽन्यथान्यथा जुहोति यथापो वाभिखनन्नन्यद्वान्नाद्यᳩ स सामि निवर्त्तेतैवं तदथ यः साधुं जुहोति यथापो वाभिखनन्नन्यद्वा-न्नाद्यं तत् क्षिप्रे ऽभितृन्द्यादेवं तत् * ॥ १४ ॥

अग्नयो ह वा ऽएता अन्नाद्यस्य यदाहुतयः । अभि हैवैतदन्नाद्यं तृणत्ति य एवं विद्वानग्निहोत्रं जुहोति ॥ १५ ॥

सा या पूर्व्वाहुतिः । ते देवा अथ योत्तरा ते मनुष्या अथ यत् स्रुचि परिशिनष्टि ते पशवः ॥ १६ ॥

स वै कनीय इव पूर्व्वा माहुतिं जुहोति । भूय इवोत्तरां भूय इव स्रुचि परिशिनष्टि ॥ १७ ॥

स यत् कनीय इव पूर्व्वा माहुतिं जुहोति । कनीयाᳩसो हि देवा मनुष्येभ्यो ऽथ यद् भूय ऽइवोत्तरां भूयाᳩसो हि मनुष्या देवेभ्यो ऽथ यद् भूय इव

* 'तत्'—इति क, 'तत्'—इति घ, ङ।

स्रुचि परिशिनष्टि भूयाꣳसो हि पशवो मनुष्येभ्यः कनीयाꣳसो ह वा ऽस्य भार्या भवन्ति भूयाꣳसः पशवो य एवं विद्वानग्निहोत्रं जुहोति तद्वै समृद्धं यस्य कनीयाꣳसो भार्या असन् भूयाꣳसः पशवः ॥ १८ ॥ ४ ॥

## ॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ [ ३. २. ]

अथाग्न्युपस्थानं विधित्सुस्तेषा मग्नीनाञ्च दैवतरूपता माह—"एता ह वा इति । 'योऽस्ति' यो यजमानो विद्यते, तस्मिन् 'एताः' वक्ष्यमाणा देवता निवसन्ति । ताश्च "इन्द्रः, यमः, नडः, नैषिधः इति * । निषधदेशाधिपतिर्नलः प्रसिद्धो राजा । 'अनश्नन्त्सङ्गमनः' इति सभ्योऽग्निरुच्यते, 'असन् पांसव'–इत्यावसथ्यः ॥ १ ॥

एवं तच्छिष्टानां स्वरूपप्रतिपादनं "तद्वा इत्यादिना क्रियते । 'अन्वाहार्यपचनः' अग्निः, 'एष एव' ( 'नडः' ) नलः, 'नैषिधः'–इति निर्दिष्टः । निषिधराजस्य च नलस्य, दक्षिणाग्नेश्च साम्य माह—"तद्यदिति । अग्निहोत्रहोमकाले एव † मन्वाहार्यपचनं 'यद्' यस्मात् 'दक्षिणतः अहरहः आहरन्ति', तस्मादेव 'नैषिध' नलोऽपि यमस्य राज्ञः 'दक्षिणतः' उपगच्छतीति लोकप्रसिद्धिरित्यर्थः ॥ २ ॥

"अथ य एष सभाया मग्निः, 'एष एवानश्नन्निति ‡ ।

---

* 'नलो (!) नैषध (!) इति'—इति च ।

† 'एत'—इति च । ‡ का० श्रौ० सू० ४, १५, २३ ।

'एषः' सभ्योऽग्नि, अनग्निरेव प्रातः सभ्यः सङ्गम्यत इति व्युत्पत्त्या अनश्नन्सङ्गमन इति पदद्वयेन प्रतिपाद्यत इत्यर्थः। "भस्मोद्धृत्येति *। गार्हपत्याहवनीयादिगतं भस्म उद्धृत्य 'यत्' प्रातरेव आवसथे 'परावपन्ति'। "एष एवासन्निति। भस्मनः पांसुतुल्यत्वात् 'पांसवः' भस्मरूपाः पांसुसम्बन्धिनश्च। एवं पञ्चाना मग्नीनां देवतात्मकत्वं प्रतिपाद्य एतद्वेत्तुः फल माह—"स य इति ॥ ३ ॥

"तेषा मुपस्थान मिति। वक्ष्यत इति शेषः। आहवनीयस्य समीपेऽवस्थान † मासनं शयनं वा क्रियते; 'तदेव तस्योपस्थानम्' ‡। 'प्रतिपरेत्य' आहवनीयागारात् प्रतिनिवर्त्य गार्हपत्यसमीपे वासं वा शयनं वा क्रियते, 'तदेव तस्योपस्थानम्' §; "संव्रजन्निति। तत्रैव 'तं मनसोपतिष्ठते', 'तदेव तस्योपस्थानम्' ‖; अग्निहोत्रं स्वाङ्गस्यापि तस्य सम्पद्यत इत्यर्थः ॥ ४ ॥

"अथ प्रातरिति। "सभाया मासित्वेति। भोजनात् प्रागेव 'मुहूर्तं' 'सभायाम्' उपविश्य, पश्चात् यथेच्छं 'पल्ययेत' परिगमनं 'कुर्वीत' ¶, 'तत्' आसनं 'तस्य' सभ्याग्नेः 'उपस्थानम्'। उद्धृतभस्मोपगमन मेव आवसथ्योपस्थानम् ** ॥ ५ ॥

यदेतदन्वाहार्यस्याहरहर्दक्षिणत आहरणम्, तदुपवसथ एवाहनि कर्त्तव्यं नान्यत्रेति विधित्सुराह—"यजमानदेवत्यो वा इति †† अहरहराहरणे यजमानस्य शतुदेहसम्बन्धिता भवती-

---

* का० श्रौ० सू० ४, १५, ३४।

† 'समीपे यत् स्थान'—इति च।

‡ का० श्रौ० सू० ४, १५, ३०।

§ का० श्रौ० सू० ४, १५, ३१।

‖ का० श्रौ० सू० ४, १५, ३२।

¶ 'करोति'—इति च।

** का० श्रौ० सू० ४, १५, ३३।

†† का० श्रौ० सू० ४, १३, ६।

त्यर्थः । "अन्वाहार्यपचनः"—इति यौगिकी सञ्ज्ञा, तस्मात् सोऽन्वाहार्यः ॥ ६ ॥

"उपवसथ इति *। ओदनो यस्मिन्नहनि अग्नौ पक्तव्यः, तत्रैवोपवसथेऽहनि तस्याहरणं कर्त्तव्य मित्यर्थः । "अमोघायेति । सप्रयोजनायेत्यर्थः ॥ ७ ॥

"नवावसिते वेति †। नव आवसथो नवावसथः ; नूतनं स्थानम् प्राप्य 'एनम्' अन्वाहार्यपचनम् 'आहरेयुः'। आहरण-प्रयोजन माह— "तस्मिन्निति ‡। "यद्यु तन्न विन्देदिति । पक्तव्यालाभे गोर्दुग्ध्वा पय एव तस्मिन्नग्नौ 'अधिश्रयितवै' अधि-श्रयितुं 'ब्रूयात्' §। तुमर्थे तवै-प्रत्ययः ‖। एवञ्चान्वाहार्य-पचनस्याहरहर्दक्षिणत आहरण मित्येकः पक्षः, यत्तु देशान्तरे प्रवसन् यजमानः अहरहः पाकसमये तत्साधनभूतं स्वकीय मन्वाहार्यपचनं स्मरेत् उपवसथ एवेति द्वितीयः, नवावसथे वेति तृतीयः । सूत्रकृताप्युक्तम्— "आहरण मेकेषा मुपवसथे नवावसथे वा तस्मिन् पचेयुरमांसम्, पाक्याभावे गोःपयोऽधिश्रयितवै ब्रूयात्"—इति ¶।

एव मन्वाहार्यपचनस्य न प्रतिदिवस माहरणं किन्तूपवसथे नवावसथे वेति यदुक्तम्, तस्य फल माह— "पापीयांश इति । अन्वाहार्यपचनस्य भ्रातृव्यस्थानीयत्वात् तस्य प्रतिदिवस माहरणा-भावात् शत्रुक्षयो भवतीत्यर्थः ॥ ८ ॥

अथाहवनीयाग्नेरवस्थाविशेष मुपजीव्य रुद्रवरुणेन्द्रादिदेवता-

---

* का० श्रौ० सू० ४, १३, ७। † का० श्रौ० सू० ४, १३, ८।
‡ का० श्रौ० सू० ४, १३, ९। § का० श्रौ० सू० ४, १३, १०।
‖ पा० सू० ३, ४, ९। ¶ का० श्रौ० सू० ४, १३, ९—१०।

रूपान् प्रकल्प्य काम्यान् होमकालानाह—"तद्यत्रैतदिति *। काष्ठैः समिद्धोऽग्निर्यदा प्रथमं धूमायमानो भवति †, तस्मिन् समये एष रुद्रात्मको भवति। "यथेमा रुद्र इति। 'यथा' खलु 'रुद्रः' 'इमाः' सर्वाः 'प्रजाः' 'अभ्रद्धयेव त्व त्' अप्रियेणैव एकवारम्, 'सहसेव त्वत्' बलात्कारेणैव एकवारम्, तथा 'निघात मिव त्वत्' प्रजानां हनन मिव एकवारम्, 'सचते' समवैति; 'एवम्' एवाहं सर्वम् 'अन्नम्' उपसंहृत्य 'अद्याम्' भक्षयेयम् 'इति' 'यः कामयेत', 'सः' यजमानः 'तर्हि' तस्मिन् रुद्रावस्थेऽग्नौ 'जुहुयात्'। एव मुत्तरत्रापि योज्यम् ॥ ९ ॥

"अथ यत्रैतत् प्रदीप्ततरो भवतीति ‡। प्रदीप्तावस्थ आहवनीयो वरुणात्मकः। "गृह्णन्निव त्वदिति। वरुणो हि पापीयसीः प्रजाः आत्मीयैः पाशैः 'गृह्णन्निव' भवति, तद्वदय मपि सर्वं मन्नाद्य मुत्पाद्यन्त इत्यर्थः ॥ १० ॥

"अथ यत्रैतत् प्रदीप्तो भवतीति §। "उच्चैर्धूम इति। यस्या मवस्थाया माहवनीयः प्रदीप्तः सन्नुन्नतधूमो भूत्वा महता वेगेन 'बल्बलि'—'इति' एवं शब्दायते, तदवस्थोऽग्निरिन्द्रात्मक इत्यर्थः ॥ ११ ॥

"अथ यत्रैतत् प्रतितरा मिवेति ‖। काष्ठेषु दग्धेषु 'संशाम्यतः' 'अग्नेः' 'अर्चिः' 'प्रतितरां' निकृष्टतराम् 'इव',

---

* का० श्रौ० ४, १५, १६ सूत्रं द्रष्टव्यम्।

† "'धूप्यत इव' धूमायमान इव भवति"—इति च।

‡ का० श्रौ० ४, १५, १७ सूत्रं द्रष्टव्यम्।

§ का० श्रौ० ४, १५, १८ सूत्रं द्रष्टव्यम्।

‖ का० श्रौ० ४, १५, १९ सूत्रं द्रष्टव्यम्।

ऊर्द्धाधोगमनाभावे 'तिरश्चीव' भवति *। "य माहुरिति। ब्राह्मणस्य यजमानस्य होमकाले इत्यर्थः ॥ १२ ॥

"अथ यत्रैतदङ्गाराश्चाकश्यन्त इवेति †। सर्वासु ज्वालासु निवृत्तासु केवल मङ्गारा अत्यर्थं दीप्यन्ते; तस्या मवस्थायाम् 'एषः' अग्निः 'ब्रह्म' परब्रह्मात्मको 'भवति' ॥ १३ ॥

"एतेषा मेक मित्यादि। 'एतेषां' रुद्राद्यवस्थाविशेषाणां मध्ये 'एकं' 'संवत्सरं' संवत्सरपर्यन्तं निरन्तर मनुतिष्ठेत्। 'यदि' यजमानः 'स्वयम्' एवाग्निहोत्रं 'जुह्वत्' भवति, 'अन्यो वा' अध्वर्युः 'जुहुयात्', उभयोरप्येष संवत्सरनियमः ‡॥

यस्तु संवत्सरमध्ये उक्तनियमं परित्यज्य 'अन्यथा' प्रतिदिवसं प्रकारान्तरेण 'जुहोति', तस्य दोषं दृष्टान्तपुरस्सर माह— "यथेति। 'अपः' 'अभि'-लक्ष्य वापीकूपादिकं 'खनन्', 'अन्यद्' व्रीहियवादिकम् 'अन्नाद्यं वा' सम्पादयन्, 'सामि' अर्द्धकृते 'यथा' 'निवर्त्तेत' 'एवम्' एव 'तत्' अन्यथाग्निहोत्रहवन मित्यर्थः॥

संवत्सरपर्यन्तं निरन्तर मेकं पक्षं कुर्वतो यजमानस्योद्दिष्टफलप्राप्ति माह— "अथ य इति। 'सार्द्धं' सह, नैरन्तर्येण 'यः' संवत्सरं 'जुहोति', सिद्ध मन्यत्। 'अन्नाद्यम्' 'अभिसृणत्ति' स उत्पादयतीत्यर्थ §॥ १४. १५ ॥

पूर्वोत्तराहुतिद्रव्ययोरवशिष्टस्य चोत्तरोत्तरं भूयस्त्वं विधाय प्रतिपादयति— 'सा येत्यादिना ॥ १६ ॥ ॥ १७ ॥

---

* 'ऊर्द्धाधोगमनरहित इव भवति'—इति च।

† का० श्रौ० ४. १५. २० सू० द्रष्टव्यम्।

‡ का० श्रौ० सू० ४. १५. २७ क। § का० श्रौ० म० ४. १५. २७ ख।

"स यत् कनीय इति। "भार्या भवन्तीति। भर्त्तव्याः प्रजा भवन्तीत्यर्थः ॥

"तद्वै समृद्ध मिति। यत्र खलु भोक्तृणा मल्पीयस्त्वम्, भोग्यसम्पत्तिर्भूयसी, तत् खलु समृद्ध मित्यर्थः * ॥ १८ ॥ ४ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे तृतीयाध्यायस्य द्वितीयं ब्राह्मणम् ॥

## ॥ इति द्वितीयकाण्डे द्वितीयः प्रपाठकः† ॥

---

* "स्वयं वा जुहुयात्, उपवसथे नियमः"—इति का० श्रौ० ४. १५. ३५, ३६ सूत्रे। "सर्वदा स्वय मेव वाग्निहोत्रं जुहुयात्, अन्यो वा"—इति, उपवसथशब्देन पौर्णमास्यमावास्ये उच्येते। तत्र स्वय मेव एते रात्री अग्निहोत्रं जुहुयादित्ययं नियमः। सूतके मृतकेऽपि तत्काल मेव स्नात्वा स्वय मेव होमः कार्यः"—इति च तयोर्याज्ञिकदेवकृते व्याख्याने।

† "कण्डिकासङ्ख्या १०३"—इति क, ख-पुस्तके नास्ति, "काण्डी १०४" इति—ग, घ-ञ्योः कवत्। तत्र १ ब्रा० २८ क०, २ ब्रा० १८ क०, ३ ब्रा० ३९ क०, ४ ब्रा० १८ क० ; सङ्कलनया १०३ सिद्धम् ॥

अथ

तृतीयप्रपाठके प्रथमं ब्राह्मणम्,

यद्वा

तृतीयाध्याये तृतीयं ब्राह्मणम्।

॥ हरिः ॐ ॥

प्रजापतिर्ह वै प्रजाः ससृजे *। स यत्राग्निꣳ ससृजे स इदं जातः सर्व्वमेव दग्धुं दध्र ऽइत्येवाविलमेव ता यास्तर्हि प्रजा आसुस्ता हैनꣳ सम्पेष्टुं दध्रिरे सो ऽतितिक्षमाणः पुरुषमेवाभ्येयाय ॥ १ ॥

स होवाच। न वा ऽअहमिदं तितिक्षे हन्त त्वा प्रविशानि तं मा जनयित्वा बिभृहि स यथैव मां त्वमस्मिंल्लोके † जनयित्वा भरिष्यस्येवमेवाहं त्वाममुष्मिंल्लोके जनयित्वा भरिष्यामीति तथेति तं जनयित्वाबिभः ॥ २ ॥

---

* 'सस्रजे'—इति क, ग; 'सस्रजे'—इति घ, ङ।

† 'मस्मिन् लोके'—इति क; 'मस्मिं लोके'—इति घ, ङ। एवमित्थोत्तरत्रापि सर्वत्र।

स यदग्नौ ऽआधत्ते *। तदेनं जनयति तं जनयित्वा बिभर्त्ति स यथा हैवैष एत मस्मिंल्लोके जनयित्वा बिभर्त्त्येव मु हैवैष एत ममुष्मिंल्लोके जनयित्वा बिभर्त्ति ॥ ३ ॥

तन्न साम्युद्वासयेत। सामि हास्यै स ग्लायति स यथा हैवैष एतस्मा ऽअस्मिंल्लोके सामि ग्लायत्येव मु हैवेष एतस्मा ऽअमुष्मिंल्लोके सामि ग्लायति तस्मान्न साम्युद्वासयेत ॥ ४ ॥

स यत्र म्रियते। यत्रैन मग्नावभ्यादधति तदेषो ऽग्नेरधिजायते स एष पुत्रः सन् पिता भवति ॥ ५ ॥

तस्मादेतदृषिणाभ्यनूक्तम् †। शत मिन्नु शरदो ऽअन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोरिति पुत्रो ह्येष सन्त्स ‡ पुनः पिता भवत्येतन्नु तद्यस्मादग्नौ ऽआदधीत ॥ ६ ॥

तद्वा ऽएष एव मृत्युः। य एष तपति

---

* 'त्ते'— इति क, ग; 'त्ते'— इति घ, ङ।

† 'क्त९'— इति घ, ङ। ‡ 'सन्त्स्य'— इति च इष्टो डा०-वेबरेण।

तद्यदेष एव मृत्युस्तस्माद् या एतस्मादर्व्वाच्यः प्रजास्ता म्रियन्तेऽथ याः पराच्यस्ते देवास्तस्मादु तेऽमृतास्तस्येमाः सर्व्वाः प्रजा रश्मिभिः प्राणेष्वभिहिता यथाश्वो ऽश्वाभिधान्या वाभीशुभिर्व्वैव मस्येमाः सर्वाः प्रजा रश्मिभिः प्राणेष्वभिहिता स्तस्माद् रश्मयः प्राणानभ्यवतायन्ते ॥ ७ ॥

स यस्य कामयते। तस्य प्राण मादायोदेति स म्रियते* स यो हैतं मृत्यु मनतिमुच्यामुं लोक मेति यथा हैवास्मिंल्लोके न संयत माद्रियते यदा यदैव† कामयते ऽथ मारयत्येव मु हैवामुष्मिंल्लोके पुनःपुनरेव प्रमारयति ॥ ८ ॥

स यत् साय मस्तमिते द्वे ऽआहुती जुहोति। तदेताभ्यां पूर्व्वाभ्यां पद्भ्यां मेतस्मिन् मृत्यौ प्रतितिष्ठत्यथ यत् प्रातरनुदिते द्वे ऽआहुती जुहोति तदेताभ्या मपराभ्यां पद्भ्यां मेतस्मिन्मृत्यौ प्रतितिष्ठति स एन मेष उद्यन्नेवादायोदेति तदेतं‡

---

* 'संम्रियते'— इति क, ग; दृष्टो डा०-वेबरेण च।

† 'यदेव'— इति घ, ङ; 'यदैव'— इति च डा०-वेबरेण दृष्टः।

‡ 'तदेतन्'— इति क।

मृत्यु मतिमुच्यते सैषाग्निहोत्रे मृत्योरतिमुक्तिरति ह वै पुनर्मृत्युं मुच्यते य एव मेता मग्निहोत्रे मृत्योरतिमुक्तिं व्वेद ॥ ९ ॥

यथा वा ऽइषोरनीकम्। एवं यज्ञाना मग्निहोत्रं येन वा ऽइषोरनीक मेति सर्व्वा वै तेनेषुरेत्येतेनो हास्य सर्व्वे यज्ञक्रतव एतं मृत्यु मतिमुक्ताः ॥ १० ॥

अहोरात्रे ह वा ऽअमुष्मिंल्लोके परिप्लवमाने। पुरुषस्य सुकृतं क्षिणुतो ऽर्व्वाचीनं वा ऽअतो ऽहोरात्रे तथो हास्याहोरात्रे सुकृतं न क्षिणुतः ॥ ११ ॥

स यथा रथोपस्थे तिष्ठन्। उपरिष्टाद्रथचक्रे पल्यङ्गमाने ऽउपावेक्षेतैवं परस्तादर्वाचीनो ऽहोरात्रे ऽउपावेक्षते न ह वा ऽअस्याहोरात्रे सुकृतं क्षिणुतो य एव मेता महोरात्रयोरतिमुक्तिं व्वेद ॥ १२ ॥

पूर्व्वेणाहवनीयं परीत्य *। अन्तरेण गार्हपत्यं चैति न वै देवा मनुष्यं व्विदुस्त ऽएन मेतदन्तरेणातियन्त व्विदुरयं वै न इदं जुहोतीत्यग्निर्व्वै

* 'परीत्य'— इति क, च, छ।

पाप्मनो ऽपहन्ता तावस्याहवनीयस्य गार्हपत्यस्यान्तरेणातियतः पाप्मान मपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ॥ १३ ॥

उत्तरतो वा ऽअग्निहोत्रस्य द्वारम्*। स यथा द्वारा प्रपद्येतैवं तदथ यो दक्षिणत एत्यास्ते यथा बहिर्धा चरेदेवं तत्† ॥ १४ ॥

नौर्ह वा ऽएषा स्वर्ग्या। यदग्निहोत्रं तस्या ऽएतस्यै नावः स्वर्ग्याया आहवनीयश्चैव गार्हपत्यश्च नौमण्डे ऽअथैष एव नावाजो यत् क्षीरहोता ॥ १५ ॥

स यत् प्राङुपोदैति। तदेनां प्राची मभ्यजति स्वर्गं लोक मभि तया स्वर्गं लोकꣳ समश्नुते तस्या ऽउत्तरत ऽआरोहणꣳ सैनꣳ स्वर्गं लोकꣳ समापयत्यथ यो दक्षिणत एत्यास्ते यथा प्रतीर्णाया मागच्छेत् स व्हीयेत स तत एव बहिर्धा स्यादेवं तत्‡ ॥ १६ ॥

अथ या मेताꣳ समिध मभ्यादधाति सेष्टका

* 'द्वारꣳ'— इति क, ग, घ, ङ।

†, ‡ 'सत्'— इति घ, ङ।

येन मन्त्रेण जुहोति तद्यजुर्येनैता मिष्टका मुपदधाति यदा वा ऽइष्टकोपधीयतेऽथाहुतिर्हूयते तदस्योपहितास्वेवेष्टकास्वेता आहुतयो हूयन्ते या एता अग्निहोत्राहुतयः ॥ १७ ॥

प्रजापतिर्व्वा ऽअग्निः। संवत्सरो वै प्रजापतिः संवत्सरे-संवत्सरे ह वा ऽअस्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते संवत्सरे-संवत्सरे चित्य मग्नि माप्नोति य एवं विद्वानग्निहोत्रं जुहोत्येतद्ध ह्यस्याग्निहोत्रं चित्येनाग्निना सन्तिष्ठते चित्य मग्नि माप्नोति ॥ १८ ॥

सप्त च वै शतान्यशीतीना मृचः। व्विᳫंशतिश्च स यत् सायं प्रातरग्निहोत्रं जुहोति ते द्वे ऽआहुती ता अस्य संवत्सर ऽआहुतयः सम्पद्यन्ते ॥ १९ ॥

सप्त चैव शतानि व्विᳫंशतिश्च। संवत्सरे-संवत्सरे ह वा ऽअस्याग्निहोत्रं महतोक्थेन सम्पद्यते संवत्सरे-संवत्सरे महदुक्थ माप्नोति य एवं व्विद्वानग्निहोत्रं जुहोत्येतद्ध ह्यस्याग्निहोत्रं महतोक्थेन सम्पद्यते महदुक्थ माप्नोति॥ २० ॥ १ [३.३.] ॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥

अथैतयोर्गार्हपत्याहवनीययोरग्न्योरुपस्थानं विधित्सुः प्राग्विहिते आधानाग्निहोत्रे समुच्चित्य क्रमेण स्तौति— “यत्र वा इत्यादिना। यदा खलु प्रजापतिः प्रजाः सृष्टवान्, तदा ‘अग्निम्’ इम मपि ससर्ज। ‘सः’ च ‘जातः’ अग्निः ‘सर्वम्’ ‘इदं’ जगत् ‘दग्धुम्’ ‘दध्रे’ उद्युक्तो बभूव, ‘इति’ इदं सर्वं जगद् व्याकुल मभूत्। “ता हैन मिति। ‘एनम्’ अग्निम्। “सोऽतितिक्षमाण इत्यादि। ‘अतितिक्षमाणः’ प्रजाभिश्चिकीर्षितं पेषण मसहमानः कर्माधिकारिणं ‘पुरुषम्’ अभिजगामेत्यर्थः ॥ १ ॥

“स होवाचेति। अभिगम्य किमुक्तवानिति, तदाह— “न वा अह मिति। ‘तितिक्षे’ सोढुं शक्नोमि। निगदसिद्ध मन्यत् ॥ २ ॥

एव मग्निना प्रार्थितः, ‘तथा’ ‘इति’ अङ्गीकृत्य पुरुषेण तथैवानुष्ठित मिति दर्शयति— “स यदग्नीत्यादिना ॥ ३ ॥

एव मग्न्याधानेन जनितस्याग्नेर्भरणं विधाय, तस्य भरणात् प्राक् उद्वासनं निषेधति— “तन्नेति। ‘सामि’ मध्ये यद्यग्निम् ‘उद्वासयेत्’ विसृजेत, तर्हि ‘अस्मै’ यजमानाय ‘सः’ अग्निः ‘सामि’ अर्द्धग्लानियुक्तो भवति। “स यथेत्यादि। इह लोके येय मग्निग्लानिः, सा आमुष्मिकयजमानग्लानेर्हेतुर्भवतीत्यर्थः। तस्मादामरणान्तम् अग्निर्द्धार्य इति निगमयति— “तस्मादिति ॥ ४ ॥

“स यत्रेति। “यत्रैन मग्नाविति। ‘एनं’ मृतं यजमानं पैतृमेधिकविधिना अग्नौ प्रक्षिपन्तीत्यर्थः। ‘सः’ ‘एषः’ अग्निः। “पुत्रः सन् पिता भवतीति। यजमानस्य जीवना-

वस्थाया माधानेनोत्पादितत्वादग्निस्तस्य पुत्रः, मरणादूर्द्ध्वन्तु तस्मादग्नेर्यजमानस्य जननात् पुत्र एव तस्य पिता भवति इत्यर्थः ॥ ५ ॥

ननु पुत्रस्य सतः पितृत्वं विरुद्ध मित्याशङ्क्य काञ्चिदृचं संवादयति— "तस्मादिति। 'ऋषिणा' मन्त्रेण। स च "शत मिन्नु शरद इत्यादिकः *। तस्य चाय मर्थः। हे 'देवाः !' 'अन्ति' अन्तिके, मनुष्याणां समीपे आयुष्ट्वेन परिकल्पिताः 'शतं' शतसङ्ख्याका एव 'शरदः' संवत्सराः खलु 'यत्र' यस्मिन् आयुषि शतसंवत्सरे 'तनूनां' शरीराणां 'जरसं' जरां 'चक्र' कृतवन्तः, 'यत्र' च 'पुत्रासः' सन्तोऽपि अपत्योत्पादनेन पितरो भवन्ति, 'नः' अस्माकं तत् 'आयुः' 'गन्तोः' गमनात् पूर्वं 'मध्या' मध्ये 'मा रीरिषत' हिंसनं मा कृषत इति †। "पुत्रो ह्येष सन्निति। मानुषस्य यजमानस्य 'एषः' अग्निः आधानादुत्पन्नतया 'पुत्रः सन्' देवशरीरापन्नस्य तस्यो-त्पादनेन 'पुनः पिता भवति' 'इति' 'एतत्' खलु 'ऋषिणा 'अभ्य-नूक्तम्' इत्यर्थः ॥ ६ ॥

अग्निहोत्रहोमस्यामृतत्वप्राप्तिसाधनत्वं वक्तुं सूर्य्यस्य मृत्युरूपतां प्रतिपादयति— "तद्वा एष एवेति। "रश्मिभिरिति। सूर्य्यस्य किरणैः प्राणेषु बद्धा इत्यर्थः। तत्र दृष्टान्तः—"यथेति। अश्वो-ऽभिधीयते बध्यतेऽनयेत्यश्वाभिधानी, तया; अभीशवोऽन्या रज्जवस्ताभिर्वेत्यर्थः। "तस्माद्‌ रश्मय इति। यस्मात् सूर्य-रश्मिभिः प्राणेषु प्रजा बद्धाः, तस्मादेव कारणात् ते

* ऋ० सं० १, ८९, ९।

† 'हिंसतं प्राकृक्ष मिति'— इति च, छ, ज।

'रश्मयः' प्रजानां 'प्राणान्' 'अभि'-लक्ष्य 'अवतायन्ते' अवसार्यन्ते ॥ ७ ॥

"स यस्येत्यादि। निगदसिद्धम्। "स यो हैत मिति। 'एतं' सूर्यात्मकं मृत्युम् 'अनतिमुच्य' अनतिक्रम्य 'यः' स्वर्गं प्राप्नोति, 'सः' भूलोक इव तत्रापि 'पुनरेव' मार्यते, न त्वमृतत्वप्राप्तिस्तस्येत्यर्थः ॥ ८ ॥

कथन्तर्हि तस्य मृत्योरतिमोक्ष इति, तत्राह— "स यदिति। सायम्प्रातरग्निहोत्रे द्वे द्वे आहुती हूयेते, अतस्ताभिश्चतसृभिराहुतिभिः तस्मिन् सूर्यात्मके 'मृत्यौ' विषयभूते सति यजमानः 'प्रतितिष्ठति'। 'सः एषः' सूर्यः 'एनं' यजमानं रश्मिभिः 'आदाय' एव 'उदेति', स च 'एतं' मृत्युम् अतीत्य 'मुच्यते' इत्यर्थः ॥

एव मग्निहोत्रे मृत्योरतिमुक्तिं प्रतिपाद्य, तद्वेत्तुः फल माह— "अति हेति ॥ ९ ॥

एव मग्निहोत्रद्वारा इतरयज्ञेष्वतिमुक्तिः सिद्धेति दर्शयति— "यथा वा इत्यादिना। 'यथा' खलु 'इषोः' बाणस्य 'अनीकम्' मुखम्, प्रधानम्, 'एवम्' एव 'यज्ञाना मग्निहोत्रम्'। 'येन' खलु लक्षणेन 'इषोरनीकं' शल्यरूपम् 'एति' प्राप्नोति, 'तेन' 'सर्वेषुः' प्राप्नोति, एवम् अग्निहोत्रसम्बद्धाः 'सर्वे' दर्शपूर्णमासादयः 'यज्ञक्रतवः' तद्द्वारा सूर्यात्मकं 'मृत्युम्' 'अतिक्रान्ताः' इत्यर्थः ॥ १० ॥

एवं मृत्योरतिमुक्तिरहोरात्राभ्या मपि यजमानेन ज्ञातव्येति प्रतिपादयति— "अहोरात्रे हेति। 'परिप्लवमाने' पर्य्यावर्त्तमाने 'अहोरात्रे' आमुष्मिकं स्वर्गादिसुखहेतुभूतं 'सुकृतं' कर्म्म 'क्षिणुतः' क्षपयतः। यदा तु विद्वान् उदीरितरीत्या सूर्य मतिक्रम्य वर्त्तते,

तदा 'अहोरात्रे' एवाधीने * भवतः ; तथाचाहोरात्रानाक्रान्तत्वाद् विदुषः सुकृतं न क्षीयत इत्यर्थः ॥ ११ ॥

एतदेव दृष्टान्तेनोपपादयति— "स यथेति। 'रथोपस्थे' रथस्योत्सङ्गे 'उपरिष्टात्' 'तिष्ठन्' 'पल्यङ्गमाने' पर्यावर्त्तमाने 'रथचक्रे' 'अर्वाचीनः' अवाङ्मुखः 'अवेक्षेत'। "न ह वेत्याद्युक्तार्थम् ॥ १२ ॥

होमार्थं मन्त्रागमनं विधाय प्रशंसति— "पूर्वेणेति। आहवनीयस्य पुरस्तात् परिक्रम्य गार्हपत्याहवनीययोर्मध्ये गच्छेदित्यर्थः। तथा च सूत्रितम्— "अन्तरेणापराग्नी गत्वा दक्षिणेन वाऽदक्षिण † माहवनीयं परीत्योपविशति यजमानः"–इति ‡ "न वै देवा इत्यादि, सुगमम् ॥ १३ ॥

"उत्तरतो वा इति। यदेतद् दक्षिणेन वेति कात्यायनेन विकल्पेनोक्तम्, तद् दूषयति— "अथ य इति। अग्निहोत्रहोमार्थ मुत्तरस्यां दिशि द्वारःप्रवेशोपायः। तथा च उत्तरतः प्रवेशं विहाय गार्हपत्याहवनीययोर्मध्य मनतिक्रम्यैव 'यः' यजमानः दक्षिणस्यां दिशि एवागत्य आहवनीयसमीपे 'आस्ते', सोऽग्निहोत्रं प्रवेष्टु मशक्तो बहिरेवावतिष्ठते ; यथा प्राकारपरिवृतस्याश्रमादेर्द्वारदेश मप्राप्य प्रवेष्टु मशक्तो बहिरवस्थितो भवति, तद्वदित्यर्थः ॥ १४ ॥

अथैतदग्निहोत्रं नौरूपेण स्तुवन्नुत्तरतः प्रवेशं प्रतिपादयति—

---

* 'एवातोऽर्वाचीने'— इति च।

† 'वापदक्षिण'—इति डा० वेबर-मुद्रित-का० सू०-पाठः। तत्र तदीयपाठभेदादि-टीप्पनी च द्रष्टव्या।

‡ का० श्रौ० सू० ४. १३. १२।

"नौर्हैत्यादिना। "नौमण्डे इति। 'स्वर्ग्यायाः' स्वर्गप्राप्तिहेतुभूतायास्तस्या अग्निहोत्ररूपायाः 'नावः' 'आहवनीयगार्हपत्यौ 'नौमण्डे' उभे पार्श्वे, भित्ती इत्यर्थः। "नावाज इति। नाव मजति क्षिपति प्रेरयतीति नावाजो (नाविकः * )॥ १५॥

"स यत् प्राङ्ङित्यादि। प्राङ्मुखः सन् गार्हपत्यादाहवनीयं प्रति होमायोपगच्छन्, ताम् 'एनां' नावं प्राच्यां दिशि अवस्थितं 'स्वर्गम्' 'अभ्यजति' अभिप्रेरयति। "उत्तरत आरोहण मिति। आरुह्यतेऽनेनेत्यारोहणम् प्रवेशद्वारम्। ततश्च उत्तरत आरुह्यमाणा सा अग्निहोत्ररूपा नौः 'एनं' यजमानं 'स्वर्गं लोकं' सम्यक् प्रापयति। दक्षिणतः प्रवेशने दोष माह— "अथ य इति। नावि 'प्रतीर्णायां' सत्यां यः तरीतुम् 'आगच्छेत्', 'सः' तत्रैव 'विहीयेत' त्यज्येत, ततश्च 'बहिर्द्धाः' वाह्यो भवेत्; 'एव मेव' 'तत्' दक्षिणतः प्रवेशन मित्यर्थः॥ १६॥

अथैतदग्निहोत्रं चित्याग्निसम्पत्त्या स्तौति— 'अथ या मिति। होमार्थं या समिदग्नौ आधीयते, 'सा' च 'इष्टका'; 'येन' च मन्त्रेण अग्निहोत्रं 'जुहोति', 'तत्' एव इष्टकोपधानार्थं 'यजुः'। "यदा वा इत्यादि। सायम्प्रातःकालेषु समिदाधान मेवेष्टकोपधानम्। तथा चयनसंस्कृते एवाग्नौ सायम्प्रातराहुतयः कार्त्स्न्येन हुता भवन्तीत्यर्थः॥ १७॥

अथ चित्यस्याग्नेः संवत्सररूपतां ब्रुवन्, तावत्कालसाध्य-

---

* एषोऽर्थः कृतव्युत्पत्तिलब्धः स्फुटं प्रतीयते; न तु कस्मिंश्चिदप्यादर्शपुस्तके विद्यते। 'नावोपजीवनः'— इति डा० रोथ्-गोल्डष्टूक्करौ।

स्याग्निहोत्रहोमस्य तत्सम्पत्ति मुपपादयति— "प्रजापतिर्वा इति। चित्योऽग्निः प्रजापतिना सृष्टत्वात् तदात्मकः, प्रजापतिश्च संवत्सर-कालात्मकः ; अतः संवत्सरपर्यन्त मभितिष्ठन्त * मग्निहोत्रं चित्ये-नाग्निना समानं सत् 'सन्तिष्ठते' समाप्तं भवति। तथा च एकैकसंवत्सराग्निहोत्रानुष्ठानेन चित्याग्न्यनुष्ठानं कृतं भवती-त्यर्थः ॥ १८ ॥

अथैतदग्निहोत्रं महदुक्थसम्पादनेन स्तौति— "सप्त चेति। चित्योऽग्निः, महाव्रतं साम, बृहतीसहस्रात्मकं महदुक्थं † चेतानि त्रीणि सहचराणि। तत्र चित्याग्निसम्पत्तिरुक्ता, मह-दुक्थसम्पत्तिस्त्वेव ‡ मवगन्तव्या ;— तत्र हि गायत्री तृचा-शीतिः, औष्णिही तृचाशीतिः, बार्हती तृचाशीतिरिति तिस्र-स्तृचाशीतयो विहिताः § ; तासां तिसृणां तृचाशीतीनां सम्भूय परिगणिता ऋचो विंशत्युत्तरसप्तशतसङ्ख्याका भवन्ति ‖। प्रति-दिवस मग्निहोत्रे सायमाहुतिरेका, प्रातराहुतिश्चैकेति द्वे आहुती ; संवत्सरस्य षष्ट्युत्तरत्रिशतसङ्ख्याका अहोरात्राः, तेषु च क्रियमाणास्ता अग्निहोत्राहुतयो विंशत्युत्तरसप्तशतसङ्ख्याका भवन्ति। अतश्चैकस्मिन् 'संवत्सरे' 'अस्य' यजमानस्य 'अग्निहोत्रं' तृचाशीतित्रयात्मक-महदुक्थेन 'सम्पद्यते' सम्पन्नं भवती-त्यर्थः ॥

---

* 'मनुतिष्ठन्त'— इति च।

† 'बृहदुक्थं'— इति क।

‡ 'बृहदुक्थसम्पत्तिस्त्वेव'— इति क।

§ ऐ० ५ आर० २ अ० ३-४-५-खण्डानि द्रष्टव्यानि।

‖ तासा मृचां प्रतीकग्रहणेन स्वरूपप्रतिपत्तिश्च तत्रैवारण्यके द्रष्टव्या।

एतज्ज्ञानपूर्वकानुष्ठानं प्रशंसति— "संवत्सरे संवत्सर इति ॥ १९, २० ॥ १ [२.३.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे तृतीयाध्यायस्य तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम्. )

अग्नौ ह वै देवाः* । सर्व्वान् पशून्निदधिरे ये च ग्राम्या ये चारण्या व्विजयं व्वोपप्रैष्यन्तः कामचारस्य वा कामायायं नो गोपिष्ठो गोपायदिति वा ॥ १ ॥

तानु हाग्निर्निचकमे । तैः सङ्गृह्य रात्रिं प्रविवेश पुनरेम इति देवा एदग्निं तिरोभूतं ते ह व्विदाञ्चक्रुरिह वै प्राविक्षद्रात्रिं वै प्राविक्षदिति त मेतत् प्रत्यायत्याᳬ रात्रौ साय मुपातिष्ठन्त देहि नः पशून् पुनर्नः पशून् देहीति तेभ्योऽग्निः पशून् पुनरददात् ॥ २ ॥

---

* 'देवाः'— इति घ, ङ ।

तस्मै क मग्नी ऽउपतिष्ठेत। अग्नी वै दातारौ तावेवैतद्याचते साय मुपतिष्ठेत सायꣳ हि देवा उपातिष्ठन्त दत्तो * हैवास्मा ऽएतौ पशून् य एवं व्विद्वानुपतिष्ठते ॥ ३ ॥

अथ यस्मान्नोपतिष्ठेत। उभये ह वा ऽइद मग्रे सहासुर्देवाश्च मनुष्याश्च तद्यद्ध स्म मनुष्याणां न भवति तद्ध स्म देवान् याचन्त ऽइदं वै नो नास्तीदं नोऽस्त्विति ते तस्या ऽएव याच्ञ्याायै द्वेषेण देवास्तिरोभूता नेद्धिनसानि नेद् द्वेष्योऽसानीति तस्मान्नोपतिष्ठेत ॥ ४ ॥

अथ यस्मादुपैव तिष्ठेत। यज्ञो वै देवाना माशीर्यजमानस्य तद्वा ऽएष एव यज्ञो यदाहुति-राशीरेव यजमानस्य तद्यद्देवास्याच्च तद्देवैतदुपतिष्ठ-मानः कुरुते तस्मादुपैव तिष्ठेत ॥ ५ ॥

अथ यस्मान्नोपतिष्ठेत। यो वै ब्राह्मणं वा शꣳसमानोऽनुचरति चत्त्रियं व्वायं मे दास्यत्ययं मे गृहान् करिष्यतीति यो वै तं व्वाद्येन वा कर्म्मणा व्वाभिरिराधयिषति तस्मै वै स देयं मन्यतेऽथ य

* 'दत्तौ'— इति ग।

आह किं नु त्वं ममासि यो मे न ददासीतीश्वर एनं द्वेष्टोरीश्वरो निर्व्वेदं गन्तोस्तस्मान्नोपतिष्ठेतै-तद्विद्वेवैष एतं याचते यदिन्धे* यज्जुहोति तस्मा-न्नोपतिष्ठेत ॥ ६ ॥

अथ यस्मादुपैव तिष्ठेत। उत वै यावन्दातारं लभत ऽएवोतो भर्त्ता भार्य्यं नानुबुध्यते स यदेवाह भार्य्यो वै तेऽस्मि बिभृहि मेत्यथैनं व्वेदाथैनं भार्य्यं मन्यते तस्मादुपैव तिष्ठेतेद मित्तु समस्तं यस्मादुप-तिष्ठेत॥ ७ ॥

प्रजापतिर्व्वा ऽएष भूत्वा †। यावत ईष्टे याव-देन मनु तस्य रेतः सिञ्चति यदग्निहोत्रं जुहोतीद मेवैतत् सर्व्व मुपतिष्ठमानोऽनुविकरोतीदꣳ सर्व्व मनुप्रजनयति ॥ ८ ॥

स वा ऽउपवत्या प्रतिपद्यते। इयं वा ऽउप इयेनेय मुप यद्धीदं किञ्च जायतेऽस्यां तदुपजायते-ऽथ यन् न्यृक्कत्यस्या ‡ मेव तदुपोप्यते तदह्ना रात्र्या

---

* 'यदिन्धि'— इति च डा०-वेबरेण दृष्टः।

† 'भूत्वा'— इति घ, ङ।

‡ 'यन्दृच्छत्यस्या'— इति च डा०-वेबरेण दृष्टः।

भूयो-भूय एवाचय्यं भवति तदचय्येणैवैतद् भूम्ना प्रतिपद्यते ॥ ९ ॥

स आह। उपप्रयन्तो ऽअध्वर मित्यध्वरो वै यज्ञ उपप्रयन्तो यज्ञ मित्येवैतदाह मन्त्रं वोचे-माग्नय ऽइति मन्त्र मु ह्यस्मा ऽएतद्वच्यन् भवत्यारे ऽअस्मे च शृखवत ऽइति यद्यप्यस्मदारकादिव न एतच्छृखवेवैव * मेवैतन्मन्यस्वेत्येवैतदाह ॥ १० ॥

अग्निर्मूर्द्धा दिवः। ककुत् पतिः पृथिव्या अयम्। अपाꣳ रेताꣳसि जिन्वतीत्यन्वे व धावति तद्यथा याचन् कल्याणं ब्वदेदामुष्यायणो वै त्व मग्लं वै त्व मेतस्मा ऽअसीत्येव मेषा † ॥ ११ ॥

अथैन्द्राग्नौ। उभा वा मिन्द्राग्नी ऽआहु-वध्या ऽउभा राधसः सह मादयध्यै। उभा दाता-राविषाꣳ रयीणा मुभा व्वाजस्य सातये हुवे वा मित्येष वा ऽइन्द्रो य एष तपति‡ स यदस्त मेति तदाहवनीयं प्रविशति तदुभावेवैतत् सह सन्ता

---

* 'एतच्छृखवेव'— इति ग, घ, ङ।

† 'मेषा'— इति घ, ङ।

‡ 'एष तपति'— इति च दृष्टो डा०-वेबरेण।

ऽउपतिष्ठत ऽउभौ मे सह सन्तौ दत्ता मिति तस्मा-दैन्द्राग्नी * ॥ १२ ॥

अयं ते योनिर्ऋत्विय: । यतो जातो ऽअरो-चथा: । तं जानन्नग्न ऽआरोहाथा नो व्वर्द्धया रयि-मिति पुष्टं वै रयिर्भूयो भूय एव न इदं पुष्टं कुर्व्वि-त्येवैतदाह ॥ १३ ॥

अय मिह प्रथम: । धायि धातृभिर्होता यजिष्ठो ऽअध्वरेष्वीड्य: । य मप्नवानो भृगवो व्विरु-रुचुर्व्वनेषु चित्रं व्विभ्वं व्विशे-व्विश ऽइत्यन्वे व धावति तद्यथा याचन् कल्याणं ब्रूयाद्दामुष्यायणो वै त्व मस्यलं वै त्व मेतस्मा ऽअसीत्येव मेषा यथो ऽएवैष तथो ऽएवैन मेतदाह यदाह व्विभ्वं व्विशे-व्विश ऽइति व्विभूर्ह्येष व्विशे-व्विशे ॥ १४ ॥

अस्य प्रत्नाम् † । अनु द्युतꣳ शुक्रं दुदुह्रे ऽअह्रय: । पय: सहस्रसा मृषि मिति परमा वा ऽएषा सनीनां यत् सहस्रसनिस्तदेतस्यैवावरुद्धै तस्मादाह पय: सहस्रसा मृषि मिति ॥ १५ ॥

---

* 'दैन्द्राग्नी'— इति घ, ङ ।

† 'प्रत्नाम्'— इति घ, ङ ।

तदेतत् समाहार्य्यं षड्चम्*। तस्योपवती प्रथमा प्रत्नवत्युत्तमावोचाम तद्यस्मादुपवत्यथाद् एव प्रत्नं यावन्तो ह्येव सनाग्रे देवास्तावन्त एव देवास्तस्माद्दः प्रत्नं तदिमे ऽएवान्तरेण सर्व्वे कामास्ते ऽअस्मा ऽइमे सञ्ज्ञानाने सर्व्वान् कामांस्तुन्नमतः ॥ १६ ॥

स वै त्रिः प्रथमां जपति। त्रिरुत्तमां त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदुदयनास्तस्मात् त्रिः प्रथमां जपति त्रिरुत्तमाम् † ॥ १७ ॥

यद्व वा ऽअस्याग्निहोत्रं जुह्वत्। व्वाद्येन वा कर्मणा वा मिथ्या करोत्यात्मनस्तद्वदयत्यायुषो वा व्वर्चसो वा प्रजायै वा॥ १८ ॥

तदु खलु तनूपा अग्नेऽसि। तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि व्वर्चोदा अग्नेऽसि व्वर्चो मे देहि। अग्ने यन्मे तन्वा ऊनं तन्म ऽआपृणेति ॥ १९ ॥

यद्व वा ऽअस्याग्निहोत्रं जुह्वत्। व्वाद्येन वा कर्मणा वा मिथ्या करोत्यात्मनस्तद्वदयत्यायुषो

---

* 'चं'— इति घ, ङ।

† 'माम्'— इति घ, ङ।

वा व्वर्चसो वा प्रजायै वा तन्मे पुनराप्यायग्वेत्येवै-
तदाह तथो हास्यैतत् पुनराप्यायते ॥ २० ॥

इन्धानास्त्वा। शतꣳ हिमा द्युमन्तꣳ समिधी-
महीति शतं व्वर्षाणि जीव्यास्मेत्येवैतदाह तावत् त्वा*
महान्तꣳ समिधीमहीति यदाह द्युमन्तꣳ समिधी-
महीति व्वयस्वन्तो व्वयस्कृतꣳ सहस्वन्तः सहस्कृत
मिति व्वयस्वन्तो व्वयं भूयास्म व्वयस्कृत् त्व'† भूया
इत्येवैतदाह सहस्वन्तो व्वयं भूयास्म सहस्कृत् त्व' ‡
भूया इत्येवैतदाहाग्ने सपत्नदम्भन मदब्धासो ऽअदाभ्य
मिति त्वया व्वयꣳ सपत्नान् पापीयसः क्रियास्मेत्येवै-
तदाह ॥ २१ ॥

चित्रावसो स्वस्ति ते पार मशीयेति। त्रिरे-
तज्जपति रात्रिर्व्वै चित्रावसुः सा हीयꣳ सङ्गृह्येव
चित्राणि व्वसति तस्मान्नारकाच्चित्रं ददृशे ॥ २२ ॥

एतेन ह स्म वा ऽऋषयः। रात्रेः स्वस्ति
पारꣳ समश्नुवत ऽएतेनो ह स्मैनान् रात्रेर्नाष्ट्रा
रक्षाꣳसि न व्विन्दन्त्येतेनो § ऽएवैष एतद् रात्रेः

---

*, †, ‡ 'तावत्त्वा', 'व्वयस्कृत्त्वं', 'सहस्कृत्त्वं'— इति क-पाठाः।

§ 'नाविन्दन्नेतेनो'— इति सा०-सम्मतः पाठ इति डा०-वेबरः।

स्वस्ति पारᳫं समश्नुत ऽएतेनो ऽएनᳫं रात्रेर्नाष्ट्रा रक्षाᳫंसि न विन्दन्त्येतावन्नु * तिष्ठन् जपति ॥ २३ ॥

अथासीनः। सं त्वमग्ने सूर्य्यस्य वर्चसा गथा इति तद्यदस्तं यन्नादित्य आहवनीयं प्रविशति तेनैतदाह समृषीणाᳫं स्तुतेनेति तद्यदुपतिष्ठते तेनैतदाह सं प्रियेण धाम्नेत्याहुतयो वा ऽअस्य प्रियं धामाहुतिभिरेव तदाह स मह † मायुषा संव्वर्चसा सं प्रजया सᳫं रायस्पोषेण ग्मिषीयेति यथा त्व मेतैः स मगथा एव मह मायुषा व्वर्चसा प्रजया रायस्पोषेणेति यद् भूम्नेति तदेव मह मेतैः सङ्गच्छा ऽइत्येवैतदाह ॥ २४ ॥

अथ गा मभ्यैति। अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीयेति यानि वो व्वीर्य्याणि यानि वो महाᳫंसि तानि वो भक्षीयेत्येवैतदाहोर्ज स्थोर्जं वो भक्षीयेति रस स्थ रसं वो भक्षीयेत्येवैतदाह रायस्पोष स्थ रायस्पोषं वो भक्षीयेति भूमा स्थ भूमानं वो भक्षीयेत्येवैतदाह ॥ २५ ॥

---

* 'नाविन्दन्नेतावन्नु'— इति सा०-सम्मतः पाठ इति डा० वेबरः।

† 'स मह'— इति घ, ङ।

रेवती रमध्व मिति रेवन्तो हि पशवस्तस्मादाह रेवती रमध्व मित्यस्मिन्योनावस्मिन् गोष्ठेऽस्मिंल्लोकेऽस्मिन् क्षये। इहैव स्त मापगातेत्यात्मन एवैतदाह मदेव मापगातेति ॥ २६ ॥

अथ गा मभिमृशति। सꣳहितासि विश्वरूपीति विश्वरूपा इव हि पशवस्तस्मादाह विश्वरूपीत्यूर्जा माविश गौपत्येनेत्यूर्जेति यदाह रसेनेति तदाह गौपत्येनेति यदाह भूम्नेति तदाह ॥ २७ ॥

अथ गार्हपत्य मभ्यैति। स गार्हपत्य मुपतिष्ठत ऽउप त्वाग्ने दिवे-दिवे दोषावस्तर्द्धिया व्वयम्। नमो भरन्त एमसीति नम एवास्मा ऽएतत् करोति यथैनं न * हिꣳस्यात् † ॥ २८ ॥

राजन्त मध्वराणाम्। गोपामृतस्य दीदिविम्। व्वर्द्धमानꣳ स्वे दम ऽइति स्वं वै त ऽइदं यन्मम तन्नो भूयो-भूय एव कुर्व्वित्येवैतदाह ॥ २९ ॥

स नः पितेव सूनवे ‡। अग्ने सूपायनो भव। सचस्वा नः स्वस्तय ऽइति यथा पिता पुत्राय सूप-

* 'यथैनं न'— इति च इष्टो डा०-वेबरेण।

† 'हिꣳस्यात्'— इति घ, ङ।

‡ 'सूनवे'— इति घ, ङ।

चरो नैवैनं केन चन हिनस्त्येवं नः सूपचर एधि मैव त्वा केन चन हिꣳसिष्मेत्येवैतदाह ॥ ३० ॥

अथ द्विपदाः । अग्ने त्वं नो ऽअन्तम उत त्राता शिवो भवा व्वरूथ्यः । व्वसुरग्निर्व्वसुश्रवा अच्छा नक्षि द्युमत्तमꣳ रयिं दाः ॥ तं त्वा शोचिष्ठ दीदिवः सुम्नाय * नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी † हवमुरुष्या णो ऽअघायतः समस्मा-दिति ॥ ३१ ॥

यद्वा ऽआहवनीयमुपतिष्ठते । पशूंस्तद्याचते तस्मात्तमुच्चावचैश्छन्दोभिरुपतिष्ठत ऽउच्चावचा इव हि पशवोऽथ यद् गार्हपत्यं पुरुषांस्तद्याचते तद् गायत्रं प्रथमं त्रिचं गायत्रं वा ऽअग्नेश्छन्दः स्वेनैवैनमेतच्छन्दसोपपरैति ॥ ३२ ॥

अथ द्विपदाः । पुरुषच्छन्दसं वै द्विपदा द्विपाद्वा ऽअयं पुरुषः पुरुषानेवैतद्याचते पुरुषान् हि याचते तस्माद् द्विपदाः पशुमान् ह वै पुरुषवान् भवति य एवं व्विद्वानुपतिष्ठते ॥ ३३ ॥

---

* 'सुम्नाय'— इति संहिता-पाठ इति डा० वेबरः ।

† 'श्रुधि'— इति च पाठो दृष्टो डा०-वेबरेण ।

अथ गा मभ्यैति* । इड एह्यदित एहीतीडा हि गौरदितिर्हि गौस्ता मभिमृशति काम्या एतेति मनुष्याणाᳬ ह्येतासु कामाः प्रविष्टास्तस्मादाह काम्या एतेति मयि वः कामधरणं भूयादित्यहं वः प्रियो भूयास मित्येवैतदाह ॥ ३४ ॥

अथान्तरेणाहवनीयं च गार्हपत्यं च । प्राङ् तिष्ठन्नग्नि मीक्षमाणो जपति सोमानᳬ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः † ॥ यो रेवान्यो ऽअमीवहा व्वसुवित्पुष्टिवर्द्धनः । स नः सिषक्तु यस्तुरः ॥ मा नः शᳬसो ऽअररुषो धूर्त्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पत ऽइति ॥ ३५ ॥

यद्वा ऽआहवनीय मुपतिष्ठते । दिवं तदुपतिष्ठतेऽथ यद् गार्हपत्यं पृथिवीं तदथैतदन्तरिक्ष मेषा हि दिग् बृहस्पतेरेताᳬ ह्येतद्दिश मुपतिष्ठते तस्माद् बार्हस्पत्यं जपति ॥ ३६ ॥

महि त्रीणा मवोऽस्तु । द्युक्षं मित्रस्यार्य्यम्णः । दुराधर्षं व्वरुणस्य ॥ न हि तेषा ममाचन नाध्वसु व्वारणेषु । ईशे रिपुरघशᳬसः ॥ ते हि पुत्रासो

* 'मभ्यैति'— घ, ङ। † 'जः'— इति घ, ङ।

अदितेः प्र जीवसे मर्त्याय। ज्योतिर्य्यच्छन्त्यजस्रमिति तन्नास्ति नाध्वसु व्वारणेष्वित्येते ह वाऽअध्वानो व्वारणा यऽइमेऽन्तरेण द्यावापृथिवीऽएतान्ह्येतदुपतिष्ठते तस्मादाह नाध्वसु व्वारणेष्विति * ॥ ३७ ॥

अथैन्द्री। इन्द्रो वै यज्ञस्य देवता सेन्द्रमेवैतदग्न्युपस्थानं कुरुते कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषऽइति यजमानो वै दाश्वान्न यजमानाय द्रुह्यसीत्येवैतदाहोपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यतऽइति भूयो-भूय एव न इदं पुष्टं कुर्व्वित्येवैतदाह ॥ ३८ ॥

अथ सावित्री। सविता वै देवानां प्रसविता तथो हास्मा ऽएते सवितृप्रसूता एव सर्व्वे कामाः समृध्यन्ते तत् सवितुर्व्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयादिति † ॥ ३९ ॥

अथाग्नेयी ‡। तदग्नय ऽएवैतदात्मानमन्ततः परिददाति गुप्त्यै परि ते दूडभो रथो-

---

* 'ष्विति'— इति घ, ङ।

† 'दिति'— इति ग, घ, ङ।

‡ 'यी'— इति घ, ङ।

ऽस्मा३॥ * ऽअश्नोतु विश्वतः। येन रक्षसि दाशुष इति यजमाना वै दाश्वाꣳसो यो ह वा ऽअस्यानाधृष्यतमो रथस्तेनैष यजमानानभिरक्षति स यस्तेऽनाधृष्यतमो रथो येन यजमानानभिरक्षसि तेन नः सर्वतोऽभिगोपायेत्येवैतदाह त्रिरेतज्जपति ॥ ४० ॥

अथ पुत्रस्य नाम गृह्णाति। इदं मेऽयं वीर्यं पुत्रोऽनुसन्तनवदिति यदि पुत्रो न स्यादप्यात्मन एव नाम गृह्णीयात्॥ ४१ ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [२. ४.] ॥

अथ सायङ्कालीन मग्न्युपस्थानं विधित्सुस्तदर्थ माख्यायिका माह— "अग्नौ हेति। एतच्च पुनराधानब्राह्मणे † व्याख्यातम्। तत्र हि 'ऋतून् प्रविवेश', अत्र तु 'रात्रिं प्रविवेश' इत्येतावान् विशेषः। "त मेतदित्यादि। 'प्रत्यायत्याम्' आगामिन्यां 'रात्रौ' 'सायं' काले 'तम्' अग्निं देवम् उपतिष्ठन्ते ‡। उपस्थानप्रकार माह— "देहि न इति ॥ १, २ ॥

यस्मादेव मग्न्युपस्थानात् पशवो देवैर्लब्धाः, तस्माद् यजमानोऽपि तदुपस्थानं कुर्यादिति विधत्ते— "तस्मा इति। तस्मै

* 'ऽस्मा३'— इति क, 'ऽस्मा३॥'— इति घ, 'ऽस्माँ३॥'— इति ङ।

† अत्रैव पुरस्तात् ( २अ० ३ब्रा० २, ३ क० ) द्रष्टव्यम्।

‡ का० श्रौ० सू० ३. १२. १।

यद्वुप्राप्तिलक्षणाय फलाय। 'कम्'-इति वाक्यपूरणे *। अन्यत् निगदसिद्धम्। "दक्षो हैवेति। य एवं साय मग्नी उपतिष्ठेतैव तस्मै यजमानाय तावग्नी ग्रभिमतं फलं प्रयच्छत इत्यर्थः। एव मुपस्थानविधिः ॥ ३ ॥

( अथोपस्थानदोषपरो † ) पूर्वपक्षो सिद्धान्तत्वेन प्रतिपादयति— "अथ यस्मादिति। यस्मात् अग्न्युपस्थानं न कर्त्तव्यम्, तत्कारण मुच्यते। देवाः खलु पुरा मनुष्यैः सार्द्ध मिह लोके निवसन्तः तद्याचनेन पीड़िताः सन्तस्तिरोभूताः, अतोऽग्निरपि उपस्थानेन याच्यमानस्तिरो भवति, याचितफलस्याप्रदानेन मैव यजमानं 'हिनसानि', अत एव द्वेष्योऽपि न भवानीत्यनेनाभिप्रायेणेत्यर्थः। यस्मादेवं तस्मात् नोपस्थेयोऽग्निरिति पूर्वपक्षः ‡ ॥ ४ ॥

"अथ यस्मादित्यादि। यस्मात् कारणादग्न्युपस्थानं कर्त्तव्यम्, तदुच्यते— 'देवानां' सम्बन्धी यो 'यज्ञः', स हि 'यजमानस्य' 'आशीः' फलप्रार्थनरूपः; 'तत्' तथा सति येषा मग्निहोत्राहुतिः 'एष एव यज्ञः' सैव यजमानस्याशीः। "तद्यदेवेत्यादि, यजमानस्य यत्, तदाशीरूपं फलम्; तदेवाग्निमग्निहोत्रेऽग्नि मुपतिष्ठमानः कुरुत इत्यर्थः ॥ ५ ॥

पुनरप्यनुपस्थानपक्षं प्रकारान्तरेण प्रतिपादयति— "अथ यस्मादित्यादिना। "यो वै ब्राह्मण मित्यादि। ब्राह्मणक्षत्रिययोरन्यतर माशंसमानः फलाभिलाषी पुरुषः 'अनुचरति' अनु-

---

* 'वाक्यप्रतिपूरणे'— इति च।

† एषोंऽशो बहुषु पुस्तकेषु न दृश्यते।

‡ का० श्रौ० सू० ४. १२. २।

वर्त्तते, तस्याभिप्राय माह— "अयं म इति। यथैव मनुचरति पुरुषः, तं ब्राह्मणादिं 'वाद्येन' वदनीयेन स्तुतिशब्देन, 'कर्मणा वा' परिचरणलक्षणेन 'अभिरिराधयिषति' अभिराधयितु सेवितु मिच्छति, 'तस्मै' पुरुषायैव 'सः' ब्राह्मणादिः प्रभुः धनं 'देयं' दातव्यं 'मन्यते'। यस्त्वेवं निष्ठुरं भाषते, सः 'एनं' ब्राह्मणादिं प्रभुं 'द्वेष्टोः' * विद्वेषणं कर्त्तुं मीश्वरः समर्थः स्यात्, तथा 'निर्वेदं' मनस्तापं 'मन्तोः' † मन्तु मीश्वरः स्यात्। निष्ठुर-भाषणप्रकार माह— "किं ब्रवीति। हे देवदत्त! यस्त्वं मह्यं न ददासि, स त्वं मम किं चासि? न किञ्चिदपि भवसि, त्वया किं प्रयोजन मित्यर्थः। एवं समन्त्रकहोमेनाग्नेराराधन मेव कार्यम्, तदुपस्थानन्तु फलप्रार्थनरूपत्वेन निष्ठुरभाषणवदपराध-हेतुरिति न कर्त्तव्य मित्याह— "एतदिति। होमसमिन्धनाभ्या मग्निं प्राप्य पुनरुपस्थानेनैव याचते, याचनं चायुक्त मित्यनुपस्थान-पक्षो ज्यायानित्यर्थः ‡ ॥ ६ ॥

"अथ यस्मादित्यादि। लोके हि 'यावत्' पुरुषो 'दातारं' प्राप्नोति, स च 'भर्त्ता' पोषकः प्रभुः 'भार्यं' पोष्यं याचकं स्वतो 'नानुबुध्यते', 'सः' चैव याचकः एवम् 'आह' विज्ञापयति,— हे स्वामिन्! अहं 'ते' त्वया 'भार्यः' पोष्यः 'अस्मि', 'मा' मां

---

*, † "ईश्वरे तोसुन्कसुनौ"— इति पा० सू० ३. ३. १३।

‡ उपस्थानानुपस्थानपक्षौ तैत्तिरीयैरपि विचार्योपस्थानं कर्त्तव्य मित्येव सिद्धान्तितम्। तथाहि—"उपस्थेयोऽग्नीऽ३र्नोपस्थेयाऽ३इत्याहुर्मनुष्या-येन्न्वै योऽहरहराहृत्याथैनं याचति स इन्न्वै त मुपार्च्छत्यथ को देवानह-रहर्याचिष्यतीति, तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वै आहिताग्नेराशीर्यदग्नि मुपतिष्ठते, तस्मादुपस्थेयः"— इति तै० सं० १. ५. ८. ६, ७।

'बिभृहि' पोषय 'इति'। एवं विज्ञापनानन्तर मेव 'एनं' याचकं पुरुषं 'वेद' जानाति। अनन्तरञ्च 'एनं' 'भार्यं' पोष्यं 'मन्यते'। तस्मात् ऋग्विधानरूपं स्वाभिभूतस्याग्नेरुपस्थानं न दोषाय किञ्चित्। 'इद मित्' इद मेव 'समस्तं सम्पूर्ण मित्यर्थः * ॥ ७ ॥

यस्माच्चान्यस्मात् कारणात् अग्न्युपस्थान मवश्यं कर्त्तव्यं तदुच्यते— "प्रजापतिर्वा इति। अग्निहोत्रहोमो हि रेतस्सेकस्थानीयः, गर्भाशये निषिक्तस्य रेतसः हस्तपादादिमत्त्वेन यद् विशिष्टरूपकरणम्, तदग्न्युपस्थानसाध्यम्, अतोऽग्नि मुपतिष्ठमानो यजमानः सर्वं मिदं निषिक्तं विशिष्टरूपं कुर्वन् 'अनुप्रजनयति' अनुक्रमेणोत्पादयति। तस्मादवश्य मग्न्युपस्थानं कर्त्तव्य मित्यर्थः ॥ ८ ॥

तत्र, प्रथमाया ऋचो लिङ्गविशेष मुपन्यस्य प्रशंसति— "स वा इति। 'उपवत्या' उपशब्दयुक्तया ऋचा †। "इयं वा इत्यादि। 'इयं वा उप' योऽय मुपेत्युपसर्गः, इयं भूमिरेव सः, 'हयेन' हिप्रकारेण 'इयं' भूमिः उपशब्दवाच्या। तत्प्रकारद्वयं दर्शयति— "यद्धीय मिति। 'यत् किञ्च' जायमानं, 'तत्' सर्वम् 'अस्याम्' 'उपजायते'। 'तत्' 'न्यृच्छति' नितरा मार्त्तिं प्राप्नोति, 'तत्' अपि 'अस्याम्' एव 'उपोप्यते' निलीयते। अतो जायमान एव अहोरात्राभ्याम् 'अत्तव्यं भवति' तत्सम्बन्धोपशब्द-

---

* एतदेवोपस्थानं वात्सप्रोपस्थान मुच्यते। 'उपप्रयन्तोऽध्वर मित्यत आरभ्य परि ते दूडभ इत्यन्तं वात्सप्रोपस्थानम्'— इत्युक्तेः (या० दे०)। तत्र च वत्सप्रीनामर्षिणा दृष्टं सूक्तं वात्सप्रम्, तदीयञ्च एवास्योपस्थानस्य मन्त्रा इति बीजम्।

† "उप प्रयन्तो अध्वरम्" इत्येषा ऋक् उपवती। वा० सं ३. ११।

युक्तः प्रतिपद्यमानः स्वयरश्मिनेव भूम्ना 'प्रतिपद्यते' उपस्थानं प्रारभ्यत * इत्यर्थः ॥ ९ ॥

क्रमेणोपस्थानमन्त्रान् विधित्सुस्तावदुपवती मृचं विधाय प्रशंसति— "स आहेति। "अध्वरो वै यज्ञ इत्यादि, सुगमम्। द्वितीयपाद मनूद्य तत्र मन्त्रशब्दो वक्ष्यमाणमन्त्रपर इति व्याचष्टे— "मन्त्र सु ह्यस्मा इति। "आरे अस्मे चेति। अस्मच्छब्दात् पञ्चम्यर्थे शे-आदेश इति व्याचष्टे— "अस्मदारकादिति ॥ १० ॥

अथ द्वितीया मृच मग्न्युपस्थाने वक्तव्यत्वेन सिद्धवदनूद्य तात्पर्य माह— "अग्निर्मूर्द्धेति †। "अन्वेव धावतीति। अनुधावति अनुसृत्य ‡ प्रशंसतीति यावत्। एतत् सदृष्टान्त मुपपादयति— "तद्यथेति ॥ ११ ॥

"अथैन्द्राग्नीति। अग्निर्मूर्द्धेत्यनन्तरम् "उभा वाम्"-इतीन्द्राग्नीदेवताका ऋक् § अग्न्युपस्थाने प्रयोक्तव्येत्यर्थः। अस्या मृचि 'इन्द्राग्नी'-शब्दस्य विवक्षित मर्थ माह— "एष वा इन्द्र इति ॥ १२ ॥

चतुर्थी मृचं पठित्वा स्तौति— "अयन्त इति ‖। "पुष्टं वा इति। यदत्र रयिशब्दवाच्यम्, तत् पुष्टिहेतुभूतं धनम्। "भूय एवेत्यादि, मन्त्रगत-'वर्द्धय'-पदाभिप्रायकथनम् ॥ १३ ॥

अथ तस्मिन्नुपस्थाने पञ्चमी मृचं विधाय तात्पर्यं कथयति— "अय मिहेति ¶। "विभू ह्येष इति। 'विशे-विशे' सर्वस्यै

---

* 'प्रारभत'— इति च।

† वा० सं० ३. १२।

‡ 'अनुसरति'— इति च।

§ वा० सं० ३. १३।

‖ वा० सं० ३. १४।

¶ वा० सं० ३. १५।

प्रजायै 'एषः' अग्निः 'विभूः' तदभीष्टप्रदाने समर्थ इत्यर्थः ॥ १४ ॥

षष्ठीं मृचं विधाय प्रशंसति—"अस्येति*। "परमा वा एषा इति। 'सनीनां' दानानां मध्ये 'यत्' 'सहस्रसनिः' सहस्र-सङ्ख्याकस्य धनस्य दानम्, 'एषा' 'परमा' सर्वोत्कृष्टा सनिः॥

एताश्च षडृचो मन्त्रकाण्डे एव व्याख्याता इति नात्र पुन-र्व्याख्यायन्ते † ॥ १५ ॥

अथैता ऋचः समूहीकृत्य प्रथमोत्तमयोर्लिङ्गविशेषोपजीवनेन स्तौति— "तदेतदिति। 'समाहार्यम्' एकैका मृचं प्रदेशान्तरे पठितां समाहृत्य समुदायीकृत मेतत् 'षडृचं' सूक्तम्। 'तस्य' 'प्रथमा' 'उपवती', 'उत्तमा' तु 'प्रत्नवती'। तत्रोपवती भूम्या-त्मिकेत्येतत् प्रागेव 'अवोचाम', अतः परम् तत् प्रतिपाद्य मित्यर्थः। "अथाद एवेति। 'अदः' द्युलोक एव 'प्रत्नम्'। तस्य प्रत्नशब्दाभिधेयता ‡ मुपपादयति— "यावन्त इति। 'सना'-इति निपातः पुरेत्यस्यार्थे। 'यावन्त एव' हि 'अग्रे' 'सना' सनातनाः 'देवाः', 'तावन्त एव देवाः' इदानी मपि ; 'तस्मात्' तदाश्रयभूता द्यौः पुरातनवाचिना प्रत्नशब्देनोच्यत इत्यर्थः। "तदिमे एवेति। 'इमे' द्यावापृथिव्यौ 'अन्तरेण' "अग्निर्मूर्द्धा"-इत्यादि-मन्त्रप्रतिपाद्याः 'सर्वे कामाः' अवस्थिताः। "ते अस्मा इत्यादि, स्पष्टम् ॥ १६ ॥

---

* वा० सं ३. १६।

† यजुर्वेदस्य वाजसनेय-काण्व-मन्त्रकाण्डन्तु सायणाचार्येण व्याख्यात मपि शतपथव्याख्यानादुत्तरम्; तस्मादिह मन्त्रकाण्डं तैत्तिरीयस्य बोध्यम् तै० सं० १. ५. ५ द्रष्टव्यम्।

‡ 'प्रत्नशब्दनामधेयता'— इति च।

प्रथमोत्तमयोस्त्रिर्जपं विधाय प्रशंसति— "स वै त्रिः प्रथमां जपतीति। अस्य षडृचस्य सूक्तस्य "उप॥यन्त"-इतीयं प्रथमा, "अस्य प्रत्नाम्"-इतीयमुत्तमा ; उपस्थानकाले तयोस्त्रिर्जपः कार्यः *। यतः 'यज्ञाः' 'त्रिवृत्प्रायणाः' त्रिवृत्प्रारम्भाः ; निर्वापप्रोक्षणसामिधेन्यनुवचनादिषु त्रिरावृत्तिदर्शनादित्यर्थः ॥१७॥

"तनूपा अग्नेऽसि"-इत्यादिमन्त्रैराहवनीयोपस्थाने विधित्सुस्तन्निवर्त्त्यं दोष मुपन्यसति— "यद्व वा इति। अग्निहोत्रहोमं कुर्वन् 'वाचेन वा' व्यवहारसाध्येन मन्त्रोच्चारणेन, शरीरसाध्येन 'कर्मणा वा', 'यत्' 'मिथ्याकरोति' अन्यथानुतिष्ठति, 'तत्' तेन 'आत्मन' यजमानस्य 'आयुषः' जीवनस्य, 'वर्चसः' तेजसः, 'प्रजायै' प्रजायाश्च 'अवद्यति' खण्डयति। 'वा'-शब्दश्चार्थे ॥ १८ ॥

अथैतद्दोषपरिहाराय तदुचितमन्त्रकरणकोपस्थान माह— "तदु खल्विति †। तत् खलु दोषे सतीत्यर्थः ॥ १९ ॥

"यद्व वा इत्याद्युक्तार्थम् ‡। "तन्म इत्यादि। यदेतन्मिथ्याकरणेनायुरित्यादि खण्डितम्, हे अग्ने! 'तत्' तन्न 'पुनः' 'आप्यायय' वर्द्धयेति "तन्म आ पृण"-इतिमन्त्रभागस्य व्याख्यानम् ॥ २० ॥

"इन्धानास्त्वेत्यादि §। "शतꣳ हिमाः"-इत्यस्य तात्पर्य माह— "शतं वर्षाणीति। शतसंवत्सरजीवनवन्तो भूयास्मेत्यर्थः। तैत्तिरीयकेऽप्येतद्विशदीकृतम्— "शतꣳ हिमा

---

* का० श्रौ० सू० ४. १२. ३ क, ख।

† वा० सं० ३. १७।

‡ एतत्पूर्वपूर्वकण्डीव्याख्या द्रष्टव्या। § वा० सं० ३. १८. १।

इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाहेति *। "द्युमन्त मिति मन्त्रभागस्यार्थ माह— "तावत्त्वेति। 'तावत्' शत-संवत्सरजीवनावधि, हे अग्ने! त्वां 'द्युमन्तं' दीप्तिमन्तं 'महान्तं' 'समिधीमहि, सन्दीपयेमेत्यर्थः। "वयस्वन्तो वयस्कृत मित्यादि। वय इत्यन्ननाम †। प्रभूतान्नयुक्ता भूत्वा वयसोऽन्नस्य कर्त्तारं त्वा मुपतिष्ठेमहि। एवं 'सहस्वन्तः'—इत्यत्रापि योजना। उभयत्र विशेषणद्वय मपि विधेयाभिप्राय मिति व्याचष्टे— "वयस्वन्तो वय मिति। वयः अन्नं करोतीति वयस्कृत्, सहः शत्रूना मभिभवनं तद्वन्तः सहस्वन्तः, तादृशं सहः शत्रुविषयक मभिभवनं करोतीति सहस्कृत्। "अग्ने सपत्नदम्भन मित्यादि। सपत्नो दभ्यते हिंस्यतेऽनेनेति सपत्नदम्भनोऽग्निः। तथा च 'त्वया' 'वयं' 'सपत्नान्' 'पापीयसः' अतिशयेन निकृष्टान् 'क्रियास्म' करवामेति विशेष्य तात्पर्यकथनम् ॥ २१ ॥

"चित्रावसो"-इत्यादिमन्त्रस्य त्रिर्जपं ‡ विधत्ते— "चित्रेति §। "रात्रिर्वा इत्यादि। 'हि' यस्मात् 'सा इयं रात्रिः' ग्रहनक्षत्रादीनि 'चित्राणि' 'सङ्गृह्य इव वसति', 'तस्मात्' 'चित्रावसुः' रात्रेर्नामधेयम्। अत एव इदानी मपि रात्रौ नभसि 'तारका'-लक्षणं 'चित्रं' 'ददृशे' दृश्यते ॥ २२ ॥

अस्य मन्त्रजपस्य प्रयोजनं वक्तुं पुरावृत्त मुदाहरति— "एते-

---

* तै० सं० १. ५. ८. १४। एतच्च ब्राह्मणम् "अग्ने गृहपते"—इति तै० सं० १. ५. ६. ११, मन्त्रपदव्याख्यानपरम्; "इन्धानास्त्वा शतं हिमाः"—इत्येतन्मन्त्रव्याख्यानब्राह्मणे त्वाम्नातम्— "शतं हिमा इत्याह शतायुः पुरुषः" —इत्यादि। तै० सं० १. ५. ७. १४.।

† निघ० २. ७. ७।

‡ का० श्रौ० सू० ४. १२. ३ घ।　　§ मन्त्रस्तु वा० सं० ३. १८. २।

नेति। 'एनेन' "चित्रावसो"–इति मन्त्रेण 'रात्रेः' 'पारम्' अवसानं 'स्वस्ति' क्षेमेण 'समश्नुवते' सम्प्राप्नुवन्। तथा 'एनान्' ऋषीन् एतन्मन्त्रजपेनैव रात्रेः प्रीणनात् तत्सम्बन्धिनो राक्षसादयो ('न विन्दन्ति') नाविन्दन्, नालभन्त इदानीन्तनस्यापि॥

इमं मन्त्र मग्न्युपस्थाने जपतो यजमानस्य तत्फल माह— "एतेनो एवेति। "एतावन्निति। "उपप्रयन्त"–इत्यारभ्य "चित्रावसो"–इत्येतावत्पर्यन्त माहवनीयस्य समीपे 'तिष्ठन्' जपेत्*॥ २३॥

"अथासीन इति†। वक्ष्यमाणान् "सं त्व मग्ने"–इत्यादिकान्‡ मन्त्रान् तत्रैवासीनो जपेदित्यर्थः। हे 'अग्ने!' त्वं 'सूर्यस्य' 'वर्चसा' तेजसा 'समगथाः' सङ्गतवानसि 'इति' प्रतीयमान मिमं मन्त्रार्थ मुपपादयति— "तद् यदस्तं यन्निति। 'अस्तं यन्' अस्तं गच्छन्नित्यर्थः। सूर्यस्य रात्रावाहवनीयप्रवेशः "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा"–इति होममन्त्रार्थकथनप्रस्तावे प्रतिपादितः§। "समृषीणा मित्यादि। 'ऋषीणां' सम्बन्धि यत् 'स्तुतं' स्तोत्रं तेन सङ्गतवानसीति मन्त्रवाक्यार्थः।

एतर्हि प्रकृताग्न्युपस्थानाभिप्राय माह— "तद्यदिति। "आहुतयो वा अस्येति। 'अस्य' अग्नेः आज्यदधिक्षीरादिद्रव्यसाध्याः 'आहुतयो वा' आहुतय एव 'प्रियं धाम' तज्ज्योतिर्मयं

---

* का० श्रौ० सू० ४, १२, ३ क, ख, ग।

† का० श्रौ० सू० ४, १२, ४।　　‡ वा० सं० ३ १६।

§ एतस्यैवाध्यायस्य द्वितीयब्राह्मणं तद्भाष्यञ्च द्रष्टव्यम्।

शरीरम्। तथा चाहुतिभिरेव सङ्गतवानसीत्यर्थः। "समह आयुषेत्यादि। हे अग्ने! यथा त्वं भैतैरायुरादिभिः 'समगथाः' सङ्गतवानसि। गमेर्लुङि "गातिस्था"-इति * च्लेर्लुक्, "अनुदात्तोपदेश"-इत्यनुनासिकलोपः †। एवम् 'अहम्' अपि एतैः सङ्गच्छेयेत्यर्थः। "यद् भूम्नेति, "रायस्पोषेण"-इत्यस्य व्याख्यानम्। 'भूम्ना' धनधान्यादिबहुत्वेनेत्युक्ते यावानर्थो भवति, रायस्पोषेणेत्यनेन तावानर्थः प्रतिपाद्यत इत्यर्थः ॥ २४ ॥

"अथ गा अभ्यैतीति ‡। अग्निहोत्रहोमार्थस्य पयसो दोग्ध्री या गौः, ताम् "अन्ध स्थान्धो वो भक्षीयम्"-इति मन्त्रेण § अभिगच्छेदित्यर्थः। 'अन्धः'-शब्दोऽन्नवाची ‖, तेन च तज्जनितं वीर्यं लक्ष्यत इति व्याचष्टे— "यानि वो वीर्याणीति। हे गावः! यूयम् 'अन्धः स्थ' क्षीरान्नरूपा भवथ, अतस्तदुपभोगजनितानि 'वः' युष्मत्सम्बन्धीनि 'वीर्याणि', 'महांसि' तेजांसि, 'तानि' 'भक्षीय' सम्भजेयेत्यर्थः। "रस स्थेति। "ऊर्ज बलप्राणनयोः"-इत्यस्मात् ¶ धातोर्निष्पन्न 'ऊर्ज्'-शब्दो बलकरं समाचष्ट इत्यभिप्रायः। "भूमा स्थेति। 'रायस्पोष'-शब्दस्य भूमार्थत्वं प्रागाम्नातम्— "रायस्पोषेणेति यद् भूम्नेतीति ** ॥ २५ ॥

"रेवती रमध्वमित्येति ††। "रेवन्तो हीत्यादि। 'रेवन्तः' रयिमन्तः, पुत्रपौत्राद्यभिवृद्धा धनयुक्ताः पशवो रयिमन्तः। "रयेर्मतौ बहुलम्"-इति ‡‡ सम्प्रसारणम्। "आत्मन एवेति।

---

* पा० सू० २, ४, ७७। † पा० सू० ६, ४, ३७।

‡ का० श्रौ० सू० ४, १२, ५। § वा० सं० ३, २०।

‖ निघ० २, ७, १; निरु० ५, १, १। ¶ चु० प० १५ धा०।

** एतत्पूर्वकण्डिकायाम् (१५८ पृ०)।

†† वा० सं० ३, २१। ‡‡ पा० ६, १, ३७ सू० ५ वा०।

अस्मिन्निति मन्त्रगतेदंशब्देन सन्निहितवाचिना स्वसम्बन्धगृह-गोष्ठानि विशिषेण 'आत्मनः एव' स्वस्यैव एतत् फल माशास्यत इत्यर्थः। हे गावः! यूयम् 'इहैव' मदीये गोष्ठादौ 'स्त' भवत, 'मापगात' मा अपगच्छतेति मन्त्रभागस्यार्थः। तत्रापगमना-वधेरनुपादनात् त मुपन्यस्य योजयति— "मद्देवेति। मत्सका-शादेव मापगतेत्यर्थः॥ २६॥

समन्त्रकं गोस्पर्शनं विधाय प्रशंसति— "अथ गा मिति *। 'विश्वानि' सर्वाणि, शुक्लकृष्णादीनि रूपाणि यस्याः, सा 'विश्व-रूपीति' व्यक्ति मभिप्रेत्य व्याचष्टे— "विश्वरूपा इव हीति॥ २७॥

एव माहवनीयस्य समन्त्रक मुपस्थानं सप्रपञ्चं † विधाय, गार्हपत्यस्य ‡ तद् विधत्ते— "अथ गार्हपत्य मभ्यैतीति §। "नम एवास्मा इति। "नमो भरन्तः"–इति नमस्कारस्य सम्पाद्यत्वावगमात् अतिक्रमजनितापराधनिवृत्तयेऽस्मै गार्हपत्याय नमस्कार मेव करोतीत्यर्थः। इतरथा हि प्रथमाग्निं गार्ह-पत्य मतिक्रम्य आहवनीयस्योपस्थानकरणात् स गार्हपत्यः क्रुद्धः सन् 'यथेनं न हिंस्यात्, तथा नमस्कारः क्रियत इत्यर्थः॥॥ २८॥

एवं प्रथमाया ऋचस्तात्पर्य मभिधाय द्वितीया मृचं पठित्वा तात्पर्यविशेष माह— "राजन्त मध्वराणा मिति ¶। "स्वं वा इत्यादि। दम इति गृहनाम **। यन्मदीयं गृहं हे अग्ने! 'ते' तव स्वभूतम्, अतस्तथाविधं गृहं 'नः' अस्माकं पुनः-पुनः

---

* का० औ० सू० ४, १२, ६। मन्त्रस्तु वा० सं० ३, २२, १।

† 'सप्रपञ्चं' इति च। ‡ 'गार्हपत्ये'— इति च।

§ का० औ० सू० ४, १२, ७। ‖ वा० सं० ३, २२।

¶ वा० सं० ३, २३। ** निघ० ३, ४, १२।

कुर्विति "स्वे दमे"–इतिमन्त्रपदयोर्विवचितोऽर्थः इति भावः ॥२९॥

"स नः पितेवेति *। गार्हपत्योपस्थाने तृतीया। तत्र "पितेव सूनवे"–इति दृष्टान्तसिद्ध मर्थं निष्कृष्यानुवदति— "यथा पितेति। 'सूपचरः' सुष्ठु उपचरितुं नमस्कारादिभिरुपचारैः पुत्रस्य सेवितुं योग्य एव भवति। स च पुत्रः 'एनं' पितरं केनचिदपि साधनेन 'नैव' 'हिनस्ति' बाधते। एवं गार्हपत्याग्ने! त्वं 'नः' अस्माकं 'सूपचरः एधि' सुष्ठूपचरितुं योग्यो भव; वय मपि त्वां केनचिदपि साधनेन 'मैव हिꣳसिस्म', इति योजना॥

एते चोप त्वाग्ने इत्यादिका मन्त्राः, वक्ष्यमाणाश्चाग्ने त्व मित्यादिकाः, सर्व एव संहितायां व्याख्यातत्वात् ग्रन्थविस्तरभयाच्च पुनर्न व्याख्यायन्ते † ॥ ३० ॥

अथ चतसृभिर्द्विपदाभिर्गार्हत्यस्योपस्थान माह—"अथ द्विपदा इत्यादि। 'अथ' "उप त्वाग्ने"–इत्यादि-गायत्रीणां ‡ मनन्तरं गार्हपत्योपस्थाने 'द्विपदाः' प्रयोक्तव्याः। तत्र, "अग्ने त्वम्"–इति § प्रथमा, "वसुरग्निः"–इति ‖ द्वितीया, "तं त्वा शोचिष्ठ"–इति ¶ तृतीया, "स नो बोधि"–इति ** चतुर्थी ॥ ३१ ॥

द्विपदाभिर्गार्हपत्योपस्थानस्य पुरुषप्राप्तिहेतुतां वक्तु माहवनीयोपस्थानस्य पशुप्राप्तिहेतुता माह— "यदा आहवनीय मिति। "उच्चावचैरिति। न्यूनाधिकपरिमाणयुक्तैः "उप

* वा० सं० ३. २४।

† इहास्मदुक्तञ्च मुक्तं पुरस्तात्; १६८ पृ० '†' द्रष्टव्यम्।

‡ वा० सं० ३, २२, २३, २४।

§, ‖, ¶, ** वा० सं० ३, २५, १, २; २६. १, २।

प्रयन्त"-इत्यादिमन्त्रैर्गायत्र्यादिच्छन्दोभिरित्यर्थः। "अथ यद्‌ गार्हपत्य मित्यादि। "उप त्वाग्ने"-इत्यादिभिः 'यद्' 'गार्हपत्यम्' उपतिष्ठते, तेनोपस्थानेन 'पुरुषान्' पुत्रपौत्रादीनेव 'याचते' प्रार्थत इत्यर्थः। तच्च पुरुषप्रार्थनं द्विपदाभिरेवेति वक्तु मुप त्वाग्न इति गायत्रतृचस्य प्रयोजन माह— 'गायत्रं वा अग्नेश्छन्द इति। प्रजापतिमुखात् सहोत्पन्नत्वादित्यर्थः*। 'उपपरैति' उपप्राप्नोति ॥ ३२ ॥

"अथ द्विपदा इति। "पुरुषच्छन्दसं वा इति। पुरुवत् पादद्वयोपेतत्वात् 'द्विपदाः पुरुषच्छन्दसम्' पुरुषसमानाकृतिकं छन्दः। छन्दश्शब्दादकारः समासान्तः†। "पशुमान् ह वै पुरुषवानिति आहवनीय-गार्हपत्योपस्थानयोः समुच्चित्य प्रशंसा; गार्हपत्योपस्थानस्यापि पुरुषवत्पादद्वयोपेतत्वात् ॥ ३३ ॥

गोसमीपगमनं तदुपस्पर्शनञ्च समन्त्रकं विधत्ते— "अथ गा मभ्येतीति‡। "इड एहीति §। इडादितिशब्दौ गोनामत्वेन प्रसिद्धावित्यर्थः। "कामाः प्रविष्टा इति। 'मनुष्याणां' क्षीरदध्यादिविषयाः 'कामाः', 'हि' यस्मात् 'एतासु' गोषु 'प्रविष्टाः', 'तस्मात्' एताः कामनाविषयत्वात् 'काम्याः' इत्यर्थः ॥ ३४ ॥

"अथान्तरेणेत्यादि, निगदसिद्धम् ॥ ३५ ॥

सोमान मित्यस्य तृचस्य च प्रयोजन माह— "यद्वा इति। आहवनीयगार्हपत्योपस्थानाभ्यां द्यावापृथिव्योरुपस्थानं कृतं

---

* तै० सं० ७, १, १, ४ द्रष्टव्यम्।

† "अनसन्तान्नपुंसकाच्छन्दसि"— इति पा० सू० ५, ४, १०३।

‡ का० श्रौ० सू० ४, १२, ८, ६। § वा० सं० ३, २७, १, २।

भवति। अनेन सोमान मिति हचस्य * जपेन द्यावापृथिव्योः मध्यवर्त्तिनोऽन्तरिक्षस्योपस्थानं कृतं भवतीत्यर्थः †। तस्य देवताविशेषसम्बन्धं प्रशंसति— "एषा हीति। द्यावापृथिव्योर्मध्ये वर्त्तमाना येय मूर्द्धा 'दिक्', 'एषा' 'बृहस्पतेः' स्वभूता। अतएव तैत्तिरीयके समाम्नातम्— "ऊर्द्धा दिग् बृहस्पतिर्देवता"-इति ‡। नन्वेतत् हचं ब्राह्मणस्पत्यम्, कथं बार्हस्पत्यम्? इति। नैष दोषः; तयोर्भेदाभावात्। अत एव दाशतय्यां 'गणानां त्वा"-इत्यादिषु ब्राह्मणस्पत्यसूक्तेषु § तत्र बृहस्पतिः स्तूयते॥ २६॥

"मह्निनीणा मित्यादि ‖। एतदपि सूक्त मन्त्रराजी तिष्ठन् जपेदित्यनुषङ्गेण वाक्यसमाप्तिः। अस्य हचस्य प्रयोजन माह— "तत्रास्तीति। 'तत्र' तस्मिंस्तृचे 'न अध्वसु वारणेषु'-'इति' 'अस्ति', तस्याभिप्रायो वर्ण्यत इति शेषः। "एते ह वा इत्यादि। द्यावापृथिव्योर्मध्ये 'य इमे' 'अध्वानः' विततः, 'एते' खलु पुरुषस्य फलप्राप्तिवारणाय भवन्ति, अतो द्यावापृथिवीसंस्तुतयोर्मार्गोपत्याहवनीययोर्मध्ये स्थित्वा इमं हचं जपन् 'एताम्' एव मार्गान् 'उपतिष्ठते' इत्यर्थः। एव मध्वना मुपस्थितत्वात् तं वारयितुं न कोऽपि ईश्वर इति "नाध्वसु वारणेषु"-इति मन्त्रपादस्यार्थः ¶॥ २७॥

"अथैन्द्रीत्यादि। 'ऐन्द्री' इन्द्रदैवताका "कदाचनस्तरी-

---

* वा० सं० ३, २८, २६, ३०।

† "सोमान मित्यनुदकं व्रतोपायनवत्"-इति का० श्रौ० सू० ४, १२, १०।

‡ तै० ब्रा० ३, ११, ५, ६।

§ ऋ० सं० २, २३, १। ‖ वा० सं० ३, ३१, ३२, ३३।

¶ वा० सं० ३, ३२, २ पा०।

रसि”–इत्यादिका * अग्न्युपस्थाने प्रयोक्तव्या। तथा च तदग्न्युपस्थान मिन्द्रसहितं सत् यज्ञात्मना निष्पद्यत इत्यर्थः। तत्र पूर्वार्द्ध मनूद्य तात्पर्य्य माह— “कदाचनेति। “यजमानो वै दाश्वानिति। “दाशृ दाने”–इत्यस्मात् † “दाश्वान् साह्वान्”–इति ‡ निपातनात् हविषां दाता यजमानो दाश्वानित्युच्यते। तथा च ‘दाशुषे’ यजमानाय कदाचिदपि ‘स्तरीः’ हिंसकः ‘न असि’ न द्रुह्यसीति तात्पर्य्यार्थकथनम्। उत्तरार्द्धं व्याचष्टे— “उपोपेदिति। हे ‘मघवन्!’ अस्मभ्यं दीयमानं त्वदीयं धनं ‘भूयो भूय एव’ ‘उपपृच्यते’ समीपं प्राप्नोति; तदिद माम्नातम्— “भूयो भूय एवेति ॥ ३८ ॥

अथ सवितृदेवताका मृचं विधाय प्रशंसति— “अथ सावित्रीति। का पुनरसौ सावित्री? इति, ता माह— “तत्सवितुरिति § ॥ ३९ ॥

अग्निदेवताका मृचं विधत्ते— “अथाग्नेयीति। ‘परिददाति’ परिदानं रक्षणार्थं दानम्। तादर्थ्य मेव विव्रियते— “गुप्त्या इति। “यजमाना वा इत्यादि। धर्षितु मशक्यः, परैरप्रधृष्यो यो रथो विद्यते, ‘तेन’ रथेन ‘एषः’ अग्निः ‘यजमानान् अभिरक्षति’ ॥

एव मग्नेः स्वभाव मभिधाय मन्त्रे योजयति—“स य इति। हे अग्ने ‘सः’ प्रसिद्धः ‘यः’ ‘रथः’ ‘ते’ त्वदीयः, शत्रुभिरप्रधृष्यो विद्यते, ‘येन’ च ‘यजमानान्’ ‘अभितः’ सर्वतः ‘रक्षसि’, ‘तेन’ ‘रथेन’ ‘नः’ अस्मान् ‘अभिगोपाय’ इत्यर्थः ‖।

---

* वा० सं० ३, ३४। † धा० उ० ८८२ धा०।

‡ पा० सू० ६, १, १२। § वा० सं० ३, ३५। ‖ वा० सं० ३, ३६।

अस्या ऋचस्त्रिर्जपं विधत्ते— "त्रिरेतदिति ॥ ४० ॥

दर्शपूर्णमासयोरिवात्रापि पुत्रनामग्रहणं विधत्ते— "अथ पुत्रस्येति * । 'अयं' मदीयः 'पुत्रः' 'इदं' यज्ञानुष्ठानलक्षणं 'वीर्यम्' 'अनुसन्तनवत्' अनुक्रमेण सन्तनुयात्, सन्ततमनवच्छिन्नं कुर्यात्, 'इति' अनेनाभिप्रायेण नामग्रहणम् । पुत्राभावे तु यजमानः स्वस्यैव 'नाम' 'गृह्णीयात्' † ॥ ४१ ॥ २ [३.४.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे तृतीयाध्यायस्य चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यौ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

---

* "पौर्णमासवत् पुत्रनामग्रहणम्"—इति का० श्रौ० सू० ४, १२, ११ । "पौर्णमासवत् ततोऽसीत्यादि ( ३. ८. २५ सू० ) । पुत्रस्य नाम गृह्णाति, पुत्रयोः पुत्राणां वा । प्रियतमस्येति लौगाक्षिः; ज्येष्ठपुत्रस्य 'नामाभिव्याहृत्य यावन्तो वा भवन्ति'—इति शाङ्खायनः ( २. १२. ११. )"— इति तत्र वृत्तिर्याज्ञिकदेवस्य ।

† प्रथमे काण्डे सप्तमप्रपाठकीय मेकविंशं ब्राह्मणं ( १भा० ६२२पृ० ), हरिस्वामिकृतं तद्भाष्यं ( ६३३पृ० ४पं ), तत्रत्यास्तदीयटीप्पन्यश्च मत्कृताः, सर्वं एवैते ग्रन्था इह समालोच्याः ॥

धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

---

* एतदीयपाठभेदाः पूर्वपूर्वत्र द्रष्टव्याः ।

( अथ चतुर्थाध्याये प्रथमं ब्राह्मणम्. )

अथ हुतेऽग्निहोत्र ऽउपतिष्ठते । भूर्भुवः स्वरिति तत्सत्येनैवैतद्वाचᳫं समर्द्धयति यदाह भूर्भुवः स्वरिति तया समृद्धयाशिष माशास्ते सुप्रजाः प्रजाभि स्या मिति तत् प्रजा माशास्ते सुवीरो वीरैरिति तद् वीरानाशास्ते सुपोषः पोषैरिति तत् पुष्टि माशास्ते ॥ १ ॥

यद्वा ऽअह्नो दीर्घ मग्न्युपस्थानम् । आशीरेव साशीरियं तदेतावतैवैतत् सर्व्वं माप्नोति तस्मादेते-नैवोपतिष्ठेतैतेन ह्येव वय मुपचराम इति ह स्माहा-सुरिः ॥ २ ॥

अथ प्रवत्स्यन् * । गार्हपत्य मेवाग्र ऽउपतिष्ठते-ऽथाहवनीयम् † ॥ ३ ॥

स गार्हपत्य मुपतिष्ठते । नर्य्य प्रजा मे पाहीति प्रजाया ह्येष ईष्टे तत् प्रजा मेवास्मा ऽएतत् परि-ददाति गुप्त्यै ॥ ४ ॥

अथाहवनीय मुपतिष्ठते । शᳫंस्य पशून् मे

---

* 'त्स्यन्'— इति घ ।

† 'यश्'— इति घ, ङ ।

पाहीति पशूनाꣳ ह्येष ईष्टे तत् पशूनेवास्मा ऽएतत् परिददाति गुप्त्यै ॥ ५ ॥

अथ प्र वा व्रजति प्र वा धावयति । स यत्र व्वेलां मन्यते तत् स्यन्त्वा * व्वाचं व्विसृजते ऽथ प्रोष्य परेत्य यत्र व्वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव त मुपेयात् ॥ ६ ॥

स आहवनीय मेवाग्र ऽउपतिष्ठते । अथ गार्हपत्यं गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तद् गृहेष्वेवैतत् प्रतिष्ठायां प्रतितिष्ठति ॥ ७ ॥

स आहवनीय मुपतिष्ठते । आगन्म व्विश्ववेदस मस्मभ्यं व्वसुवित्तमम् । अग्ने सम्राडभि द्युम्न मभि सह आयच्छस्वेत्यथोपविश्य तृणान्यपलुम्पति ॥ ८ ॥

अथ गार्हपत्य मुपतिष्ठते । अय मग्निर्गृहपतिर्गार्हपत्यः प्रजाया व्वसुवित्तमः । अग्ने गृहपतेऽभि द्युम्न मभि सह आयच्छस्वेत्यथोपविश्य तृणान्यपलुम्पत्येतन्नु जपेनैतेन न्वेव भूयिष्ठा इवोपतिष्ठन्ते ॥ ९ ॥

---

* 'स्यत्त्वा'— इति क, ग ; डा०-वेबरदृष्टश्च ।

स वै खलु तूष्णी मेवोपतिष्ठेत। इदं वै यस्मिन् वसति ब्राह्मणो वा राजा वा श्रेयान् मनुष्यो न्वेव त मेव नार्हति व्वक्तु मिदं मे त्वं गोपाय प्राहं व्वत्स्यामीत्यथास्मिन्नेते श्रेयाꣳसो व्वसन्ति देवा अग्नयः क उ तानर्हति व्वक्तु मिदं मे यूयं गोपायत प्राहं व्वत्स्यामीति ॥ १० ॥

मनो ह वै देवा मनुष्यस्याजानन्ति। स व्वेद गार्हपत्यः परिदां मेद मुपागादिति तूष्णी मेवाहवनीय मुपतिष्ठते स व्वेदाहवनीयः परिदां मेद मुपागादिति * ॥ ११ ॥

अथ प्र वा व्रजति प्र वा धावयति। स यत्र व्वेलां मन्यते तत् स्थन्वा† व्वाचं व्विसृजतेऽथ प्रोष्य परेत्य यत्र व्वेलां मन्यते तद्वाचं यच्छति स यद्यपि राजान्तरेण स्यान्नैव त मुपेयात् ॥ १२ ॥

स आहवनीय मेवाग्र ऽउपतिष्ठते। अथ गार्हपत्यं तूष्णी मेवाहवनीय मुपतिष्ठते तूष्णी मुपविश्य

---

* 'दिति'— इति ग, 'दिति'— इति घ, ङ।

† 'स्यत्वा'— इति क, ग ; डा०-वेबर इष्टश्च।

तृणान्यपलुम्पति तूष्णी मेव गार्हपत्य मुपतिष्ठते तूष्णी मुपविश्य तृणान्यपलुम्पति ॥ १३ ॥

अथातो गृहाणा मेवोपचारः । एतद्ध वै गृहपतेः प्रोषुष आगताद् गृहाः समुत्त्रस्ता इव भवन्ति कि मय मिह वदिष्यति किं वा करिष्यतीति स यो ह तत्र किञ्चिद्वदति वा करोति वा तस्माद् गृहाः प्रत्रसन्ति तस्येश्वरः कुलं विक्षोब्धोरथ यो ह तत्र न वदति न किञ्चन करोति तं गृहा उपसᳫ॒श्रयन्ते न वा ऽअय मिहावादीन्न किञ्चनाकरदिति स यदिहापि मुक्रुद्ध इव स्याच्छ्व एव ततस्तत् कुर्याद् यद् वदिष्यन्वा करिष्यन्वा स्यादेष उ गृहाणा मुपचारः ॥ १४ ॥ ३ ॥

॥ इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् [ ४. १. ] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे, त मह वन्दे विद्यातीर्थ महेश्वरम् ॥ ४ ॥

एव मग्निहोत्रहोमोपस्थानं विधाय लघूपस्थानमन्त्रानपि दर्शयति— "अथ हुत इति । अग्निहोत्रहोमानन्तरं "भूर्भुवः

स्वः, सुप्रजाः"–'इति' * अनेनैव मन्त्रेण आहवनीयम् 'उपतिष्ठते' †। पूर्वोक्तादुपस्थानमन्त्रजातादस्य ‡ मन्त्रस्यातिशय्य माह— "तत् सत्येनेति। सत्यरूपा ह्येता व्याहृतयः; त्रयीसारत्वात्। तथा चाम्नातम्— "भूरित्यृग्वेदाद्, भुव इति यजुर्वेदात्, स्वरिति सामवेदात्"–इति §। एवं व्याहृतिरूपेण ‖ 'सत्येनेव' इमां मन्त्ररूपां 'वाचं' 'समर्द्धयति'। 'तया' च 'समृद्धया' वाचा प्रागुक्तां सर्वा मपि 'आशिषम्' 'आशास्ते' प्रार्थयत इत्यर्थः। तदाशासनप्रकारं दर्शयति— "सुप्रजा इति। 'प्रजाभिः' पुत्रपौत्रादिरूपाभिः 'सुप्रजाः' शोभनप्रजोपेतः 'स्याम्'। एकः प्रजाशब्दोऽनुवादः। एवं "सुवीरो वीरैरिति। वीर्यवन्तः पुत्राः वीराः; तेषां प्रजाशब्देन परिगृहीतत्वेऽपि पुनः प्राधान्यख्यापनार्थं पृथगाशासन मिति द्रष्टव्यम् ॥ १ ॥

प्रागुक्तोपस्थानेनास्य समानकार्यकरणत्वात् विकल्प माह— "यदिति। 'अदः' पूर्वोक्तं 'दीर्घं' बहुकर्त्तव्योपेतं बहुमन्त्रसाध्यं यदग्न्युपस्थानम्, तत् ¶ 'आशीः' फलप्रार्थनम् 'एव'। तथा "भूर्भुवः स्वः"–इतिमन्त्रसाध्य मुपस्थान मपि ** तादृगाशीर्युक्तम्। 'तत्' ततः 'एतावतैव' उपस्थानेन 'एतत्' प्रागुक्तं 'सर्वं' फलम् 'आप्नोति'। अस्मिन्नुपस्थाने ऋषिवचनं संवादयति— "एतेन न्वेवेति। 'एतेनैव' लघूपस्थानेनैव 'वयम्' अग्निम् 'उपचरामः' 'इति'। यस्मादेवम् 'आसुरिः' महर्षिः 'आह स्म' उक्तवान्,

---

* वा० सं० ३. ३७. १। † का० श्रौ० सू० ४. १२. १२।

‡ 'मन्त्रगणादस्य'— इति च। § ऐ० ब्रा० ५. ५. ७।

‖ व्याहृत्याहुतिरूपेण'— इति ङ। ¶ 'सा'— इति च।

** 'मिति'— इति च।

'तस्मात्' इद मेवोपस्थानं कर्त्तव्य मित्यर्थः। अत एव सूत्रंते—
"भूर्भुवः स्वरिति वोभौ"—इति * ॥ २ ॥

अथ प्रवासं करिष्यता यजमानेन कर्त्तव्य मुपस्थानं दर्शयति— "अथ प्रवत्स्यन्निति †। 'प्रवत्स्यन्' प्रवासं करिष्यन् विहिते गार्हपत्याहवनीयोपस्थाने ॥ ३ ॥

तत्र गार्हपत्योपस्थान मनूद्य मन्त्रं विधत्ते— "स गार्हपत्य मिति ‡। मन्त्रस्य तात्पर्यं माह— "प्रजाया इति। एष हि गार्हपत्यः 'प्रजाया ईष्टे'; कृत्स्नाग्नियोनिभूतत्वात्। अतः 'अस्मै' गार्हपत्याय प्रजाया रक्षणार्थं परिदानं क्रियत इत्यर्थः ॥ ४ ॥

प्रवत्स्यतो यदाहवनीयोपस्थानं विहितम्, तदनूद्य मन्त्रं विधत्ते— "अथाहवनीय मिति §। "पशूनां हेत्यादि, निगदसिद्धम् ॥ ५ ॥

"अथ प्र वा व्रजतीति ‖। एवं गार्हपत्याहवनीययोः समन्त्रक मुपस्थानं कृत्वा, वाहनरहितश्चेत् स्वयं 'प्रव्रजति' गच्छति; वाहनसहितश्चेत् अश्वरथादीन् 'धावयति' प्रगमयति। 'स' च गच्छन् 'यत्र' यस्मिन् देशे 'वेलां' स्वनिवासग्राममर्यादां 'मन्यते', तत्स्थानप्राप्तिपर्यन्तं वाचंयमो गत्वा, तदनन्तरं 'वाचं विसृजेत्'; न तु ततः प्रागित्यर्थः ¶।

---

* का० श्रौ० सू० ४. १२. १२। 'समिदाधानानन्तरं पूर्वं माहवनीयं ततो गार्हपत्यम्'— इति तत्र या० दे०।

† का० श्रौ० सू० ४. १२. १३।

‡ वा० सं० ३. ३७. २।

§ वा० सं० ३. ३७. ३।

‖ का० श्रौ० सू० ४. १२. १४।

¶ का० श्रौ० सू० ४. १२. १५।

पुनरागमनसमयेऽपि तत्स्थान भृति अग्निसमीपगमन-पर्यन्तं वाग्यमनं विधत्ते— "अथ प्रोष्येति *। 'प्रोष्य' प्रवासं कृत्वा पुनरागत्य यत्र ग्राममर्यादां मन्यते, तत्र वाचंयमो भवेत्। एवं वाग्यतस्य यजमानस्य अग्न्यागारस्य च मध्ये यदि राजा आगच्छेत्, 'तम्' अग्निं नैव 'उपेयात्' उपगच्छेत्। वाग्यमनानन्तरं राजादि-पूज्यजनसन्निधानेऽपि तदनादरेण अग्निगतमनस्क एव तत्समीपं गच्छेदित्यर्थः †।

तदेतद् विस्पष्ट मापस्तम्बेन सूत्रितम्— "आरादग्निभ्यो वाचं यच्छति, यद्येनं राजा पिताचार्यौ वान्तरेणाग्नीन् स्याच्छदिर्दर्शनेनैन माद्रियेत"– इति ‡॥ ६ ॥

प्रवत्स्यन्नुपस्थानवैपरीत्य मागतोपस्थानस्य विधत्ते— "स इति। आहवनीयस्यैव प्रथम मुपस्थानं पश्चात् गार्हपत्यस्ये-त्यर्थः §। गार्हपत्योपस्थानस्य पश्चाद्भावं प्रतिपादयति— "गृहा वा इति। सर्वाग्नीनां योनित्वात् गृहपतिना संयुक्तत्वाच्च गार्ह-पत्यस्य गृहशब्दाभिधेयत्वम् ॥ ७ ॥

तत्र प्रथमकर्तव्य माहवनीयोपस्थानं समन्त्रकं दर्शयति— "स आहवनीय इति। मन्त्रस्य ‖ चाय मर्थः।— हे 'सम्राट्' सम्यग्राजमान! 'अग्ने!' 'विश्ववेदसं' सर्वधनोपेतम्, 'अस्मभ्यं' अस्मदर्थं 'वसुवित्तमं' वसुनः धनस्य लम्भयितृतमं त्वाम् 'अगन्म'

---

* का० श्रौ० सू० ४. १२. १७।

† का० श्रौ० सू० ४. १२. १८ क।

‡ आप० श्रौ० सू० ६. २५. ५, ६।

§ का० श्रौ० सू० ४. १२. १८ ख।

‖ वा० सं ३. ३८. १।

वास्यायां तृतीयसवन मेवास्य तद्वैश्वदेवं वै तृतीयसवन मिन्द्राग्नी वै विश्वे देवाः * ॥ १३ ॥

अथ प्रातः। आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञाद्दयानीति न्वेवाग्नेयः पुरोडाशोऽथ या मेवामूं मैत्रावरुणीं व्वशा मनूबन्ध्या मालभते सैवास्य मैत्रावरुणी पयस्या स पौर्णमासेन चामावास्येन चेष्ट्वा यावत्सौम्येनाध्वरेणेष्ट्वा जयति तावज्जयति तदु खलु महायज्ञो भवति ॥ १४ ॥

अथ यत् पूर्व्वेद्युः। अग्नीषोमीयेण यजते पौर्णमास्या मेतेन वा ऽइन्द्रो वृत्र महन्नेतेनो ऽएव व्यजयत यास्येयं व्विजितिस्तां तथो ऽएवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो ऽएव व्विजयतेऽथ यत् सन्नयत्यामावास्यं वै सान्नाय्यं दूरे तद्यदमावास्येति चिप्र ऽएवैतद्वृत्रं जघ्नुषि त मेतेन रसेनाप्रीणन् चिप्रे ह वै पाप्मान मपहते य एवं व्विद्वान् पौर्णमास्याꣳ सन्नयत्येष वै सोमो राजा देवाना मन्नं यच्चन्द्रमास्त मेतत् पूर्व्वेद्युरभिषुण्वन्ति प्रातर्भक्षयिष्यन्तस्त मेतद्भक्षयन्ति यदपक्षीयते † ॥१५॥

---

* 'देवाः'— इति घ, ङ। † 'ते'— इति घ, ङ।

अथ यत् पूर्व्वेद्युः। अग्नीषोमीयेण यजते पौर्णमास्या मभिषुणोत्येवैन मेतत्तस्मिन्नभिषुत ऽएतꣳ रसं दधात्येवैतेन रसेन तीव्रीकरोति स्वदयति ह वै देवेभ्यो हव्यꣳ स्वदते हास्य देवेभ्यो हव्यं य एवं विद्वान् पौर्णमास्याꣳ सन्नयति ॥ १६ ॥

अथ यत् पूर्व्वेद्युः। ऐन्द्राग्नेन यजतेऽमावास्यायां दर्शपूर्णमासयोर्व्वै देवते स्त इन्द्राग्नी ऽएव ते ऽएवैतदञ्जसा प्रत्यक्षं यजत्यञ्जसा ह वा ऽअस्य दर्शपूर्णमासाभ्या मिष्टं भवति य एव मेतद् वेद * ॥ १७ ॥

अथ प्रातः। आग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेद्यज्ञाद्यानीति न्वेवाग्नेयः पुरोडाशोऽथैतावेवार्द्धमासौ मित्रावरुणौ य एवापूर्य्यते स व्वरुणो योऽपक्षीयते स मित्रस्तावेताꣳ रात्रि मुभौ समागच्छतस्तदुभावेवैतत् सह † सन्तौ प्रीणाति सर्व्वꣳ ह वा ऽअस्य प्रीतं भवति सर्व्वं माप्तं य एव मेतद्वेद ॥ १८ ॥

---

* 'वेद'— इति ग, 'वेद'— इति घ, ङ।

† 'वेवैतच्छह'— इति पाठश्च दृष्टो डा॰वेबरेण।

तद्वा ऽएताꣳ रात्रिम् * । मित्रो व्वरुणे रेतः सिञ्चति तदेतेन रेतसा प्रजायते यदापूर्य्यते तद्यदेषात्र मैत्रावरुणी पयस्यावक्लृप्ततमा भवति ॥ १९ ॥

सान्नाय्यभाजना वा ऽअमावास्या । तद्दस्तत् पौर्णमास्यां क्रियते स यद्यत्रापि सन्नयेज्जामि कुर्य्यात् समदं कुर्य्यात् तदेन मद्भ्य ओषधिभ्यः सम्भृत्याहुतिभ्योऽधिजनयति स एष आहुतिभ्यो जातः पश्चाद्ददृशे ॥ २० ॥

मिथुनाद्विवा ऽएन मेतत् प्रजनयति । योषा पयस्या रेतो व्वाजिनं तद्वा ऽअनुष्ठ्या † यन्मिथुनाज्जायते तदेन मेतस्मान्मिथुनात् प्रजननात् प्रजनयति तस्मादेषात्र पयस्या भवति ॥ २१ ॥

अथ व्वाजिभ्यो व्वाजिनं जुहोति । ऋतवो वै व्वाजिनो रेतो व्वाजिनं तदनुष्ठ्यैवैतद्रेतः ‡ सिच्यते तदृतवो रेतः सिक्त मिमाः प्रजाः प्रजनयन्ति तस्माद्वाजिभ्यो व्वाजिनं जुहोति ॥ २२ ॥

---

* 'रात्रिं'— इति घ-ङयोरपि ।

† 'ऽअनुष्ठ्या'— इति ग ।

‡ 'तदनुष्ठ्यैवैतद्रेतः'— इति क, ग ।

स वै पश्चादिव यज्ञस्य जुहोति। पश्चाद् वैपरीत्य व्वृषा योषा मधिद्रवति तस्माꣳ रेतः सिञ्चति स वै प्रागेवाग्रे जुहोत्यग्ने व्वीहीत्यनु-वषट्करोति तत् स्विष्टकृद्भाजनꣳ स वै प्रागेव जुहोति ॥ २३ ॥

अथ दिशो व्याघारयति। दिशः प्रदिश आदिशो * व्विदिश उद्दिशो दिग्भ्यः स्वाहेति पञ्च दिशः पञ्च-र्त्तवस्तदृतुभिरेवैतद्दिशो मिथुनीकरोति ॥ २४ ॥

तद्वै पञ्चैव भक्षयन्ति। होता चाध्वर्युश्च ब्रह्मा चाग्नीच्च यजमानः पञ्च वा ऽऋतवस्तदृतूना मेवै-तद् रूपं क्रियते तदृतुष्वेवैतद् रेतः सिक्तं प्रतिष्ठा-पयति प्रथमो यजमानो भक्षयति प्रथमो रेतः परि-गृह्णानीत्यथो ऽअप्युत्तमो मय्युत्तमे रेतः प्रतितिष्ठा-दित्युपह्वत उपह्वयस्वेति सोम मेवैतत् कुर्व्वन्ति ॥ २५ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् [ ४. ४. ] ॥

आवृत्तिगुणविकृतो दर्शपूर्णमासयागप्रयोग एव दाक्षायण-यज्ञः, तं विधित्सुराख्यायिका माह— "प्रजापतिरिति।

* 'आदिशो'— इति च दृष्टो डा०-वेबरेण।

'एतेन' वक्ष्यमाणेन दाक्षायणनामकेन यज्ञेन * 'प्रजापतिः' अहम् अविकृत एव सन् देवमनुष्यादिरूपया 'प्रजया', गवादिभिः 'पशुभिः' च 'बहुः' बहुविधः 'स्याम्' भवेयम्, उत्पन्नानां प्रजादीना मशनार्थं 'श्रियं' सम्पदं गच्छेयं प्राप्नुयाम्, ततोऽहं 'यशः' यशस्वी 'स्याम्', 'अन्नादः' भवेयम् 'इति'। एव मेते दाक्षायणयज्ञं कृतवतः प्रजापतेः कामाः, तत इदानी मपि तादृग्विधकामनायुक्त एव दाक्षायणयज्ञेऽधिक्रियत इत्यर्थः † ॥ १ ॥

तन्नाम निर्ब्रूते—"स वा इति। 'सः' खलु प्रजापतिः 'दक्षो नाम' अभवत्, तेन प्रथम मिष्टवान्, 'तस्मात्' 'दाक्षायणयज्ञः' इत्युच्यते। नामान्तर मपि कथयति—"उतेन मिति। 'उत' अपि च 'एनम्' 'एके' शाखिनः 'वसिष्ठयज्ञ इति' व्यवहरन्ति। 'एषः' एव खलु प्रजापतिः 'वसिष्ठः' नान्यः; सर्वश्रेष्ठत्वात्। 'एत मेव' दाक्षायणयज्ञं 'तत्' तत्र वसिष्ठयज्ञ इति 'अन्वाचक्षते'। "एतेनेति। 'सः' दक्षशब्दवसिष्ठशब्दवाच्यः प्रजापतिः तच्छब्देन परामृश्यते। "एतद्बभूवेति। 'एतत्' एतर्हि 'येयं' 'प्रजापतेः' सकाशात् 'प्रजापतिः' प्रजाना मुत्पत्तिः 'बभूव', 'या' च 'श्रीः' निरतिशया प्राजापत्यपदरूपा सम्पत् 'बभूव' ‡। "एता मित्यादि। 'यः' 'विद्वान्' एतदनुष्ठानस्य फलं जानानः। 'तस्मात्' दाक्षायणयज्ञफलकामः 'एतेन' 'यजेत' ॥ २ ॥

---

* "नामफलगुणयोगात् कर्म्मान्तरम्, गुणविधानं वा सन्निधिसम्पद्वचनाभ्याम्"— इति का० श्रौ० सू० ४. ४. २, ३। श० ब्रा० ११. १. २. १० दर्शनात् सान्निध्यम्, ११. १. २. १३ दर्शनाच्च सम्पद्वचन मवगम्यते।

† "दाक्षायणयज्ञः प्रजापश्वन्नकामस्य"- इति का० श्रौ० सू० ४. ४. १।

‡ विशेषतस्त्वित्रोपरिष्टाद् ( ११. १. २. १३. ) द्रष्टव्यम्।

विहितस्य यागस्य फलान्तरहेतुत्व मपि परकृत्युपन्यासेन दर्शयति— "तेनो हेति। 'श्वैक्नः' श्विक्नस्य पुत्रः, नाम्ना 'प्रतीदर्शः'। "उपसर्गस्य घञ्यमनुष्ये बहुलम्"– इति * बहुलग्रहणात् मनुष्यवाचित्वेऽपि घञन्त उत्तरपदे उपसर्गस्य दीर्घः। "स एत † मिति। 'एतं' प्रतीदर्शम्। 'सः' इति व्यत्ययेनैकवचनम्। ते तत्रत्या जनाः 'प्रत्यासुः' केनचित्कारणेन प्रतिचिक्षिपुः। "असु क्षेपणे ‡"–इत्यस्माल्लिट्। तेन च दाक्षायणयज्ञेनेष्टे सति 'तेषां' जनानां 'विवचनं' विशिष्टवचनं पक्षपातवचनम् ( 'इव' ) एव 'आस' बभूव, अस्मिन् बहुमानं कृतवन्त इत्यर्थः। तद्दृष्टान्तेनेदानीं विद्वदनुष्ठानस्यापि तत्फल माह— "विवचन मिव ह वा इति ॥ ३ ॥

पुनरप्यस्य यज्ञस्य विशिष्टफलान्तरहेतुत्वं प्रतिपादयितु माख्यायिकया परकृति मुदाहरति— "त माजगामेति। 'तं' प्रतीदर्श मुपदेष्टृत्वेनोपासीदन्, सृञ्जयपुत्रः 'सुप्ला' नाम 'ब्रह्मचर्यम्' 'आजगाम' प्राप्तवान्। 'तस्मात्' तदुपदेष्टुः प्रतीदर्शात् 'एतं' दाक्षायणयज्ञन् 'अन्य मु' अन्य मपि 'त्व' 'यज्ञम्' 'अनूचे'। 'सः' सार्ञ्जयः 'एतम् अनूच्य' 'पुनः' 'सृञ्जयान्' तदाख्यान् जनपदान् 'जगाम'; 'ते' च 'एनं' 'विदाञ्चक्रुः' ज्ञातवन्तः। "उषविदजागृभ्योऽन्यतरस्याम्"–इति § लिट्याम् प्रत्ययः। कथ मिति, तदाह— "यज्ञ मिति। 'नः' अस्मदर्थं 'यज्ञम्' 'अनूच्य'

---

* पा० सू० ६. ३. १२२।

† 'स ये त'—इत्येव पाठोऽस्मद्दृष्ट-सर्वमूलपुस्तकेषु।

‡ दि० प० १०३ धा०।

§ पा० सू० ३, १, ३८।

अधीत्य 'आगन्' आगतोऽभूत्। गमेर्लुङि "मन्त्रे घस"-इति * च्लेर्लुक्, "हल्ङ्याभ्यः"-इति † ति-लोपः, "मो नो धातोः"-इति ‡ नत्वम्। 'इति' ज्ञात्वा ते सृञ्जया अब्रुवन्,— 'नः' अस्मदर्थं यः 'यज्ञम्' अधीत्यागमत्, 'सः' तत्सम्बन्धिभिः देवैः सह अगमदिति। ततः प्रभृति 'सः' 'सार्ञ्जयः' 'सहदेवः' इति सञ्ज्ञया प्रसिद्धोऽभवत्।

'तत्' तस्मात् कारणात् 'एतत्' एतर्हि, इदानी मपि ('निवचनं') निर्वचनं निरन्तरं वचनम् 'अस्ति' व्यवहारो लोके § विद्यते। वचनस्य स्वरूपं दर्शयति— "अन्यद्वा इति। पूर्वं हि सार्ञ्जयः 'सुप्ला नाम' अभवत्, अधुना तु देवैः सहागमनात् 'सहदेवः' 'इति' 'अन्यत्' नाम 'दधे' धारितवान् 'इति'। 'सः' च सार्ञ्जयः स्वजनपदेषु 'एतेन' दाक्षायणयज्ञेन 'ईजे' इष्टवान्। "स एतेन यज्ञेनेष्ट्वा"-इत्यादि, एतस्य सार्ञ्जयस्य फलप्राप्तिकथनम्।

"एताꣳ ह वै प्रजाति मिति, इदानीन्तनस्य विदुषोऽनुष्ठातुः फलम्। "तस्माद्वा एतेनेति। यस्मात् सृञ्जयसम्बन्धि प्रजात्यादिक मपि दाक्षायणयज्ञफलम्, तस्मादपि कारणादित्यर्थः॥ ४॥

इतोऽपि दाक्षायणयज्ञोऽनुष्ठेय इत्यभिप्रेत्यान्यां परकृति मुपन्यस्यति— "तेनो हेति। 'ततः' सार्ञ्जयानुष्ठानान्तरं 'तेन' दाक्षायणयज्ञेन 'श्रौतर्षः' श्रुतर्षेः पुत्रो 'देवभागः' नाम महर्षिः 'ईजे' इष्टवान्। 'सः' च तेन यागेन 'कुरूणां च सृञ्जयानां च'

---

* पा० सू० २, ४, ८०। † पा० सू० ६, १, ६८।
‡ पा० सू० ८, २, ६४। § 'व्यवहारलोके'— इति च, क्व।

राज्ञा मुभयविधाना मपि 'पुरोहितः' बभूव। पौरोहित्यस्य फलरूपता माह— "परमता वा इति। 'या' खलु 'एकस्य' अपि 'राष्ट्रस्य' 'पुरोहितः' 'असत्' भवति, 'सा' खलु 'परमता' उत्कृष्टता, तस्य सर्वश्रेष्ठ्यं भवतीति यावत्; 'यः' तु 'द्वयोः' राष्ट्रयोः पुरोहितो भवति, सैव खल्वतिशयिता परमतेति किमु वक्तव्य मित्यर्थः। इदानीन्तनविद्वदनुष्ठानस्यापि तत्फल माह— "परमता मिवेति ॥ ५ ॥

फलान्तरप्रतिपादनायान्यां परकृति मुपन्यस्यति— "तेनो ह तत ईज इति। पर्वतो नाम कश्चित्, तस्य पुत्रः 'पार्वतिः', 'दक्षः', स एतेनेष्ट्वा राज्यं प्राप्नोत्। ततः 'एतर्हि' इदानी मपि 'दाक्षायणाः' तत्सन्तानभूता राजानः 'राज्यं प्राप्ताः' एव भवन्ति। "राज्य मिव ह वा इति, अनुष्ठातुः फलम्।

अत्र हि दाक्षायणयज्ञसम्पद्भूते द्वे पौर्णमास्ये द्वेऽमावास्ये यजेतेति दर्शपूर्णमासयोरावृत्तिं वक्ष्यति *। तत्र पौर्णमास्यां द्वौ पुरोडाशौ,— आग्नेयोऽग्नीषोमीयश्च; अमावास्याया मपि द्वौ,— आग्नेय ऐन्द्राग्नश्च। तयोः प्रत्यह मेकैकशो ऽनुष्ठान माह— "स वा इति। 'अनूचीनाहं' प्रत्यहम् 'एकैक एव' 'पुरोडाशो भवति' पूर्वस्मिन् पूर्णमासप्रयोगे एक एव पुरोडाशः कर्त्तव्यः, उत्तरस्मिन् दिनेऽप्येकः पुरोडाशः प्रयोक्तव्यः। तत्राग्नीषोमीयौ द्वावप्येकस्मिन्नित्यर्थः †। एवं दर्शप्रयोगेऽपि द्रष्टव्यम्। एकैकशोऽनुष्ठानस्य फल माह— "एतेनो हास्येति। 'असपत्नानुपबाधा' सपत्नैः शत्रुभिरबाधिता।

---

* "अत्र ह्येव सा सम्पत् सम्पद्यते, द्वे हि पौर्णमास्यौ यजते द्वे अमावास्ये, अत्रो एव खलु सा सम्पद् भवति"—इति उपरिष्टाद् ११ का० १, २, १३।

† का० श्रौ० सू० ४, ४, ६।

प्रकृतयोरेव दर्शपूर्णमासयोर्योऽयं मावृत्तिलक्षणो गुणः फलायाभिधीयत इत्यवादिष्म, त मिदानीं विधत्ते— "स वा इति। द्वित्वसङ्ख्यां प्रशंसति— "द्वे वै मिथुन मिति ॥ ६ ॥

पूर्वस्यां पौर्णमास्या मनुष्ठेयं यागं विधाय प्रशंसति— "अथ यत् पूर्वेद्युरिति। "ते द्वे देवते इति। अग्नीषोमयोर्व्यासक्तयोरेव देवतात्वात् अधिष्ठानद्वित्वापेक्षया देवतयोर्द्वित्वं मन्तव्यम् ॥ ७ ॥

परस्मिन्नहनि यागद्वयं विधत्ते— "अथ प्रातरिति। पूर्वेद्युरग्नीषोमीयेणेष्ट्वा परेद्युः प्रातः काले आग्नेयपुरोडाशकयागः प्रथमं कर्त्तव्यः, तत इन्द्रदेवताकं सान्नाय्यं दधि प्रयोक्तव्यम् *। एतद् यागद्वयं सम्भूय प्रशंसति— "ते द्वे इति ॥ ८ ॥

अमावास्याप्रयोगेऽपि पूर्वेद्युः कर्त्तव्य माह— "अथ यत् पूर्वेद्युरिति। प्रशंसति— "ते इति। अग्नीषोमीयवदत्रापि देवताद्वित्व मवसेयम् † ॥ ९ ॥

परेद्युरनुष्ठेयं यागद्वयं विधाय प्रशंसति— "अथ प्रातरिति। 'मैत्रावरुणी' मित्रावरुणदेवताका, पयसो विकृतिः 'पयस्या' ‡; तप्तं हि पयो दध्ना संस्कृतं सत् पयस्या भवति §। "नेद्यज्ञादित्यादि। 'यज्ञात्' प्रकृताद् यागात् 'नेत्' नैव 'अयानि' वियुक्ता गच्छानि 'इति' अनेनैवाभिप्रायेण आग्नेयः 'पुरोडाशः' क्रियते; न तु पूर्णमासप्रयोगवान् देवतयोर्द्वित्वसम्पादनाय। यतः पयस्या-

---

* "सान्नाय्यवत् प्रातः— इति का० श्रौ० सू० ४, ४, ६।

† का० श्रौ० सू० ४, ४, ५।

‡ "अमावास्यायां पयस्या मैत्रावरुणी"— इति का० श्रौ० सू० ४, ४, ७।

§ "सृते वा दध्यानयति"— इति का० श्रौ० सू० ४, ४, ८।

भाजौ 'मित्रावरुणौ' स्तत एव 'द्वे देवते' अत इत्यर्थः। गत मन्यत्। "एतद्ध हास्येति। येन रूपेणानुष्ठाता प्रजया पशुभिश्च 'बहुः' बहुविधो भवति। 'एतत्' एव मिथुनात्मकं द्वित्वम् 'अस्य' यज्ञस्य 'तद्रूपम्' इत्यर्थः॥ १०॥

अस्य दाक्षायणयज्ञस्य सोमयागरूपतां प्रतिपादयति— "अथ यदित्यादिना। "अमु मुपवसथ इति। सुत्यादिवसात् पूर्वं महरुपवसथः। प्रकरणान्तरे विहितत्वेन विप्रकर्षादमु मिति विप्रकृष्टवाचिना अदश्शब्देनाग्नीषोमीयस्य पशोः परामर्शः। "स एवास्येति। 'अस्य' यज्ञस्य पूर्वेद्युरनुष्ठेयो योऽग्नीषोमीयः पुरोडाशः, 'स एव सः' अग्नीषोमीयः पशुरित्यर्थः॥ ११॥

प्रातरनुष्ठेययोराग्नेयैन्द्राग्न्योर्यागयोः प्रातर्माध्यन्दिनसवनरूपता मुपपादयति— "अथ प्रातरिति। आग्नेयपुरोडाशस्य प्रातस्सवनस्य चैकदेवताधिष्ठितत्वात् तादात्म्यम्; सान्नाय्यमाध्यन्दिनसवनस्य चेन्द्रदेवत्वसाम्यात् तथात्वम्॥ १२॥

दर्शे पूर्वेद्युरनुष्ठेयस्यैन्द्राग्नपुरोडाशस्य तृतीयसवनरूपता माह —"अथ यदिति। "इन्द्राग्नी वै विश्वेदेवाः"—इति। इन्द्राग्न्योर्विश्वेषु देवेष्वन्तर्भावात् ऐन्द्राग्नपुरोडाशतृतीयसवनयोरनेकदेवत्यत्वसाम्याच्च तत्तादात्म्यम्॥ १३॥

दर्शे परेद्युः प्रातरनुष्ठेयस्य पयस्यायागस्यानूबन्ध्यारूपता माह— "अथ प्रातरिति। "नेद्यज्ञादिति। आग्नेयपुरोडाशयागस्यानुष्ठानविहिताद्यज्ञान्नैव गच्छति; प्रसंभ्रंशो माभूदित्यनेनैवाभिप्रायेण; न तु तेन किञ्चिदपि सोमयागसाम्यं सम्पाद्यते। "अमूं मैत्रावरुणी मिति। सोमप्रकरणे विहितत्वेन विप्रकृष्टाया अनूबन्ध्याया अदश्शब्देन परामर्शः। "सैवास्येति। 'अस्य'

दाक्षायणयज्ञस्य या 'मैत्रावरुणी पयस्या', सोमेऽनुष्ठीयमाना अनूबन्ध्या एव सेत्यर्थः। इत्थं दाक्षायणयज्ञस्य सोमयागसाम्यं सम्पाद्य, तत एव हेतोः फलसाम्य माह— "स पौर्णमासेन चेति। 'सौम्येन' सोमद्रव्यसाध्येन यागेनेत्यर्थः। "तदु खल्विति। 'तत्' तस्मादेव 'खलु' कारणात् दाक्षायणयागो 'महायज्ञः' सोमयागो 'भवति'; स हि महायज्ञ इत्याख्यायते। अत एव तैत्तिरीयके सोमयागप्रकरणे समाम्नायते— "ते देवा एतं महायज्ञ मपश्यन्"—इति * ॥ १४ ॥

अथैतद्दाक्षायणं यज्ञं प्रकारान्तरेण प्रशंसन् पौर्णमासप्रयोगे पूर्वेद्युरनुष्ठेय मग्नीषोमीययाग मनूद्य स्तौति— "अथ यत् पूर्वेद्युरिति। "एतेन वा इत्यादि। 'एतेन' खलु अग्नीषोमीययागेन पुरा 'इन्द्रो वृत्रम् अहन्' प्राणापानरूपयोरग्नीषोमयोर्हविषा वृत्रयोर्निष्क्रमणाद्धि वृत्रो मृतः। तथा चाम्नायते— "तस्माज्जञ्जभ्यमानादग्नीषोमौ निरक्रामताम्, प्राणापानौ वा एनं तदजहिता मिति †। 'अस्य' इन्द्रस्य 'या इयं विजितिः' प्रसिद्धा, 'तां' 'व्यजयत' इति सम्बन्धः। "विपराभ्यां जेः"—इत्यात्मनेपदम् ‡। "तथो एवेति। इन्द्रो यथा, 'तथा' एव 'एषः' यजमानोऽपि 'एतेन' अग्नीषोमीययागेन 'पाप्मानं' पापभूतं 'द्विषन्तं' द्वेष्टारं 'भ्रातृव्यं' शत्रुं 'हन्ति' ॥

पौर्णमास्यां 'यः' सान्नाय्ययागो विहितः, त मनूद्य स्तौति —"अथ यदित्यादिना। "आमावास्यं वा इति। इन्द्रवीर्यस्य सन्नयनसाधनं दधिपयोरूपं हविः 'आमावास्यं वै' अमावास्या-

---

* तै० सं० ३, २, २, ४। † तै० सं० २, ५, २, ४।

‡ पा० सू० १, ३, १९।

सम्बद्ध मेव। 'अमावास्या' तिथिः 'इति' 'यत्', 'तद्' 'दूरे'; प्रतिपदादिभिश्चतुर्दशीभिर्व्यवधानात्। पुरा खलु देवाः 'क्षिप्रे एव' अल्पकाले एव शीघ्रम् 'एतत्' इत्थं 'वृत्रं' 'जघ्नुषे' हन्तवे इन्द्राय। "क्रियाग्रहणं कर्त्तव्यम्"—इति * कर्मणः सम्प्रदानत्वात् चतुर्थी। 'तं' पौर्णमास्यां वृत्र' हतवन्त मिन्द्रम् 'एतेन' सान्नाय्य-रूपेण 'रसेन' 'अप्रीणन्' अतर्पयन्। 'यः' यजमानः 'एवं विद्वान्' पौर्णमास्या मिन्द्र मुद्दिश्य सान्नाय्ययागं करोति, स इन्द्रवत् क्षिप्र मेव स्वकीयं पापरूपं शत्रुम् 'अपहते' हिनस्ति। तदेव सन्नयनं प्रकारान्तरेण स्तौति— "एष वा इति। योऽयं पौर्ण-मास्यां सम्पूर्णः 'चन्द्रमाः', 'एषः' खलु 'राजा सोमः' 'देवाना मन्नम्'; 'तं' सोमरूपम् 'एतत्' अन्नम् 'प्रातः भक्षयिष्यन्तः' पूर्वदिवसे 'अभिषुण्वन्ति' रसभावं प्रापयन्ति। 'तम् एतत्' अपर-पक्षे 'भक्षयन्ति'। 'यत्' यस्माद् असौ प्रत्यहं तत्र 'अपक्षीयते', अतो भक्षयन्तीति सम्बन्धः ॥ १५ ॥

तथाविध मेवैतदनुष्ठान मित्याह— "अथ यत् पूर्वेद्युरग्नी-षोमीयेणेति। "अभिषुणोत्येवैन मिति। पूर्वेद्युः कर्त्तव्या-भिषवस्थानीयोऽय मग्नीषोमीययाग इत्यर्थः। 'अभिषुते तस्मिन्' सोमे 'एतं' सान्नाय्यरूपं 'रसं' परेद्युः 'दधाति' स्थापयति। 'एतेन' च सान्नाय्यरसेन तं सोमं 'तीव्रीकरोति' तीव्र मतिशयेन मदकरं करोति, तथा तेन सान्नाय्यरसेन 'देवेभ्यः' देवार्थं 'हव्यं' हविः 'स्वदयति' स्वादूकरोति। 'अस्य' यजमानस्य तत् 'हव्य' हविः 'देवेभ्यः' 'स्वदते' रोचते। "रुच्यर्थानां प्रीयमाणः"-इति † सम्प्रदानत्वात् देवेभ्य इति चतुर्थी ॥ १६ ॥

---

* पा० १, ४, ३२ सू० १ वा०। † पा० सू० १, ४, ३३।

दर्शयागे पूर्वदिवस मनुष्ठेय मैन्द्राग्नयाग मनूद्य स्तौति— "अथ यदिति। 'इन्द्राग्नी एव' खलु 'दर्शपूर्णमासयोर्देवते'; तत्रत्यप्रथमपुरोडाशस्याग्निदेवत्यत्वात्, सान्नाय्यस्य चैन्द्रत्वात्। "त एवैतदित्यादि, निगदसिद्धम् ॥ १७ ॥

दर्शप्रयोगे परेद्युरनुष्ठेयावपि यागावनूद्य स्तौति— "अथ प्रातरिति। "अथैतावेवेत्यादि। पयस्याया देवते 'मित्रवरुणौ', 'एतावेव अर्द्धमासौ'। एतदेव विवृणोति— "य एवेति। 'य एव' अर्द्धमासः 'आ' समन्तात् 'पूर्यते' वर्द्धमानया चन्द्रकलया पूर्णों भवति, 'सः' अमृतरससम्बन्धाद् 'वरुणः', स हि रसाभिमानी देवः; 'यः' अर्द्धमासः 'अपक्षीयते' क्षीयमाणचन्द्रकालयुक्तो भवति, 'सः' अपरपक्षः 'मित्रः'; 'तौ' चन्द्रसूर्यात्मकौ मित्रावरुणौ 'उभौ' 'एतां रात्रिं' दर्शरात्रिं 'समागच्छतः' सह समाप्नुतः। 'तत्' तस्मात् कारणात् 'एतत्' एतेन मैत्रावरुणयागेन 'उभावेव' तौ 'सह सन्तौ' सह भवन्तौ युगपत् 'प्रीणाति' तर्पयति। "सर्वं ह वा अस्येति, वेदितुः फलम् ॥ १८ ॥

मित्रावरुणदेवद्वयं प्रकारान्तरेण स्तौति— "तद्वा एतामिति। 'एतां रात्रिम्'। अत्यन्तसंयोगे द्वितीया *। 'मित्रः' अपरपक्षाभिमानी देवः, 'वरुणे' शुक्लपक्षाभिमानिने देवे 'रेतः सिञ्चति'। 'तत्' तथा सति 'एतेन रेतसा' स शुक्लपक्षः 'प्रजायते' उत्पद्यते; 'यत्' यतः कारणात् अस्मिन् चन्द्रः 'आपूर्यते'। 'यत्' यस्मात् एवम्, 'तत्' तस्मात् 'एषा' मित्रावरुणदेवताका 'पयस्या' 'अवक्लृप्ततमा' अतिशयेनावक्लृप्ता, क्लृप्तसामर्थ्या भवति ॥ १९ ॥

---

* "कालाध्वनोरत्यन्तसंयोगे"— इति पा० सू० २. ३. ५।

इतोऽपि पयस्यायागो दर्शे युक्ततर इत्याह— "सान्नाय्यभाजना वा इति। 'सान्नाय्यभाजना' सान्नाय्ययागस्य स्थानभूता ह्यमावास्या ; ऐन्द्रदध्यामावास्याया मिति दधिपयसोर्यागस्य प्रकृतौ तत्र विहितत्वात्। 'तत्' तथा सति ते द्वे ऐन्द्रसान्नाय्ये 'अदः' विप्रकृष्टः 'पौर्णमास्याम्' एव 'क्रियते'। यद्यपि 'सः' पौर्णमास्यां सान्नाय्यं यजमानः 'अत्र' दर्शे 'अपि' 'सन्नयेत्', तदा कृतस्यैव पुनःकरणात् 'जामिता' दोषः स्यात् ; अपि च दर्शपूर्णमासदेवतयोः परस्परं 'समदं' कलहं 'कुर्यात्'। पूर्णमासे कृत मैन्द्रं सान्नाय्यं परित्यज्य दर्शे मित्रावरुणदेवत.का पयस्यैव कार्या। तस्या अपि दधिपयसोर्विकारत्वात् अमावास्यायाः सान्नाय्यभाजनत्व मपि न व्याहन्यत इत्यर्थः। "तदेन मद्भ्य इत्यादि। 'तत्' तेन दर्शेऽनुष्ठितेन सान्नाय्ययागेन अप्सु ओषधिषु च प्रविष्टम् 'एनम्' सोमं ततः 'सम्भृत्य' दधिपयोरूपेण सम्पाद्य, अग्नौ हुत्वा, तानि 'आहुतिभ्यः' सकाशात् 'अधिजनयति'। 'स एषः' चन्द्रः ( सान्नाय्याहुतिभ्यः जातः * ) प्रतिपदि 'पश्चाद्' ददृशे कलारूपेण दृश्यते ॥ २० ॥

पयस्योत्पत्त्यनुनिष्पादिनो वाजिनस्यापि † होमं विधित्सुः पयस्यावाजिने सम्भूय स्तौति— "मिथुनादिति। 'एनं' चन्द्रं 'मिथुनात्' एव हि खलु 'एतत्' 'प्रजनयति' उत्पादयति। किन्तर्हि मिथुनम् ? 'पयस्या' हि स्त्रीलिङ्गत्वाद् 'योषा' स्त्री, 'वाजिनं' हि 'रेतः' पुरुषस्य वीर्यस्थानीयम् ; 'तत्' खलु 'अनुष्ठया'

---

* नास्त्येतत् पदद्वयं च-पुस्तके।

† "दधिपयसोः सारभूतं यत् कठिनं सम्पद्यते, सा पयस्या ; यच्च उदकं पृथग् भवति, तद् वाजिनम्"— इति या० दे० ( का० सू० ४, ४, ६, )।

अनुष्ठानात् सम्यक् 'यत्' यत्र खलु स्त्रीपुंसलक्षणात् 'मिथुनात्' 'जायते' ॥ २१ ॥

इत्थं वाजिनस्य मिथुनसम्पत्त्यर्थत्व मुक्त्वा तस्य होमं विधत्ते—"अथ वाजिभ्य इति *। विहितं वाजिनहोमं प्रजोत्पत्तिहेतुत्वेन स्तौति—"ऋतवो वा इति। 'ऋतवः' खलु वाजिशब्दाभिधेयाः, तेभ्यः। वाजिनहोमात् ऋतुष्वेव सर्वप्रजोत्पत्तिकारणं 'रेतः' 'सिक्तं' भवति; तस्माच्च रेतसः सकाशात् ते 'ऋतवः' सर्वाः 'प्रजाः' उत्पादयन्तीत्यर्थः ॥ २२ ॥

तस्य वाजिनहोमस्य कालं विधातुं स्तौति—"स वा इति। यज्ञस्य पश्चाद्भागे प्रस्तरपरिधिप्रहरणोत्तरकालं वाजिनहोमः कर्त्तव्यः। अत एवोक्तं कात्यायनेन—"वाजिनं निषिच्योत्करे करोति, ०—० प्रहृत्य तृणं तेन चरति, विमुच्य वा स्रुचौ"—इति †। आपस्तम्बोऽप्याह स्म—"परीधीन् प्रहृत्य, संस्रवान्तं कृत्वा, वाजिनपात्र मुपस्तीर्य"—इत्यादि। होमे विशेषं विधत्ते—"स वा इति। 'सः' खलु अध्वर्युः 'अग्रे' प्रथमं 'प्रागेव' प्रागपवर्ग मल्पं वाजिनं 'जुहोति'। "अग्ने वीहि"—'इति' ‡ यदा होता 'अनुवषट् करोति', तदा स्विष्टकृत्स्थानीयं वाजिनशेष मुत्तरपूर्वस्यां दिशि जुहोति §। "स वै प्रागेवेति, प्रधानहोमस्य निगमनम् ॥ २३ ॥

हुतशिष्टेन वाजिनेन दिग्व्याघारणं विधत्ते—"अथ दिशो व्याघारयतीति ‖। दीर्घधारयाग्नौ प्राच्यादिदिक्षु पातनम्, व्याघा-

---

* का० श्रौ० सू० ४, ४, ८। † का० श्रौ० सू० ४, ४, ८—१२।
‡ ऐ० ब्रा० १, ४, ५ द्रष्टव्यम्। § का० श्रौ० सू० ४, ४, १६ क।
‖ का० श्रौ० सू० ४, ४, १६ ख।

रणम्। तन्मन्त्रा—“दिशः प्रदिश इत्यादयः *। अनेन वाजिनेन ‘दिशः’ तृप्ता भवन्तु। एव मुत्तरत्रापि योज्यम्। प्रधानभूताः ‘दिशः’, दिङ्मध्यवर्त्तिन्यः ‘प्रदिशः’, ईषद्दिशः ‘आदिशः’, ‘विदिशः’ आग्नेयादिकोणदिशः, ‘उद्दिशः’ ऊर्द्ध्वा दिशः। एवं पञ्चभिर्मन्त्रैः स्वाहाकारान्तैः प्राच्यादिक्रमेण पञ्चसु दिक्षु व्याघारार्थं “दिग्भ्यः स्वाहा”–इति षष्ठेन पूर्वार्द्धे जुहुयात्। तदुक्तं सूत्रकृता—“वाजिनशेषेण दिशो व्याघारयति, दिश इति प्रतिमन्त्रम्; प्रदक्षिणं पुरस्तात् प्रथम मुत्तमाभ्यां मध्ये पूर्वार्द्धे च”–इति †। तदेतद् व्याघारणं प्रशंसति— “पञ्च वा ऋतव इति ॥ २४ ॥

यजमानपञ्चमाना मृत्विजां भक्षणं विधत्ते— “तद्वै पञ्चैवेति ‡। तद्भक्षणं प्रशंसति— “पञ्च वा ऋतव इति। “हेमन्तशिशिरयोः समासेन”–इति § ऋतूनां पञ्चत्वम्। यदेव पञ्चाना मृत्विजां भक्षणम्, एतत् पञ्चसङ्ख्याना मृतूना मेव रूपं क्रियते। “तत्’ तस्मात् ‘ऋतुषु’ प्राक् ‘सिक्तं’ रेतः’ ‘प्रतिष्ठापयति’ प्रतिष्ठितं करोति ॥

यजमानस्य प्राथम्यं विधत्ते— “प्रथमो यजमान इति ‖। ऋत्विग्भ्यः ‘प्रथमः’ पूर्वभावी सन् अहं ‘रेतः’ ‘परिगृह्णानि’ स्वीकरवाणि ‘इति’ अनेनाभिप्रायेण यजमानस्य प्रथमभक्षण मित्यर्थः ॥

पक्षान्तर माह— “अथो अप्युत्तम इति ¶। पक्षान्तरद्योतकः ‘अथो’–शब्दः। ऋत्विजाम् ‘उत्तमः’ चरमभावी सन्

---

* वा० सं० ६, १६, १—५।

† का० श्रौ० सू० ४, ४, १६, १७। “स्वाहाकारः सर्वत्र साकाङ्क्षत्वात्”१८।

‡ “होत्रध्वर्युब्रह्माग्नीध्रयजमानाः”— इति का० श्रौ० सू० ४, ४, २६।

§ ऐ० ब्रा० १, १, १ द्रष्टव्यम्।

‖, ¶ “प्रथमो वोभयतस्तु यजमानः”— इति का० श्रौ० सू० ४, ४, २७।

यजमानो भक्षयेत्। एव मपि विरोधो नास्तीति 'अपि'-शब्दस्यार्थः। 'उत्तमे' चरमभाविनि यजमाने कृत्स्नं 'रेतः' 'प्रतितिष्ठात्' प्रतितिष्ठेत्, न मा मतिवर्त्तेत, इत्यनेनाभिप्रायेण यजमानस्य चरमभक्षण मित्यर्थः * ॥

अथ मन्त्रानुज्ञापनपूर्वकं तद्भक्षणं कर्त्तव्य मिति विधत्ते— "उपहूत इति। "उपहूतः"–इत्यनुज्ञामन्त्रः, "उपह्वयस्व"–इत्यनुज्ञापनमन्त्रः। एतच्च द्वादशलक्षण्यां तृतीये विचारितम् †। कात्यायनेनाप्युक्तम्— "उपह्वयस्वेत्यामन्त्र्य भक्षण मुपहूत इति प्रसूतः"–इति ‡। एवञ्च सति 'एतद्' वाजिनम् ऋत्विजः 'सोम मेव' सोमसदृश मेव 'कुर्वन्ति'; उपह्वसाधनं हि सोमधर्म्मः § ॥ २५ ॥ १ [४. ४.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे चतुर्थाध्यायस्य चतुर्थं ब्राह्मणम् ॥

---

* "ऋतूनां त्वा वाजिनां वाजिनं भक्षयामीति"—इत्यादयश्च मन्त्रविधयः का० श्रौ० ४. ४. २३-२४-२५-सूत्रेषु द्रष्टव्याः।

† मी० जै० सू० ३. ५. १६—५३ सूत्राणि, तेषु ६—१६ अधिकरणानि च द्रष्टव्यानि। विशेषतस्त्विह "वचनादनुज्ञातभक्षणम्, यदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्"—इति सूत्रद्वयं विवेच्यम् (४०, ४१ सू० ; १४, १५ अधि०)।

‡ का० श्रौ० सू० ४. ४. १६। "युक्तनामभिर्वा"— इति तदुत्तरम् (२०)।

§ का० श्रौ० सू० ४. ४. २१। "दाक्षायणं वा दक्षिणा"— इति ( का० श्रौ० सू० ४. ४. २८. ) चात्र दक्षिणाविधिः। 'दाक्षायणं सुवर्ण मुच्यते ०—० तच्च शतमानं रक्तिकाशतपरिमितम् ( २०. १. २५ सू० )'— इत्यादि च तत्र वृत्तौ याज्ञिक देवः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजते राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

* एतदीयपाठभेदाः पूर्वपूर्वत्र द्रष्टव्याः ।

(अथ पञ्चमाध्याये प्रथमं ब्राह्मणम्.)

प्रजापतिर्ह वा ऽइद मग्र ऽएक एवास। स ऐक्षत कथं नु प्रजायेयेति सोऽश्राम्यत् स तपोऽतप्यत स प्रजा असृजत ता अस्य प्रजाः सृष्टाः पराबभूवुस्तानीमानि व्वयाᳬसि पुरुषो वै प्रजापतेर्नेदिष्ठं द्विपाद्वा अयं पुरुषस्तस्माद् द्विपादो व्वयाᳬसि ॥ १ ॥

स ऐक्षत प्रजापतिः। यथा न्वेव पुरैकोऽभूव मेव मु न्वेवाप्येतर्ह्येक एवास्मीति स द्वितीयाः ससृजे ता अस्य परैव बभूवुस्तदिदं क्षुद्रᳬ सरीसृपं यदन्यत् सर्पेभ्यस्तृतीयाः ससृज ऽइत्याहुस्ता अस्य परैव बभूवुस्त ऽइमे सर्पा एता ह न्वेव द्वयीर्याज्ञवल्क्य उवाच त्रयीरु तु पुनर्ऋचा * ॥ २ ॥

सोऽर्चञ्छ्राम्यन् प्रजापतिरीक्षाञ्चक्रे। कथं नु मे प्रजाः † सृष्टाः पराभवन्तीति स हैतदेव ददर्शानशनतया वै मे प्रजाः पराभवन्तीति स आत्मन एवाग्रे स्तनयोः पय आप्याययाञ्चक्रे स प्रजा असृजत ता

---

* 'चा'— इति घ, ङ।

† 'प्रजाः'— इति घ, ङ।

अथ प्रजाः सृष्टा स्तनावेवाभिपद्य तास्ततः सम्बभूवुस्ता इमा अपराभूताः ॥ ३ ॥

तस्मादेतदृषिणाभ्यनूक्तम्। प्रजा ह तिस्रो ऽत्याय मीयुरिति तद्याः पराभूतास्ता एवैतदभ्यनूक्तं न्यन्या अर्कं मभितो विविश्र ऽइत्यग्निर्वा ऽअर्कस्तद्या इमाः प्रजा अपराभूतास्ता अग्नि मभितो निविष्टास्ता एवैतदभ्यनूक्तम् ॥ ४ ॥

महद्ध * तस्थौ भुवनेष्वन्तरिति। प्रजापति मेवैतदभ्यनूक्तं पवमानो हरित आविवेशेति दिशो वै हरितस्ता अयं वायुः पवमान आविष्टस्ता एवैषऽर्गभ्यनूक्ता ता इमाः प्रजास्तथैव प्रजायन्ते यथैव प्रजापतिः प्रजा असृजतेदᳫं हि यदैव स्त्रियै स्तनावाप्यायेते ऽऊधः पशूना मथैव यज्जायते तज्जायते तास्तत स्तनावेवाभिपद्य सम्भवन्ति ॥ ५ ॥

तद्वै पय एवान्नम्। एतद्ध्यग्रे प्रजापतिरन्न मजनयत तद्वा ऽअन्न मेव प्रजा अन्नाद्धि सम्भवन्तीदᳫं हि यासाम्पयो भवति स्तनावेवाभिपद्य तास्ततः सम्भवन्त्यथ यासाम्पयो न भवति जात मेव ता अया-

* 'बृहद्ध'— इति मुद्रितसंहितापाठः ( ८. १०२. १४. )।

दयन्ति तदु ता अन्नादेव सम्भवन्ति तस्मादन्न मेव प्रजाः * ॥ ६ ॥

स यः प्रजाकामः । एतेन हविषा यजत ऽआत्मान मेवैतद्यज्ञं विधत्ते प्रजापतिं भूतꣳ † ॥ ७ ॥

स वा ऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति । अग्निर्वै देवतानां मुखं प्रजनयिता स प्रजापतिस्तस्मादाग्नेयो भवति ॥ ८ ॥

अथ सौम्यश्चरुर्भवति । रेतो वै सोमस्तदग्नौ प्रजनयितरि सोमꣳ रेतः सिञ्चति तत् पुरस्तान्मिथुनं प्रजननम् ॥ ९ ॥

अथ सावित्रः ‡ । द्वादशकपालो वाष्टाकपालो वा पुरोडाशो भवति सविता वै देवानां प्रसविता प्रजापतिर्मध्यतः प्रजनयिता तस्मात् सावित्रो भवति ॥ १० ॥

अथ सारस्वतश्चरुर्भवति । पौष्णश्चरुर्योषा वै सरस्वती वृषा पूषा ततः पुनर्मिथुनं प्रजनन मेत-

---

* 'प्रजाः'— इति घ, ङ ।

† 'भूतꣳ'— इति घ, ङ ।

‡ 'त्रः'— इति घ, ङ ।

स्माद्वा ऽउभयतो मिथुनात् प्रजननात् प्रजापतिः प्रजाः ससृज ऽइतश्चोर्ध्वा इतश्चावाचीस्तथो ऽएवैष एतस्मादुभयत एव मिथुनात् प्रजननात् प्रजाः सृजत ऽइतश्चोर्ध्वा इतश्चावाचीस्तस्माद्वा ऽएतानि पञ्च हवीꣳषि भवन्ति ॥ ११ ॥

अथातः पयस्याया एवायतनम् । मारुतस्तु सप्तकपालो विशो वै मरुतो देवविशस्ता हेदं मनिषेध्रा * इव चेरुस्ताः प्रजापतिं यजमान मुपेत्योचुर्व्वि वै तं मथिष्यामह ऽइमाः प्रजा या एतेन हविषा स्रक्ष्यस ऽइति ॥ १२ ॥

स ऐक्षत प्रजापतिः । पुरा मे पूर्व्वाः प्रजा अभूवन्निमा उ चेदिमे विमथ्नते न ततः किञ्चन परिशेक्ष्यत ऽइति तेभ्य एतं भाग मकल्पयदेतं मारुतꣳ सप्तकपालं पुरोडाशꣳ स एष मारुतः सप्तकपालस्तद्यत् सप्तकपालो भवति सप्त-सप्त हि मारुतो गणस्तस्मान् मारुतः सप्तकपालः पुरोडाशो भवति ॥ १३ ॥

तं वै स्वतवोभ्य इति कुर्य्यात् । स्वयꣳ हि त

---

* 'मनिषेद्ध्रा'— इति घ, ङ ।

ऽएतं भाग मकुर्व्वतीतो ह्येतेभ्यो याज्यानुवाक्ये न विन्दन्ति स उ खलु मारुत एव स्यात् स वा ऽएष प्रजाभ्य एवाहिंसायै क्रियते तस्मान् मारुतः * ॥ १४ ॥

अथातः पयस्यैव †। पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत एव सम्भूता यतः सम्भवन्ति तदेवाभ्य एतत् करोति तद्याः पूर्व्वैर्हविर्भिः प्रजाः सृजते ता एतस्मात् पयस एतस्यै पयस्यायै सम्भवन्ति ॥ १५ ॥

तस्यां मिथुन मस्ति। योषा पयस्या रेतो व्वाजिनं तस्मान् मिथुनाद्विश्व मसस्मित मनु प्राजायत तद्यदेतस्मान् मिथुनाद्विश्व मसस्मित मनु प्राजायत तस्माद्वैश्वदेवी भवति ॥ १६ ॥

अथ द्यावापृथिव्य एककपालः पुरोडाशो भवति। एतैर्व्वै हविर्भिः प्रजापतिः प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्य्यगृह्णात्ता इमा द्यावापृथिवीभ्यां परिगृहीतास्तथो ऽएवैष एतद्या एतैर्हविर्भिः प्रजाः

* 'मारुतः' — इति क, घ, ङ।

† 'व' — इति घ, ङ।

सृजते ता द्यावापृथिवीभ्यां परिगृह्णाति तस्माद् द्यावापृथिव्य एककपालः पुरोडाशो भवति॥ १७ ॥

अथात आहुदेव *। नोपकिरन्त्युत्तरवेदिं व्विसृष्ट मसत् सर्व्वं मसद्वैश्वदेव मसदिति त्रेधा बर्हिः सन्नद्धं भवति तत् पुनरेकधैतद्धि प्रजननस्य रूपं प्रजनन मु हीदं पिता माता यज्जायते तत् तृतीयं तस्मात् त्रेधा सत् पुनरेकधा प्रस्व उपसन्नद्धा भवन्ति तं प्रस्तरं गृह्णाति प्रजनन मु हीदं प्रजनन मु हि प्रस्वंस्तस्मात् प्रस्वः प्रस्तरं गृह्णाति ॥ १८ ॥

आसाद्य हवीᳪष्यग्निं मन्थन्ति †। अग्निᳪ ह वै जायमान मनु प्रजापतेः प्रजा जज्ञिरे ‡ तथो ऽएवैतस्याग्नि मेव जायमान मनु प्रजा जायन्ते तस्मादासाद्य हवीᳪष्यग्निं मन्थन्ति § ॥ १९ ॥

नवप्रयाजं भवति। नवानुयाजं दशाक्षरा वै व्विराडथैता मुभयतो न्यूनां व्विराजं करोति

---

* 'व'— इति घ, ङ।

†, § 'मन्थति'— इति ग।

‡ 'जज्ञिरे'— इति च दृष्टो डा०-वेबरेण।

प्रजननायैतस्माद्वा ऽउभयतो न्यूनात् प्रजननात् प्रजापतिः प्रजाः ससृज ऽइतश्चोर्ध्वा इतश्चावाचीस्तथो ऽएवैष एतस्मादुभयत एव न्यूनात् प्रजननात् प्रजाः सृजत ऽइतश्चो।र्ध्वा इतश्चावाचीस्तस्मान्नवप्रयाजं भवति नवानुयाजम् ॥ २० ॥

त्रीणि समिष्टयजूꣳषि भवन्ति। ज्याय इव हीदꣳ हविर्यन्नाद्यत्र नवप्रयाजं नवानुयाज मथो ऽअप्येक मेव स्याद्धविर्यज्ञो हि तस्य प्रथमजो गौर्दक्षिणा ॥ २१ ॥

एतेन वै प्रजापतिः। यज्ञेनेष्ट्वा येयं प्रजापतेः प्रजातिर्या श्रीरेतद् बभूवैताꣳ ह वै प्रजातिं प्रजायत ऽएताꣳ श्रियं गच्छति य एवं विद्वानेतेन यज्ञेन यजते तस्माद्वा ऽएतेन यजेत ॥ २२ ॥ २ ॥

॥ इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् [ ५. १. ] ॥

अथ चातुर्मास्यानि * विधित्सुस्तत्र वैश्वदेवस्य प्रजासृष्टिहेतुता माख्यायिकया प्रतिपादयति-- "प्रजापतिर्ह वा इति।

---

* चातुर्मास्यशब्देन इतः क्रमाद् विधास्यमानानि वैश्वदेववरुणप्रघाससाकमेधसुनासीरीयसञ्ज्ञानि चत्वारि पर्वाण्यभिधीयन्ते।

इदं दृश्यमानं चराचरात्मकं जगत् तत्समग्रसृष्टेः प्राक्काले प्रजापतिरेक एव आसीत् ; कार्यस्य जगतः कारणभूते प्रजापतौ लीनत्वात्। सः असहायः एक एव आसीदित्यर्थः।

ततः सकाशात् प्रजासृष्टिं दर्शयति—"स ऐक्षतेत्यादिना। "अश्राम्यदिति। प्रजोत्पत्तिकारणपर्यालोचनया श्रान्तः खिन्नोऽभवदित्यर्थः। "श्रमु तपसि खेदे च" *। "शमा मष्टानाम्"—इति † दीर्घः। स च श्रान्तः सन् प्रजोत्पत्तिकारणं तपस्तप्तवान्। "स प्रजा इत्यादि, निगदसिद्धम्।

"तानीमानीति। या खलु सृष्टेः पराभूताः, 'तानि इमानि' 'वयांसि' जातानि, पक्षिरूपेणाभवन्नित्यर्थः। एतदुपपादयति— "पुरुषो वा इति। 'पुरुषः' मनुष्यः खलु सृष्टानां प्रजानां मध्ये 'प्रजापतेः' 'नेदिष्ठम्' अन्तिकतमं कार्यम्। स च पादद्वयोपेतः, तत्परिणामरूपत्वात् पक्षिणोऽपि पादद्वयोपेता दृश्यन्ते। तस्माद् वयसां पुरुषसाधर्म्यात् तेषां तत्परिणामरूपत्व मवसेय मित्यर्थः॥ १ ॥

पुनरन्यथा प्रजासृष्टि माह— "स ऐक्षतेति। "यथा न्वेवेति। 'यथा' खलु 'पुरा' प्रजासृष्टेः पूर्वम् 'एकः' असहायः 'अभूवम्', 'अप्येतर्हि' इदानीं प्रजासृष्ट्युत्तरकाल मपि तथैव 'एकः एव अस्मि इति'। एव मीक्षित्वा 'सः' पुनः अन्याः प्रजाः 'ससृजे', पूर्वसृष्टप्रजापेक्षया आसां द्वितीयत्वम्। "परैवेति। 'अस्य' 'ताः' अपि प्रजाः पराभूताः 'एव' अभवन्। 'तत्'—इति विधेयापेक्षं नपुंसकत्वम्; ताः पराभूताः द्वितीयसृष्ट्युत्पन्नाः प्रजाः,

---

* दि० प० ६८ धा०।

† पा० सू० ७. ३. ७४।

यत् 'इदं' 'क्षुद्रम्' अल्पशरीरं 'सरीसृपं' सर्पणशीलं सर्पव्यतिरिक्तं प्राणिजातं दृश्यते, तदात्मना परिणता इत्यर्थः। "तृतीयाः ससृज इत्याहुरिति। पुनरपि स प्रजापतिः सृष्टिद्वयापेक्षया 'तृतीयाः' अन्याः प्रजाः 'ससृजे' सृष्टवान् 'इति' 'आहुः' अभिज्ञाः कथयन्ति। 'ताः' अपि 'अस्य' पराभूताः अभवन्। 'ते इमे' सर्परूपेण दृश्यन्ते ॥

तृतीयसृष्टावाहुरिति यः परोक्षनिर्देशः, तदभिप्राय माह —"एता हेति। 'एताः' पूर्वोक्ताः 'द्वयीः' द्विविधाः 'एव' प्रजाः प्रजापतिना सृष्टाः इति 'याज्ञवल्क्यः' महर्षिः 'उवाच' उक्तवान्, न तृतीयानां प्रजानां सृष्टिः; 'ऋचा' ऋङ्मन्त्रेण * 'पुरः' 'त्रयी' त्रिविधा अपि 'प्रजाः' सृष्टा इति प्रतिपाद्यते ॥ २ ॥

स चोदाहरिष्यते— "सोऽर्चन्नित्यादि। त्रिवारं सृष्टानां प्रजानां पराभवकारणं कि मिति विचार्य 'सः' खलु 'एतत् एव' कारणं 'ददर्श'। एतच्छब्दनिर्दिष्टं दर्शयति— "अनशनतयेति। उत्पन्नानां प्रजाना मशनराहित्यं पराभवकारण मित्यर्थः। उत्पत्स्यमानानां प्रजाना मनशनत्वं माभूदिति प्रजापतिना कल्पित मशन माह— "स आत्मन एवेति। 'अग्रे' सृष्टेः प्रागेव प्रजापतिः 'आत्मनः' स्वशरीरस्य एव सम्बन्धिनोः 'स्तनयोः' 'पयः' 'आप्याययाञ्चक्रे' आप्यायितं पूरितं कृतवान्। एव मशनं प्रकल्प्य अनन्तरं या प्रजाः असृजत, 'अस्य' प्रजापतेः 'ताः' सृष्टाः 'प्रजाः' पयसा पूर्णौ 'स्तनौ' 'अभिपद्य' जीवनवत्योऽभवन्। 'ततः' अनन्तरं 'ताः' प्रजाः 'सम्बभूवुः' सम्यगुत्पन्ना लब्धात्मानोऽभवन्। पराभवं न प्राप्ता इत्यर्थः ॥ ३ ॥

---

* त मिमं मन्त्र मिहैवोपरिष्टात् चतुर्थपञ्चमयोरुद्धृत्य व्याख्यास्यते।

उक्तोऽर्थे ऋड्मन्त्रं संवादयति— "तस्मादिति। यस्मादग्र एव मासीत्, तस्मात् कारणात् तदुक्त मर्थजातम् 'ऋषिणा' मन्त्रेण 'अभ्यनूक्तम्' प्रतिपादितम् *। तत्र प्रथमपाद मनूद्योक्तार्थपरता माह— "प्रजा हेति। 'तिस्रः' त्रिविधाः 'प्रजाः' 'अत्यायम्' अत्ययं विनाशम् 'ईयुः' जग्मुः। 'ह'-शब्द एतद्ब्राह्मणप्रसिद्धिं द्योतयति †। "तद्या इति। 'याः' खलु प्रजाः त्रिधा सृष्टा अन्नाभावहेतुना 'पराभूताः', 'एतत्' एतेन मन्त्रपादेन ता एवाभिलक्ष्य 'अभ्यनूक्तम्' प्रतिपादितम् ॥

द्वितीयपाद मनूद्य व्याचष्टे— "न्यन्या इति। पयोरूप मशनं प्राप्य 'अन्याः' प्रजाः 'अर्कम्' अर्च्चनीय मग्निम् 'अभितः' सर्वतः 'निविविश्रे' निविविशिरे। "नेर्विशः"–इति ‡ आत्मनेपदम्, "इरयो रे"–इति § रे-आदेशः। "तद्या इत्यादि। 'तत्' तत्र 'या इमाः प्रजाः' 'अपराभूताः', 'ताः' एव, जाठररूपेण लौकिकवैदिकभेदेन वावस्थितम् 'अग्निं' स्वस्वव्यापाराय पर्य्युपविष्टा वर्त्तन्ते। एतदेतेन पादेन प्रतिपादितम् ॥ ४ ॥

तृतीयपाद मनूद्य व्याचष्टे— "महद्ध तस्थाविति। इत्थं देवमनुष्यादिरूपासु प्रजासु सतीषु तत्स्रष्टा प्रजापतिः 'भुव-

---

* ऋ० सं० ८. १०१. १४।

† भाष्यकारस्येदं वचन मश्रद्धेयम्; अस्य हि ब्राह्मणग्रन्थस्य ऋग्वेदीयमन्त्रग्रन्थात् परतन्त्वात्। अत एवात्र ऋङ्मन्त्रमानोपन्यासः सङ्गच्छते। वस्तुतः सर्वे एव ब्राह्मणग्रन्थाः सर्वेभ्य एव मन्त्रग्रन्थेभ्यः परभवा इत्यैतिहासिकसिद्धान्त एव।

‡ पा० सू० १. ३. १७।

§ पा० सू० ६. ४. ७६।

नेषु' 'अन्तः' मध्ये 'महत्' * अधिकं 'तस्थौ' सर्वोत्कर्षेणाव-स्थितः। गत मन्यत् ॥

चतुर्थपाद मनूद्य व्याचष्टे— "पवमान इति। 'दिशो वै हरितः' दिशो हि हरिच्छब्दवाच्याः, अतः 'ताः' 'अयं' पुरोवर्त्ती 'पवमानः' वायुः 'आविष्टः' दृश्यते। अतस्तुरीयपादेन अय मर्थः प्रतिपाद्यत इति। "ता एवेति, उक्तार्थनिगमनम्। 'ताः' उक्ताः प्रजाः 'एव' अभिलक्ष्येत्यर्थः † ॥

प्रजापतिकृतायाः सृष्टेरविच्छेदेनानुवृत्तिं दर्शयति— "ता इमा इति। 'यथैव' येन हि प्रकारेण पुरा 'प्रजापतिः प्रजाः असृजत', 'तथैव' तेनैव प्रकारेण 'ता इमाः' मनुष्याद्याः 'प्रजाः' 'प्रजायन्ते' उत्पद्यन्ते। एतदेवोपपादयति— "इदं हीति। इदानीं स हि 'यदेव' खलु लोके 'स्त्रियै' स्त्रियाः। षष्ठ्यर्थे चतुर्थी ‡। 'स्तनौ' 'आप्यायेते' पयसा पूरितौ भवतः। व्यत्ययेनैकवच-नम् §। गवादिपशूनाम् 'ऊधः' च पयसा पूर्णं भवति। 'अथ' अनन्तरम् 'एव' 'यत् जायते' 'तत्' एव 'जायते', अन्यदजायमानं विपद्यत इत्यर्थः। "तास्तत इति। 'ताः' उत्पन्नाः प्रजाः

---

* 'बृहत्'— इति मुद्रितायाः शाकलशाखाया आश्वलायनशाखाया वा पाठः। तदेवं शतपथब्राह्मणन्तु शाकलाभिधानां पश्चाना माश्वलायन्या-दीना माविर्भावात् पूर्वतन मिति गम्यते। नाप्येतेन मन्त्रसंहिताभ्य इदं पुरातन मिति भ्रमितव्यम्।

† ऐतरेयकारण्यके त्वेष मन्त्रो विशेषतो व्याख्यातः। ऐ० आ० २आ० १अ० १ख० ४—८। तत्र 'तिस्रः'-इत्यस्य 'वङ्गावगधाश्चेरपादाः'—इति व्याख्या समाम्नाता। सायणकृतं तद्व्याख्यानन्तु न समीचीनं मन्यामहे।

‡ पा० २. ३. ६२ सू० १ वा०।

§ पा० सू० ३. १. ८५। इह कारिका द्रष्टव्या।

'ततः' जननानन्तरं पयोधरौ 'स्तनौ एव' 'अभिपद्य' अभिप्राप्य स्तन्यपानेन 'सम्भवन्ति' प्रवर्द्धन्ते, न विपद्यन्ते ॥ ५ ॥

पयसोऽन्नरूपता माह— "तद्वै पय इति। 'तत्' तत्र खलु जन्मानन्तरकाले 'पय एव' प्रजानाम् 'अन्नम्' भवति। 'हि' यस्मात् 'अग्रे' इतरान्नसृष्टेः प्राक् 'एतत्' एव 'अन्नम्' 'प्रजापतिः' 'अजनयत' उत्पादितवान्, तस्मादिद मेव मुख्य मन्न मित्यर्थः। तस्य चान्नस्य कार्यकारणयोरभेदोपचारेण प्रजारूपता मुपपादयति— "अन्न मेवेति। 'हि' यस्मात् 'प्रजाः' 'अन्नात्' 'सम्भवन्ति' प्रवर्द्धन्ते, तस्मात् तदात्मिका इत्यर्थः। 'इदं हि' इदानीं हीत्यर्थः। "जात मेवेति। स्तन्याभावे जातस्य शिशोर्जीवनासम्भवात् तज्जीवनार्थं जननानन्तर मेव 'ताः' प्रजाः स्तन्यमेव 'अदयन्ति' भोजयन्ति *। स्पष्ट मन्यत्। इत्य मन्नहेतुकं प्रजापतेः प्रजासर्जन मुपोद्घातत्वेनोपन्यस्तम् ॥ ६ ॥

अथोपोद्घातिकेषु वैश्वदेवहविरुत्पादयंस्तद् दर्शयिष्यंस्तावत् वैश्वदेवयागं विधत्ते—"स यः प्रजाकाम इति †। 'यः' यजमानः प्रजाकामः, 'सः' 'एतेन' वैश्वदेवाख्यपर्वरूपेण 'हविषा' यजेत, तस्य प्रजाफलसाधनत्व मुपपादयति—"आत्मान मेवेति। स यजमानः 'आत्मान मेव' प्रजापतिरूप मापन्नम् 'एतद्' वैश्वदेवाख्यं 'यज्ञं' विधत्ते' वैश्वदेवयज्ञ मात्मना करोतीत्यर्थः। अतो वैश्वदेवेनेष्टवतः प्रजापतेः प्रजोत्पत्तिसाधनत्व मुन्नीत मित्यर्थः ॥ ७ ॥

तत्र प्रथमं हविर्विधाय प्रशंसति— "स वा इति ‡।

---

* 'आदयन्ति भाजयन्ति'— इति च।

† का० श्रौ० सू० ५. १. १—२०।

‡ का० श्रौ० सू० ५. १, ५। आग्नेयोऽष्टाकपालः पुरोडाशः।

'आग्नेयः' अग्निर्देवता अस्य। "सास्य देवता"–इत्यर्थे * "अग्नेर्ढक्"–इति † ढक्। अष्टसु कपालेषु संस्कृतः 'अष्टाकपालः'। 'अग्निः प्रजनयिता' मातापितृभ्यां भुक्तस्यान्नस्य जाठराग्निपरिपाकवशेन शुक्रशोणितात्मना परिणामादग्नेः प्रजनयितृत्वम्; अत एव प्रजापतिः सोऽग्निरित्यर्थः ॥ ८ ॥

द्वितीयं हविर्विधाय प्रशंसति— "अथ सौम्य इति ‡। सोमो देवता अस्य 'सौम्यः'। "सोमाट् ट्यण्"–इति ट्यण्। 'प्रजनयितरि' उत्पादयितरि 'अग्नौ' सोमात्मकं 'रेतः' 'सिञ्चति', तदेव 'तत्' प्रजोत्पत्तिसाधनं 'पुरस्तात्' क्रियमाण मेकं 'मिथुनं' सम्पन्नं भवतीत्यर्थः ॥ ९ ॥

अथ तृतीयं हविर्विधाय प्रशंसति— "अथ सावित्र इति §। सौम्ययागानन्तर्यम् 'अथ'-शब्दार्थः। सविता देवता अस्य 'सावित्रः'। 'प्रसविता' प्रेरयिता। स एव 'प्रजापतिः' वैश्वदेवादिः। आग्नेयादीनां पञ्चानां यागानां मध्ये इज्यमानः सन् 'सविता' 'मध्यतः' प्रजानां 'प्रजनयिता' भवति ॥ १० ॥

चतुर्थपञ्चमे हविषी विधाय सम्भूय प्रशंसति— "अथ सारस्वत इति ‖। सरस्वती देवता अस्य 'सारस्वतः' ¶। "तत् पुनर्मिथुन मित्यादि। आदावनुष्ठितादग्रे क्रियमाणादित्यर्थः। "इतश्चोर्द्धा इत्यादि। 'इतः' अस्मात् भूलोकादारभ्योपरितन-

---

* पा० सू० ४. २. २४। † पा० सू० ४. २. ३३।

‡ "सौम्यश्चरुः"–इति का० श्रौ० सू० ५. १. ६।

§ "सावित्रो द्वादशकपालोऽष्टाकपालो वा"– इति का० श्रौ० सू० ५. १. ७।

‖ "सारस्वतश्चरुः, पौष्णश्चरुः प्रपिष्टानाम्"—इति का० श्रौ० सू० ५. १. ८,६।

¶ "योषा वै सरस्वती"–इत्यर्थवादादिह सरस्वत्या देवतात्वं, न तु सरस्वतः।

लोकवर्त्तिनीः 'प्रजाः' 'उभयतः' अवस्थितात् 'मिथुनात्' प्रजापतिः सृष्टवानित्यर्थः। इदानीन्तनयजमानोऽपि एव मेव मिथुनद्वयानुष्ठानेन द्विविधाः प्रजाः सृजतीत्याह— "तथो एवेति। "तस्मादित्यादि, विहितानां हविषां निगमनम् ॥ ११ ॥

एवं पञ्चभिर्हविर्भिरुत्पादितानां प्रजानां स्थित्यर्थं प्रजापतिना कल्पितं पयस्यारूप मन्नं दर्शयितव्य मिति पयस्यायागस्य स्थानं प्रतिजानीते— "अथात इति। 'अथ' एवं प्रजासृष्टेरनन्तरं यतः सृष्टानां प्रजाना मन्न मपेक्षितम्, 'अतः' 'पयस्याया एव' पयोविकारद्रव्यसाध्यस्य यागस्य एतत् 'आयतनं' स्थान मित्यर्थः। अथैवं पयस्यायाग एव षष्ठोऽनुष्ठेय इति, नेत्याह— "मारुतस्तु इति। 'तु'-शब्दः पयस्यायागस्य न्यायप्राप्तं षष्ठस्थानत्वं व्यावर्त्तयति; 'मारुतः सप्तकपालः' एव षष्ठोऽनुष्ठेय इत्यर्थः *।

एतदाख्यायिकयोपपादयति— "विशो वै मरुत इत्यादिना। वैश्यजातयो हि मरुतः; ते च देवतारूपत्वाद् 'देवविशः' खलु 'अनिषेद्ध्रा इव' † अनिषेधुकाः, नियन्तृरहिता इव स्वतन्त्राः 'चेरुः'। 'ताः' स्वातन्त्र्येण वर्त्तमानाः आद्यैः पञ्चभिः हविर्भिः प्रजा उत्पादितवन्तं 'प्रजापतिं यजमानम्' 'उपेत्य' उपगत्य 'ऊचुः' —'ते' त्वदीयाः 'इमाः' उत्पन्नाः 'प्रजाः' वयं 'विमथिष्यामः' हिंसिष्यामः, 'याः' प्रजाः 'एतेन' वैश्वदेवपर्वात्मना 'हविषा' त्वं 'स्रक्ष्यसे' सृष्टाः करिष्यसि ॥ १२ ॥

एवं मरुद्भिरुक्ते सति 'सः' 'प्रजापतिः' 'ऐक्षत' पर्यालोचितवान्। 'मे' मदीयाः 'पूर्वाः' पूर्वसृष्टाः 'प्रजाः' 'पराभूवन्'।

---

* का० श्रौ० सू० ५. १. १६, १७।

† 'अनिषेधा इव'—इति च।

'इमाः' प्रजाः 'इमे' मरुतः 'विमथ्नन्ते' बाधन्ते चेत् 'ततः' अनन्तरं 'किम्' अपि स्पष्टं 'न परिशेक्ष्यते' परिशेषितं न भविष्यति। 'इति' एवं मरुद्भ्यो भीतः सन्, 'तेभ्यः' 'एतं' सप्तदशकपालरूपं 'भागं' कल्पितवान्। अतः प्राप्तस्थान मपि पयस्यायागं परित्यज्य 'स एष मारुतः' यागः इदानी मपि षष्ठत्वेनानुष्ठीयते। सप्तसङ्ख्या मनूद्य प्रशंसति— "तद्यदिति। मरुतो हि सप्तगणाः, तेष्वेकैकस्मिन् गणेषु सप्त सप्त मरुतः। ते चैकोनपञ्चाशत्सङ्ख्याकाः अग्निस्थापनप्रकरणे "ईदृङ् चान्यादृङ् च"— इत्यादिभिर्मन्त्रैस्तत्तन्नाम्ना प्रतिपादिताः * ॥ १३ ॥

तेषां किञ्चिद् विशेषण मुपक्षिपति— "तं वै स्वतवोभ्य इतीति †। 'तं' खलु सप्तकपालं पुरोडाशं 'स्वतवोभ्यः' 'इति' विशेषणविशिष्टेभ्यो मरुद्भ्यः 'कुर्यात्'। 'तवः' इति बलनाम ‡। स्वायत्तं तवो बलं येषां ते स्वतवसः। अस्य विशेषणस्यान्वर्थता माह— "स्वयं हीति। 'ते' मरुतः 'स्वयं हि' स्वपौरुषेणैव हि 'एतं भागम्' 'अकुर्वन्' स्वीकृतवन्तः, अतस्ते स्वतवसः सम्पन्ना इत्यर्थः।

प्रागुक्त मेव पक्षं निगमयितुं कारण मुपन्यस्यति— "अत इति। यदि तु 'स्वतवोभ्यः' प्रतिपादिके § 'याज्यानुवाक्ये' 'न' लभते, तदा 'सः' एव प्रागुक्तः केवलः 'मारुत एव' यागो

---

* तै० सं० ४. ६. ५. १५—२१ द्रष्टव्याः। "सप्तगणा वै मरुतः"— इति च तै० ब्रा० २. ७. २।

† 'स्वतवद्भ्यः'—इति का०-श्रौ०-सू०-सम्मतः पाठः। "स्वतवद्भ्य इति छान्दसं रूपम्"— इति तत्र या० दे०। ‡ निघ० २. ६. ५।

§ 'स्वतवः-प्रतिपादिके'— इति वा स्यादिह पाठः।

भवति। एतञ्च पक्षद्वयं कात्यायनोऽप्यसूत्रयत्— "मरुद्भ्यः स्वतवोभ्यः सप्तकपालो मारुतो वेति *।

"स वा एष इति। 'सः' खलु 'एषः' मारुतो यागः 'प्रजाभ्यः' प्रजानाम्। षष्ठ्यर्थे चतुर्थी †। 'अहिंसायै' मरुत्-कृतबाधराहित्याय 'एव' 'क्रियते'। "तस्मादिति। मारुत-यागस्य निगमनम् ॥ १४ ॥

पयस्यायागं विधत्ते— "अथात इति ‡। 'अथ'-शब्दो मारुतयागानन्तर्य्ये। यतः सृष्टाः प्रजा मारुतयागेन तत्कृत-हिंसायाः परिहृतत्वात् सुखेनावस्थिताः अन्न माकाङ्क्षन्ते, अतः पयोरूप मन्नं तेभ्यो जनयितुं पयस्यायागः कर्त्तव्य इत्यर्थः। तस्य प्रजावृद्धिहेतुत्व माह— "पयसो वा इत्यादि। सृष्ट्यादौ प्रजापतिना सृज्यमानास्ताः 'प्रजाः' तदीयस्तन्यरूपात् 'पयसः' सकाशात् 'सम्भूताः' प्रवर्द्धिताः यतः, एव मिदानी मपि सर्वाः प्रजाः पयस एव 'सम्भवन्ति' जन्मानन्तरं तत्क्षणे एव पयो-लक्षण मन्नं प्राप्य वर्द्धन्ते। पयोरूपस्य तस्यान्नस्य सम्पत्ति मत्र दर्शयितु मुक्त मर्थ मनुवदति— "तद्यत एवेति। 'तत्' तथा सतीत्यर्थः। 'एतत्' एतेन पयस्यायागेन 'तदेव' प्रजावृद्धिहेतुभूतं पयः 'आभ्यः' प्रजाभ्यः 'करोति' सम्पादयति। अत एवेदानीं पूर्वसृष्टानां प्रजाना मभिवृद्धिर्दृश्यत इत्याह— "तद्या इति। 'पूर्वैः' प्रागुक्तैराग्नेयादिभिः पञ्चभिः 'हविर्भिः'। "एतस्मात्

---

* का० श्रौ० सू० ५, १, १६, १७।

† पा० २, ३, ६२ सू० १ वा०।

‡ "वैश्वदेवी पयस्या"— इति का० श्रौ० सू० ५, १, १८।

पयस इति। दध्ना संस्कृतः पयोविकारः पयस्या *। असौ चामिक्षा-शब्देनान्यत्राम्नायते— "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्"—इति †। कात्यायनोऽपि पयस्यां प्रकृत्य सूत्रयामास— "शृते वा दध्यानयति, वाजिनं निषिच्योत्करे करोति"—इति ‡। षष्ठ्यर्थे चतुर्थी §। एतस्याः पयस्यायाः प्रकृतिभूतं पयः ‖ ; एतस्मादुत्पन्नाः प्रजा वर्द्धन्त इत्यर्थः ॥ १५ ॥

एवं यागोपयुक्तं द्रव्यं प्रशस्य तस्य वैश्वदेवत्वं प्रतिपादयति— "तस्या मित्यादिना। 'तस्यां' पयस्यायां प्रजननसाधनं 'मिथुनं'

---

* "आमिक्षापयस्येति चानर्थान्तरम्"—इति या० दे० ( का० श्रौ० सू० ४. ३. १० )। "पयस्या भवति, पयो हि वा एतस्मादपक्रामति"—इति ऐ० ब्रा० २ ३. ६। "आरूस्य वा एतद्रूपं यदामिक्षा"— इति तै० ब्रा० १. ६. २०. ४। तथाच वङ्गदेशादिप्रसिद्धा 'छाना' एव पयस्या, सैवामिक्षा चेति स्फुटम्।

† "वैश्वदेव्यामिक्षा"— इत्यादि, "वाजिनो यजति, अग्निर्वायुस्सूर्यस्ते वै वाजिनः"—इत्यादि च तै० ब्रा० १. ६. २, ३; तै० स० १. ८. २। आमिक्षाया निःसृतं यन्नीरं तदेव वाजिनशब्दाभिधेय मिति च तद्भाष्योक्ति-रेवावगम्यते।

‡ का० श्रौ० सू० ४. ४. ८, ६। "अमावास्यायां पयस्या मैत्रावरुणी"—इति तत्पूर्वसूत्रम्। अत एव पयस्यां प्रकृत्येत्युक्तम्।

§ पा० २. ३. ६२ सू० १ वा०।

‖ अत्र चोपरिष्टात् ३ का० ३ अ० ३ ब्रा० २क० (३ भा० १६५, १७१ पृ० ) दध्नविधानां गवानां परिचयो द्रष्टव्यः।

विद्यते। 'पयस्या'-शब्दस्य स्त्रीलिङ्गत्वात् 'योषा', तदनुनिष्पादि 'वाजिनं' 'रेतः' पुंसो वीर्य्यम्; 'तस्मात् मिथुनात्' 'असम्मितम्' अपरिमितम् इदं 'विश्वं' देवमनुष्याद्यात्मकम् 'अनु प्राजायत' अनुक्रमेण प्रजायते, प्रजात मभूत्। "तद्यदेतस्मादिति, प्रतिपादितार्थस्य हेतुत्वाभिधानम्। "तस्मादिति। यस्मात् विश्वोत्पत्तिहेतुः पयस्या, तस्माद् विश्वदेवदेवत्या कार्य्येत्यर्थः॥ १६॥

अन्तिमं हविर्विधत्ते— "अथेति *। द्यावापृथिव्यौ देवते अस्येति 'द्यावापृथिव्यः'। "द्यावापृथिवीशुनासीरमरुत्वत्"—इतिसूत्रेण † यत्। तत्र हि चकारेण यदित्यनुकृष्यते। तदेतत्पुराकृति मुदाहृतदृष्टान्तेन उपपादयति— "एतैर्वा इत्यादिना। "द्यावापृथिवीभ्यां पर्य्यगृह्णादिति। अधस्तात् पृथिव्या, उपरिष्टात् द्युलोकेन, तदुभयलोकवर्त्तिनीः सृष्टाः प्रजाः 'पर्य्यगृह्णात्' परितो वेष्टितवान्। याश्च 'इमाः' प्रजाः आभ्यां 'द्यावापृथिवीभ्यां' 'परिगृहीताः' परिवेष्टिता एव वर्त्तन्ते, न पुनः स्वतो निर्गच्छन्ति। "तथो एवेति। यथा प्रजापतिः, 'तथो' तथैव 'एषः' इदानीन्तनो यजमानोऽपि 'यः एतैः हविर्भिः प्रजाः सृजते', सृष्ट्वा च पयस्यायागेन तासां पयोरूप मन्नं परिकल्प्य, द्यावापृथिव्ययागेन 'द्यावापृथिवीभ्यां' 'ताः' 'परिगृह्णाति' परिवेष्टयतीत्यर्थः॥

एवं वैश्वदेवपर्व्वणि अष्टौ प्रधानयागा विहिताः ‡, तद्धित-

---

* "द्यावापृथिवीय एककपालः"— इति का० श्रौ० सू० ५. १. १८।

† पा० सू० ४. २. ३२।

‡ "एतद् वैश्वदेवम्"— इति का० श्रौ० सू० ५. १. २० वृत्तिर्द्रष्टव्या।

निर्द्देशौषधिद्रव्यत्वाल्लिङ्गसामान्याद् दर्शपूर्णमासविधयस्तत्राति-दिष्टाः ; "प्रकृतिवद् विकृतिः कर्त्तव्या" इति * ॥ १७ ॥

तत्र यानि वैशेष्यकानि † अङ्गानि तानीदानीं विधातुं प्रति-जानीते— "अथात आवृदेवेति। 'अथ'-इति आनन्तर्य्ये। यतः प्रधानाना मङ्गापेक्षा, अतः कारणात्। 'आवृत्' शब्दः प्रकार-वाची। चोदकप्राप्ताया मितिकर्त्तव्यतायां प्रकारविशेषः कथ्यते ; न त्वन्यत् किञ्चिन्नूतन मत्र प्रतिपाद्यत इति 'एव'-कारार्थः। अग्निमन्थनादेर्वैशेष्यकस्याङ्गस्य विधास्यमानत्वात् सहचरित ‡ मुत्तरवेद्यावपन मपि प्रसक्तम्, तन्निषेधति— "नोपकिरन्तीति। 'उत्तरवेदिं' 'नोपकिरन्ति' नोपक्षिपन्ति, नोपवपन्तीत्यर्थः। ऋत्विजां बहुत्वाद् बहुवचनम्। "कॄ विक्षेपे"—इति § धातुः। तत्र हेतु माह— "विसृष्ट मिति। सत्यां ह्युत्तरवेदौ तत्रानुष्ठीय-मान मेतत् कर्म तया निरुद्धगति स्यात ; तदभावे तत्कृतनिरोधा-भावात् क्रियमाणं कर्म 'विसृष्टं' व्यापनशीलम् 'असत्' भवेत् ; अत एव परिच्छेदाभावात् 'सर्वं' कृत्स्नं सम्पूर्णम् 'असत्' भवेत्। कार्त्स्न्यादेव तद् 'वैश्वदेवम्' विश्वदेवसम्बन्धयोग्यम् 'असद्' भवेत् ; न ह्यसर्वस्य सर्वदेवसम्बन्धो घटते ; अतो विसृष्टत्वादिसिद्धये उत्तरवेदिं न कार्य्येत्यभिप्रायः ॥

---

* "प्रकृतिवद् विकृतिः कर्त्तव्या"—इत्येवंरूपेणानुमानिकवचनेन"—इत्यादि का० श्रौ० ४, ३, २ सूत्रव्याख्यायां याज्ञिकदेवः। तत्रानुमानं "दर्शपूर्णमासधर्म्मा इष्टिपशुषु सामर्थ्याद् दर्शनाच्च ; वैश्वदेवधर्माश्चातुर्मा-स्येषु वचनप्रवृत्तिभ्याम्"—इत्येवमादिभ्यो वचनेभ्य एव बोभवीति।

† 'वैशिष्यकानि'—इति च।

‡ 'सहचारित'—इति च। § तु० पृ० १२८ आ०।

बर्हिराहरणे विशेषं विधत्ते— "त्रेधा बर्हिरिति *। 'त्रेधा' त्रिविधं 'बर्हिः' प्रथमं सन्नह्य, 'तत्' एव 'पुनः' 'एकधा' एकविधं सन्नह्यति। त्रिशब्दात् एकशब्दाच्च "सङ्ख्याया विधार्थे धा"–इति † धा-प्रत्ययः। प्रजोत्पत्त्यनुकूलत्वेनैतत् स्तौति— "एतद्वीति। यदेतत् त्रिधाबद्धस्य बर्हिषः पुनरेकधा संहतम्, 'एतत्' खलु 'प्रजननस्य' प्रजोत्पत्तेः स्वरूपम्। तदेतत् त्रैविध्यं प्रजननगतं दर्शयति— "प्रजननमु ह्रीति। 'पिता, माता', 'यत् जायते' यज्जायमानमपत्यम् 'तत्', एतत् 'तृतीयं' तृतयम्; इदमेव हि 'प्रजननं' प्रजातिः ‡; अस्य हि मातापित्रादिरूपेण त्रित्वात्, प्रजननरूपेण चैकत्वात्, तत्साधनभूतस्य बर्हिष-स्तद्धर्मभाक्त्वं सूचितमित्यर्थः। तस्मिन्नेव बर्हिषि धर्मविशेषं विधत्ते— "प्रस्व इति §। प्रसुवते फलानीति 'प्रस्वः' पुष्पिताङ्कुराः ‖, ते 'उपसन्नद्धाः' भवेयुः। "षूङ् प्राणिगर्भविमोचने" ¶। प्रपूर्वादस्मात् "सत्-सू-द्विष"— इति ** क्विप्। "ओः सुपि"–इति †† यण्। प्रसूतयुक्तानां कुशानां प्रस्तरत्वेन ग्रहणं विधत्ते— "तं प्रस्तरमिति ‡‡। 'तम्'–इति प्रस्तरापेक्षयैकवचनम्। प्रसूभिः कुशैः प्रस्तराख्यं मुष्टिं सम्भरेदित्यर्थः॥

---

* का० श्रौ० सू० ५, १, २५।   † पा० सू० ५, ३, ४२।

‡ तैत्तिरीयके ( ब्रा० १, ६, ३, ) ह्येदं स्पष्टमाम्नातम्— "त्रिवृद् बर्हिर्भवति, माता पिता पुत्रः"—इत्यादि।

§ का० श्रौ० सू० ५, १, २६ क।   ‖ 'पुष्पितकुशाः'— इति क।

¶ अदा० प० २० धा०।

** पा० सू० ३, २, ६१।   †† पा० सू० ६, ४, ८३।

‡‡ का० श्रौ० सू० ५, १, २६ ख।

एतस्य प्रकृतिकर्मानुकल्पना माह — "प्रजनन मु ह्येद मिति। 'इदं हि' वैश्वदेवाख्यं कर्म 'प्रजननं' प्रजोत्पत्तिसाधनम्, 'प्रस्वः' प्रसूतयुक्ताः कुशाश्च फलोत्पत्तिहेतवः ; अतः साधर्म्यात् प्रसूतकुशमयं प्रस्तरं कुर्यादित्यर्थः ॥ १८ ॥

प्रकृतितोऽप्राप्तत्वात् तत्कालविशिष्ट * मग्निमन्थनं विधत्ते— "आसाद्य हवींषीति †। प्रकृतिवद्धविरासादनान्तं कृत्वा अग्निमन्थनं कुर्यादित्यर्थः। तदेतत् प्रशंसति—"अग्निर्ह हेति। प्रथमसृष्टौ प्रजापतिरग्निं जनयित्वा तदनन्तर मेव अन्याः प्रजाः सृष्टवान् ; अत इहाग्नेर्जननं प्रजोत्पत्तिकारणं भवतीत्यर्थः। अत एव प्रागाम्नातम्— "तद् या इमाः प्रजा अपराभूतास्ता अग्नि मभितो निविष्टाः"–इति ‡ ॥ १९ ॥

चोदकप्राप्तानां प्रजानां सङ्ख्यान्तरं विधत्ते § — "नवप्रयाजं भवतीति। नव प्रयाजाः अनुयाजाश्च यस्मिन् तत् 'नवप्रयाजं, नवानुयाजं' ; तथा कर्त्तव्य मित्यर्थः ‖। नवसङ्ख्यां प्रशंसति— "दशाक्षरेति। "उभयत इति। प्रधानयागात् पुरस्तादुपरिष्टाच्च। "न्यूनादिति। एकाक्षरेण 'न्यूनात्'। "एतस्माद्वा इत्यादि। 'एतस्मात्' उभयतोऽनुष्ठीयमानात् प्रयाजानुयाजरूपात् एकाक्षरन्यूनात् 'प्रजननात्' प्रजननसाधनादित्यर्थः। "इतश्चोर्द्ध्वा इति। प्रयाजरूपात् प्रथमाद् विराजो भूलोकादारभ्योर्द्ध-

---

* 'प्रकृतितोऽप्राप्तकालविशिष्ट'— इति च।

† का० श्रौ० सू० ५, १, २७।

‡ पुरस्तादिहैव चतुर्थकण्डिकायां ( २५१ पृ० ) द्रष्टव्यम्।

§ 'सङ्ख्यान्तर माह'— इत्येव ङ-पुस्तके।

‖ का० श्रौ० सू० ५, २, ७।

वर्त्तिनी: प्रजा: सृष्टवान्। उपरिष्टात् क्रियमाणादनुयाजरूपाद्द विराजो भूलोकात् अवाचीना: प्रजा: सृष्टवान्। स्पष्ट-मन्यत् ॥ २० ॥

चोदकप्राप्तस्य समिष्टयजुषोऽपि सङ्ख्यान्तरं विधाय प्रशं-सति * — "त्रीणीति। तानि च सूत्रकृता दर्शितानि— "त्रीणि समिष्टयजूंषि जुहोति, देवा गातुविदो यज्ञ यज्ञ मेष त इति † "— इति। "ज्याय इव ह्वीद मिति। अन्यस्माद्धविर्यज्ञाद्द दर्शपूर्ण-मासाद्द 'इदं' वैश्वदेवपर्वरूपं हवि: 'ज्याय इव' प्रवृद्ध मिव हि। ज्यायस्त्वे कारण माह— "यत्रेति। 'यत्र' यस्मिन् कर्मणि 'नव-प्रयाजं नवानुयाजं' भवति, तद्धि प्रकृतेर्ज्यायो भवति; प्रकृतौ प्रयाजानां पञ्चत्वात् अनुयाजानां त्रित्वाच्च ॥

पक्षान्तर माह— "अथो इति। 'एक मेव' समिष्टयजुर्भवति, न तु त्रीणि ‡। तत्र कारण माह— "हविर्यज्ञ इति। 'हि'-शब्दो हेतौ। दक्षिणां विधत्ते— "तस्येति। यजमानस्य गोष्ठे प्रथमं जात: 'प्रथमज:', तादृशो 'गौ:', 'तस्य' वैश्वदेव-पर्वणो दक्षिणात्वेन देय इत्यर्थ: ॥ २१ ॥

विहितस्य वैश्वदेवयागस्य प्रजाश्रीफलसाधनत्वं सदृष्टान्त मुप-संहरति— "एतेनेत्यादिना §। "एतद्द बभूवेति ‖। 'एतत्'

---

* 'सङ्ख्यान्तर माह'—इत्येव च-पुस्तके।

† का० श्रौ० सू० ५, २, ६; वा० सं० ८, २१, २२, २२।

‡ "एकं वा वैश्वदेवे"— इति का० श्रौ० सू० ५, २, १२।

§ "प्रजाकामस्यापि वैश्वदेवम्"—इति का० श्रौ० सू० ५, २, २०।

‖ यानि विशेषवक्तव्यानि नेहाम्नातानि तानि सर्वाण्येव प्राय: कात्याय-नेन सूचितानि; तत्रैव तानि द्रष्टव्यानि ( श्रौ० सू० ५, १, २, )।

एतर्हि 'प्रजापतेः' 'या श्रीः' बभूवेत्यर्थः । "तस्मादिति । उप-संहृतस्य यागविधेर्निगमनम् * ॥ २२ ॥ २ [ ५.१. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम्. )

वैश्वदेवेन वै प्रजापतिः । प्रजाः ससृजे ता अस्य प्रजाः सृष्टा वरुणस्य यवान् † जक्षुर्वरुण्यो ह वा ऽअग्रे यवस्तद्यन्न्वेव ‡ वरुणस्य यवान् प्राश्नंस्तस्माद् वरुणप्रघासा नाम ॥ १ ॥

ता वरुणो जग्राह । ता वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिश्यिरे च निषेदुश्च प्राणोदानौ हैवाभ्यो नापचक्रमतुरथान्याः सर्वा देवता अपचक्रमुस्तयोर्हैवास्य हेतोः प्रजा न पराबभूवुः ॥ २ ॥

---

* तै० ब्रा० १. ६. १–३, तै० स० १. ८. १. २; एष्वनुवाकेषु चैतद् वैश्वदेवयागविधानादिक माम्नातम्, तत् सर्वं तत्रैव द्रष्टव्य मिति ॥

† 'यवाञ्'— इति क, ग । ‡ 'न्वेव'— इति क ।

ता एतेन हविषा प्रजापतिरभिषज्यत्। तद्यास्यैवास्य प्रजा जाता आसन् यास्वाजातास्ता उभयीर्व्वरुणपाशात् प्रामुञ्चत् * ता अस्यानमीवा अकिल्विषाः † प्रजाः प्राजायन्त ‡ ॥ ३ ॥

अथ यदेष एतैश्चतुर्थे मासि यजते। तन्नाह न्वेवैतस्य तथा प्रजा व्वरुणो गृह्णातीति देवा अकुर्व्वन्निति त्वेवैष § एतत्करोति यास्च त्वेवास्य ‖ प्रजा जाता यास्वाजातास्ता उभयीर्व्वरुणपाशात् प्रमुञ्चति ता अस्यानमीवा अकिल्विषाः ¶ प्रजाः प्रजायन्ते ** तस्माद्वा ऽएष एतैश्चतुर्थे मासि यजते ॥ ४ ॥

तद्वै द्वे व्वेदी द्वावग्नी भवतः। तद्यद् द्वे वेदी द्वावग्नी भवतस्तदुभयत एवैतद्वरुणपाशात् प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्माद् द्वे वेदी द्वावग्नी भवतः ॥ ५ ॥

स उत्तरस्या मेव व्वेदौ। उत्तरवेदिमुपकिरति न

* 'प्रामुचत्'—इति पाठश्च दृष्टो डा०-वेबरेण।

† 'अकिलिबषाः'—इति क, ख। ‡ 'प्राजायत'—इति घ, ङ।

§ 'न्वेवैष'—इति घ, ङ। ‖ 'न्वेवास्य'—इति घ, ङ।

¶ 'अकिलिबषाः'—इति क, ग। ** 'प्रजायते'—इति घ, ङ।

दक्षिणस्यां क्षत्रं व्वै व्वरुणो व्विशो मरुतः क्षत्र मेवै-तद्विश उत्तरं करोति तस्मादुपर्य्यासीनं क्षत्रिय मधस्तादिमाः प्रजा उपासते तस्मादुत्तरस्या मेव व्वेदा ऽउत्तरवेदि मुपकिरति न दक्षिणस्याम् ॥ ६ ॥

अथैतान्येव पञ्च हवीꣳषि भवन्ति। एतैर्वै हविर्भिः प्रजापतिः प्रजा असृजतैतैरुभयतो व्वरुण-पाशात् प्रजाः प्रामुञ्चदितश्चोर्ध्वा इतश्चावाचीस्तस्मा-द्वा ऽएतानि पञ्च हवीꣳषि भवन्ति ॥ ७ ॥

अथैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति। प्राणोदानौ वा ऽइन्द्राग्नी तद्यथा पुरस्यं चक्षुषे पुरस्यं कुर्य्यादेवं तत्तयोर्हैवास्य हेतोः प्रजा न पराबभूवुस्तत् प्राणोदानाभ्या मेवैतत् प्रजा भिषज्यति प्राणोदानौ प्रजासु दधाति तस्मादैन्द्राग्नो द्वादश-कपालः पुरोडाशो भवति ॥ ८ ॥

उभयत्र पयस्ये भवतः। पयसो वै प्रजाः सम्भवन्ति पयसः सम्भूतास्तद्यत एव सम्भूता यतः सम्भवन्ति तत एवैतदुभयतो व्वरुणपाशात् प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मादुभयत्र पयस्ये भवतः ॥ ९ ॥

व्वारुण्युत्तरा भवति। व्वरुणो ह वा ऽअस्य प्रजा अगृह्णात्तत् प्रत्यञ्चं व्वरुणपाशात् प्रजाः प्रमुञ्चति मारुती दक्षिणाजामितायै न्वेव मारुती भवति जामि ह कुर्य्याद्यदुभे व्वारुण्यौ स्यातां मतो ह वा ऽअस्य दक्षिणतो मरुतः प्रजा अजिघांꣳसंस्तानेतेन भागेनाशमयत् तस्मान्मारुती दक्षिणा ॥ १० ॥

तयोरुभयोरेव करीराण्यावपति। कं वै प्रजापतिः प्रजाभ्यः करीरैरकुरुत कम्वेवैष एतत् प्रजाभ्यः कुरुते ॥ ११ ॥

तयोरुभयोरेव शमीपलाशान्यावपति। शं व्वै प्रजापतिः प्रजाभ्यः शमीपलाशैरकुरुत शम्वेवैष एतत् प्रजाभ्यः कुरुते ॥ १२ ॥

अथ काय एककपालः पुरोडाशो भवति। कं वै प्रजापतिः प्रजाभ्यः कायेनैककपालेन पुरोडाशेनाकुरुत कम्वेवैष एतत् प्रजाभ्यः कायेनैककपालेन पुरोडाशेन कुरुते तस्मात् काय एककपालः पुरोडाशो भवति ॥ १३ ॥

अथ पूर्व्वेद्युः। अन्वाहार्यपचने ऽतुषानिव

यवान् कृत्वा तानीषदिवोपतप्य तेषां करम्भपात्राणि कुर्व्वन्ति यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि ॥ १४ ॥

तत्रापि मेषं च मेषीं च कुर्व्वन्ति। तयोर्मेषे च मेष्यां च यद्यनैडकीरूर्णा * विन्देत्ताः प्रणिज्य निश्लेषयेद्यद्यु ऽअनैडकीर्न विन्देद्यथो ऽअपि कुशोर्णा एव स्युः ॥ १५ ॥

तद्यन्मेषश्च मेषी च भवतः। एष वै प्रत्यक्षं व्वरुणस्य पशुर्यन्मेषस्तत् प्रत्यक्षं व्वरुणपाशात् प्रजाः प्रमुञ्चति यवमयौ भवतो यवान् हि जक्षुषीर्व्वरुणो ऽगृह्णान्मिथुनौ भवतो मिथुनादेवैतद् वरुणपाशात् प्रजाः प्रमुञ्चति ॥ १६ ॥

स उत्तरस्यामेव पयस्यायां मेषीमव दधाति। दक्षिणस्यां मेषमेवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमांसमुपशेते ॥ १७ ॥

स सर्व्वाण्येव हवींष्यध्वर्युः †। उत्तरस्यां व्वेदा-

* 'यद्यनैलकीरूर्णा'— इति सा०-सम्मतः पाठ इति डा० वेबरः। इहोत्तरत्र 'ऽअनैलकीर्न'— इति चैव मेव।

† 'र्युः'— इति घ, ङ।

वासादयत्यथैता मेव पयस्यां प्रतिप्रस्थाता दक्षिणस्यां वेदावासादयति ॥ १८ ॥

आसाद्य हवी७ष्यग्निं मन्थति। अग्निं मन्थित्वानुप्रहृत्याभिजुहोत्यथाध्वर्युरेवाहाग्नये समिध्य-मानायानुब्रूहीति ता ऽउभावेवेध्मावभ्याधत्त उभौ समिधौ परिशि७ष्ट ऽउभौ पूर्व्वावाघारावाघारयतो ऽथाध्वर्युरेवाहाग्निमग्नीत् सम्मृड्ढीत्यसम्मृष्ट मेव भवति सम्प्रेषितम् ॥ १९ ॥

अथ प्रतिप्रस्थाता प्रतिपरैति। स पत्नी मुदा-नेष्यन् पृच्छति केन चरसीति वरुण्यं वा ऽएतत् स्त्री करोति यदन्यस्य सत्यन्येन चरत्यथो नेन्मे ऽन्तः-शल्या * जुहवदिति तस्मात् पृच्छति निरुक्तं वा ऽएनः कनीयो भवति सत्य७ हि भवति तस्मादेव पृच्छति सा यन्न प्रतिजानीत ज्ञातिभ्यो हास्यैत-दहित७ स्यात् ॥ २० ॥

तां वाचयति। प्रघासिनो हवामहे मरुतश्च रिशादसः। करम्भेण सजोषस इति यथा पुरोऽनु-वाक्यैव मेषैतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति ॥ २१ ॥

---

* 'ऽन्तः प्रल्या'— इति घ, ङ।

तानि वै प्रतिपुरुषम् * । यावन्तो गृह्याः स्युस्तावन्त्येकेनातिरिक्तानि भवन्ति तत् प्रतिपुरुष मेवैतदेकैकेन या अस्य प्रजा जातास्ता वरुणपाशात् प्रमुञ्चत्येकेनातिरिक्तानि भवन्ति तद्या एवास्य प्रजा अजातास्ता वरुणपाशात् प्रमुञ्चति तस्मादेकेनातिरिक्तानि भवन्ति ॥ २२ ॥

पात्राणि भवन्ति । पात्रेषु ह्यशन मद्यते यवमयानि भवन्ति यवान् हि जक्षुषीर्व्वरुणो ऽगृह्णाच्छूर्पेण जुहोति शूर्पेण ह्यशनं क्रियते पत्नी जुहोति मिथुनादेवैतद्वरुणपाशात् प्रजाः प्रमुञ्चति ॥ २३ ॥

पुरा यज्ञात्पुराहुतिभ्यो जुहोति । अहुतादो वै व्विशो व्विशो वै मरुतो यत्र वै प्रजापतेः प्रजा व्वरुणगृहीताः परिदीर्णा अनत्यश्च प्राणत्यश्च शिश्रियिरे † च निषेदुश्च तद्धासां मरुतः पाप्मानं व्विमेथिरे तथो ऽएवैतस्य प्रजानां मरुतः पाप्मानं व्विमथ्नते तस्मात् पुरा यज्ञात् पुराहुतिभ्यो जुहोति ॥ २४ ॥

---

* 'षं'— इति घ, ङ ।

† 'श्रिश्रियिरे'—इति च इष्टो डा०-वेबरेण ।

स * वै दक्षिणेऽग्नौ जुहोति। यद् ग्रामे यदरण्य ऽइति ग्रामे वा ह्यरण्ये वैनः क्रियते यत्सभायां यदिन्द्रिय ऽइति यत्सभाया मिति यन्मानुष ऽइति तदाह यदिन्द्रिय ऽइति यद्देवत्रेति तदाह यदेनश्चकृमा व्वय मिदं तदवयजामहे स्वाहेति यत् किञ्च व्वय मेनश्चकृमेदं व्वयं तस्मात् सर्व्वस्मात् प्रमुच्यामह ऽइत्येवैतदाह ॥ २५ ॥

अथैन्द्रीं मरुत्वतीं जपति। यत्र वै प्रजापतेः प्रजानां मरुतः पाप्मानं व्विमेथिरे तद्धेत्वाश्चक्र ऽइमे ह मे प्रजा न व्विमथ्नीरन्निति ॥ २६ ॥

स एता मैन्द्रीं मरुत्वती मजयत्। क्षत्रं वा इन्द्रो व्विशो मरुतः क्षत्रं व्वै व्विशो निषेद्धा निषिद्धा † असन्निति तस्मादैन्द्री ‡ ॥ २७ ॥

मो षू णः। इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः। महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो व्वन्दते गीरिति § ॥ २८ ॥

---

* 'सा'—इति क, ग।

† 'निषिद्धा'—इति च दृष्टो डा०-वेबरेण।

‡ 'न्द्री'—इति घ, ङ।

§ 'गीरिति'—इति क, घ, ङ।

अथैनां वाचयति। अक्रन् कर्म कर्मकृत इत्य-क्रन् हि कर्म कर्मकृतः सह वाचा मयोभुवेति सह हि वाचाक्रन् देवेभ्यः कर्म कृत्वेति देवेभ्यो हि कर्म कृत्वास्तं प्रेत सचाभुव इत्यन्यतो ह्योढया सह भवन्ति * तस्मादाह सचाभुव इत्यस्तं प्रेतेति जघ-नार्धो वा ऽएष यज्ञस्य यत्पत्नी ता मेतत् प्राचीं यज्ञं प्रासीषदद् गृहा वा ऽअस्तं गृहाः प्रतिष्ठा तद् गृहेष्वेवैना मेतत् प्रतिष्ठायां प्रतिष्ठापयति ॥ २९ ॥

प्रतिपराणीयोदेति प्रतिप्रस्थाता †। सम्मृज-न्त्यग्निं सम्मृष्टे ऽग्नौ ता ऽउभावेवोत्तरावाघारावा-घारयतो ऽथाध्वर्युरेवाश्राव्य होतारं प्रवृणीते प्रवृतो होतोत्तरस्यै वेदेर्होतृषदन ऽउपविशत्युपविश्य प्रसौति ता ऽउभावेव प्रसृतौ स्रुच आदायाति-क्रामतोऽतिक्रम्याश्राव्याध्वर्युरेवाह समिधो यजेति यज-यजेति चतुर्थे-चतुर्थे प्रयाजे समानयमानौ नवभिः प्रयाजैश्चरतः ॥ ३० ॥

अथाध्वर्युरेवाहाग्नये ऽनुब्रूहीति। आग्नेय माज्य-

---

* 'भुवति'—इति क, ग; डा०-वेबरेण च दृष्टः।

† 'ता'—इति क, 'ता'—इति घ, ङ।

भागं ता उभावेव चतुराज्यस्यावदायातिक्रामतो ऽतिक्रम्याश्राव्याध्वर्युरेवाहाग्निं यजेति ता ऽउभावेव व्वषट्कृते जुहुतः ॥ ३१ ॥

अथाध्वर्युरेवाह सोमायानुब्रूहीति । सौम्य माज्यभागं ता ऽउभावेव चतुराज्यस्यावदायातिक्रामतो ऽतिक्रम्याश्राव्याध्वर्युरेवाह सोमं यजेति ता ऽउभावेव व्वषट्कृते जुहुतः ॥ ३२ ॥

तद्यत् किन्च व्वाचा कर्तव्यम् । अध्वर्युरेव तत् करोति न प्रतिप्रस्थाता तद्यदध्वर्युरेवाश्रावयतीहैव यत्र वषट् क्रियते ॥ ३३ ॥

कृतानुकर एव प्रतिप्रस्थाता । क्षत्त्रं वै व्वरुणो व्विशो मरुतस्तत् क्षत्त्रायैवैतद्विशं कृतानुकरा मनुवर्त्मानं करोति प्रत्युद्यामिनीᳫं ह क्षत्त्राय व्विशं कुर्याद्यदपि प्रतिप्रस्थाताश्रावयेत्तस्मान्न प्रतिप्रस्थाताश्रावयति ॥ ३४ ॥

पाणावेव प्रतिप्रस्थाता । स्रुचौ कृत्वोपास्ते ऽथाध्वर्युरेवैतैर्हविर्भिः प्रचरत्याग्नेयेनाष्टाकपालेन पुरोडाशेन सौम्येन चरुणा सावित्रेण द्वादशकपालेन वाष्टाकपालेन वा पुरोडाशेन सारस्वतेन चरुणा

पौष्णेन चरुणैन्द्राग्नेन द्वादशकपालेन पुरोडाशेन ॥ ३५ ॥

अथैताभ्यां पयस्याभ्यां प्रचरिष्यन्तौ व्विपरिहरतः। स यो मेषो भवति मारुत्यां तं व्वारुण्या मवदधाति या मेषी भवति व्वारुण्यां तां मारुत्या मवदधाति तद्यदेवं व्विपरिहरतः क्षत्रं व्वै वरुणो व्वीर्यं पुमान्वीर्य्य मेवैतत् क्षत्रे धत्तो ऽवीर्य्या वै स्त्री व्विशो मरुतस्तदवीर्या मेवैतद्विशं कुरुतस्तस्मादेवं व्विपरिहरतः ॥ ३६ ॥

अथाध्वर्युरेवाह व्वरुणायानुब्रूहीति। स उपस्तृणीत ऽआज्य मथास्यै व्वारुण्यै पयस्यायै द्विरवद्यति सो ऽन्यतरेणावदानेन सह मेष मवदधात्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्त्यवदाने ऽअतिक्रामत्यतिक्रम्याश्राव्याह व्वरुणं यजेति व्वषट्कृते जुहोति ॥ ३७ ॥

सव्ये पाणावध्वर्युः *। स्रुचौ कृत्वा दक्षिणेन प्रतिप्रस्थातुर्व्वा सो ऽन्वारभ्याह मरुद्भ्यो ऽनुब्रूहीत्युपस्तृणीत ऽआज्यं प्रतिप्रस्थाताथास्यै मारुत्यै

* 'र्युः'—इति घ, ङ।

पयस्यायै द्विरवद्यति सो ऽन्यतरेणावदानेन सह मेषी मवद्यात्यथोपरिष्टादाज्यस्याभिघारयति प्रत्यनक्तावदाने ऽअतिक्रामत्यथाध्वर्य्युरेवाश्राव्याह मरुतो यजेति व्वषट्कृते जुहोति ॥ ३८ ॥

अथाध्वर्य्युरेव कायेन *। एककपालेन पुरोडाशेन प्रचरति कायेनैककपालेन पुरोडाशेन प्रचर्याध्वर्य्युरेवाहाग्नये स्विष्टकृते ऽनुब्रूहीति स सर्व्वेषा मेव हविषा मध्वर्युः सकृत्सकृदवद्यत्यथैतस्या ऽएव पयस्यायै प्रतिप्रस्थाता सकृदवद्यत्यथोपरिष्टाद् द्विराज्यस्याभिघारयतस्ता ऽउभावेवातिक्रामतो ऽतिक्रम्याश्राव्याध्वर्य्युरेवाहाग्निᳲ स्विष्टकृतं यजेति ता ऽउभावेव वषट्कृते जुहुतः ॥ ३९ ॥

अथाध्वर्य्युरेव प्राशित्र मवद्यति। इडाᳲ समवदाय प्रतिप्रस्थात्रे ऽतिप्रजिहीते तत्रापि प्रतिप्रस्थाता मारुत्यै पयस्यायै द्विरभ्यवद्यत्यथोपरिष्टाद् द्विराज्यस्याभिघारयत्युपहूय मार्जयन्ते ॥ ४० ॥

अथाध्वर्य्युरेवाह ब्रह्मन् प्रस्थास्यामि। समिध माधायाग्नि मग्नीत्संमृड्ढीति स स्रुचोरेवाध्वर्युः पृष-

---

* 'कायेन' – इति घ, ङ।

दाज्यं व्यानयते ऽथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवति तत्स द्वेधा व्यानयत ऽउतो तत्र पृषदाज्यं न भवति स यदेवोपभृत्याज्यं तत् स द्वेधा व्यानयते ता ऽउभावेवातिक्रामतो ऽतिक्रम्याश्राव्याध्वर्युरेवाह देवान्यजेति यज-यजेति चतुर्थे-चतुर्थेऽनुयाजे समानयमानौ नवभिरनुयाजैश्चरतस्तद्यन्नवप्रयाजं भवति नवानुयाजं तदुभयत एवैतद्वरुणपाशात् प्रजाः प्रमुञ्चतीतश्चोर्ध्वा इतश्चावाचीस्तस्मान्नवप्रयाजं भवति नवानुयाजम् ॥ ४१ ॥

ता ऽउभावेव सादयित्वा स्रुचौ व्यूहतः। स्रुचौ व्यूह्य परिधीन्त्समज्य परिधि मभिपद्याश्राव्याध्वर्युरेवाहेषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति सूक्तवाकꣳ होता प्रतिपद्यते ऽथैता ऽउभावेव प्रस्तरौ समुल्लुम्पत ऽउभावनुप्रहरत उभौ तृणे ऽअपगृह्योपासाते यदा होता सूक्तवाक माह * ॥ ४२ ॥

अथाग्नीदाहानुप्रहरेति। ता ऽउभावेवानुप्रहरत ऽउभावात्माना ऽउपस्पृशेते ॥ ४३ ॥

---

* 'माह'—इति घ, ङ।

अथाह संवदस्वेति। अगानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शं योर्ब्रहीत्यध्वर्युरेवैतदाह ता उभावेव परिधीननुप्रहरत उभौ स्रुचः सम्प्रगृह्य स्फ्ये सादयतः ॥ ४४ ॥

अथाध्वर्युरेव प्रतिपरेत्य। पत्नीः संयाजयत्युपास्त एव प्रतिप्रस्थाता पत्नीः संयाज्योदैत्यध्वर्युः * ॥ ४५ ॥

त्रीणि समिष्टयजूंषि जुहोति। तूष्णी मेव प्रतिप्रस्थाता स्रुचं प्रगृह्णाति तद्वै वैश्वदेवेन यजमानयोर्व्वाससी परिहिते स्यातां ते एवात्रापि स्याता मथास्यै व्वारुण्यै पयस्यायै त्तामकर्षमिश्र मादायावभृथं यन्ति व्वरुण्यं व्वा एतन्निर्व्वरुणतायै तत्र न साम गीयते न ह्यत्र साम्ना किञ्चन क्रियते तूष्णी मेवेत्याभ्यवेत्योपमारयति ॥ ४६ ॥

अवभृथ निचुम्पुण। निचेरुरसि निचुम्पुणः †। अव देवैर्देवकृत मेनो यासिष मव मर्त्यैर्मर्त्त्यकृतं पुरुराव्णो देव रिषस्पाहीति कामं हैते यस्यै

* 'दैत्यध्वर्युः'—इति ग-पाठः, डा०-वेबरदृष्टश्च।

† 'णः'—इति घ, ङ।

कामयेत तस्मै दद्यान्न हि दीक्षितवसने भवतः स यथाहिस्त्वचो निर्मुच्येतैवꣳ सर्व्वस्मात् पाप्मनो निर्मुच्यते ॥ ४७ ॥

अथ केशश्मश्रू वप्त्वा । समारोह्याग्नी ऽउदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञ ऽइव वा ऽएष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत् पौर्णमासं तत् क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति ॥ ४८ ॥ ३ ॥

॥ इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् [ ५. २. ] ॥

विधित्सितस्य वरुणप्रघासाख्यस्य * द्वितीयस्य पर्वणो वरुणपाशविमोचनहेतुत्व माख्यायिकया प्रतिपादयंस्तद्विधि मुन्नयति † — "वैश्वदेवेन वा इत्यादिना । पुरा वैश्वदेवयागेन प्रजापतिना सृष्टाः 'प्रजाः' वरुणसम्बन्धिनो 'यवान्' 'जक्षुः' भक्षयामासुः । यवस्य वरुणदेवत्यत्व माह— "वरुण्यो हेति । 'अग्रे' सृष्टिसमये सृज्यमानः 'यवः' वरुणसम्बन्धी 'एव' अभवत् । अतो यवो वरुणस्य स्वभूतः । तत्प्रसङ्गात् वरुणप्रघासोऽस्य नाम निर्वृत्तम् ।

---

* पुरस्तात् २५६ पृ० * टीप्पनी द्रष्टव्या ।

† 'मुपनयति'—इति च ।

"तद्यदिति। 'तत्' तथा सति 'यत्' यस्मात् 'एव' कारणात् 'वरुणस्य' स्वभूतान् 'यवान्' 'प्रादन्' प्रकर्षेणाभक्षयन्, 'तस्मात्' वरुणसम्बन्धियवप्रघासनात् 'प्रजाः' 'वरुणप्रघासाः'। तत्पाश-गृहीतानां तासां पाशविमोचनाय क्रियमाणा यागा अप्युपचारेण वरुणप्रघासाख्याः सञ्जाता इत्यर्थः। 'जक्षुः'-इति, अदेर्लिटि लुङि च 'लुङ्सनोर्घस्लृ"-"लिट्यन्यतरस्याम्"-इति * घस्लादेशे रूपम् ॥ १ ॥

यवादनानन्तरं वरुणकृत्य माह— "ता इति। 'परिदीर्णाः' परितो दीर्णाः, परितो दीर्यमाणावयवाः। "दॄ विदारणे"-इति, † अस्मात् निष्ठायां "श्र्युकः किति"-इति ‡ इट्-प्रतिषेधः, "ॠत इद्धातोः"-इतीत्वम् §, "ल्वादिभ्यः"-इति ‖ निष्ठातकारस्य नकारः। "अनत्यश्चेत्यादि। वरुणपाशग्रहणादेव हेतोः 'अनत्यः' चेष्टमानाः, हस्तपादादिधूननं कुर्वाणाः, 'प्राणत्यश्च' प्राणनव्यापारं श्वासोच्छ्वासादिलक्षणं कुर्वत्यः, 'शिश्यिरे च, निषेदुश्च' शयनासनाभ्या मेव कालं नीतवत्यः, न पुनर्व्यापारान्तरक्षमा बभूवुरित्यर्थः। "प्राणोदानौ हेत्यादि। 'आभ्यः' प्रजाभ्यः सकाशात् केवलं प्राणोदानावेव 'नापचक्रमतुः'; 'अन्याः' तु 'सर्वाः' वाक्चक्षुरादीन्द्रियाधिष्ठातृदेवता अग्न्याद्याः 'आभ्यः' प्रजाभ्योऽपक्रान्ताः; आसा मिन्द्रियपाटव मपि प्रभ्रष्ट मित्यर्थः। "तयोर्हैवेति। 'तयोः' प्राणापानयोरेवानपक्रमणाद्धेतोः 'अस्य' प्रजापतेः 'प्रजाः' 'न पराबभूवुः' न विनष्टाः ॥ २ ॥

---

* अदा० प० १ धा०। पा० सू० २. ४. ३७, ४०।

† क्र्या० प० २० धा०। ‡ पा० सू० ७. २. ११।

§ पा० सू० ७. १. १००। ‖ पा० सू० ८. २. ४४।

"ता एतेनेत्यादि। वरुणपाशग्रहणजनित मुक्तविधं प्रकार मालोक्य 'प्रजापतिः' 'एतेन' वरुणप्रघासाख्येन 'हविषा' 'ताः' प्रजाः 'अभिषज्यत्' अचिकित्सत्। "भिषज् चिकित्सायाम्"— इति धातुः *। तेन च भेषजेन 'जाताः' 'अजाताः' जनिष्यमाणा- श्चोभयविधाः 'प्रजाः' 'वरुणपाशात्' 'प्रामुञ्चत्'। तस्य विमोचने सति 'अस्य' प्रजापतेः प्रजाः 'अनमीवाः' रोगरहिताः, 'अकिल्वि- षाः' रोगनिदानभूतपापरहिताश्च अभवन्नित्यर्थः ॥ ३ ॥

विधत्ते— "अथ यदिति। 'अथ'-शब्दो वैश्वदेवानन्तर्य्ये। 'एषः' यजमानः वैश्वदेवानन्तरं 'चतुर्थे मासि' ( सम्पूर्णे सति † ) 'एतैः' वक्ष्यमाणैर्हविर्भिः 'यजते' ‡। अप्राप्तार्थत्वाद् वर्त्तमान- निर्देशः। विधिरुन्नेतव्यः। यच्छब्दो हेतौ ; यस्माद्वरुणप्रघासैर्यजते, 'तत्' तस्मात्। 'अह', 'नु', 'एव'— इति निपाताः। 'नैव' खलु 'एतस्य' यजमानस्य 'प्रजाः' तथा 'वरुणो गृह्णाति इति'।

"देवा इत्यादि। पुरा खलु 'देवाः' एव मेव वरुणप्रघासम् 'अकुर्वन्'। 'तु'-शब्दोऽप्यर्थः। 'एषः' अपि यजमानः 'इति' एवम् 'एव' 'एतत्' एतर्हि 'करोति'।

इत्थं मनुष्यकर्त्तृकयागस्य देवकर्त्तृकेन योगेन साम्यात् तादृक्- फलसाधनत्व माह— "याश्चेति। उक्तार्थ मेतत्। "तस्माद्वा इति, वरुणप्रघासविधेर्निगमनम् ॥ ४ ॥

---

* भिषज्यतिः कण्ड्वादिः।

† एते पदे च-पुस्तकादन्यत्र न दृश्येते।

‡ "अथ यश्चतुर्षु चतुर्षु मासेषु स चातुर्मास्ययाजी। वसन्ते वैश्वदेवेन यजेत, प्रावृषि वरुणप्रघासैः, शरदि शाकमेधैः"—इति आप० श्रौ० सू० ८, ४, १३। का० श्रौ० ५, २, १८, २० सूत्रे चेह विवेक्तव्ये।

तेषु वरुणप्रघासेषु चोदकतो वेदेराहवनीयस्य चैकत्वे प्राप्ते द्वित्वं विधत्ते— "तद्वै द्वे इति * । 'तत्' तत्र वरुणप्रघासेषु । वेद्याहवनीययोर्द्वित्व मनूद्य प्रयोजनकथनेन स्तौति— "तद्य-दिति । दक्षिणत उत्तरतश्च स्थिताभ्यां वेदिभ्या मग्निभ्याम्, 'तदुभयतः' दक्षिणत उत्तरतश्च पार्श्वद्वयादेव 'वरुणपाशात्' 'प्रजाः' 'प्रमुञ्चति' । "इतश्चोर्द्ध्वा इति प्रागुक्तार्थम् † ॥ ५ ॥

उत्तरवेदिनिवपनं विधत्ते— "स इति । द्वयोर्वेद्योर्या 'उत्तरा' उत्तरदिगवस्थिता तस्या मेव वेद्या माहवनीयायतने 'उत्तरवेदिम्' 'उपकिरति' उपक्षिपति । एवकारयोर्व्यावर्त्त्यं दर्शयति— "न दक्षिणस्या मिति । 'दक्षिणस्यां' वेदौ उत्तरवेदिः 'न' कार्येत्यर्थः । तच्चोत्तरवेदिनिर्माणं सूत्रकृतापि दर्शितम्— "उत्तरवेदिं निव-पति उत्तरस्यां, शम्या मादाय चात्वालं मिमीते"–इति ‡ ॥

तदेतत् स्तौति— "क्षत्रं वा इति । "यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः"–इति अग्रे समाम्नास्यते § ; अतो वरुणो देवेषु मध्ये क्षत्रियः, मरुतो देवविशः । तत्रोत्तरस्या मादौ वरुण इज्यते दक्षिणस्यां मरुतः । अत एवेदानीं लोके तथा दृश्यत इति प्रसिद्धि मुदाहरति— "तस्मादिति ॥ ६ ॥

वैश्वदेवे पर्वणि आदितो यान्याग्नेयादीनि पञ्च हवींषि ‖, तान्यत्रापि विधत्ते— "अथैतानीति । अयोगव्यवच्छेदार्थ

---

* का० श्रौ० सू० ५. ३. ६–१८ ।

† पुरस्तादिहैव २७०पृ० १८ पं० द्रष्टव्यम् ।

‡ का० श्रौ० सू० ५. ३. १९, २० । तत्रान्यथापि द्रष्टव्यम् ( ३३ सू० ) ।

§ शत० ब्रा० १४. ४. २. २३ ।

‖ पुरस्तादिहैवाध्याये १ ब्रा० अष्टमकण्डिकातो द्रष्टव्यानि ।

एवकारः। तदेतत् स्तौति— "एतैर्वा इति। एतानि वरुणपाशविमोचने विहितानि हवींषि प्रजापतिः साधनत्वेन यतः प्रागुक्तवान्, अतोऽत्रापि तेषा मनुष्ठान मुपपन्न मित्यर्थः। "इतश्चोर्द्धा इति, व्याख्यातम् * ॥ ७ ॥

षष्ठं भागं विधत्ते † — "अथैन्द्राग्न इति। तत् प्रशंसति— "प्राणोदानावित्यादिना। "तद्यथेति। तत्र लोके यथा 'पुण्यं' शोभन मुपकारं कृतवति प्रत्युपकाररूपं 'पुण्य'' शोभनं 'कुर्यात्', 'एवम्' एव तदिन्द्राग्न्योर्हविर्निर्वपणम्। ताभ्यां कृत मुपकारं दर्शयति— "तयोरिति। प्राणोदानात्मकयोस्तयोरवस्थानादेव कारणात् 'अस्य' प्रजापतेः 'प्रजा न पराबभूवुः'। प्रागाम्नातम्— "प्राणोदानौ हैवाभ्यो नापचक्रमतुः"–इति ‡। "तत् प्राणोदानाभ्या मित्यादि। 'तत्' तस्मात् प्राणोदानरूपयोरिन्द्राग्न्योर्यागाभ्याम् 'एव' 'एतत्' 'प्रजाः' वरुणपाशगृहीताः चिकित्सति, तौ 'प्राणोदानौ' एव तासु 'प्रजासु' स्थापयति। "तस्मादिति, प्रतिपादितार्थनिगमनम् ॥ ८ ॥

वेदिद्वयेऽपि पयस्यां विधत्ते— "उभयत्रेति §। 'उभयत्र' अध्वर्युकर्त्तृकाया मुत्तरस्यां वेद्यां प्रतिप्रस्थातृकर्त्तृकायां दक्षिणस्यां च। ( द्वे ‖ ) 'पयस्ये' हविषी 'भवतः'। वरुणपाश-

---

* पुरस्तादिहैव २७० पृ० १८ पं० द्रष्टव्यम्।

† 'षष्ठ' हविरैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति'—इति का० श्रौ० ५. ४. २३सू०। ‡ अत्रैव २७२ पृ० १४ पं०।

§ 'अवरोक्त मुत्तरम्'—इति का० श्रौ० सू० १, १०, ५। "दक्षिणं प्रतिप्रस्थातुः"—इति च का० श्रौ० सू० ५. ४, २५।

‖ च-पुस्तकादन्यत्र नैतत् पद मस्ति।

विमोचनानुकूल्यं पयस्यायाः प्रतिपादयति— "पयसो वा इति। पुरा प्रजापतिना सृष्टाः 'प्रजाः' तदीयस्तन्यरूपात् 'पयसः' 'सम्भूताः' वर्द्धिताः, इदानी मपि मानुषाः स्तन्यरूपात् पयस इव 'सम्भवन्ति' वर्द्धन्ति। "तद्यत एवेति, अस्यार्थस्यानुवादः। 'तत एव' सम्भूतिहेतोः 'पयसः' कारणात् 'उभयतः' दक्षिणत उत्तरतश्च पार्श्वद्वयात्, प्रजानां वरुणपाशविमोचनं कृतवान् भवति ॥ ९ ॥

अध्वर्युकर्त्तृकायाः पयस्याया देवतां विधाय स्तौति— "वारुणीति *। उत्तरस्यां वेद्यां या पयस्या, सा वरुणदेवताका कार्या। "तत् प्रत्यक्ष मिति। देवतान्तरयागेन वरुणपाशविमोचनं परोक्षम्, वरुणदेवताकेन तु यागेन 'तत्' पाशविमोचनं 'प्रत्यक्षम्' एवेति वरुणदेवताकत्वं युक्ततर मित्यर्थः।

प्रतिप्रस्थातृकर्त्तृकायाः पयस्याया देवतां विधाय स्तौति— "मारुती † दक्षिणेति। दक्षिणस्यां वेदौ क्रियमाणा पयस्या मरुद्देवताका भवेत्। "अजामिताया इति। वरुणदेवतां परित्यज्य 'अस्याः' पयस्याया यत् मरुल्लक्षणदेवतान्तरकरणम्, तत् जामितादोषराहित्याय भवति। व्यतिरेकेण तदेवाह— "जामीति। 'यद्' यदि 'उभे' अपि दक्षिणोत्तरपयस्ये वरुणदेवताके 'स्याताम्', तदा प्रयुक्तस्या एव देवतायाः पुनःप्रयोगो नवीकरणाभावात् अलसतारूपजामितादोषः स्यादित्यर्थः।

मारुतत्वे कारणान्तर माह— "अतो ह वा इति। 'अतः' अस्मद्वक्ष्यमाणादपि हेतोः दक्षिणा पयस्या मारुती कार्या। अस्य हि प्रजापतेः सम्बन्धिनी प्रजा पुरा दक्षिणतः स्थितानां मरुता

* 'वारुणी अध्वर्योः'—इति का० श्रौ० ५. ४. २३ सू० या० दे०।

† "मारुती सह्यान्यां प्रतिप्रस्थाता दक्षिणस्याम्"—इति का० श्रौ० ५. ५. ५।

मुपशमनाय दक्षिणतः क्रियमाणैषा पयस्या मारुती कार्येत्यर्थः ॥ १० ॥

करीराणा मावपनं विधाय स्तौति – "तयोरिति । तयोरुभयोः पयस्ययोः करीराणि प्रक्षिपेत् * । मधुराः फलविशेषाः करीराणि ; तानि चोत्तरापथे प्रसिद्धानि † । "कं वा इत्यादि । 'करीरैः' एतैः करीरफलैः 'प्रजापतिः' 'प्रजाभ्यः' अस्माकं 'कं' सुखम् 'अकुरुत' तस्मादिदानी मप्येष यजमानस्तदावपनेन सुख मेव प्रजाभ्यः कुरुते ॥ ११ ॥

शमीपर्णाना मावपनं विधत्ते — "तयोरिति । 'शमीपलाशानि' शम्याः पर्णानीत्यर्थः । "शं वा इत्यादि । 'शम्' उपद्रवाणां शमन मित्यर्थः । स्पष्ट मन्यत् । अत एवोक्तं कात्यायनेन — "उभयोः करीराण्यावपति शमीपलाशमिश्राणि"–इति ‡ ॥ १२ ॥

अथाग्निमह्न विधत्ते — "अथ काय इति । कः प्रजापतिर्देवता अस्य, 'सास्यदेवता'–इत्यणि § "कस्येत्"–इति ‖ 'क'-

---

* "वाजिने निषिच्योभयोः करीराण्यावपति"–इति का० श्रौ० सू० ५. ५. १ । "यतीना मवद्यमानानां शीर्षाणि परापतन् ते खर्जूरा अभवन् तेषां रसऊर्द्ध्वोऽपतत्तानि करीराण्यभवन्सौम्यानि वै करीराणि सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति यत् करीराणि भवन्ति"– इति तै० सं० २. ४. ६. ४ ।

† राजस्थान प्रदेशीय जयपुर पत्तनादावपि बहु जायन्त इमानि सुमिष्टक्षुद्रफलानि ; व्यवह्रियन्ते चैतदामानि शाकार्थ मपीति दृष्टम् ।

‡ का० श्रौ० सू० ५. ५. १ । "शमी नाम कण्टकी वृक्षः, तस्य पर्णानि शमीपलाशानि । करीरोऽपि अपर्णः कण्टकीवृक्षः, तस्य फलानि करीराणि । शमीपर्णानां करीरफलानाञ्च तुल्यत्वम्"–इत्यादि च तत्र या० दे० ।

§, ‖ पा० सू० ४. २. २४, २५ ।

शब्दस्येकारान्तादेशः। एतस्य हविषः प्रयोजनमाह— "कं वा इति। सुखात्मको हि प्रजापतिः 'क'-शब्दवाच्यः। अतस्तद्देवताकेन यागेन सुखकारणमुपपन्नमिति भावः ॥ १३ ॥

करम्भपात्राणां निर्माणं विधत्ते— "अथ पूर्वेद्युरिति। यस्मिन् दिवसे वरुणप्रघासयागः, ततः 'पूर्वेद्युः' पूर्वे दिवसे। "अन्वाहार्यपचने इति। अन्वाहार्यो नामेष्टिः। दक्षिणदिग्भागे मरुतो 'जिघांसन्' हन्तुमैच्छन्; तान् प्रजापतिरेतेन पयस्यारूपेण भागेन 'अशमयत्' शमितवानिति यावत्, तस्माद्। दक्षिणात्वेन देय ओदनो यस्मिन् पच्यते स तथोक्तः। तस्मिन् दक्षिणाग्नौ 'अतुषान्' तुषरहितान् 'कृत्वा', सम्भृष्य 'तान्' 'ईषदिव' अत्यल्पमिव 'उपतप्य' अपयित्वोदकेनालोड्य, तैः 'करम्भपात्राणि' भ्रष्टयवचूर्णाः * करम्भाः, तन्मयानि पात्राणि 'कुर्वन्ति' अध्वर्य्युयजमानादयः †। कियन्ति तानि पात्राणीत्यपेक्षायामाह— "यावन्त इति। यावत्सङ्ख्याका यजमानस्य 'गृह्याः' स्वगृहे वर्त्तमानाः पुत्रपौत्रादिरूपा ज्ञातयो भवेयुः, 'तावन्ति' तावत्सङ्ख्याकानि करम्भपात्राणि कार्य्याणि। तानि च जनिष्यमाणापत्यार्थम् 'एकेन' 'अतिरिक्तानि' अधिकानि कार्य्याणि ‡ ॥ १४ ॥

करम्भपात्रावशिष्टाद् यवपिष्टादेव मेषमेषीलक्षणमिथुनस्य

---

* 'पिष्टचूर्णाः'—इति च।

† करम्भो दध्ना संयुताः सक्तवः, तन्मयानि पात्राणि करम्भपात्राणीति का० श्रौ० ५.५.२ सू० या० दे०।

‡ "यावन्तो यजमानगृह्या एकाधिकानि"—इति का० श्रौ० सू० ५.३.३। तत्र इतोऽतिरिक्ते चेमे सूत्रे— "प्रजायां वा जातश्रुतेः, त्रीणि वा नित्यत्वात्"—इति ४, ५।

निर्माणं विधत्ते—"तत्रापीति । 'अपि'-शब्द एवकारार्थः । 'तत्र' करम्भपात्रनिर्माणसमये एव , तेनैव पिष्टेन मेषमेष्यौ कर्त्तव्ये * । "तयोरिति । सम्भूयानुदितयोः । 'मेषे च मेष्याञ्च' इति पृथगुपादानं विस्पष्टार्थम् । "यद्यनैडकीः †" इति । एड़को ‡ मेषः, तत्सम्बन्धरहिता अनैड़क्यः, 'ऊर्णाः' कम्बलोपादानभूतानि तज्जातीयानि रोममयानि § सूत्राणि । यदि तास्तथाविधा ऊर्णाः 'विन्देत्' लभेत, तदा 'ताः' 'प्रणिज्य' प्रक्षाल्य, तयोः मेषमेष्योः 'निश्लेषयेत्' संश्लेषयेत् ‖ । 'यद्यु' यदि खलु "अनैड़कीः" ऊर्णाः "न विन्देत्" न लभेत, तर्हि "कुशोर्णा एव स्युः" कुशमया एवोर्णाः , तयोः संश्लेषणीयाः भवेयुः ¶ ॥ १५ ॥

मेषमेष्योः करण मनूद्य स्तौति—"तद्यदिति । "वरुणस्य पशुर्यन्मेष इति । 'यद्' 'एषः' खलु 'प्रत्यक्षं' 'वरुणस्य' हविर्भूतः 'पशुः' । अत एव पश्वेकादशिन्याम् "अधोरामः सावित्रो वारुणः कृष्ण एकशितिपात् पेत्वः"—इत्याम्नायते ** । पेत्वो विगतपुंस्को मेष इति हि तत्रार्थः । "यवान् हीति । 'हि' यस्माद् 'यवान्' 'जक्षुषीः' भक्षितवतीः प्रजाः 'वरुणः' "अगृह्णात्", अतस्तद्यवप्रत्यर्पणाय मेषमेष्योर्यवत्वं सम्पद्यत इत्यर्थः ।

---

* का० श्रौ० सू० ५. ३. ६ । निस्तुषा मभृष्टयवकरम्भस्यैव मेष मेषाकार प्रतिरूपकम् मेषी मेषाकारां प्रतिकृतिञ्च करोति"—इति या० दे० ।

†, ‡ 'नैलकीः', 'एलको' च ।

§ तज्जातीयरोममयाणि'—इति च ।

‖ का० श्रौ० सू० ५, ३. ७ ।

¶ का० श्रौ० सू० ५. ३. ८

** वा० सं० २९, ५८

तयोः स्त्रीपुंस्वरूपता मनूद्य स्तौति— "मिथुनौ भवत इति। 'मिथुनाद्'–इत्येतद् 'वरुणपाशाद्'–इत्यस्य विशेषणम्। द्वैरूप्याधिकरणाद् दक्षिणस्यां मेषो न मोचनहेतुः * ॥ १६ ॥

अथ तयोः प्रक्षेपं विधत्ते— "स इति। अध्वर्युकर्त्तृकायाम् 'उत्तरस्याम् पयस्यायां' 'मेषीम्' 'अवदधाति' प्रक्षिपति। प्रतिप्रस्थातृकर्त्तृकायां 'दक्षिणस्यां' 'मेषं' प्रक्षिपति। अनयोर्दक्षिणोत्तरभावं लोकन्यायेनोपपादयति— "एव मिवेति † ॥ १७ ॥

हविषा मासादनं विधत्ते— "स सर्वाण्येवेति। आग्नेयादीनि 'सर्वाण्येव हवींषि' 'उत्तरस्यां' 'वेदौ' वेद्यां 'सः अध्वर्य्युः' 'आसादयेत्', 'प्रतिप्रस्थाता' तु 'एताम्' मारुतीं 'पयस्या मेव' 'दक्षिणस्यां' वेद्या मासादये दित्यर्थः ‡ ॥ १८ ॥

हविरासादनोत्तरकाल मग्निमन्थनं विधत्ते— "आसाद्येति। "अग्निं मथित्वेत्यादि। अग्निमन्थनानन्तरजातम् 'अग्निम्' आहवनीये "भवतन्नः"–इति § मन्त्रेण 'अनुप्रहृत्य' प्रक्षिप्य, "अग्नावग्निः"–इति ‖ मन्त्रेणाभिजुहुयात्। एतच्चाग्निमन्थनादिकम् ¶ 'अध्वर्य्युः' एकः 'एव' कुर्य्यात्; न प्रतिप्रस्थातेत्यभिप्रायः। दक्षिणोत्तरयोरुभयोरप्याहवनीययोराहुत्यधिकरणत्वेनेध्मादीनां समिन्धनीयत्वात् तद्धेतुभूतः सामिधेनीप्रैषोऽपि अध्वर्य्युप्रतिप्रस्थातृभ्या मुभाभ्यां प्रयोक्तव्य इत्याशङ्क्याह— "अथाध्वर्य्युरेवेति। 'एव'-कारः

---

* का० श्रौ० सू० ५, ५, २, ३।

† का० श्रौ० सू० ५, ५, ५। ‡ का० श्रौ० सू० ५, ५, ४।

§ वा० सं० ५, ३। ‖ वा० सं० ५, ४।

¶ "अग्नये मथ्यमानायानुवाचयति, मन्थति गायत्रेणेति ( का० श्रौ० ५, २, )"–इत्यादीनि सूत्राणीहालोच्यानि।

प्रतिप्रस्थातृव्यावृत्त्यर्थः। एकस्याहवनीयस्य देशभेदेन द्विधावस्थानात्, प्रतिप्रस्थातुराहवनीयान्तराभावात्, प्रैषस्य च होतुरुभयत्रैकत्वाद्, अध्वर्य्युणोच्यमान एव प्रैष उभयत्रोपकरोति, ता उभौ समिधावित्यभिप्रायः। इध्माधानादिकन्तु ताभ्यां समनुष्ठेय मित्याह— "ता उभाविति। 'तौ' अध्वर्य्युप्रतिस्थातारौ 'उभौ'। अथाध्वर्य्योरेव कर्त्तव्य माह— अथाध्वर्युरेवेति। हे 'अग्नीत्!' 'अग्निम्' आहवनीयं 'सम्मृड्ढि' सम्मार्जनेन संस्कुरु। "असंसृष्ट मेवेति। करम्भपात्राणां होमस्य कालविधिः। अग्नि मग्निदिति सम्प्रैषे कृते तदर्थत्वात् आग्नीध्रेणानुतिष्ठत इत्यर्थः * ॥ १९ ॥

तस्य च करम्भपात्राणां होमस्य पत्नीकर्त्तृकत्वं विधित्सुस्तस्यासम्भावितस्य पुरुषान्तरसम्मतिजनितस्यैनसः प्रश्नं दर्शयति— "अथ प्रतिप्रस्थातेति। अग्नि मग्नीदिति सम्प्रैषानन्तरं 'प्रतिपरैति' निवर्त्तते, पत्नी यत्रास्ते तं देशं प्रतिगच्छेदित्यर्थः। 'सः' च प्रतिप्रस्थाता 'पत्नीम्' 'उदानेष्यन्' उदागमयिष्यन्। तां पत्नीं 'पृच्छन्ति',— त्वं 'केन' जारेण 'चरसि' वर्त्तसे 'इति' †। पुरुषान्तरसङ्गतेर्दोषान्तरता माह— "वरुण्य मिति। येन पापेन हेतुना वरुणपाशबन्धो भवति, तत् पापं 'वरुण्यम्'। 'अन्यस्य' पुरुषस्य पत्नी 'सती', 'अन्येन' पुरुषान्तरेण सह 'चरति' वर्त्तते यत्, एतत् वरुण्य मेव 'स्वीकरोति'। प्रष्टुः प्रतिप्रस्थातुरभिप्राय माह— "अथो इति। 'अथो' अपि च एषा पत्नी 'अन्तःशल्या ‡' शरीरमध्ये दुश्चरितजनितेन पापरूपेण शल्येन § युक्ता सती 'न इत्' नैव 'मे' मदीयेऽग्नौ 'जुहवत्' 'इति'। 'तस्मात्' कृतस्य

---

* का० श्रौ० सू० ५. ५. ६ क। † का० श्रौ० सू० ५. ५. ६ ख।

‡, § 'शल्या', 'शल्येन' च।

पापस्य कनीयस्त्वम्। "तस्माद् वेवेति। 'उ'-शब्दोऽपीत्यर्थे, 'एव'-कारो भिन्नक्रमः। तस्मादपि कारणात् पृच्छत्येवेत्यर्थः *।

विपक्षे बाधोपन्यासेन पत्न्या अपि यथार्थभाषणं कर्त्तव्य मिति विधत्ते— "सेति। 'यत्' यदि 'सा' पत्नी पृष्ट मर्थं 'न प्रतिजानीत' न प्रतिब्रूयात्, 'तत्' तदा, 'अस्यै' षष्ठ्यर्थे चतुर्थी, अस्याः पत्न्याः 'ज्ञातिभ्यः' 'अहितम्' अनिष्टं स्यात्, तस्माद् वस्तुतो विद्यमानं वृत्तान्त माचक्षीतेत्यर्थः। तैत्तिरीयकेऽप्या-म्नायते— "यज्जारं सन्तं न प्रब्रूयात्, प्रियं ज्ञातिꣳ रुन्ध्यात्, असौ मे जार इति निर्दिशेदिति †। तदुक्तं कात्यायनेन — "प्रति-प्रस्थाता पत्नी मानेष्यन्नाह केन चरसीति संस्तुतानाचष्टे"–इति ‡। संस्तुताः परिज्ञाता जारा इत्यर्थः ॥ २० ॥

तस्या वाचनं विधत्ते — "तां वाचयतीति। "प्रघासिनः" –इत्यादिर्वाचनीयो मन्त्रः §। तस्याय मर्थः— 'प्रघासिनः' प्रघासः प्रघसनीयं भोज्यं हविः, तद्वतो 'मरुतः' "शुक्रज्योतिश्च चित्रज्योतिश्च"–इत्यादिना प्रतिपादितनामधेयान् एकोनपञ्चा-शत्सङ्ख्याकान् देवान् 'हवामहे' आह्वयामः। यतो 'रिशादसः' रिशाः हिंसकाः शत्रवः, तेषां निरसितारः। 'करम्भेण' करम्भ-

---

* पत्नी एतावन्तो मे जारा इति नामग्राहं कथयति, असुना असुना जारेण सह चरामीति वा; नो चेन्नान्येनेति। यदि लज्जादि-वशात् न कथयति, प्रति जारं तृणानि उद्गृह्णाति। का० श्रौ० ५.५, ७—१० सू० इत्यादिषु द्रष्टव्यम्।

† तै० ब्रा० १.६.५, २।

‡ का० श्रौ० सू० ५, ५.६, ७।

§ वा० सं० ३, ४४, १।

पात्ररूपेण हविषा 'सजोषसः' समानप्रीतयश्च भवन्ति, तान् मरुत इति।

एतन्मन्त्रं पुरोऽनुवाक्यानुवचनसादृश्येन स्तौति— "यथेति। 'पुरोनुवाक्या' हि यक्ष्यमाणदेवताह्वानार्था, 'एवम् एव' 'एषा' प्रघासिन इत्यृक्। अतः 'एतया एव' 'एतान्' मरुतः 'एतेभ्यः' 'पात्रेभ्यः' करम्भपात्रेभ्यः 'ह्वयति' होष्यमाणं करम्भपात्रलक्षणं हविर्भोक्तु माह्वयतीत्यर्थः ॥ २१ ॥

"करम्भपात्राणि कुर्वन्ति यावन्तो गृह्याः स्युस्तावन्ति"—इति वाक्येन प्राग्विहितम् *, तदनु स्तौति – "तानि वा इति। 'प्रतिपुरुषं' पुरुषं पुरुषं प्रत्येकैकं करम्भपात्रं भवति। यावन्त इत्याद्युक्तार्थम्। पुरुषसङ्ख्यया पात्रनिर्माणस्य प्रयोजन माह— "तत् प्रतिपुरुष मिति। 'अस्य' यजमानस्य 'याः प्रजाः जाताः', 'ताः' 'प्रतिपुरुषं' प्रत्येकम् 'एकैकेन' पात्रेण 'वरुणपाशात्' 'प्रमुञ्चति'। एतदतिरिक्ततामनूद्य स्तौति— "एकेनेति। जनिष्यमाणानां प्रजानां वरुणपाशविमोचनार्थ मेक मतिरिक्तं कर्त्तव्य मित्यर्थः ॥ २२ ॥

पुरोडाशादिरूपतां विहाय पात्ररूपेण निर्माण मुपपादयति— "पात्राणीति। 'हि' यस्मात् 'पात्रेषु' कांस्यादिनिर्मितेषु 'अशनम्' अन्नम् 'अश्यते' भुज्यते, अतो मरुतां पयस्यारूपस्यान्नस्य भोजनीयपात्ररूपेणैव निर्मातव्यानीत्यर्थः। यवमयत्व मनूद्य स्तौति— "यवमयानीति। 'जक्षुषीः' भक्षितवतीरित्यर्थः। अथ तेषां करम्भपात्राणां होमं विधत्ते— "शूर्पेणेति †। जुह्वादि

---

* पुरस्तात् पृ० २७६ पं० १ द्रष्टव्यम्।

† "करम्भपात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखौ जायापती वा"—इत्यादि का० श्रौ० सू० ५.५.११।

पात्रं विहाय शूर्पेणैव तानि जुहुयात्। तेन हि 'शूर्पेण' तुषनिर्वपनद्वारा * 'अशनम्' अन्नं 'क्रियते', अतः न चात्र शूर्पो हेत्वर्थः शङ्कनीयः; "हेतुर्वास्यादर्थवत्त्वोपपत्तिभ्याम्, स्तुतिस्तु शब्दपूर्वत्वात्"–इत्यधिकरणे † स्तुतित्वेनान्वयस्य प्रतिपादितत्वात्। "पत्नी जुहोतीति कर्त्तृविधिः ‡, मिथुनदेवेत्यादि तत्प्रशंसा। स्त्रिया अपि कर्त्तृत्वेन होमेऽन्वयात् मिथुनं सम्पद्यते। तथाच यजमानपत्नीरूपात् मिथुनादेवेत्यय मर्थः सिध्यति ॥ २३ ॥

स्रुवाघारहोमादेः पूर्वभावित्वं करम्भपात्रहोमस्य विधत्ते— "पुरेति। यज्ञो वषट्कारप्रदानो यजतिचोदित आग्नेयः, आहुतयः स्वाहाकारप्रदाना जुहोतिचोदिताः। एतत्पूर्वभावित्व मुपपादयति— "अहुताद इति। अहुतं होमसंस्काररहितम् अदन्ति भक्षयन्त्यहुतादः। मरुतां वैश्यजातित्वेन अहुतादानधर्मवत्त्वात् सर्वहोमात् पूर्वं तेभ्यो हविःप्रदानं युक्त मिति भावः। इतोऽपि करम्भपात्राणां पूर्वहोम इत्याह— "यत्रेति। 'परिदीर्णाः'–इत्यादिकं व्याख्यातम् §। 'यत्र' यदा खलु 'प्रजापतेः प्रजाः' 'वरुणगृहीताः' परिदीर्णत्वादि-रोगग्रस्ता अभवन्, 'तत्' तदा 'आसां' प्रजानां प्रधानं 'मरुतः' 'विमेथिरे' विलोपयन्ति ‖ स्म, संश्ले-

---

* 'लुराषवनद्वारा'—इति च।

† मी० जै० सू० १, २, २६—३० ; अधि ३।

‡ 'करम्भपात्राणि पत्नी जुहोति, जुहूस्थानापन्नेन शूर्पेण ; मस्तकस्योपरि शूर्पं कृत्वा। यदा पत्नीयजमानौ जुहुतो नैकाकिनी पत्नी' —इति तत्र वृत्तौ या० दे०।

§ २८७ पृ० ८ पङ्क्तौ द्रष्टव्यम्।

‖ 'विलोलयन्ति'—इति च।

षितवन्त इत्यर्थः। 'तथो एव' 'एतस्य' यजमानस्य 'प्रजानां' वरुणपाशगृहीतानां 'पाप्मानं' पाशविमोचनात् प्रागेव मरुतः 'विमथ्नन्ति' संविश्लेषयन्ति। 'तस्माद्' वरुणपाशविमोचनार्थाद् यज्ञात्, 'आहुतिभ्यः' च पूर्व मेव करम्भपात्राणां होमेन मरुतां शंसनं * युक्त मित्यर्थः ॥ २४ ॥

अग्निविशेषं विधत्ते—"सा वा इति। 'सा' खलु पत्नी 'दक्षिणे' दक्षिणस्यां वेद्या मवस्थिते आहवनीये 'अग्नौ' 'जुहोति'। "यद् ग्राम इति †। तं पदशोऽनूद्य व्याचष्टे—"यद् ग्रामे इत्यादिना ‡। 'यत् एनः क्रियते', 'तत्' ग्रामे वा अरण्ये वा भवति। "यत् सभाया मिति, द्वितीयपादस्य कार्त्स्न्येनानुवादः। तत्र प्रथमार्द्ध मनूद्य सभाशब्दं व्याचष्टे—"यत्सभाया मिति। यन्मनुष्यसङ्घैः एनः क्रियत इति योऽर्थः, अय मेव यत्सभाया मिति मन्त्रभागः प्रतिपादयतीत्यर्थः। यदिन्द्रियपदस्य देवसङ्घ-परत्व माह—"यदिन्द्रिय इति। 'इन्द्रिये' इन्द्रसम्बन्धिनि देव-समूहे। तदुत्तरभाग मनूद्य व्याचष्टे—"यदेन इति। ग्रामादि-स्थानेषु यत् पापचयं 'चकृम' कृतवन्तः, 'तत्' पापम् 'इदम्' इदानीं करम्भपात्रलक्षणेन हविषा 'अवयजामहे' समर्पयामः। 'स्वाहा'–इति निपातो दानार्थे, स्वाहुत मिद मस्त्विति मन्त्रभाग-स्यार्थः। "तस्मात् सर्वस्मादित्यादि। कृतस्यैनसोऽवयजनं नाम 'तस्मात् सर्वस्मात्' 'प्रमोचनं' विश्लेषः। ग्रामारण्यादिस्थानभेदेन बहुविधस्यैनसः सङ्ग्रहाय सर्वस्मादिति विशेषणम् ॥ २५ ॥

---

* 'शमनं'—इति च।

† वा० सं ३, ४५, १।

‡ का० श्रौ० सू० ५, ५, ११।

यजमानस्य मन्त्रजपं विधत्ते— "अथेति । 'अथ'-शब्दो होमानन्तर्ये, 'ऐन्द्रीम्' इन्द्रदेवताकाम्, 'मरुत्वतीं' मरुत्वच्छब्द-युक्ताम्, "मो षू ण इन्द्र"–इत्यादिका मृचं * यजमानो जपेदि-त्यर्थः । उक्तं हि सूत्रकृता— "मो षू ण इति यजमानो जपति" –इति † । मरुत्वदिन्द्रदेवताका मृचं प्रशंसति— "यत्रेति । "मरुतः पाप्मान मित्यादि । यदा खलु वरुणपाशेन बद्धाः प्रजाः, तासां यद् बन्धनकारिणं पापं 'मरुतः' 'विमेथिरे' विलोपितवन्तः, 'तत्' तदानीं प्रजापतिः खलु 'ईत्वाञ्चक्रे' पर्यालोचितवान्— 'इमे' खलु 'मरुतः' मदीयाः 'प्रजाः' न विमथ्नीरन्' न विबा-धेरन् 'इति' ॥ २६ ॥

"स एता मिति । 'सः' प्रजापतिः पूर्वोक्तरूपं पर्यालोच्य 'एताम् ऐन्द्रीं मरुत्वतीम्' ऋचम् 'अजपत्' । अत्रेन्द्रस्य प्रसङ्ग माह— "क्षत्र' वा इति । 'इन्द्रः' खलु क्षत्रियजातिः, तस्येन्द्रस्य 'विशो मरुतः'; क्षत्रियो हि प्रजानां 'निषेद्धा' निरोधकः, तेनेन्द्रेण 'निषिद्धाः' निवारिता भवेयुः । 'इति' अनेनाभिप्रायेणेन्द्रदेवता-काया ऋचो जप इत्यर्थः ॥ २७ ॥

ता मृच' पठति— "मो षू ण इति । अस्य चाय मर्थः । हे 'इन्द्र !' 'अत्र' एषु 'पृत्सु' । सङ्ग्रामनामैतत् । अस्मदीयाः प्रजाः 'मा उ सु हिंसीः' । 'हे शुष्मिन्' बलवन्निन्द्र ! 'देवैः' मरुद्भिः सहितः 'ते' तव 'अवयाः' । अवपूर्वाद् "अवयाः श्वेतवाः"–इति ‡ निपात्यते । अवयजमानरूपकरम्भपात्रहोमः 'अस्ति' खलु । 'मह-श्चित्' महतोऽपि 'मीढुषः' सेक्तुः 'यव्याः' । "सुपां सुलुक्"–

---

* वा० सं० ३. ४६. १ ।

† का० श्रौ० सू० ५. ५. १२ ।   ‡ पा० सू० ८. २. ६७ ।

इति * भिस आडादेशः। यवमयैर्हविर्भिः 'हविष्मतः' 'यस्य' इन्द्रस्य 'मरुतः' देवाः अनुचराः 'गीः' स्तुतिरूपा वाक् 'वन्दते' स्तौति। "वदि अभिवादनस्तुत्योः"–इति † धातुः। 'इति इत्यस्य पूर्वत्रान्वयः ॥ २८ ॥

पत्न्या वाचनं विधत्ते—"अथैना मिति। तं वाचनीयं मन्त्रं पदशोऽनूद्य व्याचष्टे—"अक्रन् कर्मेति ‡ कर्म कुर्वन्तीति 'कर्मकृतः' यजमानाः ; ते हि इदानीं करम्भपात्रहोमरूपं 'कर्म' 'अक्रन्' अकार्षुः। अतोऽक्रन् कर्मेति मन्त्रभागवाचनं युक्तम्। द्वितीयपादस्यार्थः प्रसिद्ध इत्याह—"सह हीति। 'मयोभुवः' मयसः सुखस्य भावयित्र्या मन्त्ररूपया वाचा सह एतत् कर्म 'अक्रन्' अकार्षुः। "देवेभ्य इत्यादि। हे यजमानस्यामात्या ऋत्विजश्च यूयं वरुणप्रघासाख्यकरम्भपात्रहोमरूपं च कर्म देवार्थं 'कृत्वा'। 'अस्तं' गृहनामैतत् ; यजमानस्य गृहान् 'सचा भुवः' पत्न्या सह भवन्तः, सह वर्त्तमानाः 'एत' आगच्छतेति मन्त्रभाग-स्यार्थः। स चा भुव इत्येतद् व्याचष्टे—"अन्यत इति। अन्य-स्माद् देशाद् पत्न्यासनलक्षणात् 'ऊढया' आहवनीयसमीपं प्रापि-तया पत्न्या सह खल्विदानीं वर्त्तन्ते, तस्मात् सचाभुव इत्येतद् यथा-र्थम्। अस्तं प्रेतेत्यस्याभिप्राय माह—'जघनार्द्धं वा इति। ता मेतत् प्राची मिति। यज्ञस्यापरभागेऽवस्थितां 'ताम्' 'एतत्' एतर्हि 'प्राचीं' प्राग् गच्छन्तीम्, पूर्वभागसम्बन्धिनीं 'यज्ञं' 'प्रासी-षदत्' प्रापीपत् प्रतिप्रस्थाता। सदेर्ण्यन्ताल्लुङि चङि रूपम्। "गृहा वा अस्त मिति। अस्यते क्षिप्यते सर्वं वस्तुजात मस्मिन्निति 'अस्तं

* पा० सू० ७, १, ३६।

† भ्वा० आ० ११।

‡ वा० सं० ३, ४७, १।

गृहा:’। “क्तोऽधिकरणे च”–इति * क्त-प्रत्ययः। ‘एतत्’ एतेन “अस्तं प्रेत”–इति मन्त्रभागवचनेन गृहरूपाया मेव ‘प्रतिष्ठायां’ पुनः ‘एनां’ स्थापितवान् भवति † ॥ २९ ॥

अक्रन् कर्म्मेति मन्त्रवाचनानन्तरं कर्त्तव्य मुपदिशति— “प्रतिपराणीयोदैतीति। पतिं प्रतिनिवर्त्त्य स्वस्थानं प्रापयितुं ‘प्रतिप्रस्थाता’ ‘उदैति’ उद्गच्छेत् ‡। “अग्नि मग्नीत्”–इति प्रैषसम्मार्जनयोर्मध्ये कर्त्तव्य मुक्त्वा, तत्सम्मार्जनप्रभृति प्रकृतिवदेवानुष्ठेय मिति दर्शयति— “सम्मृजन्तीत्यादिना। एकस्मिन्नप्याग्नीध्रे पूजार्थं बहुवचनम्। एव माहवनीये ‘अग्नौ’ ‘सम्मृष्टे’, ‘उभावेव’। एवकारोऽप्यर्थे। उभावपि अध्वर्युप्रतिप्रस्थातारौ ‘उत्तरौ आघारौ आघारयतः’ दीर्घधारया जुहुतः। हविर्वेद्यग्नीनां भेदः प्रतिप्रस्थातुः अपि दक्षिणेऽग्नौ आघारादिकं सर्वं प्रयोगजात मध्वर्युवदनुष्ठेयम्। अत एव तैत्तिरीयकम्— “यदेवाध्वर्युः करोति, तत् प्रतिप्रस्थाता करोतीति §।

“अध्वर्युरेवाश्रावयेदित्यादि। प्रवरप्रयाजाज्यभागादिसम्प्रैषस्य प्रेष्यस्य होतुरेकत्वात् कालभेदाच्च अध्वर्युणैव कृतः प्रैष उभयत्रापि तन्त्रेणोपकरोतीत्येवकाराभिप्रायः। प्रवरादीनां चोदकप्राप्ताना मनुवादः। तेषा स्वरूपं प्रथमकाण्डे व्याख्यात मिति ‖ नेह पठ्यते। प्रतिप्रस्थातुरपि कर्त्तव्यं प्रतिपादयति— “उत्तरस्यै वेदे-

---

* पा० सू० ३. ४. ७६।

† का० श्रौ० सू० ५. ५. १३ क। ‡ का० श्रौ० सू० ५. ५. १४।

§ “प्रसिद्ध मेवाध्वर्युर्दक्षिणेन प्रपद्यते, प्रसिद्धम् प्रतिप्रस्थातोत्तरेण” –इति विशेषविधिश्च तै० सं० ६. ५. ३. ६ द्रष्टव्यम्।

‖ ४अ० २ब्रा० (१भा० ३२७–३४४ पृ०) द्रष्टव्यम्।

रित्यादि । होता सीदत्यस्मिन्निति होतृषदनम् । उत्तरस्या वेद्याः सम्बन्धिनि 'होतृषदने' स्थाने ; न दक्षिणस्या इत्यर्थः । 'प्रसौति' अध्वर्युप्रतिप्रस्थातारौ ; प्रयाजान् कर्त्तुं युगादाने प्रेरयति । "षु प्रसवैश्वर्ययोः"–इति * धातुः । 'प्रसूतौ' प्रेरितौ, अनुज्ञाताविल्यर्थः । "स्रुच आदायेति । अध्वर्युप्रतिप्रस्थात्रोरुभयोरपि प्रत्येकं जुह्वपभृतौ स्तः †, तदभिप्रायेण स्रुच इति बहुवचनम् । "समिधो यज"–इति प्रथमप्रयाजसम्प्रैषः । द्वितीयादिषु "यज" –इत्येव सम्प्रैषः ‡ । वीप्सा द्वितीयादिषु सर्वत्र सम्बन्धार्था । "चतुर्थे-चतुर्थे"–इति वीप्सा द्वित्वापेक्षया । उभावपि 'चतुर्थे चतुर्थे प्रयाजे' अपि हुत माज्यं जुह्व 'समानयमानौ' प्रतिनयन्तौ 'नवभिः' नवसङ्ख्यकैः 'प्रयाजैः चरतः § ॥ ३० ॥

आज्यभागयोरपि प्रतिप्रस्थातृसाहित्यं विधातु माह— "अथाध्वर्युरिति ।| "उभावेवेति । उभावपि अध्वर्युप्रतिप्रस्थातारौ ध्रौवस्य 'आज्यस्य' सकाशात् 'चतुरवदाय' जुह्वां चतुर्गृहीत्वेत्यर्थः । "वषट्कृते जुहुत इति । एकस्मिन्नेव वषट्कारे उभावपि स्वस्वाहवनीये जुहुत इत्यर्थः ॥ ३१ ॥

"अथाध्वर्युरेवाह सोमायेत्यादि । एतेन द्वितीयाज्यभागस्यानुष्ठानप्रकारः प्रतिपादितः । सामिधेनिप्रैषादौ 'आश्राव्य' आश्रावणेन अध्वर्युरेवेति ॥ ३२ ॥

---

* अदा॰ प॰ ३१ धा॰ । † का॰ श्रौ॰ सू॰ ५. ५. १५ ।

‡ "यजयजेत्युत्तरौ"–इति का॰ श्रौ॰ सू॰ ३. ५. ७। 'उत्तरौदावनुयाजौ यजयजेत्येवं प्रेष्यति, प्रथम एव देवान् यजेति"–इति तत्र या॰ दे॰ । आप॰ श्रौ॰ सू॰ ३.५.१ च द्रष्टव्यम् ।

§ "नवप्रयाजं नवानुयाजम्"– इति का॰ श्रौ॰ सू॰ ५. २. ७ ।

तत्र तत्र यत् प्रसङ्गत उक्तम्, तदिदानीं विधत्ते— "तद्य-दिति। 'यत्' किमपि आश्रावणादिकं 'वाचा कर्त्तव्यं' वागिन्द्रियसाध्य मिति, 'तत्' 'अध्वर्युरेव' कुर्यात्। 'प्रतिप्रस्थाता' तूष्णीं क्रियमाण मनुतिष्ठेत्, आश्रावणादिकं वाचा न प्रयुञ्जीत। इमा मेव श्रुति मभिप्रेत्य सूत्रित मापस्तम्बेन— "यत् किञ्च वाचा-कर्मीण मध्वर्युरेव तत् कुर्यात्"—इति *। अस्य नियमस्य प्रयोजन माह— "तद्यदिति। 'यत्र' उत्तरस्यां वेद्यां 'वषट् क्रियते' होत्रा वषट्कारः प्रयुज्यते, 'इहैव' अस्मिन्नेव स्थाने 'अध्वर्युरेव आश्रावयति' † ॥ ३३ ॥

"क्लतानुकर एवेति। 'प्रतिप्रस्थाता' 'क्लतानुकरं' क्लतानुकुर्वाणम् 'अनुवर्त्मानम्' अनुगमनशीलं 'करोति'। विपक्षे बाध माह— "प्रत्युद्यामिनो मिति। 'यद्' यदि हि अध्वर्युवत् प्रतिप्रस्थातापि पृथगाश्रावणं कुर्यात्, तदा 'क्षत्राय' वैश्यजातिं 'प्रत्युद्यामिनीं' प्रत्युद्यमनशीलां 'कुर्यात्'। "तस्मादिति, उक्तार्थानुगमनम् ‡ ॥ ३४ ॥

"पाणावेवेति। एव मुभौ अध्वर्युप्रतिप्रस्थातारौ आज्यभागाभ्यां प्रचर्य, 'प्रतिप्रस्थाता' हस्ते एव जुहूपभृतौ धारयन् 'उपास्ते' उपविशति, आ पयस्याप्रचरणकालात्। 'अध्वर्युः' तु 'एतैः'

---

* आप० श्रौ० सू० ८. ५. १७। 'वागिति वागिन्द्रिय मुच्यते, तज्जन्यो व्यापारो वाचाकर्म, तत्साध्यं कर्म वाचाकर्मीणम्'—इति तद्वृत्तिः।

† "प्रणीतापत्नीसन्नहनाग्निमन्थनाश्रुतप्रत्याश्रुतप्रैषयजमानवाचनहोतृषदनवरणप्राशित्राङ्गुलिपर्वाञ्जनावान्तरेडाभागापरान्नावभृथान्न प्रतिप्रस्थाता"—इति का० श्रौ० सू० ५. ४. ३३।

‡ "क्लतानुकरोऽन्यत्र दक्षिणस्याम्"—इति का० श्रौ० सू० ५. ४. ३४।

आग्नेयादिभिः स्रवेद्या मासादितैः 'हविर्भिः' 'प्रचरति'। तानि हवींषि परिगणयति— "आग्नेयेनेत्यादिना ॥ ३५ ॥

"अथैताभ्या मित्यादि। एव मैन्द्राग्नपर्यन्तैः षड्भिर्हविर्भिरिष्ट्वा 'अथैताभ्यां' वारुणीमारुतीभ्यां 'पयस्याभ्यां' 'प्रचरिष्यन्तौ' यज्ञं तावध्वर्युप्रतिप्रस्थातारौ मेषमेष्यौ 'विपरिहरतः'। तदेव विपरिहरणं दर्शयति— "स य इति। "सः उत्तरस्या मेव पयस्यायां मेषीम्"–इत्यादिना * विधानात् 'वारुण्यां मेषी' स्यात्, 'मारुत्यां मेषः'। तत्र यो मारुत्यां मेषो भवति, तं तत आहृत्य वारुण्यां स्थापयेत्; या च मेषी वारुण्याम्, तां तत आहृत्य मारुत्यां स्थापयेत् †। तदेतद् विपरिहरण मनूद्य स्तौति— "तद्यदेव मिति। मेषो हि पुंरूपत्वाद् वीर्यरूपः; वरुणश्च क्षत्रियजातिः; तस्मिन् क्षत्रियमेषस्य निधानात् 'वीर्यं मेव एतत् धत्तः'। 'अवीर्या' वीर्यं सामर्थ्यम्, तद्रहिता खलु 'स्त्री'; मरुतश्च वैश्यजातिः; मारुते हविषि स्त्रीपशोर्मेष्या निधानात् तां वैश्यजातिम् अवीर्यां वीर्यरहिता मेव कुरुतः ॥ ३६ ॥

विपरिहरणानन्तरं वारुण्या पयस्यायाः प्रचरणं विधत्ते— "अथाध्वर्युरिति। "वरुणायानुब्रूहीति। होतारं प्रत्यनुवाक्यार्थं सम्प्रेष मुक्त्वा, जुह्वा मुपस्तीर्य, 'अस्यै वारुण्यै' षष्ठ्यर्थे चतुर्थी। वारुण्या पयस्यायाः 'द्विरवद्यति'। 'सः' अवद्यन्नध्वर्युः 'अन्यतरेण' पूर्वेण उत्तरेण वा 'अवदानेन' 'सह' कृत्स्नं 'मेषं' स्रुचि 'अवदधाति', पुनरभिघार्य अवत्तप्रदेशे हविःप्रत्यञ्जनं कुर्यात्। स ततोऽतिक्रमणादीनि प्रकृतिवत् कुर्यादित्यर्थः ‡ ॥ ३७ ॥

---

* पुरस्तात् २७६पृ० १३पं० द्रष्टव्यम्। † का० श्रौ० सू० ५. ५. १७। ‡ का० श्रौ० सू० ५. ५. १८।

प्रतिप्रस्थातुर्मारुत्या पयस्याया: प्रचरणे विशेष माह— "सव्ये पाणाविति। स्वकीये 'स्रुचौ' जुहूपभृतौ अध्वर्यु: आत्मीये 'सव्ये पाणौ' कृत्वा, 'दक्षिणेन प्रतिप्रस्थातु:' 'वासोऽन्वारभ्य', "मरुद्भ्योऽनुब्रूहि"—इति होतारं प्रतिप्रेष्य, उपस्तरणादिकं प्रतिप्रस्थाता कुर्यात्।

स प्रतिप्रस्थाता पूर्वेणोत्तरेण वावदानेन सह कृत्स्नं मेषं स्रुचि अवदध्यात्। ततो मेषीं वारुण्या प्रत्यञ्जनेनेति। ततः प्रतिप्रस्थाता वेदी मनिक्रामति। अनन्तर मध्वर्युरेव तदीयं वासोऽन्वारभ्य मरुतो यजेति ब्रूयात्। होतुर्याज्यान्ते वषट्कृते सति केवलं प्रतिप्रस्थाता दक्षिणे आहवनीये हविर्जुहोति, त मनु किञ्चिद् वाचाप्याहरेत्। एतत् सर्वं सङ्गृह्य कात्यायनेन सूत्रितम्— "पयस्याप्रचरणकाले मेषौ व्यतिहरतो ऽन्यतरेणावदानेन सह मेषं सव्येन स्रुचौ गृहीत्वा प्रतिप्रस्थातुर्वासो दक्षिणेन मरुद्भ्योऽनुवाचयति वारुणीवदवदानम्"—इति * ॥ ३८ ॥

कायेन हविषा प्रचरणं विधत्ते— "अथेति। प्रधानयागानन्तर मनुष्ठेयं स्विष्टकृदादिप्रयोगजातं सर्व मनुक्रामति— "अध्वर्युरेवाह्याग्नये स्विष्टकृत इत्यादिना †। "अनुब्रूहि"—इति स्विष्टकृद्यागस्य पुरोऽनुवाक्याप्रैष:। अनुष्ठितं प्रधानयागं न्यूनातिरेकदोषपरिहारेण स्विष्टं शोभनं यज्ञं करोतीति स्विष्टकृत्।

"सर्वेषा मेवेति। आग्नेयादि-कायान्तानाम् ‡। "सकृदिति। प्रधानयागस्य। द्विरवदानप्रसक्तिं वारयति— "एतस्या एवेति। 'एतस्या:' मारुत्या: पयस्याया: 'एव' हविष: सकाशात् स्विष्टकृदर्थं

---

* का० श्रौ० सू० ५. ५. १७—२०।

† का० श्रौ० सू० ५. ५. २१। ‡ ३५—३६—कण्डिकासु द्रष्टव्यम्।

'सकृत्' एव अवद्येत्, नान्यस्मादित्येवकारार्थः। चतुरवदानसम्पत्तये अभिघारणस्य द्वित्वं विधत्ते— "अथोपरिष्टादिति। 'द्विः' क्रियाभ्यावृत्तिगणनेऽर्थे, "द्वित्रिचतुर्भ्यः सुच्"–इति * द्विशब्दात् सुच् ॥ ३९ ॥

"अथाध्वर्युरेव प्राशित्र मिति। प्रतिप्रस्थातुः प्राशित्रावदानं नास्तीत्येवकारार्थः। तस्य पयस्यारूपहविषः सान्नाय्यविकृतित्वात् प्रकृतौ सान्नाय्यात् प्राशित्रावदानस्यादर्शनादित्यभिप्रायः। "इडां समवदायेति। सर्वेभ्यो हविर्भ्यः सम्भूय एकस्मिन्निडापात्रे अवद्यादित्यर्थः। "अति प्रजिहीत इति। उत्तरां वेदि मतिक्रमय्य तदिडापात्रं प्रगमयेदित्यर्थः †। "ओ हाङ् गतौ"–इत्यस्मात् ‡ अन्तर्णीतण्यर्थाल्लिटि रूपम्, "भृञा मित्"–इति § अभ्यासस्येत्त्वम्। "मारुत्यै पयस्याया इति, षष्ठ्यर्थे चतुर्थी। "द्विराज्यस्याभिघारयतीति। अध्वर्युरेव, न प्रतिप्रस्थाता ॥ ४० ॥

"अथाध्वर्युरेवाह ब्रह्मन् प्रस्थास्यामीति। इडोपह्वानादिकं प्रकृतिवदेव कृत्वा, अनुयाजार्थ मभ्यनुज्ञापक मिमं प्रैषं अध्वर्युरेव ब्रूयात्। "यत् किञ्च वाचा कर्त्तव्य मध्वर्युरेव तत् करोति"–इति प्राक् प्रतिपादितस्यायं प्रपञ्चः ‖, प्रैषार्थः प्रकृतिवर्णितः। "स स्रुचोरेवेत्यादि। 'सः' अध्वर्युः 'स्रुचोः' जुहूपभृतोः 'एव' 'पृषदाज्यं' दधिमिश्र माज्यं 'व्यानयते' विविध मासिञ्चति। पृषदाज्यधानीगतं पृषदाज्यं जुह्वा मर्द्ध मासिच्य, शिष्ट माज्य मुपभृति

---

* पा० सू० ५. ४. १८।

† का० श्रौ० सू० ५. ५. २२। ‡ जु० प० ७ धा०।

§ पा० सू० ७. ४. ७६।

‖ पुरस्तात् २८१ पृ० ८ पं० द्रष्टव्यम्।

आनयेदित्यर्थः। प्रतिप्रस्थातुः पक्षद्वय माह— "अथ यदीति *। आज्यग्रहणकाले यदि प्रतिप्रस्थाता पृषदाज्यं गृह्णीयात्, तत् पृषदाज्यम्, इदानीं स प्रतिप्रस्थाता अध्वर्युवत् जुह्वपभृतोः द्विधा व्यासिञ्चेत्। "उतो इति, पक्षान्तरद्योतने। यदि तु तत्र ग्रहण-समये पृषदाज्यं न गृहीतं भवति, तदा स प्रतिप्रस्थाता उपभृति स्थितं यदेवाज्यं विद्यते, तस्यौपभृतस्याज्यस्य अर्द्धं प्रथमं जुह्वा मासिच्य, शिष्ट माज्यं चतुर्थे प्रयाजे आसिञ्चेदित्यर्थः।

आसेचनानन्तरं कर्त्तव्य मतिक्रमणादिक मुपदिशति— "ता उभावेवेत्यादिना। 'देवान् यज'—इति प्रथमोऽनुयाजप्रैषः। 'यज यज' —इत्यादि सर्वत्र। "नित्यवीप्सयोः"—इति † यजेत्यस्य द्विर्वचनम्। जौहवेन पृषदाज्येन त्रिरिष्ट्वा, 'चतुर्थे-चतुर्थे' अनुयाजे औपभृतम्। 'समानयमानौ' उभावपि अध्वर्युप्रतिप्रस्थातारौ 'नवभिः अनुयाजैः' 'चरतः' प्रचरत इत्यर्थः। उभयापेक्षया 'चतुर्थे-चतुर्थे' इति वीप्सा। प्रयाजानुयाजानां तत्सङ्ख्याकत्वं सम्भूय प्रशंसति— "तद्यदिति। "प्रयाजानुयाजौ यज्ञाङ्गे"—इति ‡ निपातनात् कुत्वाभावः। नव प्रयाजा अनुयाजाश्च यस्मिन् इत्युभयत्र बहुव्रीहिः, शिष्ट मुक्तार्थम्॥ ४१॥

अनुयाजानन्तरभावि स्रुग्व्यूहनादिक मपि चोदकप्राप्त मुभाभ्यां कर्त्तव्य मित्यनुक्रामति— "ता उभावेवेत्यादिना §। "परिधि मभिपद्येति। मध्यमं परिधि मन्वारभ्येत्यर्थः। उक्तं हि कात्या-

---

* "प्रतिप्रस्थाता च, न वा (गृह्णाति)"—इति का० श्रौ० ५. ४. ३१, ३२।

† पा० सू० ८. १. ४। ‡ पा० सू० ७. ३. ६२।

§ का० श्रौ० सू० ५. ५. २४।

यनेन— "प्रथमं परिधिं गृहीत्वाश्राव्याहेषिता दैव्या"–इति * । "इषिता दैव्या"–इति सूक्तवाकप्रैषः प्रकृतावेव व्याख्यातः † । "समुल्लुम्पत इति । "लुप्लृ छेदने" ‡ । समुच्छिन्नत्तः, समुद्गृह्णीत इति यावत् । "उभावनुप्रहरत इति । सूक्तवाकेऽनूच्यमाने 'उभौ' अध्वर्युप्रतिप्रस्थातारौ 'अनुप्रहरतः' स्वं स्वं प्रस्तर मग्नौ प्रक्षिपत इत्यर्थः । "यदा होतेति । 'यदा' खलु होता सूक्तवाकं परिसमापयति (४२), 'अथ' अनन्तरम् 'आग्नीत्' आग्नीध्रः 'अनु प्रहर'–'इति' अध्वर्युं प्रति 'आह' । "उभाविवेति । यद्यप्यनुप्रहरेत्येकवचने-नाध्वर्युरेव प्रेर्यते, तथापि कृतानुकरत्वात् § प्रतिप्रस्थातुरपि तृणानुप्रहरणं विद्यत इत्यर्थः । "आत्माना उपस्पृशेते इति । "चक्षुष्पा"–इति ‖ मन्त्रेण । तथा च सूत्रितम्— "चक्षुष्पा इत्या-त्मान मालभते"–इति ¶ ॥ ४२, ४३ ॥

संवदस्वागानग्नीदित्यादीना मुक्तिप्रत्युक्तिरूपं यदस्ति, तद-प्याग्नीध्रस्य अध्वर्युणोक्तेनैवेत्यभिप्रेत्याह— "अथाहेति । 'अथ' अनन्तरं "संवदस्व"–'इत्याह' आग्नीध्रः । तच्च संवदन मुक्ति-प्रत्युक्तिरूप मनुक्रामति— "अगानिति । ते च मन्त्राः प्रकृतौ व्याख्याताः ** । तेषु च विभागः सूत्रकृता दर्शितः— "एतेषां

---

* का० श्रौ० सू० ३. ६. १ ।

† १. ८. ३. १०— १ भा० ५६०, ५७१ पृ० ।

‡ तु० उ० १५१ धा० ।

§ इतः पूर्व मेवोक्तम्, टीकितश्च तत् द्रष्टव्यम् ( ३०५ पृ० ) ।

‖ वा० सं० २. १६. १० ।

¶ का० श्रौ० सू० ३. ६. १५ ।

** १. ८. ३ २०— १भा० ५६३, ५७४ पृ० ।

संवदस्वागाग्नीदगाच्छ्रौषडित्यग्नीच्छेषु मितरौ व्यत्यासं ब्रूतः”–इति *। “स्वगा दैव्या”–इति शंयुवाकप्रैष मध्वर्युरेव ब्रूयात्। परिधिप्रहरणादिकं तूभाभ्या मेवानुष्ठेयम्। “उभौ स्रुच इत्यादि। ‘सम्प्रगृह्य’ सम्यग् गृहीत्वा विमोचनार्थं ‘स्फ्ये सादयतः’ ॥ ४४ ॥

“अथाध्वर्युरेवेति। “प्रतिपरेत्येति। आहवनीयदेशात् प्रतिनिवृत्य, गार्हपत्यसमीपं गत्वेत्यर्थः। “उपास्त इति। पत्नीसंयाजसमये तूष्णी मुपविशेत् प्रतिप्रस्थाता। न तु तस्य तदानीं कृतानुकरत्व मपेक्षित मित्यर्थः। “पत्नीः संयाज्योदैत्यध्वर्युरिति। पत्नीसंयाजानन्तर माहवनीयदेशं गत्वेत्यर्थः ॥ ४५ ॥

“त्रीणि समिष्टयजूंषीति। तानि च पूर्वस्मिन् वैश्वदेवब्राह्मणे व्याख्यातानि †। “तूष्णी मेवेति। प्रतिप्रस्थातुः समिष्टयजुर्होमसमये आत्मीयं स्रुचं तूष्णी मेव दक्षिणाग्नौ प्रगृह्णीयात्। स्रुगाग्र माज्यं धारयेत्, तन्मन्त्रः स्वाहाकारो वा न विद्यते इत्यर्थः ‡। “तद् ये वैश्वदेवेनेत्यादि। वैश्वदेवयाजमाने समाप्ते ‘यजमानयोः’ यजमानपत्न्योर्ये ‘वाससी’, ते परिहिते भवतः।

वरुणप्रघासाङ्गत्वेनावभृथगमनं विधत्ते—“अथास्या इत्यादि। या वरुणदेवताका पयस्या तस्याः। ‘क्षामकर्षमिश्रम्’ क्षामोऽतिपाकेन दग्धः पात्रे संसक्तः, “कृष विलेखने” कृष्यते इति कर्षः। क्षामश्चासौ कर्षश्चेति क्षामकर्षः, तेन मिश्रं हविः ‘आदाय’, ‘अवभृथम्’ उदकं प्रति ‘यन्ति’ ऋत्विग्यजमानाः, उदकसमीपं गच्छेयुरित्यर्थः। गमनस्य प्रयोजन माह— “वरुणं वेति।

---

* का० श्रौ० सू० ३. ६. १६।

† पुरस्तात् २७१पृ० ४पं० द्रष्टव्यानि।

‡ का० श्रौ० सू० ५. ५. २८।

'एतत्' त्तामकर्षमिश्रं हविः 'वरुण्यम्' वरुणसम्बन्धि, पापदेवतया सम्बद्ध मित्यर्थः ; "यो विदग्धः स नैर्ऋतः"— इतिश्रुतेः *। यद्वा पयस्याया वरुणदेवताकत्वात् तद्यागशिष्टं सर्व मपि वरुण्यम्। अतः 'निर्वरुणतायै' वरुणसम्बन्धराहित्याय अवभृथगमनं युक्त मित्यर्थः ।

सौमिकावभृथवत् प्रसक्तं सामगानं निषेधति— "तत्र न सामेति। अवभृथगमनसमये हि "अग्निष्टपति"–इति साम † प्रस्तोत्रा गेयम् ‡, 'तत्र' तस्मिन् वरुणप्रघासाङ्गावभृथगमने तन्न गातव्यम्। तदुपपादयति— "न हीति। सोमयागे हि स्तोत्रादिरूपेण साम्नां प्रयोगात्, तदङ्गावभृथगमनेऽपि सामगान मयुक्तम्। 'न' खलु 'अत्र' वरुणप्रघासे 'साम्ना' 'किम्' अपि प्रयोजनं 'क्रियते', अतोऽप्रयुज्यमानस्य साम्नोऽवभृथेऽप्यप्रयोग एव युक्त इत्यर्थः। अतः 'तूष्णीम्' अमन्त्रकम् 'एव' अवभृथसमीपम् 'अभ्यवेत्य' "अवभृथ निचुम्पुण"–इति मन्त्रेण § त्तामकर्षमिश्रं हविः 'उपमारयति' अप्सु प्रक्षिपति। सूत्रितञ्चेह— "वारुणीनिष्काषेणावभृथं तूष्णी मेत्याभ्यवेत्य मज्जयत्यवभृथेति" –इति ‖ ॥ ४६ ॥

---

* तै० सं० २. ६. ३. ४।

† "स गायति, अग्निष्टपति प्रतिदहत्यहावोऽहाव इति"—इत्याम्नास्यति चेहोपरिष्टात् ( ४का० ४अ० ५ब्रा० ८क० )।

‡ षड्विंश-ब्राह्मणस्य तृतीयप्रपाठके प्रथमखण्डे एतद्विवरणं स्फुटम्। तत्साम स्वरूपन्तु योनिगाने १२, १, ४० द्रष्टव्यम्। आर्षेयनामब्राह्मणे त्वेतदवभृथसामेत्येवाम्नातम्। एतद्दृङ्मूलक मेवाग्निष्टोमसाम सूत्रे ६, २, ४ अतम्।

§ मन्त्र एष वा० सं० ३, ४८। ‖ का० श्रौ० सू० ५, ५, २६, ३०।

"अवभृथेति। मन्त्रस्याय मर्थः— सोमलिप्तानि पात्राणि अवाचीनान्यस्मिन् क्रियन्त इत्यवभृथः। अवपूर्वात् भृञः औणादिकः थक् प्रत्ययः। हे 'अवभृथ!' 'निचुम्पुण' नितरां पुण्यहेतुर्भव। "पुण कर्मणि शुभे *"—इत्यस्माल्लोटि व्यत्ययेन द्विवचन मभ्यासस्य पुगागमश्चकारादेशश्च। यद्वा, "चुप मन्दायां गतौ †"—इत्यस्माल्लोटि वर्णव्यत्यये रूपं ज्ञेयम्। नीचीनं गच्छेत्यर्थः। यतश्च 'निचेरुः' नितरां चरणशीलः 'असि', अतो 'निचुम्पुण' नीचीनं गच्छ। 'देवैः' इन्द्रियैः, तदधिष्ठातृदेवैः 'देवकृतम् एनः' देवविषयं यदेनः कृत मस्ति, अहं तत् 'अवायासिषम्' अवाचीनं प्रापयामि, अप्सु प्रक्षिपामीत्यर्थः। "या प्रापणे ‡"—इत्यस्माल्लुङि "यमरमनमाताम्"—इति सगिटौ §। तथा "मर्त्त्यैः" मनुष्यैः ऋत्विग्भिः 'मर्त्त्यकृतं' मनुष्यविषये यत् कृत मेनः, तदपि 'अवायासिषम्'। हे 'देव' स्वामिन्! अवभृथ! 'पुरुराव्णः' पुरुरावणशीलान् बहुविधाक्रोशकारणात्। रौतेरौणादिको ऽसिप्रत्ययः ‖। यद्वा, "रा दाने ¶"—इत्यस्मात् "आतो मनिन्क्वनिब्वनिपश्च"—इति ** क्वनिप्। पुरु बहुलं संसारदुःखं राति ददातीति पुरुरावा, तस्मात् इन्द्रियहिंसकात् वरुणपाशग्रहणलक्षणात् पापात् अस्मान् पाहीति। एव मनेन मन्त्रेण क्षामकर्षमिश्रं हविःशेषं जायापती जुहुतः। तदुक्तं सूत्रकारेण— "जायापती स्नातोऽमज्जन्तावन्योन्यस्य पृष्ठे धावतः"—इति ††। पूर्वयोर्वाससो-

---

* तु० प० ५३ धा०। † भ्वा० प० ४०३ धा०।
‡ अदा० प० ३८ धा०। § पा० सू० ७. २. ७३।
‖ उ० ४ पा० २४२ सू०। ¶ अदा० प० ४७ धा०।
** पा० सू० ३. ४. ७४। †† का० श्रौ० सू० ५. ५, ३१, ३२।

दानं विधत्ते— "काम मिति *। स्नानानन्तर मन्ये वाससी परिधाय †। पूर्वपरिधानं निषिद्धम् ; "न दीक्षितवसनं परिदधीत" –इति श्रुतेः ‡। एतद्दानं प्रशंसति— "स यथेति। 'यथा' खलु 'अहिस्त्वचो निर्मुच्येत', 'एवम्' पूर्वपरिहितवाससं सर्वस्मात् पापादेव यजमानो निर्मुच्यते ॥ ४७ ॥

अवभृथानन्तरं केशश्मश्रुवपनं विधत्ते— "अथेति। केशाश्च श्मश्रूणि च 'केशश्मश्रू', प्राण्यङ्गत्वादेकवद्भावः। 'उप्त्वा' वापयित्वेत्यर्थः। समारोहणपुरस्सरं गृहे प्रत्यागमनं विधत्ते— "समारोह्येति §। 'अग्नी' गार्हपत्याहवनीयौ। "एतेन यजत इति। वरुणप्रघासाख्येन यागेनेत्यर्थः। "न हि तदिति। वरुणप्रघासनिमित्ताया मुत्तरवेद्यां 'यत्' अग्निहोत्रहवनम्, न तद् युज्यत इत्यर्थः। यस्मादेवं तस्मात् कारणात् वरुणप्रघासस्थानादुदवसानं ‖ कर्त्तव्य मिति निगमयति— "तस्मादिति। समारोपणानन्तरं तस्मात् स्थानात् निष्क्रम्य 'गृहान्' 'इत्वा' गत्वा, 'निर्मथ्य', तत्र 'पौर्णमासेन' यागेन 'यजेत'। एतत्प्रतिष्ठाहेतुना स्तौति— "उत्सन्नयज्ञ इत्यादिना। दर्शपूर्णमासवच्चातुर्मास्याना मनुष्ठान बाहुल्याभावात् उत्सन्नयज्ञत्वम्। अतस्तेषा मप्रतिष्ठाहेतुत्वेन ¶ तदनुष्ठाने यजमानस्यापि अप्रतिष्ठा सम्भाव्येत ; अतः

---

* "पूर्वं दद्यादधिकृतेभ्यो यस्मा इच्छेत्"–इतीह का० श्रौ० ५, ५, ३४।

† 'परिधापयेत्'–इति च।

‡ का० श्रौ० सू० ५, ५, ३३ अपि।

§ का० श्रौ० सू० ५, ५, ३५, ३६।

‖ इतोऽनन्तरं '[ निष्क्रमणं ]'–इति च।

¶ 'मप्रतिष्ठत्वेन'–इति च।

तस्य प्रतिष्ठायै स्वयं प्रतिष्ठितः पौर्णमासयागः सम्पद्यत इत्यर्थः। "तस्मादुदवस्यतीति, वरुणप्रघासदेशान्निष्क्रमणविधेर्निगमनम् * ॥ ४८ ॥ ३ [ ५. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम्. )

वरुणप्रघासैर्वै प्रजापतिः। प्रजा वरुणपाशात् प्रामुञ्चत्ता अस्यानमीवा अकिल्बिषाः प्रजाः प्राजायन्ताथैतैः साकमेधैरेतैर्वै देवा वृत्र मघ्नन्नेतैर्वेव † व्यजयन्त येय मेषां विजितिस्तां तथोऽएवैष एतैः पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथोऽएव विजयते तस्माद्वाऽएष एतैश्चतुर्थे मासि यजते स वै द्व्यह मनूचीनाहं यजते ॥ १ ॥

स पूर्वेद्युः। अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपत्यग्निꣳ ह वै देवा अनीकं कृत्वोपप्रेयुर्वृत्रꣳ

---

* 'धेनुर्दक्षिणा, अश्वो वा ; षट्, द्वादश वा"—इति का० श्रौ० सू० ३७—४० । आप० श्रौ० सू० ८ अध्या० ५—८ क० १२६ सूत्राणि चेह द्रष्टव्यानि ।

† 'तैर्य्वेव'—इत्यपि डा०-वेबर-दृष्टः ।

हनिष्यन्तः स तेजोऽग्निर्नाव्यथत तथो ऽएवैष एतत् पाप्मानं द्विषन्तं भ्रातृव्यꣳ हनिष्यन्नग्निमेवानीकं कृत्वोपप्रैति स तेजोऽग्निर्न व्यथते तस्मादग्नये-ऽनीकवते ॥ २ ॥

अथ मरुद्भ्यः सान्तपनेभ्यः। मध्यन्दिने चरुं निवपति मरुतो ह वै सान्तपना मध्यन्दिने वृत्रꣳ सन्तेपुः स सन्तप्तोऽनन्नेव प्राणान् * परिदीर्णः शिश्ये तथोऽएवैतस्य पाप्मानं द्विषन्तं भ्रातृव्यं मरुतः सान्त-पनाः सन्तपन्ति तस्मान्मरुद्भ्यः सान्तपनेभ्यः † ॥ ३ ॥

अथ मरुद्भ्यो गृहमेधिभ्यः। शाखया वत्सान-पाकृत्य पवित्रवति सन्दोह्य तं चरुꣳ श्रपयति चरुर्ह्येव स यत्र क्व च तण्डुलानावपन्ति तन्मेधो देवा दधिरे प्रातर्वृत्रꣳ हनिष्यन्तस्तथोऽएवैष एतत्पाप्मा-नं द्विषन्तं भ्रातृव्यꣳ हनिष्यन्मेधो धत्ते तद्यत्क्षीरौ-दनो भवति मेधो वै पयो मेधस्तण्डुलास्तमुभयं मेध-मात्मन्धत्ते तस्मात्क्षीरौदनो भवति ॥ ४ ॥

---

* 'प्राणान्'—इति क।

† 'ने'—इति ग, घ।

तस्यावृत् * । सैव स्तीर्णा वेदिर्भवति यां मरुद्भ्यः सान्तपनेभ्यस्तस्यामेव स्तीर्णायां वेदौ परिधींश्च शकलांश्चोपनिदधति तथा सन्दोह्य चरुꣳ श्रपयति श्रपयित्वाभिघार्योद्वासयति ॥ ५ ॥

अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति । तयोरेनं द्वेधोद्धरन्ति तयोर्मध्ये सर्पिरासेचने कृत्वा सर्पिरासिञ्चति । स्रुवं च स्रुचं च सम्मार्ष्ट्यथैताऽओदनावादायोदैति स्रुवं च स्रुचं चादायोदैति स इमा मेव स्तीर्णां वेदि मभिमृश्य परिधीन्परिधाय यावतः शकलान् कामयते तावतोऽभ्यादधात्यथैताऽओदनावासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता होतृषदने स्रुवं च स्रुचं चाददान आह ॥ ६ ॥

अग्नयेऽनुब्रूहीति। आग्नेय माज्यभागꣳ स दक्षिणस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याहाग्निं यजेति वषट्कृते जुहोति ॥ ७ ॥

---

* 'वृत्'—इति ग, घ ।

अथाह सोमायानुब्रूहीति । सौम्य माज्यभागꣳ स उत्तरस्यौदनस्य सर्पिरासेचनाच्चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्राव्याह सोमं यजेति व्वषट्कृते जुहोति ॥ ८ ॥

अथाह मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहीति । स दक्षिणस्यौदनस्य सर्पिरासेचनात्तत आज्य मुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यतिक्रामत्यतिक्रम्याश्राव्याह मरुतो गृहमेधिनो यजेति व्वषट्कृते जुहोति ॥ ९ ॥

अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । स उत्तरस्यौदनस्य सर्पिरासेचनात्तत आज्य मुपस्तृणीते तस्य द्विरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्यतिक्रामत्यतिक्रम्याश्राव्याहाग्निꣳ स्विष्टकृतं यजेति व्वषट्कृते जुहोत्यथेडा मेवावद्यति न प्राशित्र मुपह्वय मार्जयन्त ऽएतन्न्वेक मयनम् ॥ १० ॥

अथेदं द्वितीयꣳ* । सैव स्तीर्णा व्वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्यस्तस्या मेव स्तीर्णायां व्वेदौ परि

---

* 'यꣳ'—इति ग, घ ।

धींश्च शकलांश्चोपनिदधति तथा सन्दोह्य चरुꣳ श्रप-
यति नेदेव* प्रतिवेश माज्य मधिश्रयति श्रपयित्वा-
भिघार्योद्वास्यानक्ति स्थाल्या माज्य मुद्वासयति स्रुवं च
स्रुचं च सम्मार्ष्ट्वाथैतꣳ सोख† मेव चरु मादायोदैति
स्थाल्या माज्य मदायोदैति स्रुवं च स्रुचं चादायो-
दैति स इमा मेव स्तीर्णां व्वेदि मभिमृश्य परिधीन्परि-
धाय यावतः शकलान् कामयते‡ तावतोऽभ्या§ दधा-
त्यथैतꣳ सोख‖ मेव चरु मासादयति स्थाल्या माज्य
मासादयति स्रुवं च स्रुचं चासादयत्युपविशति होता
होतृषदने स्रुवं च स्रुचं चाददान आह ॥ ११ ॥

अग्नयेऽनुब्रूहीति । आग्नेय माज्यभागꣳ स
स्थाल्यै चतुराज्यस्यावदायातिक्रामत्यतिक्रम्याश्रा-
व्याहाग्निं यजेति व्वषट्कृते जुहोति ॥ १२ ॥

---

* 'तद्देव'—इति क, ङ ।

† 'सोष'—इत्यपि डा०-वेबर-दृष्टः ।

‡ 'वामयते'—इति च दृष्टो डा०-वेबरेण ।

§ 'न्या'—इति च डा०-वेबर-दृष्टः ।

‖ अत्रापि 'सोष'—इत्येव पाठो दृष्टः कस्मिंश्चित् पुस्तके डा०-वेबरेण ।

'परीतः' परिक्रामत इत्यर्थः। आग्नीध्रस्तु तस्या वेदेः 'पुरस्तात्' पूर्वदेशं गच्छेत् * ; तत्र हि स्तम्बयजुर्हरणं कृतम् ॥ १८ ॥

पितृयज्ञेनोपांशुप्रचरणं विधत्ते— "तेनोपांशु चरन्तीति † । "तिर इव वा इति । तिरोहिता एव पितरो ऽभवन्, तेभ्यः 'यद्' 'उपांशु' करणम्, 'तत्' अपि 'तिरः' तिरोहित मेव भवति । तथाचान्तर्हितानां मुपांशुप्रचरणं युक्त मिति भावः ॥१९॥

पितृयज्ञस्थानस्य परिश्रयणं विधाय स्तौति— "परिवृत इति । 'परिवृते' परिवेष्टिते स्थाने ; सिद्ध मन्यत् ॥ २० ॥

"स एका मेवेति । 'सः' होता "अग्नये समिध्यमानाय" –इति अध्वर्युणा प्रेषितः सन् 'एका मेव' 'सामिधेनीं' 'त्रिः' ब्रूयात् । "प्र वो वाजाः"–इत्याद्याः सामिधेन्यः पञ्चदश ‡ । तत्र सामिधेन्येकत्वे कारण माह— "सकृदु ह्येवेति ॥ २१ ॥

अनुवक्तव्यां ता मेकां सामिधेनीं दर्शयति— "सोऽन्वाहेति । 'सः' होता "उशन्तस्त्वा"–'इति' § एतां सामिधेनीं त्रिः अनुब्रूयात् । अस्याय मर्थः— हे अग्ने ! 'उशन्तः' कामयमानाः वयं त्वां 'निधीमहि' वेद्यां स्थापयामः । तथा 'उशन्तः' त्वत्साध्यं यागं कामयमाना एव सन्तः 'समिधीमहि' त्वां समिद्धं करवामहै । अग्ने ! त्व मपि अस्मदुक्त

---

* का० श्रौ०सू० ५. ८, ३४, ३५ ।

† "पितृयज्ञ उपांशुचरणम्, पुरस्तादुपचारः, ब्रह्मयजमानयोश्च, पूर्ववदा, अपत्नीकः, दक्षिणाग्निराहवनीयवत्, पूर्वेणाहवनीयं प्रणीताः परिहरति, अर्थवच्च"–इत्यष्टौ (का० श्रौ० सू० ५. ८. १—८) सूत्राणीह समन्तादालोच्यानि ।

‡ ऋ० सं० ३. २७. १—१५ ।

§ ऋ० सं० १०, १६, १२ ; य० वा० सं० २०, ७० ।

मर्थं ‘उशन्’ कामयमानः सन् ‘उशतः’ अस्मदीयं यज्ञं कामयमानान् ‘पितॄन्’ ‘आवह’ आगमय। किमर्थम्? ‘हविषे अत्तवे’ अस्माभिर्दत्तं हविर्भोक्तुम्। “क्रियाग्रहण मपि कर्त्तव्यम्”–इति * कर्मणः सम्प्रदानत्वाच्चतुर्थी। “अद भक्षणे” –इति †, अस्मात् “तुमर्थे सेसेन्”–इति तवेन् प्रत्ययः ‡।

“अथाग्नि मावहेत्यादि। सामिधेन्यनुवचनानन्तरम् “अग्नि मावह”–इत्याद्यावाहननिगदं ब्रूयात्। तत्राग्नीषोमावाज्यभागदेवते, पितरः सोमवन्त इत्याद्याः प्रधानदेवताः, ‘देवा आज्यपाः’ प्रयाजानुयाजदेवताः। तेषां सर्वेषा मावाहनं कर्त्तु मग्निः प्रेष्यते— “अग्निं होत्राय”–इत्यादिना। शेषेण स्विष्टकृद्देवताया आवाहनप्रतिपादनम्। ‘होत्राय’ होमाय होतृकर्मणे वा ‘अग्निम् आवह’। अग्निष्वात्तनाम्नस्तव स्वभूतो महिमा, तम्, तद्रूपस्वीकारिण मग्नि मावहेत्यर्थः। “इत्यावाह्येति। अनेन निगदेनावाह्य तत्रोपविशेदित्यर्थः॥ २२॥

प्रकृतिवत् प्राप्तं होतृवरणं निषेधति— “अथाश्राव्य न होतार मिति §। आवाहनानन्तर माश्रावणप्रत्याश्रावणे कृत्वा, ‘सीद होतः!’ इत्येवाध्वर्युर्ब्रूयात्; न तु “अग्निर्देवो दैव्या होता”–इति निगदेन होतारं प्रवृणीतेत्यर्थः। एतदुपपादयति— “पितृयज्ञो वा अय मिति। यतोऽयं पितृयज्ञः, अतोऽत्र पितरः सन्निहिताः; तत्र यदि होतुर्वरणं कुर्यात्, तदा ‘न’ ‘होतारं’ तेषु पितृषु ‘दधाति’ स्थापयति, न चैतद् युक्तम्, ‘इति’ अनेनाभिप्रायेण ‘होतारं ‘न’ प्रवृणीयात्; किन्तर्हि

---

* पा० १, ४, ३२ सू० वा० १। † अदा० प० १ धा०।

‡ पा० सू० ३, ४, ६। § का० श्रौ० सू० ५, ८, ३६।

आश्रावणानन्तरं ब्रूयात् इति, तदाह— "सीदेति। हे 'होतः' त्वं 'सीद' उपविश 'इति' एतत् वाक्यम् अध्वर्युर्ब्रूयात; न होतुर्वरणम्। 'होता' चैवं कृत्वा 'होतृषदने' 'उपविशति' उपविशेत्।

स्रुगादाननिगदेनाध्वर्युः 'प्रसौति' अनुजानाति। "षु प्रसवैश्वर्ययोः"–इति * धातुः। स च 'प्रसूतः' होत्रा प्रेरितः 'अध्वर्युः' 'स्रुचौ' जुहूपभृतौ 'आदाय' 'प्रत्यङ्'-मुखः अतिक्रामति। 'अतिक्रम्य' वेदेः पश्चिमभागे स्थित्वा, आश्रावणप्रभृति 'अपबर्हिषः' बर्हिश्चतुर्थः प्रयाजः, तद्वर्जं 'चतुरः प्रयाजान्' यजेत। बर्हिर्वर्जनस्याभिप्राय माह— "प्रजा वा इति। शिष्टं निगदसिद्धम् † ॥ २३ ॥

हविर्भिः प्रचरणार्थं प्राचीनावीतित्वं पुनर्विधत्ते— "ते सर्व एवेति। 'ते' ऋत्विग्यजमानाः 'सर्व एव' 'प्राचीनावीतिनः' भवेयुः ‡। ब्रह्मयजमानाग्नीध्राणां पूर्वं परिक्रान्तानां प्रधानयागार्थं मन्यथा परिक्रमणं विधत्ते— "इत्थादिति। 'इत्थात्' अनेन प्रकारेण ब्रह्मयजमानौ चतुःस्रक्तेर्वेदेः 'पुरस्तात्' प्रतिगच्छतः, आग्नीध्रः 'पश्चात्' प्रतिगच्छेत्। प्रधानहविषो याज्याना माश्रावणवषट्कारानाचष्टे— "तदिति। 'तत्' तत्र पितृषु प्रधानहविष्षु 'ॐस्वधा'–इति अध्वर्युराश्रावयेत्, 'अस्तु स्वधा' –इति आग्निध्रः प्रत्याश्रावणं कुर्यात्, होता 'स्वधा नमः'–इति

---

* अदा० प० ३० धा०। † का० श्रौ० सू० ५, ८, ३७।

‡ का० श्रौ० सू० ५, ९, १। पित्र्यत्वादपसव्यं सर्वत्र प्राप्त मेव, सव्यस्यापि वाचनिकस्याज्यभागान्तस्यावधि ( ८, ३३ ) पूर्ण इति प्राचीनावीतित्वं प्राप्त मेवेति कात्यायनेन नेह पुनः सूत्रित मिति ध्येयम्।

वषट्कुर्यात् । अस्याय मर्थः— "ॐ आवय"–"अस्तु श्रौषट्"– "वौषट्"–शब्दानां स्थाने एते प्रयोक्तव्या इत्यर्थः ॥

तत्राध्वर्युप्रैषस्याय मर्थः— ॐकारोऽङ्गीकारार्थः , स्वधेति पितृं हविर्नाम । हे अग्नीत् ! पितृर्थोपादीयमान मिदं हविः तवाभिमतं कि मिति । तत्तथास्त्विति अग्नीत् । नमः शब्दस्त्यागार्थः , पितॄनुद्दिश्य दीयमानैतत् 'स्वधा' तदीयं हविः 'नमः' त्यक्त मस्तु , इति वषट्कारप्रतिनिधिभूतस्य वाक्यस्यार्थः * ॥ २४ ॥

प्रकृतिवदेवाश्रावणादिकं कर्त्तव्य मिति पक्षान्तर माह— "तदु होवाचेति । 'आश्रावयेयुः'–इत्यादिना आश्रावणादि-कर्त्तृणा मध्वर्य्वादीना मेकत्वेऽपि पूजार्थं बहुवचनम् । 'यज्ञस्य' प्रकृतिभूतस्य दर्शपूर्णमासयागस्य 'विधायाः' विधा प्रकारः संस्थानम् , तस्मात् 'न' एव 'अयाम' प्रच्यवामहे 'इति' प्रागु-दीरितस्यापेक्षा ; अन्यथा हि आश्रावणादीनां प्रकृतिवदप्रयोगात् यज्ञविधायाः प्रच्युतिः स्यादित्यभिप्रायः । अत एव सूत्रकृत् स्वधाकरणयज्ञस्य विकल्प माह स्म— "ॐ स्वधेत्यस्तु स्वधेति वा-ऽऽश्रुतप्रत्याश्रुते"–इति † ॥ २५ ॥

अनुवाक्यार्थं प्रैषवचनं प्रथमयागस्य विधत्ते — "अथाहेति ।

---

* "स्वधा नम इति वषट्कारः"—इति का० श्रौ० सू० ५, ९, १२ ।

† का० श्रौ० सू० ५, ९. ११ । ॐ स्वधेत्यादिषु स्थानापत्त्या प्लुतौ भवत्येवेति पदमञ्जरीकारः, तथा चाहाश्वलायनः— "नित्याः प्लुतयः"—इति । तेन ॐस्वधेत्यत्र ओकारः स्वधाशब्दगतोऽकारश्च प्लुतौ,— 'ओ३९ स्वा३धा' —इति , तथा 'अस्तु स्वा३धा"—इति , 'स्वा३धा नमः'—इति । एवं 'ये यजामहे'—इत्यस्य स्थाने 'ये३ स्वधामहे'– इत्यपि बोध्यम् ।

पितृप्रधान-सोमप्रधानयोरुभयोरपि युक्तत्वात् तदपेक्षया पितरः सोमवन्तः पितृवन्तो वेति विकल्पः प्रागुपन्यस्तः; तदभिप्रायेणात्रापि सम्प्रेषस्य द्वैविध्यम्। होतानुवाक्यावचने प्रकृतितो विशेष माह— "स द्वे इति। अनुवाक्याद्वित्व मुपपादयति — "एकया वा इत्यादि। 'एकया' एव अनुवाक्यया 'देवान्' स्वस्थानात् 'प्रच्यावयन्ति' देवयजनदेश मागन्तुम्। पितरस्तु परागमनात् अपुनरावृत्तिङ्गताः, अतो न ते एकया पुरोनुवाक्यया प्रच्यावयितुं शक्याः; ततः प्रयत्नविशेषे कर्त्तव्ये 'द्वाभ्यां' पुरोनुवाक्याभ्यां होता तान् 'पितॄन्' आगमयतीत्यर्थः॥२६॥

त्रीणि हवींषि समवदाय एकैका देवता यष्टव्या, तत्र पितॄणां सोमवतां यजनप्रकार माह— "स उपस्तृणीत आज्य मिति। "द्विराज्यस्येति। आज्येनोपस्तरण मेक मवदानम्, पुरोडाशादिहविस्त्रयात् सकृत्सकृदवदानम्, तत् सकृदिति यदवदानं सम्पद्यते, एतेन सकृदवद्यातीति वाक्य मुक्तार्थं भवति *। यदि अभिघारण मुपस्तरणं च सकृदेव स्यात्, तदा चतुरवत्तसम्पत्तिर्न स्यात्; चतुरवत्तं हि यागयोग्यं द्रव्यम्, तस्माद् द्विरभिघारणं कर्त्तव्य मित्यर्थः †। "प्रत्यनक्त्यवदानानीति। अवद्यत्यस्मादित्यवदानम्, अवत्तशिष्टं हविः। "कृत्यल्युटो बहुलम्"–इति ‡ अपादाने ल्युट्। अवत्तशिष्टानि हवींषि प्रत्यज्यादित्यर्थः। प्रकृतिवत् प्राप्त मतिक्रमणं निषेधति— "नातिक्रामतीति §। कथन्तर्हि कर्त्तव्य मिति तत्राह—

---

* का० श्रौ० सू० ५. ६. २, ३।

† का० श्रौ० सू० ५. ६. ४।　　‡ पा० सू० ३. ३. ११३।

§ का० श्रौ० सू० ५. ६. ५।

"इत एवेति। यत्रोपविश्याश्रावयति, 'इत एव' स्थानात् 'उपोत्थाय' तत्रैव तिष्ठता आश्रावणादिकं कुर्यादित्यर्थः ॥ २७ ॥

द्वितीयतृतीययागयोरेवमेवानुप्राणनप्रकारं दर्शयति—"अथाहेति। अत्रापि पूर्ववदेव पुरोनुवाक्याद्वित्व मवगन्तव्यम्। "उपस्तृणीत इत्यादि, पूर्ववत्; एतावांस्तु विशेषः,— द्वितीययागस्य हविरादाने धानानां प्राथम्यम्, तृतीयस्य हविरादाने मन्थस्य प्राथम्यम्। अस्मादेव प्राथम्यात् सोमवदादियागत्रयस्य हविषां त्रयस्य धारणेऽपि निर्वापकाले सपितृभ्यः सोमवद्भ्यः षट्कपालं पुरोडाश मिति विशेषाभिधानम् * ॥ २८, २९ ॥

इत्थं प्रधानयागं कृत्वा स्विष्टकृत्स्थानेऽग्निः कव्यवाहनो यष्टव्य इत्यभिप्रेत्य तदनुवाक्याप्रैषस्य वचनं विधत्ते— "अथाहाग्नय इति। "तत् स्विष्टकृत इति। यदेतत् "अग्नये कव्यवाहनायानुब्रूहि"—इति सम्प्रैषवचनम्, 'तत्' 'स्विष्टकृते' स्विष्टकृद्यागार्थम्। पितृणां कव्यवाहनसम्बन्धप्रतिपादनेनैवैतदुपपादयति— "कव्यवाहनो वा इति। देवेभ्यो दीयमानं हविः 'हव्यम्', पितृभ्यस्तु दीयमानं तत् 'कव्यम्'। तदुभयं वहतीति हव्यवाहनकव्यवाहननामानौ द्वावेवाग्नी क्रमेण देव-पितृ-सम्बन्धिनौ। "कव्यपुरीषपुरीष्येषु ञ्युट्"—"हव्येऽनन्तःपादम्"—इति सूत्राभ्यां † वहतेर्ञ्युट्। एष चाग्नेरवान्तरभेदः प्रागप्याम्नातः, तैत्तिरीयकेऽप्याम्नायते— "त्रयो वा अग्नयः; हव्यवाहनो देवानाम्,

---

* "सोमाय वा पितृमते, एवं बर्हिषद्भ्य उत्तरतो धानामन्थपुरोडाशानाम्"—अग्निष्वात्तेभ्यो दक्षिणतो मन्थपुरोडाशप्रधानानाम्"—इति का० श्रौ० सू० ५. ६, ६, ७, ८।

† पा० सू० ३, २, ६६, ६७।

कव्यवाहनः पितॄणाम्, सहरक्षाः असुराणाम्"-इति * ।
यस्मादेवं कव्यवाहनः पितॄणां सम्बन्धी, तस्मात् "अग्नये कव्यवाहनाय"-इत्येव वक्तव्य मिति निगमयति-- "तस्मादाहेति † ॥ ३० ॥

तस्य स्विष्टकृत्स्थानीयस्य कव्यवाहनयागस्य पूर्ववदुपस्तरणादिहोमान्तानुष्ठानप्रकार माह— "स उपस्तृणीत इत्यादिना । स्विष्टकृद्यागस्य शेषद्रव्यसाध्यत्वात् हविरुत्पत्तिक्रमेणैवात्रावदान मित्यभिप्रेत्याह— "अथास्य पुरोडाशस्येति । "न प्रत्यनक्तीति । हविःप्रत्यभिघारणस्य स्विष्टकृदर्थत्वात् तस्य च हविषो ग्रहणात् पुनः प्रत्यभिघारणं न कर्त्तव्य मित्यर्थः । अन्यदुक्तार्थम् ‡ ॥ ३१ ॥

स्विष्टकृच्चतुर्थेषूक्तेषु यागेषु नातिक्रामतीति योऽतिक्रमनिषेध उक्तः, त मनूद्य स्तौति— "स यन्नातिक्रामतीति । सकृदवदानं प्रशंसति— "अथ यदिति । सोमवदादियागत्रयेऽपि यद्धविषो व्यतिषजन मुक्तम्, "अथास्य पुरोडाशस्यावद्यतीत्यादिना, तदनूद्य स्तौति— "अथ यद् व्यतिषङ्ग मिति । क्रियाविशेषणम्; परस्परं संसृष्टं यथा भवति तथेत्यर्थः । "ऋतवो वै पितर इति । पितॄणा मृतुरूपत्वं प्रागेव दर्शितम्— "त उ ते यान् पुनः समैरयतेति । तथा च 'एतत्' एतेन, पितृदेवत्यहविषा व्यतिषञ्जनेन 'ऋतूनेव व्यतिषजति' परस्परं संसर्जयति, तेन व्यतिषजनेन तान् 'ऋतून्' 'सन्दधाति' परस्पर मविनाभूतान् करोति ॥ ३२ ॥

अथेडां प्रत्याम्नायत्वेन मन्थस्याधान मेकीयमतेनोपन्यस्यति— "तद्धैक इति । 'तत्' तत्र खलु 'एके' शाखिनः यागशिष्टम्

---

* तै० सं० २, ५. ८, ११ । † का० श्रौ० सू० ५. ६. १० ।

‡ "पुरस्तादग्नये कव्यवाहनाय यथापूर्वम्"—इति का० श्रौ० ५. ६. ६ ।

'एत मेव मन्थं होत्रे आदधति' होतुर्हस्ते प्रक्षिपन्तीत्यर्थः। एतस्मिन् पक्षे होतुः कर्त्तव्य मुपदिशति— "तं होतेति। "उपह्वयेति। वेदिसमीपे इडानिगदेनोपहवं कृत्वा, तदनन्तर मवघ्राय अग्नीधे दद्यात्। सोमवज्जिघ्रत्येव, न तु कस्य चिदप्यत्र भक्षण मस्तीत्येवकारार्थः। प्राशित्रेडावदानपक्ष मप्याह— "एतन्न्वेवेति। 'नु'-इति प्रसिद्धौ, 'एव'-कारोऽवधारणार्थः, 'उत'-शब्दोऽप्यर्थः *। अपि खल्वेतद् वक्ष्यमाण मेकं पक्षं केचिदनुतिष्ठन्ति। तदेव दर्शयति— "यथा त्वेवेति। 'तु'-शब्द एकीयमतव्यावृत्त्यर्थः। 'इतरस्य' दर्शपौर्णमासादेः 'यज्ञस्य' 'यथा' इडां प्राशित्रं च 'समवद्यन्ति' सर्वेभ्यो हविर्भ्यः सम्भूयावद्यन्ति, 'एव मेव' 'एतस्यापि' पितृयज्ञस्य समवद्येयुः। "अत्रैव जिघ्रन्तीति। अस्मिन्नपि पक्षे इडाप्राशित्रयोरवघ्राण मेव कर्त्तव्यम्, न तु प्राशन मित्यर्थः। प्राशनपक्ष मप्याह— "प्राशितव्यं त्वेवेति। इडावदानं च यज्ञान्तरवत् अत्रापि 'प्राशितव्य मेव' 'वयं मन्यामहे' 'इति' 'आसुरिः' महर्षिः प्रतिपादयतीत्यर्थः। एवं प्रतिपादयत आसुरेरभिप्राय माह— "यस्य कस्येति। इडां प्राश्नन्तः ऋत्विजः 'यस्य कस्यचित्' आत्मनः सम्बन्धिनि 'अग्नौ' वैश्वानरे तद्धविः 'जुह्वति', अतः प्राशने न शेष इत्यनेनाभिप्रायेणेत्यर्थः † ॥ २३ ॥

यजमानपितॄनुद्दिश्य पिण्डप्रदान मध्वर्युयजमानयोरन्यतरस्य कर्त्तव्यत्वं सिद्धवदनुवदनम्, तत्प्रागङ्ग मवनेजनं विधत्ते—

---

* क्वाचोतेति चानुसन्धेयम्।

† "मन्थ मुपहूय होताध्वर्युब्रह्माग्नीदवप्राहं निदधति, प्राशित्र मवदायेडां वा, सर्वे प्राश्नन्ति वा"—इति का० श्रौ० सू० ५, ६, १३—१५।

"अथ यतर इति। अध्वर्युयजमानयोर्मध्ये यतर इत्यर्थः। 'किं यत्तदो निर्द्धारणे द्वयोरेकस्य डतरच्'–इति * डतरजन्तः। 'यदि अध्वर्युर्वा यजमानो वा' 'दास्यन्' पिण्डदाता 'भवति', 'सः' स्वयं यजमानः अध्वर्युर्वा 'उदपात्रम्' उदकपूर्णं पात्रम् 'आदाय', 'अपसलवि' अप्रदक्षिणं 'त्रिः परिषिञ्चन्' पित्र्यां वेदिम् 'पर्येति' †। "स यजमानस्येति। 'सः' अध्वर्युः 'यजमानस्य पितरम्' "असाववनेनिक्ष्व"–इति मन्त्रेण ‡ 'अवनेनिक्ष्वेति' अवनेजति। यजमानस्तु यदि स्वयं पिण्डदाता भवति, तदा स्वकीय मेव पितर मवनेजयेत्। "असाववनेनिक्ष्व"–इत्यादिकं पिण्डपितृयज्ञप्रकरणे व्याख्यातम् § ॥ ३४ ॥

"अथास्य पुरोडाशस्येत्यादि। पुरोडाशादिहविःशेषान् 'सव्ये पाणौ' 'अवदाय' आलोड्य, त्रीन् पिण्डान् कृत्वा, तस्मिन्नेव हस्ते धारयेत् ‖ ॥ ३५ ॥

"स येमा मवान्तरदिश मिति। 'इदं'-शब्देनोत्तरापरां दिश मभिनयेन निर्द्दिशति ¶। "अनुर्लक्षणे"–इति ** लक्षणे अनुशब्दस्य कर्मप्रवचनीयत्वम्। उत्तरापरस्यां दिशि येयं वेदेः स्रक्तिः, 'तस्यां' 'यजमानस्य पित्रे' "असावेतत् ते"–'इति'

* पा० सू० ५. ३. ९२।

† "वेदिं त्रिः परिषिञ्चति उदपात्रेणाध्वर्युर्यजमानो वा"–इति का० श्रौ० सू० ५. ९. १६।

‡ पुरस्तादिहैव ४ अ० २. २३ कण्डिका श्रुतोऽयम्।

§ पुरस्तादिहैव काण्डे ४ अ० २. २३ भाष्यं द्रष्टव्यम्।

‖ का० श्रौ० सू० ५. ९. १८।

¶ 'दर्शयति'–इति च। ** पा० सू० १. ४. ८४।

मन्त्रेण * । पितामहस्य पिण्डदानं विधत्ते— "अथ येमा मिति । 'इदं'-शब्देन दक्षिणापरा अवान्तरा दिग् गम्यते । अन्यत् समानं पूर्वेण । प्रपितामहस्य पिण्डदानं विधत्ते— "अथ येमा मिति । अत्रेदमा दक्षिणपूर्वा दिगभिनयेन निर्दिश्यते । अत्र या वेदेः स्रक्तिः, तस्यां प्रपितामहार्थं पिण्डं दद्यात् † । इत्थं तिसृषु स्रक्तिषु पिण्डदानं विधाय, अवशिष्टायां स्रक्तौ समन्त्रके लेपमार्जनं विधत्ते— "अथ येमा मवान्तरदिश मिति । इमा मुत्तरपूर्वा मवान्तर दिश मनु या वेदेः स्रक्तिः, तस्याम् "अत्र पितरः"-'इति' मन्त्रेण ‡ हस्तगलेपं 'निमृष्टे' निमृजीत । तथा चोक्तं सूत्रकृता— "उत्तरापरस्यां प्रथमम्, सव्ये समवदाय सर्वेभ्यो यथावनिक्तं पिण्डान् ददात्यसावेतत्त इति, उत्तरपूर्वस्यां पाणी निमृष्टेऽत्र पितर इति"-इति § । "असावेतत्ते"-इत्यादि मन्त्रार्थः पिण्डपितृयज्ञे एव वर्णितः ‖ । प्रपितामहादिभ्य उत्क्रमरीत्या पिण्डान् ददातीत्यर्थः । तथाचैवं सति 'स्वान्' स्वकीयान् 'पितॄन्' 'एतस्मात्' पितृयज्ञात् 'नान्तरेति' अन्तरितान् न करोति, अपि तु भागिनः कृतवान् भवति ॥ २६ ॥

आहवनीयोपस्थानं विधत्ते - "ते सर्व एवेति ¶ । "उदञ्च

---

* पुरस्तादिहैव ४अ॰ २, १६ कण्डिकायां श्रुतोऽयम् ।

† "स्रक्तिषु पिचावनेजनं परिषिच्य—परिषिच्य पूर्ववत्"—इति का॰ श्रौ॰ सू॰ ५, ९, १७ ।

‡ वा॰ सं॰ २, ३१ । § का॰ श्रौ॰ सू॰ ५, ९, १५, १६, २० ।

‖ पुरस्तात् २०८ पृ॰ ७ पङ्क्तितो द्रष्टव्यः ।

¶ "यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽत्रन्नमीमदन्तेत्याहवनीय मुपतिष्ठन्ते द्वाभ्याम्"—इति का॰ श्रौ॰ सू॰ ५, ९, २१ ।

उपनिष्क्रम्येति। उदङ्मुखाः सन्तः परिवृतात् पिण्डपितृयज्ञस्थानात् निर्गत्येत्यर्थः। "देवान् वा इत्यादि। 'यः' खलु 'आहिताग्निर्भवति', 'दर्शपौर्णमासाभ्यां' च 'यो यजते', 'एषः' 'देवान्' 'उपावर्त्तते' उपगतो भवति, देवसम्बन्धगतस्य यजमानस्य देवान् परित्यज्य यत् पितृयज्ञाचरणम्, तेन देवानां मनसि क्रोधोऽभूत्; पुनरावृत्त्याहवनीयोपस्थानेनातीवोदासीनताजनित मपराधं 'देवेभ्यः' 'निह्नुवते' शमयन्ति ॥ ३७ ॥

"ऐन्द्रीभ्या मिति, मन्त्रविधिः। ऐन्द्र्या ऋचः कथ मग्न्युपस्थाने सङ्गतिः, लिङ्गविरोधात्? इत्यत आह — "इन्द्रो हीति। परमैश्वर्ययोगादाहवनीय एवेन्द्रः, अतस्तदीयोपस्थाने ऐन्द्र्या करणत्वं न विरुद्ध्यत इत्यर्थः। त एवैन्द्रौ पठति—

"अक्षन्नमीमदन्तेति *। 'अक्षन्' अस्माभिर्दत्तं हविः पितरः अक्षन्। अदेर्लुङि "लुङ्सनोर्घस्लृ"–इति † घस्लादेशे, "मन्त्रे घसह्वरणश०"–इति ‡ च्लेर्लुकि, "गमहन०"–इति § उपधालोपे, अक्षन्निति रूपम्। 'हि' यस्मात् एवम्, अतस्ते पितरो हविःस्वीकारेण 'अमीमदन्त' तृप्ता अभवन्। "मद तृप्तियोगे"–इति ‖, अस्मात्स्वार्थण्यन्तात् लुङि चङि रूपम्। तृप्तिरपि कुतोऽवगम्यते इति तत्राह— "अवप्रिया इति। 'प्रियाः' आत्मीयाः तनूः ते पितरः 'अव अधूषत' भुक्तस्य हविषो रसातिशयस्याभिव्यक्त्यर्थम् अवाकम्पयन्। "धूञ् कम्पने"–इति ¶ धातुः। तदनन्तरं 'स्वभानवः' स्वायत्तदीप्तयः, 'विप्राः' मेधा-

---

* वा० सं० ३, ५१। † पा० सू० २, ४. ३७।
‡ पा० सू० २, ४, ८०। § पा० सू० ६, ४. ९८।
‖ चु० आ० २२६ धा०। ¶ चु० उ० ३०१ धा०।

विनः ते पितरः हविषः प्रदातारं यजमानं नविष्ठया' नवतरया 'मती' मत्या स्तुत्या 'अस्तोषत' उपभुक्तं हविः प्राशंसन्, सम्यगेतत् सञ्जात मिति। आहवनीयावस्थित! हे 'इन्द्र!' त्व मपि 'ते' त्वदीयौ 'हरी' अश्वौ गमनार्थं 'नु' क्षिप्रं 'योजान्' योजयेति प्रथमाया ऋचोऽर्थः।

"सुसन्दृशं त्वेति *। हे 'मघवन्!' धनवन्! आहवनीयरूपेन्द्र! सुष्ठु-सन्दर्शनीयं 'त्वा' त्वां 'वन्दिषीमहि' नुमः, अभिवादयामो वा। "वदि अभिवादनस्तुत्योः"–इति † धातुः। अस्माभिः वन्दितस्त्वं 'पूर्णबन्धुरः' दत्तेन हविषा पूर्णेन रथनीडेन युक्तः, 'स्तुतः' च सन् अस्माभिः कृतं स्तोत्रं हविश्च स्वीकृत्य 'वशान् अनु' कामान् अनु यथाकामं यथेष्टं 'प्रयासि'। "योजानित्यादि, पूर्ववत्॥ ३८॥

गार्हपत्योपस्थानं विधत्ते— "अथ प्रतिपरेत्येति ‡। 'प्रतिपरेत्य' आहवनीयसमीपात् प्रतिनिवृत्त इत्यर्थः। तस्मिन् गार्हपत्योपस्थाने "मनो न्वाह्वामहे"–इत्याद्यास्त्रयो मन्त्रा पठिताः, तेषा मय मर्थः—

तत्र प्रथमा "मनो न्विति §। अस्मदीयं 'मनः' 'नु' क्षिप्रम् 'आह्वामहे'। केन साधनेन? 'नाराशंसेन स्तोमेन' नरैः शंसनीयेन स्तोत्रेण, 'पितॄणां' सम्बन्धिभिः 'मन्मभिः' मननैश्च॥

"आ न एत्विति ‖ द्वितीया। पितृयज्ञकरणादप्रकान्त

---

* वा० सं० ३.५२। † भ्वा० आ० ११ धा०।

‡ "मनो न्वाह्वामह इति गार्हपत्यं तिसृभिः"—इति का० श्रौ० सू० ५.९.२२।

§ वा० सं० ३.५३। ‖ वा० सं० ३.५४।

मस्मदीयं 'मनः' 'पुनः' अस्मान् 'एतु' आगच्छतु। किमर्थम्? 'क्रत्वे' क्रतुकर्मणे, 'दक्षाय' बलाय, 'जीवसे' जीवनाय, 'ज्योक्' चिरकालं 'सूर्यं च' 'दृशे' द्रष्टुम्। "दृशे विख्ये च" —इति * तुमर्थे निपात्यते॥

पुनर्न इति † तृतीया। हे 'पितरः!' 'दैव्यः' देवसम्बन्धी 'जनः' 'नः' अस्मभ्यं 'मनः पुनः ददातु'। 'जीवं' जीवनवन्तं, 'व्रातं' गणम् पुत्रपौत्रादिसमूहम् 'सचेमहि' प्राप्नुयामेति। अन्तिमपादे जीवशब्दप्रयोगस्याभिप्राय माह— "पितृयज्ञेनेवेति। 'पितृयज्ञेन' खलु 'एतत्' इदानीम् 'अचारिषुः', अतः पितृयज्ञस्य कर्त्तार ऋत्विग्यजमानाः पितृसम्भक्ताः सन्तः प्रजायुक्ता भवेयुः। 'तत्' तथा सति "जीवं व्रातम्"—इति अनेन मन्त्रभागेन 'जीवान्' एव पुत्रपौत्रादीन् 'अपिपद्यन्ते' अपिगच्छन्ति। "तस्मादिति, उक्तार्थनिगमनम्॥ ३९॥

पिण्डदातृजपं विधत्ते— "अथ यतर इति ‡। 'अथ' उपस्थानानन्तरम्, अध्वर्युयजमानयोर्मध्ये 'यतरः' पिण्डं 'ददाति', 'स पुनः' 'प्राचीनावीती' 'भूत्वा', पित्र्यं देशम् 'अभिपद्य' प्रविश्य "अमीमदन्त"—इति § मन्त्रं जपेत्। स च मन्त्रः, तद्ब्राह्मणं च पिण्डपितृयज्ञे व्याख्यातम्‖॥ ४०॥

पिण्डदानस्योदीच्याङ्ग मुदकावनेजनं पूर्ववद्विधत्ते— "अथोदपात्र मिति। "तद्यथा जक्षुषे इति, अवनेजनस्य

---

* पा० सू० ३. ४. ११।
† वा० सं० ३. ५५।
‡ का० श्रौ० सू० ५. ९. २३।
§ वा० सं० २. ३१, २।
‖ पुरस्तात् २१० पृ० ७ पङ्क्तितो द्रष्टव्यम्।

प्रयोजनकथनम् । एतत् सर्वं पिण्डपितृयज्ञे एव व्याख्यातम् * ।

विहितं परिषेचनं पुनः श्रुतम्, तस्य यत् प्रादक्षिण्यम्, तत् स्तौति— "यत् पुनरित्यादिना । "प्रसलविन इति । अपसल मप्रादक्षिण्यम्, तद्विपरीतं प्रसलं प्रादक्षिण्यम्; मत्वर्थीयो विनिः । प्रादक्षिण्यवतो मम 'इदं' पित्र्य मपि 'कर्म' 'अनुसन्तिष्ठातै' संस्थितं भवेत् । 'इति' अनेनाभिप्रायेण अवसाने 'प्रसलवि' सव्येन परिषेचनं क्रियत इत्यर्थः ॥ ४१ ॥

"अथ नीवि मित्यादि † । पिण्डपितृयज्ञप्रकरणे व्याख्यातम् ‡ ॥ ४२ ॥

चोदकप्राप्त मनुयाजाद्युदीच्याङ्गकलापं सविशेष मतःपर मनुक्रामति— "ते सर्व एवेति । "इत्याद्यजमानश्चेति । प्रयाजाद्युदीच्याङ्गानुष्ठानसमये एव ब्रह्मयजमानाद्याः तत्र तत्र स्थाने परीत्योपविशेयुः § ॥ ४३ ॥

"अथाहेति । "प्रत्यङ्ङतिक्रामतीति । प्राचो दक्षिणदिक्कस्य प्रागुपपादितत्वात् दक्षिणातिक्रमणस्थाने पत्यङ्मुखोऽध्वर्युरतिक्रामेदित्यर्थः । 'अपबर्हिषौ' बर्हिः प्रथमानुयाजः, तद्वर्जितौ 'द्वावनुयाजौ' यज-यजेति । बर्हिर्वर्जने कारण माह— "प्रजा वा इति ॥ ४४ ॥

स्रुग्व्यूहनादिकं प्रकृतिवत् कर्त्तव्य मित्यनुक्रामति—

---

* पुरस्तात् २१० पृ० १८ पङ्क्तितो द्रष्टव्यम् ।

† "अवनेज्य पूर्ववत् प्रदक्षिणं नीविं विस्रंस्य नमो व इत्यञ्जलिं करोति षड् वा नमस्कारान् गृहान् नः पितरो दत्त"—इति का० श्रौ० सू० ८, ६, २४, २५, २६ ।

‡ पुरस्तात् २११ पृ० द्रष्टव्यम् । § का० श्रौ० सू० ५, ६, २७ ।

"अथ सादयित्वेत्यादिना। सूक्तवाकानुवचनं प्रकृतिवत् प्राप्तम्। प्रस्तरप्रहरणं निषेधति— "नाध्वर्युरिति *। 'न समुत्तुम्पति' न गृह्णाति, न प्रहरेत्, तूष्णी मेवोपासीत प्रस्तर मा प्रहरणम् † ॥ ४५, ४६ ॥

अग्नीत्प्रैषस्यानिवृत्ति माह— "अथाहेति। "स्वगा दैव्या होतृभ्यः"–इति सत्प्रैषेऽध्वर्युणोक्ते होता शंयुवाकं ब्रूयात्; न च तदानी मध्वर्युः परिधीननुप्रहरेत्, केवल मुपस्पृशेदेव ‡। बर्हिषः परिधीनाञ्च तूष्णी मग्नौ प्रहरणं विधत्ते— "अथैतदिति। 'एतत्' चतुःस्रक्त्यां वेद्यां स्तीर्णं 'बर्हिः' 'परिधींश्च' आदाय युगपदग्नौ 'अनुसमस्यति' प्रक्षिपति § ॥ ४७ ॥

अथाग्नौ प्रक्षेप मेकीयमतेनोपन्यस्यति— "तद्धैक इति। तदेतन्निषिध्योपपादयति— "तदु तथेति। हुतशेषस्य पुनर्होमयोग्यत्वाभावात् नैष पक्षो युक्त इत्यर्थः। का तर्हि हविःशेषस्य प्रतिपत्तिरिति, ता माह— "तस्मादिति। 'हुतोच्छिष्टम् अपोऽभ्यवहरेयुः'। अग्नौ प्रासनपक्षस्य व्युदासार्थं 'एव'-कारः। ऋत्विजो 'वा प्राश्नीयुः' इति पक्षान्तरम् ‖। सूत्रकारोऽप्येतत् सर्वं

---

* "न प्रस्तर मादत्ते"—इति का० श्रौ० सू० ५. ६. २८।

† "अनुप्रहरेत्युक्ते किञ्चनापि नानुप्रहरति, तूष्णी मात्मानं संस्पृशति"—इति का० श्रौ० सू० ५. ६. २६, ३०।

‡ उपस्पृश्य परिधीन् नानुप्रहरति"—इति का० श्रौ० सू० ५. ६. ३१।

§ "बर्हिःपरिध्यग्नौ प्रास्यति"—इति का० श्रौ० सू० ५. ६. ३३।

‖ "हविरुच्छिष्टञ्च, अप्सु, प्राश्यं वा"—इति का० श्रौ० सू० ५. ६. ३४, ३५, ३६।

माह स्म—"न प्रस्तर मादत्त इत्यादिना * ॥ ४८ ॥ २ † [६. १.] ॥

इति श्रीसायणार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ॥

---

* का० श्रौ० ५. ६. २८—३६ सूत्राणि द्रष्टव्यानि।

† "अथात्र चिन्त्यते। के पुनस्ते पितरो येभ्य इदं दीयते? उच्यते—यजमानस्य पितृभ्यो ददातीत्यादिवचनात्, एत एव पितरः; तेभ्यो जीवद्भ्य एव दाने प्राप्ते,—"प्रेतेभ्यो ददाति"—इति वचनात्, "सकृदु ह्येव पराञ्चः पितरः"—इत्यादिदर्शनेभ्यश्च प्रेतेभ्यो देयम्। अथ "वसवः पितरो ज्ञेया रुद्रा ज्ञेया पितामहाः। प्रपितामहास्तथादित्या इत्येषा वैदिकी श्रुतिः"—इति, तथा "यानेवैषां तस्मिन्त्सङ्ग्रामेऽघ्नंस्तान् पितृयज्ञेन समैरयन्त, पितरो वै त आसन्"—इति (२ का० ६. १. १.), तथा "शरद्धेमन्तशिशिरास्ते पितरः"—इति, तथा अग्निष्वात्तादयः पितृगणा स्तेषां कोपयोगः? एत एव तु आधिदैविकाः पितरः, ततश्च यथा ब्राह्मणे तृप्यति पितरस्तृप्यन्ति, तथा तेष्वपि तृप्यत्सु आधिदैविकावस्थास्ते तृप्यन्ति; महापितृयज्ञे तु त एव सोमपादय उच्यन्ते। पिण्डाश्च सन्निषु प्रेतेभ्यो एव दीयन्ते। अथ यस्य पितरो मुक्ताः स्युः, स कथं दद्यात्? सोऽपि तेभ्य एव ब्रह्मत्व मापन्नेभ्यो ददन् बहुतरेणैवैनसा विमुच्यते। या तु तेषां तृप्तिस्तदानुसङ्गिकं फलम्, न तदभावे क्रियानादर्त्तव्या। वस्वादयस्त्वाधिदैविकाः, तेऽपि तृप्यन्त्येव; शास्त्रेण विशेषोपादान विधानादिति गम्यते"—इत्याहात्र हरिस्वामी। तैत्तिरीयकास्त्वेवं समामनन्ति—"देवान् वै पितॄन् प्रीतान् मनुष्याः पितरोऽनुप्रपिपते"—इति तै० ब्रा० १. ३. १०. ४। 'द्विविधा हि पितरः, देवात्मका मनुष्यात्मकाश्च'—इत्यादि सायणीयं भाष्यञ्चात्र द्रष्टव्य मिति दिक्॥

( अथ द्वितीयं ब्राह्मणम् )

महाहविषा ह वै देवा वृत्रं जघ्नुः। तेनो ऽएव व्यजयन्त येय मेषां व्विजितिस्ता मथ यानेवैषां तस्मिन्त्सङ्ग्राम ऽइषव आर्छँस्तानेतैरेव शल्यान्निर- हरन्त तान् व्यवृहन्त यत् त्र्यम्बकैरयजन्त ॥ १ ॥

अथ यदेष एतैर्यजते। तन्नाह न्वेवैतस्य तथा कं चनेषुरर्च्छतीति देवा अकुर्व्वन्निति त्वेवैष एतत् करोति याश्च त्वेवास्य प्रजा जाता याश्चाजातास्ता उभयी रुद्रियात् प्रमुञ्चति ता अस्यानमीवा अकिल्विषाः प्रजाः प्रजायन्ते तस्माद्वा ऽएष एतैर्यजते ॥ २ ॥

ते वै रौद्रा भवन्ति। रुद्रस्य हीषुस्तस्मा- द्रौद्रा भवन्त्येककपाला भवन्त्येकदेवत्या अस- न्निति तस्मादेककपाला भवन्ति ॥ ३ ॥

ते वै प्रतिपुरुषं *। यावन्तो गृह्याः स्युस्ता- वन्त एकेनातिरिक्ता भवन्ति तत् प्रतिपुरुष मे-

* 'प्रतिपुरुषं'—इति ग, घ।

वैतदेकैकेन या अस्य प्रजा जातास्ता रुद्रियात् प्रमुञ्चत्येकेनातिरिक्ता भवन्ति तद्या एवास्य प्रजा अजातास्ता रुद्रियात् प्रमुञ्चति तस्मादेकेनातिरिक्ता भवन्ति ॥ ४ ॥

स जघनेन गार्हपत्यं । यज्ञोपवीती भूत्वोदङ्ङासीन एतान् गृह्णाति स तत एवोपोत्थायोदङ् तिष्ठन्नवहन्त्युदीच्यौ दृषदुपले ऽउपदधात्युत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति तद्यदेव तामुत्तरां दिशꣳ सचन्त ऽएषा ह्येतस्य देवस्य दिक् तस्मादेतामुत्तरां दिशꣳ सचन्ते ॥ ५ ॥

ते वा अक्ताः स्युः । अक्तꣳ हि हविस्त ऽउ वा ऽअनक्ता एव स्युरभिमानुको ह रुद्रः पशून्त्स्याद्यदञ्ज्यात् तस्मादनक्ता एव स्युः ॥ ६ ॥

तान्त्सार्द्धं पात्र्याꣳ समुद्वास्य । अन्वाहार्यपचनादुल्मुकमादायोदङ् परेत्य जुहोत्येषा ह्येतस्य देवस्य दिक् पथि जुहोति पथा हि स देवश्चरति चतुष्पथे जुहोत्येतद्ध वा ऽअस्य जाञ्ज्ञितं प्रज्ञातमवसानं यच्चतुष्पथं तस्माच्चतुष्पथे जुहोति ॥ ७ ॥

पलाशस्य पलाशेन मध्यमेन जुहोति। ब्रह्म वै पलाशस्य पलाशं ब्रह्मणैवैतज्जुहोति स सर्व्वेषा मेवावद्यत्येकस्यैव नावद्यति य एषो ऽतिरिक्तो भवति ॥ ८ ॥

स जुहोति। एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व स्वाहेत्यम्बिका ह वै नामास्य स्वसा तयास्यैष सह भागस्तद्यदस्यैष स्त्रिया सह भागस्तस्मात् त्र्यम्बको नाम तद्या अस्य प्रजा जातास्ता रुद्रियात् प्रमुञ्चति ॥ ९ ॥

अथ य एष एको ऽतिरिक्तो भवति। त माखूत्कर ऽउपकिरत्येष ते रुद्र भाग आखुस्ते पशुरिति तदस्मा ऽआखु मेव पशूना मनुदिशति तेनो ऽइतरान् पशून् न हिनस्ति तद्यदुपकिरति तिर इव वै गर्भास्तिर इवैतद्यदुपकीर्णं तस्माद्वा ऽउपकिरति तद्या एवास्य प्रजा अजातास्ता रुद्रियात् प्रमुञ्चति ॥ १० ॥

अथ पुनरेत्य जपन्ति। अव रुद्र मदीमह्यव देवं त्र्यम्बकम्। यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥ भेषज मसि

भेषजं गवे ऽश्वाय पुरुषाय भेषजꣳ सुखं मेषाय मेष्या ऽइत्याशीरेवैषैतस्य कर्मणः ॥ ११ ॥

अथापसलवि त्रिः परियन्ति। सव्यानूरूनुपाघ्नानास्त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादित्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते तदु ह्येव श मिव यो मृत्योर्मुच्याते नामृतात्तस्मादाह मृत्योर्मुक्षीय मामृतादिति ॥ १२ ॥

तदु हापि कुमार्यः परीयुः। भगस्य भजामहा ऽइति या ह वै सा रुद्रस्य स्वसाम्बिका नाम सा ह वै भगस्येष्टे तस्मादु हापि कुमार्यः परीयुर्भगस्य भजामहा ऽइति॥ १३ ॥

तासा मुतासां मन्त्रो ऽस्ति। त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुत इति स यदित इत्याह ज्ञातिभ्यस्तदाह मामुत इति पतिभ्यस्तदाह पतयो ह्येव स्त्रियै प्रतिष्ठा तस्मादाह मामुत इति ॥ १४ ॥

अथ पुनः प्रसलवि त्रिः परियन्ति। दक्षि-

गानूहनुपाघ्नाना एतेनैव मन्त्रेण तद्यत् पुनः प्रसलवि त्रिः परियन्ति प्रसलवि न इदं कर्मानुसन्तिष्ठाता ऽइति तस्मात् पुनः प्रसलवि त्रिः परियन्ति ॥ १५ ॥

अथैतान्यजमानो ऽञ्जलौ समोप्य। ऊर्ध्वानुदस्यति यथा गौर्नोदाप्नुयात् तदात्मभ्य एवैतच्छल्यान्निर्मिमते तान्विलिप्सन्त उपस्पृशन्ति भेषजमेवैतत् कुर्वते तस्माद्विलिप्सन्त उपस्पृशन्ति ॥ १६ ॥

तान् * द्वयोर्मूतकयोरुपनह्य। वेणुयष्ट्यां वा कुपे वोभयत आबध्योदङ् † परेत्य यदि वृक्षं वा स्थाणुं वा वेणुं वा वल्मीकं वा विन्देत् तस्मिन्नासजत्येतत्ते रुद्रावसं तेन परो मूजवतो ऽतीहीत्यवसेन वा ऽध्वानं यन्ति तदेनꣳ सावस मेवान्ववार्जति यत्र-यत्रास्य चरणं तदन्वत्र ह वा ऽअस्य परो मूजवद्भ्यश्चरणं तस्मादाह परो मूजवतो ऽतीहीत्यवततधन्वा पिनाकावस इत्यहिꣳसन् नः शिवो

---

* 'तां'—इति च इष्टं डा०-वेबरेण।

† 'आनध्योदङ्'—इति च डा०-वेबरइष्टः पाठः।

ऽतीहीत्येवैतदाह कृत्तिवासा इति निष्वापयत्येवैन मेतत् स्वपन्नु हि न कं चन हिनस्ति तस्मादाह कृत्तिवासा इति * ॥ १७ ॥

अथ दक्षिणान् बाहूनन्वावर्तन्ते । ते प्रतीचं पुनरायन्ति पुनरेत्याप उपस्पृशन्ति रुद्रियेणेव वा ऽएतदचारिषुः शान्तिरापस्तदद्भिः शान्त्या शमयन्ते ॥ १८ ॥

अथ केशश्मश्रूप्त्वा । समारोह्याग्नी ऽउदवसायेव ह्येतेन यजते न हि तदवकल्पते यदुत्तरवेदावग्निहोत्रं जुहुयात्तस्मादुदवस्यति गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजत ऽउत्सन्नयज्ञ इव वा ऽएष यच्चातुर्मास्यान्यथैष क्लृप्तः प्रतिष्ठितो यज्ञो यत् पौर्णमासं तत् क्लृप्तेनैवैतद्यज्ञेनान्ततः प्रतितिष्ठति तस्मादुदवस्यति ॥ १९ ॥ ३ ॥

॥ इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् [६. २.] ॥

---

* 'इति'—इति ग, घ।

अथ विधित्सितानां त्र्यम्बकहविषां * शल्यनिर्हरणहेतुत्व † मितिहासेनोपपादयति— "मद्दाहविषेति ‡ । "अथ यानेवेत्यादि । 'तस्मिन् सङ्ग्रामे' 'एषां' देवानां मध्ये 'यानेव' इन्द्र- 'इषवः' वृत्रमुक्ताः शराः 'आर्च्छन्' प्राप्नुवन् , 'तान्' देवान् 'एतैरेव' त्रैयम्बकैर्हविर्भिः तस्मात् 'शल्यात्' 'निरहरन्त' वियोजितवन्तः । निर्हरणप्रकार माह— "तान् व्यवृहन्तेति । "वृह उद्यमने" § । शल्यप्रोतांस्तानस्माच्छल्यादुद्धरन्त ‖ इत्यर्थः । "एतैरेवेति । प्रतिनिर्देशस्य सव्यपेक्षत्वात् तन्निर्द्दिशति— "यत् त्र्यम्बकैरिति । अम्बिका नाम स्त्री अस्य स्वसा , अतस्त्र्यम्बको रुद्रः । देवतावाचिना लक्षणयात्र हवींष्युच्यन्ते ॥ १ ॥

आख्यायिकया प्रतिपादित मर्थं प्रकृते योजयति— "अथ यदेष इति । 'एषः' इदानीन्तनो यजमानः । "तन्नाहेति । 'न , अह , नु , एव' इति चत्वारो निपाताः । 'तत्' तेन त्रैयम्बकहवियोगेन अद्यापि 'एतस्य' यजमानस्य सम्बन्धिन मेव 'कञ्च' क मपि पुरुषम् 'इषुः' 'तथा' 'नैव' 'ऋच्छति' प्राप्नोति । देवानुकारित्वस्य हेतु माह— "इति देवा इति । "याश्च त्वेवास्येति । 'अस्य' यजमानस्य सम्बन्धिनीः 'प्रजाः' 'जाताः', 'याश्च' 'अजाताः' प्रजनिष्यमाणाः , 'ताः' 'सर्वाः' 'उभयीः' उभयविधाः प्रजाः 'रुद्रियात्' रुद्रकृद्धिंसनात् 'प्रमु-

---

* 'त्रैयम्बकहविषां'—इति च । उत्तरत्राप्येव मेव ।

† 'शल्यनिर्हरणहेतुत्व'—इति कादिपुस्तकेषु । एव मिहोत्तरत्रापि ।

‡ 'त्रैयम्बकान्'—इति का० श्रौ० सू० ५. १०. १ ।

§ तु० प० ६६ धा० । 'दन्त्योष्ठ्यादिः , पवर्गीयादिरित्यन्ये'—इति कौ० ।

‖ "उद्धृतवन्त'—इति च ।

ष्वति'। प्रतिपुरुषं सङ्ख्याय क्रियमाणैः एतैः त्रियम्बकैर्हविर्भिः तस्य रुद्रस्य प्रीणितत्वात्। "ता अस्येत्यादि, गतम् ॥ २ ॥

तेषां देवतां विधाय प्रशंसति— "ते वै रौद्रा भवन्तीति। रुद्रो देवता एषाम्। "सास्य देवता"–इत्यण् *। तत्र कारण माह— "रुद्रस्येति। 'हि' यस्मात् रुद्रसम्बन्धी 'इषुः' त्रिपुरविजयार्थं रुद्रस्यायुधत्वेन निर्म्मितः, तस्मात्। अत एवान्यत्र रुद्रस्य त्रिपुरविजयप्रस्तावे श्रूयते— "त इषुं समस्कुर्वत" –इति †। हविषा मेककपालसंस्कार्यत्वं विधाय स्तौति— "एक कपाला इति। 'एकदेवत्याः' एकदेवतार्थाः सर्वे इमे पुरोडाशाः 'असन्' भवन्त्वित्यभिप्रायेण ॥ ३ ॥

कियन्तस्ते त्र्यम्बकाः कार्या इति तत्परिमाण माह— "ते वै प्रतिपुरुष मिति ‡। 'यावन्तः' यावत्परिमाणविशिष्टा यजमानस्य 'गृह्याः' गृहसम्बन्धिनो ज्ञातयो भवेयुः §, तत्र प्रतिपुरुष मेकैकः पुरोडाश इति गणयित्वा 'तावन्तः' ते पुरोडाशाः एकेनाधिकास्ते कर्त्तव्याः। एतत् प्रशंसति—

---

* पा० सू० ४. २. २४।

† तै० सं० ६. २. ३. १। ‡ का० श्रौ० सू० ५. १०. २।

§ 'गृह्याः पुत्रपौत्रपुत्र्यादीन्यपत्यानि। करम्भपात्रोक्तन्यायेन (३. ४.) गृह्यशब्दः प्रजाविषयो ज्ञेयः'–इति या० दे० (५. १०. २.)। मानवकल्पसूत्रे ऽपि तथैव 'उत्तरतो०–० यावन्ति करम्भपात्राणि'—इति। काठकेऽपि 'यावन्तो यजमानस्य पुत्रपौत्राः'—इति। आपस्तम्बस्त्वाह—'प्रतिपुरुष मेककपालान् निर्वपति, यावन्तो यजमानस्यामात्याः सस्त्रीका स्तावत एकातिरिक्तान्'—इति। "चतुरो वा"— इति च का० श्रौ० सू० ५. १०. ३। अनपत्यस्य एकापत्यस्य द्व्यपत्यस्य त्र्यपत्यस्य च चतुर एवेति तात्पर्यम्। करम्भपात्राण्यप्येव मेव। ५. ३. ५ द्रष्टव्यम्।

"तत् प्रतिपुरुष मिति। पुरुषं पुरुषं प्रतिपुरुषम्, वीप्साया मव्ययीभावः। "एकैकेनेति। "एकं बहुव्रीहिवत्"—इति वीप्सायां द्विर्वचनम् *। बहुव्रीहिवद्भावात् सुपो लोपः। अन्य-दुक्तार्थम्। एकातिरेक मनूद्य तस्य प्रयोजन माह— "एकेनेति ॥ ४ ॥

यावदुक्तचोदना ह्येते पुरोडाशाः, अतस्तेषां संस्कारप्रकार माह— "स जघनेनेति। गार्हपत्यस्य पश्चात् 'यज्ञोपवीती भूत्वा', 'उदङ्मुख आसीनः' †, 'एतान्' पुरोडाशान् निर्व-पतीति प्रक्रम्य, जुहोतयोऽवषट्कारा इति ‡, तत्र अवषट्कारा इति छेदः। हविरुत्पत्त्यन्यथानुपपत्त्याचेमानि तद्धर्मकान्य-वहननादीनि, वैकृतं विशेषं वक्तु मनुक्रामति— "स तत एवे-त्यादिना। प्रागुदीच्यां रुद्राधिष्ठितत्वेनोत्तरदिशो रुद्रसम्बन्धात् तद्दिक्त्वाच्च रुद्रदेवताख्या, तस्मात् 'ताम्' एताम् 'उत्तरां दिशं' 'सचन्ते' सर्वेषु व्यापारेषु ऋत्विजः समवयन्ति § ॥ ५ ॥

एषां हविषा मक्तार्थं मभिघारणपच्च माह— "ते वा अक्ताः स्युरिति ‖। 'वै'—शब्दो ऽवधारणे। खलु 'ते' पुरोडाशाः 'अक्ताः' आज्येनाभिघारिता एव 'स्युः'। तत्र हेतु माह— "अक्तं हीति। 'हि' यस्मात् 'अक्तम्' अभिघारित मेव हविः

---

* पा० सू० ८, १, ९।  † का० श्रौ० सू० ५, १०, ४।

‡ त्रैयम्बका जुहोतयो भवन्ति; न यजतय इति भावः। 'यः त्र्यम्बकैरयजन्ते'त्यादिः व्यवहारः (२. ६. २. १.), स होमान्तर्गतयागा-भिप्रायो द्रष्टव्यः"—इत्यभाषयदिह हरिस्वामी।

§ का० श्रौ० सू० ५, १०, ६, ७ द्रष्टव्यं।

‖ का० श्रौ० सू० ५, १०, ८, ११।

भवति। तथा च तैत्तिरीयकम्— "प्रच्युतं वा एतदस्माल्लोकादगतं देवलोकं यच्छृतं हविरनभिघारित मभिघार्योद्वासयति"—इति *। अनभिघारितपक्ष मप्याह— "उ वा इति। तत्र कारण माह— "अभिमानुक इति। पशुप्रभवेनाज्येन यदि रौद्रान् पुरोडाशान् अज्ञ्यात्, ततः स रुद्रः आज्यसम्बन्धद्वारा तत्कारणभूतान् पशून् 'अभिमानुकः' † अभिमन्तुं बाधितुं शक्तः स्यात् ॥ ६ ॥

"तान् सार्द्धं मित्यादि। निगदसिद्धम्। उत्तरदिशि विशेषं विधत्ते— "पथीति। उत्तरस्यां दिशि यः पन्था विद्यते, तत्रोल्मुकं निधाय, तस्मिन् पुरोडाशान् जुहुयात् ‡। पथि होमे कारण माह— "पथा हीति। 'सः' खलु रुद्रो 'देवः' 'पथा' मार्गेण हि 'चरति' तत्रावतिष्ठत इत्यर्थः। पथ्यपि किञ्चिद् विशेषं विधत्ते— "चतुष्पथ इति। चतुर्णां पथां समाहारश्चतुष्पथः, चतसृभ्यो § दिग्भ्य आगताश्चत्वारः पन्थानो यत्र सङ्गच्छन्ते, तत्र जुहुयादित्यर्थः ‖। एतदुपपादयति— "एतद्ध वा इति। 'एतत्' खलु 'अस्य' रुद्रस्य 'जान्धितम्' ¶ जनैः परिकल्पितम्, 'प्रज्ञातम्' प्रसिद्धम्, 'अवसानं' स्थानम्, यच्चतुष्पथाख्यम्। अत एवोक्त मभियुक्तैः— "वटे-वटे वैश्रवणः, चत्वरे-चत्वरे शिवः"—इति ॥ ७ ॥

---

* तै० सं २, ६, ३, ६।

† 'अभिमंसुकः'—इति च।

‡ का० श्रौ० सू० ५. १०. ५।

§ 'चतुर्भ्यः'—इति छ, ज।

‖ का० श्रौ० सू० ५, १०, ६ क०।

¶ जन + धित = हित। 'जाधितम्'—इत्यपि च।

अथैतस्मिन् होमसाधनं विधत्ते— “पलाशस्य पलाशेनेति * । पलाशवृक्षस्य पर्णेनेत्यर्थः । “ब्रह्म वै पलाशस्य पलाश मिति। पलाशवृक्षस्य ब्रह्मत्वश्रवणात्, तदीयं पर्ण मपि ब्रह्मात्मकम् । ब्रह्मश्रवणञ्च तैत्तिरीयकैराम्नातम्— “देवा वै ब्रह्मन्नवदन्त तत् पर्ण उपाशृणोत्”–इति † । अवदाने विशेष माह— “स सर्वेषा मिति । यावन्तः पुरोडाशाः, तत्र एक मपि रिक्तं विहाय तेषां सर्वेषा मेव सकाशात् तस्मिन् मध्यमपर्णेऽवद्येदित्यर्थः ‡ ॥ ८ ॥

इत्थं सर्वेभ्यः समवत्तस्य हविषः समन्त्रकं होमं विधत्ते— “स जुहोतीति § । मन्त्रस्याय मर्थः— हे ‘रुद्र!’ ‘ते’ तव ‘एष भागः’ । कथम्भूतस्य ? अम्बिकानामास्य स्वसा, तया सहितस्य । अतः ‘तं’ भागं ‘जुषस्व’ सेवस्व । इदं हविः ‘स्वाहा’ सुहुत मस्त्विति ‖ । तत्र “सह स्वस्राम्बिकया”–इति मन्त्रभागस्याभिप्राय माविष्कुर्वन्नेतेषां हविषां त्र्यम्बकनाम निर्ब्रवीति— “अम्बिका ह वा इति ¶ । “तद्यदस्यैष इति । ‘तत्’ तथा सति ‘यद्’ यस्मात् ‘अस्य’ रुद्रस्य तया ‘स्त्रिया’ ‘सह’ ‘एष भागः’ कल्पितः, ‘तस्मात्’ स्त्रीरूपाम्बिकासम्बन्धात् रुद्रस्यैते पुरोडाशाः

* का० श्रौ० सू० ५. १०. ६ ख।

† तै० सं० ३. ५. ७. ३।

‡ का० श्रौ० सू० ५, १०, १० । ‘मध्यमपलाशपत्रे जुहूस्थानीये’ —इति च तत्र या० दे०।

§ का० श्रौ० सू० ५. १०. १२।

‖ मन्त्र एषः वा० सं० ३, ५७. १।

¶ “शरदा अस्याम्बिका स्वसा, तया वा एष हिनस्ति”—इति तै० ब्रा० १, ६, १०, ४ द्रष्टव्यम्।

( वर्णलोपेन ) 'त्र्यम्बकाः'–इत्याख्यायन्ते। "तद् या अस्येति, व्याख्यातम् ॥ ९ ॥

अवदानकालपरिशेषितस्यातिरिक्तस्यैकस्य विनियोग माह— "अथ य एव इति। उत्किरति पांशूनित्युत्करः; आखुभिः कृते 'आखूत्करे' 'तम्' अतिरिक्त मेकं पुरोडाशम् 'उपकिरति' उपक्षिपति *। "कॄ विक्षेपे"–इति धातुः †। "एष ते"–इति मन्त्रः ‡। तदर्थस्तु— हे 'रुद्र!' 'ते' तव 'एषः' पुरोडाशः भागः, अस्मिन्नुत्करे स्थितो यः 'आखुः' असौ 'ते पशुः इति'। मन्त्रपाठस्य प्रयोजन माह— "तदस्मा इति। 'तत्' तेन मन्त्रेण 'पशूनां' मध्ये 'आखु मेव' 'अस्मै' रुद्राय पशुत्वेन निर्द्दिशति। 'तेन' कारणेन 'इतरान्' गवाश्वादि-पशून् स रुद्रो 'न हिनस्ति'। अतिरिक्तस्यैकपुरोडाशस्य यदुपक्षेपणं विहितम्, तदुपपादयति— "तद् यदिति। "तिर-इवेति। 'गर्भाः' तिरोहिता इव भवन्ति। उपकीर्णञ्च द्रव्यं विगलितं सत् तिरोहित मेव भवति, अतो गर्भस्थाना मजातानां प्रजानां रुद्रकृतहिंसनविमोचनाय क्रियमाणस्योपकीर्णत्वं युक्त मिति भावः ॥ १० ॥

जपं विधत्ते— "अथेति §। 'अथ' तदनन्तरम्, पुनश्चतुष्पथादग्निसमीप मेत्य "अवरुद्रम्"–इत्यादिमन्त्रौ ‖ सर्वे जपेयुः।

---

* का० श्रौ० सू० ५, १०. १३। 'मूषिकैरुत्कीर्णे पांसुभिरन्तर्हितं करोतीत्यर्थः। † तु० प० १२६ धा०।

‡ वा० सं० ३. ५७, २।

§ का० श्रौ० सू० ५, १०, १४।

‖ वा० सं० ३, ५८, ५९।

तयोः प्रथममन्त्रस्याय मर्थः ।— 'रुद्रम्' 'अवादीमहि' अव-दीयामहे , हविर्भागेन रुद्र मवयुज्य पृथक्कृत्य प्रजाः रक्षामहे । "दीङ् रक्षणे"—इत्यस्मात् * लोटि , "बहुलञ्छन्दसि"—इति † शब्लुकि "घुमास्था"—इतीत्वम् ‡ । तथा 'देवं' देवनशीलं 'त्र्यम्बकं' स्त्रियाम्बिकाख्यया सहितम् , अवादीमहीत्यनुषङ्गः । अम्बिकासाहित्यप्रतिपादनपर मेतद् द्वितीयं वाक्यम् । स च रुद्रो 'यथा' येन प्रकारेण 'नः' अस्मान् 'वस्यसः' वसीयसः वसु-मत्तमान् 'करत्' कुर्यात् , 'नः' अस्मान् 'यथा' च 'श्रेयसः' प्रशस्यकरान् 'करत्' कुर्यात् , 'यथा' च 'नः' अस्मान् 'व्यव-साययात्' व्यवसायेत, व्यवसितार्थान् कुर्यात् ; तथा 'अवादी-महि' इति सम्बन्धः ॥

अथ द्वितीयस्य ।— हे रुद्र ! त्वं स्वरूपेणैव 'भेषजम्' औष-धम् 'असि' ; सर्वदुरितनिबर्हणहेतुत्वात् । अतस्त्वं 'सुखं' सुप्रापं भेषजम् अस्मदीयेभ्यो गवाश्वादिभ्यः प्रदेहीति शेषः । "आशीरेवेति । एतत् त्र्यम्बकाख्यकर्मणः 'आशीः' फलप्रार्थ-नम् ; गवाश्वादीना मारोग्य मेतस्य कर्मणः फल मित्यर्थः ॥ ११ ॥

अथाप्रदक्षिणं त्रिरग्नेः परिगमनं विधत्ते— "अथापस-लवीति § । त्र्यम्बकस्य हविषः कर्त्तारः सर्वे चतुष्पथे अग्नि मपसलवि त्र्यम्बक मिति मन्त्रेण 'त्रिः परियन्ति' । किं कुर्वन्तः ? 'सव्यान्' वामान् 'ऊरून्' 'अपघ्नानाः' हस्तेन कुट्टयन्तः ‖ ।

---

* दि० आ० ३४ धा० । ‡ पा० सू० ७. ३. ७३ ।

† पा० सू० ६. ४. ६६ । "छन्दस्युभयथेत्यार्द्धधातुकत्वम्"—इतीह महीधरः ( पा० सू० ६, ४, ५ ) ।

§ का० श्रौ० स० ५, १०, १५ । ‖ वादयन्त इति यावत् ।

मन्त्रस्य * चाय मर्थः— त्रीणि अम्बकानि नेत्राणि यस्य, यद्वा अम्बिका स्वसा यस्य, तथोक्तः। शोभनो गन्धो यस्यासौ सुगन्धिः। "गन्धस्येदुत्पूतिसुसुरभिभ्यः"—इति † इकारादेशः। 'पुष्टिवर्द्धनम्' पुष्टेर्वर्द्धयितारम्। रुद्रं वयं 'यजामहे' पूजयामः। त्वत्प्रसादादहम् 'उर्वारुकम्' कर्कटीफलं ‡ पक्वं सत् यथा प्रसवबन्धनात् स्वय मेव मुच्यते, तथा 'मृत्योः' मरणात् 'मुक्षीय' मुक्तो भूयासम्; 'अमृतात्' अमरणात् 'मा' वियोगो भवत्विति। "आशीरेवेत्यादि, सिद्धम्। अन्तिमपादस्य तात्पर्यं माह— "तदु ह्येवेति। 'यः' 'मृत्योः' मरणात् 'मुच्यातै' मुक्तो भवेत्, सः 'अमृतात्' अमरणात् 'न' मुक्तो भवति; एतदेव हि 'श मिव' प्राणिनां सुखं भवति ॥ १२ ॥

अस्य परिगमनस्य भगप्रसिद्धिहेतुत्व मुपपादयति— "तदु हापीति। 'तत्' तदा 'कुमार्यः' अपि त मग्नि मुक्तप्रकारेण 'परीयुः', 'भगस्य' सौभाग्यस्य। कर्मणि षष्ठी। सौभाग्यम् 'भजामहै' प्राप्नुयामहै 'इति' अनेनाभिप्रायेण §। "यो ह वा इति। अम्बिका नाम 'या' खलु 'रुद्रस्य स्वसा', 'सा' 'भगस्य ईष्टे' सौभाग्यस्य स्वामिनी भवति। "ईश ऐश्वर्ये"—इति

---

* मन्त्रोऽयम् वा० सं० ३, ६०, १।

† पा० सू० ५, ४, १३५।

‡ 'कर्कन्ध्वादेः फलम्"—इति महीधरः। 'पर्कटीफलम्'—इति क-पाठः। 'कर्मकर्कटीफलं(!)'—इति च डा०-वेबरेण दृष्टः।

§ का० श्रौ० सू० ५, १०, १६। 'यजमानस्य कुमार्योऽपरिणीता पुत्रास्चोत्तरेण त्र्यम्बक मिति मन्त्रेण, पतिवेदन मित्यन्येन०—० त्रिस्त्रिः परियन्ति, पतिं सौभाग्यं कामयमाना वा'—इतीह या० दे०।

धातुः * । भगस्येति "अधीगर्थदयेशां कर्मणि"—इति † षष्ठी । 'तस्मात्' अम्बिकासहितस्य रुद्रस्य सम्बन्धिनि कर्मणि भगप्राप्तिकामाः कुमार्योऽपि परीयुरित्यर्थः ॥ १३ ॥

कुमारीणां परिगमनेऽपि मन्त्रो विद्यत इत्याह— "तासामिति । 'आसां' पूर्वोक्तानाम् 'तासां कुमारीणा मपि परिगमनेऽन्यो 'मन्त्रः' विद्यते । कः पुनरसाविति, तं पठति— "त्र्यम्बक मिति ‡ । पतिर्विद्यते लभ्यत इति पतिवेदनो रुद्रः । अन्यदुक्तार्थम् । चतुर्थपादस्य तात्पर्यं माह— "सा यदित इति । 'इदं'-शब्देन पितृकुलं परामृश्यते । 'इतः' अस्मात् पितृकुलात् 'ज्ञातिभ्यः' सकाशात् अहं 'मुक्षीय' मुक्ता भूयासम् ; 'अमुतः' अमुष्मात् कुलात् पतिसकाशात् 'मा मुक्षीय' विप्रयुक्ता न भवेम इति तात्पर्यार्थः । "पतयो ह्येवेति । अग्निहोत्रादिधर्मेषु पत्या सहैव स्त्रिया अधिकारः 'हि' यतः, अतः स्त्रीणां 'पतय एव' 'प्रतिष्ठा' आश्रयभूता इत्यर्थः ॥ १४ ॥

तेनैव मन्त्रेण पुनः प्रदक्षिणं त्रिः परिगमनं विधत्ते— "अथ पुनरिति § । 'प्रसलवि' प्रदक्षिणम् । "एतेनैवेति । त्र्यम्बक मिति प्रागुक्तेनोभयविधेन मन्त्रेणेत्यर्थः । "तद्यत् पुनरित्यादिवाक्यशेषः पितृयज्ञवद् व्याख्येयः ॥ १५ ॥

हुतशिष्टानां पुरोडाशानां प्रतिपत्तिं विधत्ते— "अथैतानित्यादि । 'एतान्' पुरोडाशान् यजमानस्याञ्जलावध्वर्युः संवपेत् । यजमानश्च 'ऊर्द्धान् उदस्यति' उत्क्षिपति ।

---

* अदा० आ० १० धा० ।

† पा० सू० २, ३, ५२ ।      ‡ वा० सं० ३, ६०, २ ।

§ का० श्रौ० सू० ५, १०, १५ ।

'यथा' 'गौः' पृथिवीनाभिंतत्; पृथिवी तान् पुरोडाशान् 'नोदाप्नुयात्'! उत्क्षिप्ताः पुरोडाशाः यथा भूमौ न पतन्ति, तथा अन्तरिक्षे, पुनरञ्जलिना धारयेत्। तदुक्तं कात्यायनेन— "रौद्रान् यजमानेऽञ्जलिनोदस्यत्यगोः प्रापणम्, प्रतिगृह्णात्येतान्" –इति *। "आत्मभ्य एवैतदिति। 'एतत्' एतेन उदसनेन 'आत्मभ्यः' ऋत्विग्यजमानाः स्व-स्व-शरीरेभ्यः 'एव' 'शल्यान्' निर्मिमते' निर्हरन्ति। तेषां पुनर्ग्रहणाशक्तौ स्पर्शनं विधत्ते— "तान् विलिप्सन्त इति। लब्धुमिच्छन्तो लिप्सन्तः तद्विपरीतो 'विलिप्सन्तः' लब्धुमशक्ताः सन्तः, भूमौ पतितान् 'तान्' पुरोडाशान् पश्चात् 'उपस्पृशन्ति'। उक्तं हि कात्यायनेन— "प्रतिगृह्णात्येनानशक्यऽउपस्पर्शनम्"–इति †। "भेषजमेवैतदिति। एतेन स्पर्शनेन निर्हृते शल्ये स्वशरीरदेशस्य पुनर्भेषजमेव कृतवन्तो भवन्ति॥ १६॥

"तान् द्वयोरित्यादि। 'द्वयोर्मूतकयोः'। यत्र तृणमये आवपने धान्यं बध्यते, तत् मूतम् ‡, मूतमेव मूतकम्। स्वार्थे क-प्रत्ययः। 'तान्' रौद्रान् पुरोडाशान् 'द्वयोर्मूतकयोः' 'उपनह्य' 'वेणुयष्ट्यां' वेणुमय्यां यष्ट्याम् 'उभयतः आबध्य'; यद्वा 'कुपे' वेणुनिर्मितभाजनद्वययुक्तो दारुविशेषो वीवधापरपर्यायः कुपः §, तस्मिन्; 'उभयतः' उभयपार्श्वयोः वैणवभाजनयोः 'तान्' रौद्रान् 'आबध्य'; तेन सार्द्धम् 'उदङ् परेत्य' उदङ्-

---

* का० श्रौ० सू० ५. १०. १८, १९।

† का० श्रौ० सू० ५. १०. २०।

‡ "मूतयोः, शिक्याकारयोः रज्जुनिर्मितयोः'–इति या० दे०।

§ 'कुपे, यन्त्रियष्टचजे तुलादण्डे'–इति या० दे०।

मुखोऽदूरं गत्वा, वृक्षस्थाण्वादीना मन्यतमस्मिन् * उपलब्धे, वीवधम् 'आसजति' आलगयति †। तस्मिन्नासजने मन्त्र माह— "एतत्त इति ‡।

तस्याय मर्थः।— हे 'रुद्र!' 'ते' तव 'एतत्' तृप्तिकरम् 'अवसम्' पाथेय मन्नम्; तत् स्वीकृत्य 'तेन' साधनेन 'मूजवतः परः' मूजवान्नामोदीच्यः पर्वतः, तस्य परस्ताद्भागम् 'अतीहि' अतिक्रम्य गच्छ, मास्मानधितिष्ठा इति भावः।

मन्त्रगत मवसशब्दं प्रशंसति— "अवसेन वा इति। लोके 'अवसेन' अन्नेन पाथेयेन हि जनाः दूरम् 'अध्वानं' 'यन्ति', 'तत्' तथा सति 'एनं' रुद्रं 'सावसम्' अवससहितम् 'एव' अस्मात् स्थानात् 'अन्ववार्जति' अनुगमयति। अस्य रुद्रस्य गमनयोग्यप्रदेश माह— "यत्र-यत्रेति। यस्मिन्-यस्मिन् स्थाने 'अस्य' देवस्य 'चरणं' वर्त्तनं भवति, 'तत्' स्थानम् 'अनु'-लक्ष्येत्यर्थः। "परो मूजवतः"–इति मन्त्रभागस्याभिप्राय माह— "अत्र ह वा इति। 'अस्य' रुद्रस्य 'अत्र' अस्मिन् मूजवत्पर्वत-सम्बन्धिनि 'परः' परस्ताद् भागे 'चरणं' वर्त्तनं भवति, 'तस्मात्' तेन "परो मूजवतः"–इति मन्त्रभागस्य पठनं युक्त मित्यर्थः। द्वितीयभाग मनूद्य व्याचष्टे— "अवततधन्वेति। अवतत मवरोपितज्यं धनुर्यस्य स तथोक्तः। "पिनाकावस इति। पिनाकः, तस्यैव रुद्रधनुषो नामधेयम्। तस्य अवसः

---

* 'स्थाणौ वा, वृक्षे वा, वंशे वा, वल्मीके वा'—इति, 'स्थाणु छिन्नाग्रं वृक्षमूलम्'—इति च या० दे०।

† का० श्रौ० सू० ५, १०, २१।

‡ वा० सं० ३, ६१, १।

व्यापारो परमो यस्य स तथा। एतेन विशेषणद्वयेन फलित मर्थ माह — "अहिंसन्निति। हे 'रुद्र!' 'नः' अस्माकं हिंसा मकुर्वन् 'शिवः' सुखकरः सन् "अतीहि"—इति 'एतत्', अयं मन्त्रभागः प्रतिपादयतीत्यर्थः। अन्तिमं भागम् * अनूद्य तात्पर्य माह— "कृत्तीति। कृत्तिः त्वग्वास आच्छादनं यस्य स तथोक्तः। अनेन च विशेषणेन 'एनं' नितरां स्वापयेत् †; कृत्तेर्मृदुतरत्वेन सुखकरत्वात् रुद्रस्वापो भवत्येवेत्यनेनाभिप्रायेण विशिष्यते। स्वापोऽपि किमर्थं इत्यत आह— "स्वपन्निति। 'नु' खलु लोके 'स्वपन्' निद्रालुः पुरुषः 'कञ्चन' क मपि 'न हिनस्ति' न पीडयति। अतो रुद्रकृतबाधविरहाय तस्य स्वापः प्रार्थ्यत इत्यर्थः॥ १७॥

तेषां पुनरागमनं विधत्ते— "अथ दक्षिणानिति। रौद्रपुरोडाशानां वृक्षादावासञ्जनानन्तर्य्य मथशब्दार्थः। रौद्रैर्हविर्भिः ये अचारिषुः, 'ते' सर्वे स्वं-स्वं दक्षिणं बाहुम् 'अनु'-लक्ष्य प्रादक्षिण्येनावर्त्तेरन्; आवृत्य च 'अप्रतीचः' रौद्रहविःप्रचरणस्थान मनवलोकयन्तः 'पुनः' वेदिसमीप मागच्छेयुः; आगत्य च

---

* महीधरमते याज्ञिकदेवमते च कृत्तिवासा इत्यपरो मन्त्रः— वा० सं० ३. ६१. २। सूत्रतस्त्वेव मेव प्रतीयते। का० श्रौ० सू० ५. १०. २२ द्रष्टव्यम्। 'क्रियान्तरस्यानुपदेशात् कृत्तिवासा इति जपेत्'—इतीह या० दे०। महीधरस्तु, "कृत्तिवासा इत्यनपेक्ष मेत्योपस्पृशन्त्यपः (५. १०, २२, २३)"—इत्येकं सूत्रं मत्वैव व्याख्यत्— 'उन्नते वृक्षादौ मूतद्वयेऽवसज्य प्रत्यावर्त्तमाना मूतद्वयस्यावेक्षण मकृत्वा वेदिसमीपं समागत्योदकं स्पृशेयुः'—इति।

† 'निष्वापयतीति श्रवणात् आसक्तस्य निश्चलीकरण मनेन कर्त्तव्य मिति केचित्'—इति चात्र या० दे०।

हविःप्रचरणकृतौष्ण्यनिवारणाय 'आपः' उपस्पृशेयुः। "तदद्भिः शान्त्वेति। उष्णशमनहेतुभिः 'अद्भिः' 'तत्' रौद्रप्रचरणजनितं स्व-स्वात्मगत मौष्ण्यं 'शमयन्ते' निवर्त्तयन्तीत्यर्थः * ॥ १८ ॥

वरुणप्रघासान्ते इव केशश्मश्रुवपनादिकं साकमेधान्तेऽपि कर्त्तव्य मित्यनुक्रामति— "अथ केशश्मश्रू त्विति। केशश्मश्रूणि वापयित्वा 'अग्नी' गार्हपत्याहवनीयौ 'समारोह्य' समारोप्य, दक्षिणाग्ने रप्युपलक्षणम् (यदि सर्वे धार्या भवेयुः ?) समारोपणेन गृहं गच्छन्तीति शेषः ॥

"उदवसायेत्यादिना, साकमेधस्यान्तकर्त्तव्यता अत्रापि प्रतिपाद्यते। "उदवसायेति। स्नानानन्तरं खलु 'एतेन' साकमेधान्तेन 'यजते'। तदङ्गत्वेन योत्तरवेदिर्निर्मिता, तस्या मग्निहोत्रहोमो न युक्त इति पुनः स्वस्थानगमनं कर्त्तव्य मित्यादि शेषं पूर्ववद् † व्याख्येयम् ॥ १९ ॥ २ ‡ [ ६. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे षष्ठाध्यायस्य द्वितीयं ब्राह्मणम् ॥

---

* का० श्रौ० सू० ५. १०. २३।

† २८६ पृ० ४ पं०, ३१२ पृ० ६ पं० द्रष्टव्यम्।

‡ तै० सं० १ का० ८ प्र० ६ अनु०, तै० ब्रा० १ का० ६ प्र० १० अनु०। एतयोरनुवाकयोः त्र्यम्बकयागविधयस्तन्मन्त्राश्चाम्नाता द्रष्टव्याः। 'त्र्यम्बक'-'त्रियम्बक'—इति शाखाभेदकृतौ पाठाविदानीं लेखकप्रमादत एकशाखीयवाक्येष्वपि बहुत्र सङ्क्रान्ताविति च ध्येय मिति।

( अथ तृतीयं ब्राह्मणम् )

अक्षय्यꣳ ह वै सुकृतं चातुर्मास्ययाजिनो भवति । संव्वत्सरꣳ हि जयति तेनास्याक्षय्यं भवति तं वै त्रेधा व्विभज्य यजति त्रेधा व्विभज्य प्रजयति सर्व्वं वै संव्वत्सरः सर्व्वं वा ऽअक्षय्य मेतेनो हास्याक्षय्यꣳ सुकृतं भवत्यृतुरु हैवैतद्भूत्वा देवानप्येत्यक्षय्य मु वै देवाना मेतेनो हैवास्याक्षय्यꣳ सुकृतं भवत्येतन्नु तद्यस्माच्चातुर्मास्यैर्यजते ॥ १ ॥

अथ यस्माच्छुनासीर्य्येण यजेत । या वै देवानाꣳ श्रीरासीत् साकमेधैरीजानानां * व्विजिग्यानानां तच्छुन मथ यः संव्वत्सरस्य प्रजितस्य रस आसीत्तत्सीरꣳ सा या चैव देवानाꣳ श्रीरासीत् साकमेधैरीजानानां † व्विजिग्यानानां य उ च संव्वत्सरस्य प्रजितस्य रस आसीत् त मेवैतदुभयं परिगृह्यात्मन् कुरुते तस्माच्छुनासीर्य्येण यजते ॥२॥

*, † 'श्रीरासीत्साकमे०'—इति च दृष्टो डा०-वेबरेण ।

तस्यावृत् *। नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मन्थन्त्यग्निं पञ्च प्रयाजा भवन्ति त्रयो ऽनुयाजा एकꣳ समिष्टयजुः † ॥ ३ ॥

अथैतान्येव पञ्च हवीꣳषि भवन्ति। एतैर्वै हविर्भिः प्रजापतिः प्रजा असृजतैतैरुभयतो वरुण-पाशात् प्रजाः प्रामुञ्चदेतैर्वै देवा वृत्र मघ्नन्नेतैर्व्वेव ‡ व्यजयन्त येय मेषां विजितिस्तां तथो ऽएवैष एतैर्या चैव देवानाꣳ श्रीरासीत् साक मेधैरीजानानां विजिग्यानानां य उ च संव्व-त्सरस्य प्रजितस्य रस आसीत् त मेवैतदुभयं परिगृह्यात्मन् कुरुते तस्माद् वा ऽएतानि पञ्च हवीꣳषि भवन्ति ॥ ४ ॥

अथ शुनासीर्यो द्वादशकपालः पुरोडाशो भवति। स बन्धुः शुनासीर्यस्य यं पूर्व्व मवो-चाम ॥ ५ ॥

---

* 'तस्यावृत्'—इति ग, घ।

† 'समिष्टयजुः'—इति ग, घ।

‡ "मघ्नन्नेतैर्व्वेव'—इति च दृष्टो डा०-वेबरेण।

अथ व्वायव्यं पयो भवति। पयो ह वै प्रजा जाता अभिसञ्जानते व्विजिग्यानं* मा प्रजाः श्रियै यशसे ऽन्नाद्यायाभिसञ्जानान्ता ऽइति तस्मात्पयो भवति ॥ ६ ॥

तद्यद्वायव्यं भवति। अयं वै व्वायुर्यो ऽयं पवत ऽएष वा ऽइदꣳ सर्व्वं प्रप्याययति यदिदं किञ्च व्वर्षति व्वृष्टादोषधयो जायन्त ऽओषधीर्जग्ध्वापः पीत्वा तत ऽएतद्रसो ऽधि पयः सम्भवत्येष हि वा ऽएतज्जनयति तस्माद् वायव्यं भवति ॥ ७ ॥

अथ सौर्य्य एककपालः पुरोडाशो भवति। एष वै सूर्यो य एष तपत्येष वा ऽइदꣳ सर्व्वमभिगोपायति साधुना त्वदसाधुना त्वदेष इदꣳ सर्व्वं व्विदधाति साधौ त्वदसाधौ त्वदेष मा व्विजिग्यानं प्रीतः साधुना त्वदभिगोपायत्साधौ त्वद्विदधदिति तस्मात्सौर्य्य† एककपालः पुरोडाशो भवति ॥ ८ ॥

---

* 'विजिग्यान मेनं'—इति च दृष्टो डा०-वेबरेण।

† 'तस्मात्सौर्य'—इति च दृष्टो डा०-वेबरेण।

तस्याश्वः श्वेतो दक्षिणा। तदेतस्य रूपं क्रियते य एष तपति यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तदेतस्य रूपं क्रियते य एष तपति ॥ ९ ॥

स यत्रैव साकमेधैर्यजते। तच्छुनासीर्येण यजेत यद्वै त्रिः संव्वत्सरस्य यजते तेनैव संव्वत्सरमाप्नोति तस्माद्यदैव कदा चैतेन यजेत ॥ १० ॥

तद्धैके। रात्रीरापिपयिषन्ति स यदि रात्रीरापिपयिषेद्यदद्‌ः पुरस्तात् फाल्गुन्यै पौर्णमास्या ऽउद्दृष्टं तच्छुनासीर्येण यजेत ॥ ११ ॥

अथ दीक्षेत। तं नानीजानं * पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयात् (तत् †) पुनःप्रयोगरूप इव ह स यदेन मनीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयात्तस्मादेनं नानीजानं पुनः फाल्गुनी पौर्णमास्यभिपर्य्येयादिति नूत्सृजमानस्य ॥ १२ ॥

अथ पुनः प्रयुञ्जानस्य। पूर्व्वेद्युः फाल्गुन्यै

---

* 'तन्नानीजानं'—इति, 'तस्मादेतन्नानीजानं'—इति च पाठौ दृष्टौ डा०-वेबरेण।    † नास्त्येतत् पदं घ-ङ-पुस्तकयोः।

पौर्णमास्यै शुनासीर्येण यजेताथ प्रातर्वैश्वदेवेनाथ पौर्णमासिनैतदु पुनः प्रयुञ्जानस्य * ॥ १३ ॥

अथातः। परिवर्त्तनस्यैव सर्व्वतोमुखो वा ऽअसावादित्य एष वा ऽइदꣳ सर्व्वं निर्द्दयति यदिदं किञ्च शुष्यति तेनैष सर्व्वतोमुखस्तेनान्नादः ॥ १४॥

सर्व्वतोमुखोऽय मग्निः †। यतो ह्येव कुतश्चाग्नावभ्यादधति तत एव प्रदहति तेनैष सर्व्वतोमुखस्तेनान्नादः ‡ ॥ १५ ॥

अथाय मन्यतोमुखः पुरुषः। स एतत् सर्व्वतोमुखो भवति यत् परिवर्त्तयते स एव मेवान्नादो भवति यथैतावेतद्य एवं विद्वान् परिवर्त्तयते तस्माद्वै परिवर्त्तयेत ॥ १६ ॥

तदु होवाचासुरिः। किन्नु तत्र मुखस्य यदपि सर्व्वाण्येव लोमानि वपेत यद्वै त्रिः संव्वत्सरस्य यजते तेनैव सर्व्वतोमुखस्तेनान्नादस्तस्मान्नाद्रियेत परिवर्त्तयितु मिति ॥ १७ ॥ ४ ॥

॥ इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् [६. ३.] ॥

---

* 'प्रयुञ्जानस्य'—इति ग, घ।

† 'सर्वतोमुखोऽय मग्निः'—इति ग, घ। ‡ 'स्तेनान्नादः'—इति ग, घ।

अथ शुनासीरीयं * विधित्सुस्तस्य शुनासीयस्य चतुर्थपर्वण: संवत्सरसलक्षणफलसाधनत्वं प्रतिपादयिष्यंस्तावदुपोद्घातत्वेन चातुर्मास्याना मक्षय्यफलसाधनत्व माह— "अक्षय्यं ह वा इति। चतुर्षु-चतुर्षु मासेषु क्रियन्त इति चातुर्मास्यानि प्रयुक्तानि वैश्वदेवादीनि, तैरिष्टवान् चातुर्मास्ययाजी। "करणे यज:"-इति † भूतकाले यजतेर्णिनि:। तस्य 'चातुर्मास्ययाजिन:' 'सुकृतं' यागजनितफलसाधनधर्मापरपर्याय मपूर्वम् 'अक्षय्यम्' क्षेतु मशक्यम्; न कदाचिदपि भोगेन क्षययितुं शक्यते। "क्षय्यजय्यौ शक्यार्थे"-इति ‡, "क्षि क्षये"-इति § अस्मान्निपातित:। अक्षय्यत्व मुपपादयति— "संवत्सरं हीति। 'हि' यस्मात् उदीरितैस्त्रिभि: वैश्वदेवादिभि: पर्वभि: संवत्सरपरिमितकालं 'जयति' 'तेन' संवत्सरजयेन, तदतिरिक्तस्य कालस्याभावात् 'अस्य' सार्वकालिकस्य चातुर्मास्ययाजिन: सुकृतम् अक्षय्यं भवतीत्यर्थ: ‖।

संवत्सरं कथ मेतेन जयत इति तदाह— "तं वा इति। 'तं' संवत्सरं त्रिधा 'विभज्य' चतुर्षु-चतुर्षु मासेषु वैश्वदेवादिभि: 'यजते' ¶, अतस्तं संवत्सरं त्रेधा 'विभज्य' एव 'प्रजयति' प्रकर्षेण जयते। अस्तु संवत्सरस्य जय:, एतावता कथं फलस्याक्षयत्वसिद्धि रिति, तदाह— "सर्वं वा इति। भूतवर्त्तमान-

---

* 'शुनासीरीय मत:'—इति का० श्रौ० सू० ५.११.१।

† पा० सू० ३.२.८५।

‡ पा० सू० ६.१.८१। § धा० प० २३६ धा०।

‖ "अक्षय्यं ह वै चातुर्मास्ययाजिन: सुकृतं भवति"—इति आप० श्रौ० सू० ८.१.१। ¶ 'चातुर्मास्यानि त्रीण्येव'—इतीह हरिस्वामी।

भविष्यत्कालत्रयावच्छिन्नं सर्वं वस्तु संवत्सरमध्ये एवान्तर्भूतम्; संवत्सरस्तु कृत्स्नव्यापितया अनादिरनन्त इति तज्जय्यं फल मपि अक्षय्यं भवतीत्यर्थः। प्रकारान्तरेणाप्यक्षय्यत्वं प्रतिपादयति— "ऋतुरु हैवैतदिति। 'एतत्' एतेन चातुर्मास्ययजनेन वसन्ताद्यृत्वात्मक एव 'भूत्वा' 'देवानप्येति' चातुर्मास्ययाजी अपि गच्छति, देवानाञ्च सुकृत मक्षय्य मेव भवति। अतः 'एतेन' देवेष्वपि प्रापणेन 'अस्य' 'सुकृतम्' 'अक्षय्यम्' एव 'भवति' ॥ १ ॥

इत्थं वैश्वदेवादीनां त्रयाणां फल मुपपाद्य शुनासीर्य्ययागस्य श्र्यादिकं फलं दर्शयति— "अथ यस्मादिति। 'यस्मात्' हेतोः यजमानः 'शुनासीर्येण' पर्वणा 'यजते', तस्मात् तत्फल मुच्यत इत्यर्थः। "या वै देवाना मित्यादि। 'साकमेधैः' प्रागुक्तैर्यागैः 'ईजानानाम्' इष्टवतां 'विजिग्यानानां' वृत्रासुरं जितवतां देवानां 'या' 'श्रीः' सम्पत् 'आसीत्', 'तत्' 'शुनम्' सुखनामैतत् *, सुखहेतुत्वात् शुन मित्युच्यत इत्यर्थः। 'अथ' वैश्वदेवादिभिः त्रिभिस्त्रिभिश्चातुर्मास्यैः प्रस्थितस्य 'संवत्सरस्य' 'यो रस आसीत्' सुखहेतुः सारभूतोंऽशोऽभवत्, तत् 'सीरम्' इत्युच्यते। "या चैव देवाना मित्यादिः, उक्तार्थानुवादः। "त मेवैतदुभय मिति। यदेतत् शुना सीरं चोक्तम्, 'एतदुभयम्' एतेन शुनाशीर्य्ययागेन 'परिगृह्य' यजमानः 'आत्मन्' स्वात्मनि 'कुरुते' धारयति। इत्थं प्रवृत्तिहेतुफल मुपपाद्य तत्साधनभूतं यागं विधत्ते— "तस्मादिति। उक्तलक्षणौ शुनासीरौ अधिदैववाय्वादिरूपेणावस्थितौ। सास्य देवतेत्यर्थे शुनासीरशब्दात्

---

* निघ० ३, ६. ११।

यत् । तद्धविर्योगात् वक्ष्यमाणं हविस्समुदायसाध्यं कृत्स्नं कर्म अनेन व्यपदिश्यते । यस्मादुक्तफलसाधनत्वम्, तस्माच्छुना-सीरीयाख्येनानेन चतुर्थेन पर्वणा यजेतेत्यर्थः * ॥ २ ॥

प्रयोगकर्म वक्तुं प्रतिजानीते— "तस्यावृदिति । 'तस्य' शुनाशीर्यस्य 'आवृत्' क्रिया उच्यत इति शेषः । पूर्वेषु पर्वस्विव प्रसक्त मुत्तरवेदिनिर्वपनादिकं निषेधति— नोप-किरन्तीत्यादिना । प्रयाजानुयाजादयोऽपि प्रकृतिवदेवेत्याह— "पञ्चेति † ॥ ३ ॥

पञ्च हवींषि विधत्ते— "अथैतान्येवेति । वैश्वदेवादिषु पर्वस्वनुष्ठितान्याग्नेयादीनि पञ्च हवींषि अत्रापि कर्त्तव्यानि भवन्तीत्यर्थः । कृत्स्नफलत्वेनैतानि प्रशंसति— "एतैर्वा इति । वैश्वदेवेष्वनुष्ठितैः 'एतैर्हविर्भिः' खलु पुरा 'प्रजापतिः' 'प्रजाः' सृष्टवान् । वरुणप्रघासेष्वनुष्ठितैरेव ताः 'प्रजाः' 'उभयतो वरुणपाशात्' ऊर्ध्वाधःकायस्थितात् 'प्रामुञ्चत्' प्रमुक्तवान् । तथा साकमेधेष्वनुष्ठितैरेव पञ्चभिर्हविर्भिः 'देवाः' 'वृत्रम्' असुरम् 'अघ्नन्', हत्वा च 'एतैः' एव 'व्यजयन्त' विजयं प्राप्तवन्तः । यथैवैतानि कृत्स्नाभिलषितफलसाधनानि, 'तथो' तथैव खलु 'एषः' यजमानः 'एतैः' शुनासीर्याख्ये चतुर्थे पर्वणि अनुष्ठीय-मानैः, आग्नेयादिभिः पञ्चभिर्हविर्भिः शुनासीरीयं ‡ यदेतदनु-क्रान्तम्, 'तदुभयं' फलम् 'आत्मन्' आत्मनि 'परिगृह्य' स्वाधीनं 'कुरुते' । "तस्मादिति, प्रतिपादितार्थनिगमनम् ॥ ४ ॥

---

* का० श्रौ० सू० ५. ११. १ ।

† "पौर्णमासधर्मा बर्हिर्वर्जम्"—इति का० श्रौ० सू० ५. ११. ३ ।

‡ 'शुनासीर्यं'—इति क-पाठः ।

षष्ठं हविर्विधत्ते— "अथ शुनासीर्यं इति *। शुनासीरौ वाय्वादित्यौ देवते अस्य स शुनासीर्यः। 'सीर आदित्यः'-इति हि यास्कः †। द्विवचनेन कात्यायनोऽपीम मर्थ मसूचयत्— "शुनासीराभ्यां द्वादशकपालः"-इति ‡। उक्तं वाक्यशेष मत्राप्यतिदिशति— "स बन्धुरिति। कृत्स्नस्य कर्मणः फलप्रतिपादनसमये 'यं पूर्वं' वाक्यशेषं "या वै देवानाम्"-इत्यादिकम् 'अवोचाम' उक्तवन्तः §, 'सः' एव अस्यापि 'शुनाशीर्यस्य' हविषः स्तावकः; उक्तविधयोरेव वाय्वादित्यरूपेणावस्थितत्वादिति भावः॥ ५॥

सप्तमं हविर्विधत्ते— "अथ वायव्य मिति ‖। वायुर्देवता अस्य तद् 'वायव्यम्'। "वाय्वृतुपित्रुषसो यत्"-इति ¶ यत्। पयसस्तावत् अत्रानुकूल्यं दर्शयति— "पयो ह वा इति। 'जाताः' सर्वाः 'प्रजाः' 'पयः' खलु 'अभि'-लक्ष्य 'सञ्जानते' सञ्जानाना भवन्ति। अतः पयसः सम्पत्तिहेतुत्वात् 'विजिग्यानं' साकमेधैर्विजितवन्तम् 'एनं' यजमानं 'श्रियै' सम्पदे, 'यशसे' कीर्त्त्यै 'अन्नाद्याय' अन्नादनसामर्थ्याय च सर्वाः 'प्रजाः' 'अभिसञ्जानान्तै' अभिसञ्जानीरन्, अनुमन्यन्ता मिति; अनेनाभिप्रायेण पयसः करण मित्यर्थः॥ ६॥

---

* "नित्येभ्योऽधिकानि"-इत्यादीनीह का० श्रौ० सू० ५. ११. ५ द्रष्टव्यानि।

† "शुनासीरौ शुनो वायुः, शु इत्यन्तरिक्षे; सीर आदित्यः, सरणात्"-इति निरु० ९. ४. ६।

‡ का० श्रौ० सू० ५. ११. ५।

§ ४०४ पृ० १० पं०।

‖ "वायव्यं पयः, यवागूर्वा"-इति का० श्रौ० सू० ५. ११. ६, १०

¶ पा० सू० ४. २. ३१।

तस्य वायुदेवत्यत्व मनूद्य स्तौति— "तद्यदिति। "एष वा इत्यादि। 'यदिदं किञ्च' भूम्यां स्थितं स्थावरादिकं 'वर्षति' वृष्ट्या सिञ्चति, इदं सर्वम् 'एषः' खलु पवमानः 'प्रप्याययति' प्रवर्द्धति। "ओ प्यायी वृद्धौ"—इति * धातुः। तस्माद् वृष्टात् पवमानेन प्रप्यायितात् 'ओषधयो जायन्ते', ताश्च 'ओषधीः' 'जग्ध्वा' भक्षयित्वा "अदो जग्धिर्ल्यप्ति किति" —इति † अदेर्जग्धादेशः। ओषधिभक्षणानन्तरम् 'अपः पीत्वा' पशवः पयो दुहन्ति। 'एतदद्भ्यः' सकाशात् 'पयः' 'सम्भवति' उत्पद्यते। तस्मात् परम्परया 'एष हि' पवमानः 'एतत्' पयो 'जनयति' उत्पादयति ‡। तस्मादस्य वायुर्देवतेत्येतदुक्त मित्यर्थः ॥ ७ ॥

अष्टमं हविर्विधत्ते— "अथ सौर्यं इति §। अस्य हविषः सूर्योऽभिगोप्तेत्याह— "एष वै सूर्य इत्यादिना। "साधुना त्वदित्यादि। 'साधुना' शोभनेन कर्मणा 'त्वत्' एकं पुण्यकृतं जनम् 'एषः' सूर्यः 'अभिगोपायति'। न केवलं रक्षणमत्र शोभनात्मकम्। 'इदं सर्वं'' जगत्, एष एव सूर्यो 'विदधाति' करोति; विदधानः सः 'त्वत्' एकं 'साधौ' पुण्ये कर्मणि स्थापयति, 'त्वत्' एकम् अन्यत् 'असाधौ' पापकर्मणि स्थापयति। 'एषः' खलु हिरण्यगर्भरूपः स आत्मा। अस्य हि साध्वसाधुकर्मणः कारयितृत्व मन्यत्र चाम्नायते— "एष ह्येव साधु कर्म कारयति, तेषा मेभ्यो लोकेभ्य ऊर्द्ध्वं निनीषते;

---

* भ्वा० आ० ४८८ धा०। † पा० सू० २, ४, ३६।

‡ का० श्रौ० सू० ५, १, ७, ८, ६।

§ "सौर्य एककपालः"—इति का० श्रौ० सू० ५, ११, ११।

एष ह्यसाधु कर्म कारयति, तेषा मेभ्यो लोकेभ्योऽधो निनीषते"–इति।

"एष मित्यादि। एव मुक्तविधः सूर्य एषः अनेन हविषा 'प्रीतः' सन् 'विजिग्यानं' साकमेधैः विजितवन्तं 'मा' मां 'साधुना' कर्मणा 'अभिगोपायत्' अभिरक्षति, तथा तस्मिन् 'साधौ' शोभने कर्मणि मां 'विदधत्' विदधातु, प्रेरयतु 'इति' अनेनाभिप्रायेण यजमानः सौर्यं हविः कुर्यात्। 'त्वत्' –इति, एतदत्र क्रियाविशेषणत्वेन योज्यम् ॥ ८ ॥

तस्यैककपालस्य दक्षिणां विधत्ते— "तस्याश्वः श्वेत इति। 'तस्य' सौर्यस्य हविषः श्वेतः अश्वविशेषो 'दक्षिणा' *। शुनासीर्यस्य तु षड्भिरनडुद्भिर्युक्तं सीरं दक्षिणा। तदुक्तं सूत्रकारेण— "सीरं षड्योगं दक्षिणा"–इति †। "तदेतस्येत्यादि। 'एतस्य' सूर्यस्य सितभावस्वरूपत्वात् श्वेताश्वदान मेतदीय रूपकरण मित्यर्थः। तादृशाश्वालाभे तादृशो गौर्देय इत्याह— "यद्यश्व मित्यादि ‡ ॥ ९ ॥

अथ शुनासीर्ययागस्य कालं विधत्ते— "स यत्रैवेत्यादिना। 'यत्र' यस्मिन् 'एव' काले 'साकमेधैर्यजते', 'तत्' तदानीम्, तदनन्तरकाले एव § ( सः ‖ ) यजमानः शुनासीर्येण 'यजेत'।

---

* का० श्रौ० सू० ५, ११, १४ क।

† का० श्रौ० सू० ५, ११, १२। सीरम् = हलम्। 'युज्यन्त इति योगाः बलीवर्दाः'–इति च तत्र या० दे०। "ओष्टारौ वा"–इति च तदुत्तरसूत्रम्। 'वोढारौ महान्तौ बलीवर्दौ, न सीरम्'–इति च तद्वृत्तिः।

‡ का० श्रौ० सू० ५, ११, १५। 'गौः श्वेतः'–इति चात्र या० दे०।

§ 'तदनन्तरकाल मेव'–इति च-पाठः।

‖ नास्त्येतत् पदं च-पुस्तके।

न तु शुनासीर्यस्यापि चातुर्मास्यत्वात् मासचतुष्टयस्य व्यवधान मपेक्षित मित्यत आह— "यद्वा इति। चतुर्षु चतुर्षु मासेषु संवत्सरस्य मध्ये वैश्वदेव-वरुणप्रघास-साकमेध-भेदेन 'त्रिः' त्रिवारं 'यजते' इति यत्, 'तेनैव संवत्सर माप्नोति'। वैश्वदेवादयः प्रत्येकं चातुर्मास्ययुक्ता * इति तदनुष्ठानेनैव तेषां द्वादशाना मवाप्तत्वात् तत्समुदायरूपः संवत्सरोऽपि यजमानस्य स्वायत्तो जात इत्यर्थः। उक्त मर्थं निगमयति— "तस्मादिति। यस्मात् चतुर्थपर्वणः शुनासीर्य्यस्य संवत्सरातिरिक्तः प्रातिस्विकः कालो नास्ति, तस्माद् यदा कदाचिदेव साकमेधानन्तरं यजेतेत्यर्थः †। एतदेवानन्तर्य्यं सूत्रकृताप्युक्तम्— "शुनासी-रीय मतः"—इति ‡॥ १०॥

सोमेन यक्ष्यमाणस्य पक्षान्तर माह— "तद्वेक इति। 'तत्' तत्र खलु शुनासीर्यानुष्ठाने 'एके' शाखिनः 'रात्रीः आपिपयिषन्ति' अनेन यागेन कतिचिद् रात्रीः आप्तु मिच्छन्ति। अत एवोक्त मापस्तम्बेन— "ततो द्व्यहे त्र्यहे चतुरहेऽर्द्धमासे मासि चतुर्षु वा मासेषु शुनासीरीयेण यजते"—इति §। तेषां मते सोमेन यक्ष्यमाणस्य शुनासीर्यकाल उच्यत इत्यर्थः।

---

* 'चतुर्मासयुक्ता'—इति का०-सू०-वृ०-धृतः पाठः (५.११.१.)।

† अत्र हरिस्वामिनः— "यस्मिन् काले साकमेधैर्यजते, ततः तत्रैव शुनासीर्येणेति, न तद्दिवसनियमोऽयम्, किन्तर्हि? यत् पूर्वयोः पर्वणोरुक्तम् चतुर्थे मासीति, तदाशङ्कानिवृत्त्यर्थम्। साकमेधः प्रत्यासन्ने यजनीयेऽहनि यजेत, नियमतश्चतुर्थं मासं नाद्रियेतेत्यर्थः। कुत एतत्? तस्माद् यदैव कदा चैतेन यजेतेत्युपसंहारात्"—इति।

‡ का० श्रौ० सू० ५.११.१। "यदेच्छेत्"—इति चैतदुत्तरसूत्रम्।

§ आप० श्रौ० सू० ८.२०.१।

यदि हि 'रात्रीः' 'आपिपयिषेत्' आप्तु मिच्छेत्, तदा आगामिनीभ्यां फाल्गुनीभ्यां युक्ता पौर्णमासी फाल्गुनी; षष्ठ्यर्थे चतुर्थी; 'फाल्गुन्यै' फाल्गुन्याः पौर्णमास्याः 'पुरस्तात्' 'यत्', 'अदः'–इति विप्रकृष्टे, 'उत्' ऊर्द्ध्वं चन्द्रमाः अस्मिन् दृश्यते इति 'उद्दृष्टं' शुक्लपक्षः, 'तत्' तत्र प्रतिपदाद्यन्यतमस्यां तिथौ 'शुनासीर्येण यजेत' * ॥ ११ ॥

"अथ दीक्षेतेति। 'अथ' अनन्तर मेव सोमयागार्थं 'दीक्षेत' कालविलम्बो न कार्य्य इत्यर्थः। दैवान्मानुषाद्वा विघ्नात् विलम्बेऽपि तस्यावधि माह— "तं नानीजान मिति। इमा मेव श्रुति मभिप्रेत्यापस्तम्बोऽप्याह— "चातुर्मास्यैरिष्ट्वा सोमेन पशुना वा यजते, फाल्गुन्या उद्दृष्टे सोमाय दीक्षते, तं ततो नानीजान मपरा फाल्गुनी पर्य्यवेयात्"–इति †। तदत्यये दोष माह— "पुनरिति। 'अनीजानम्' 'एनम्' यजमानम् 'पुनः' फाल्गुनी पौर्णमासी न अतिक्रामेत् इति यत्, स 'पुनःप्रयोगरूप इव ह' भवति; चातुर्मास्यानां प्रयोगस्य एतस्मिन् काले कर्त्तव्यत्वात्, तस्य चानाचरितत्वात् पुनःप्रयोगाङ्गभूतोऽयं कालो भवेदित्यर्थः। प्रतिपादितं प्रतिषेधं निगमयति— "तस्मादिति। अयञ्च पक्षोऽधिकारिविशेषस्यैवेति निगमयति— "इति न्विति। द्विविधो हि चातुर्मास्ययाजिनौ सकृदनुष्ठायो-

---

* का० श्रौ० सू० ५, ११, १५। 'फाल्गुन्युद्दृष्टे = फाल्गुनशुक्लप्रतिपदि'–इति या० दे०। "उद्दृष्टं = शुक्लपक्षः, तस्मिन् प्रतिपद्येव शुनासीर्येण यजेत, अथानन्तरं तस्मिन्नन्यस्मिन् वा दिवसे दीक्षानुसारेण दीक्षेत"–इतीह हरिस्वामी।

† आप० श्रौ० सू० ८, २१, २, ३, ४।

त्सृजमानः पुनः-प्रयुञ्जानश्च। तत्र 'उत्सृजमानस्य' खलु अय मुक्तः पक्ष इत्यर्थः ॥ १२ ॥

कस्तर्हि तानि पुनः-प्रयुञ्जानस्य पक्ष इति दर्शयति— "अथ पुन रिति *। चातुर्मास्यानि सकृत् संयज्य अनन्तर मेव यः तानि पुनरारप्स्यते, तस्य पुनरारभमाणस्य 'फाल्गुन्यै पौर्णमास्यै' षष्ठ्यर्थे चतुर्थी, तस्याः 'पूर्वेद्युः' पूर्वदिवसे चतुर्दश्यां 'शुनासीर्येण यजेत', 'अथ' अनन्तर मेव 'प्रातः' काले पौर्णमास्यां 'वैश्वदेवेन' 'यजेत', तदनन्तरम् नित्येन पौर्णमासयागेनेत्ययं प्रयोगक्रमः। तदुक्तं कात्यायनेन— "फाल्गुन्युपवसथे शुनासीरीयम्, प्रातर्वैश्वदेवम्"–इति †। "एतदु पुनरिति, प्रतिज्ञातार्थनिगमनम् ॥ १३ ॥

चातुर्मास्याङ्गभूतं वपनं मीमांस्यते— "अथात इत्यादिना। अत इति वक्ष्यमाणार्थपरामर्शः। 'अतः' अस्माद् वक्ष्यमाण-हेतोः 'परिवर्त्तनस्य' परितः केशश्मश्रुादीनाम् वर्त्तनस्य ‡ वपनस्य विचारो § ऽधिक्रियते इत्यर्थः ‖। एतत् परिवर्त्तनं विधातु मन्त्रादत्वेनादित्य मग्निं च स्तौति— "सर्वतोमुखो वा

---

* का० श्रौ० सू० ५.११. १६ द्रष्टव्यम्; आप० श्रौ० ८. २१. ६।

† का० श्रौ० सू० ५.११. १७, १८।

‡ 'आवर्त्तनस्य'—इति ङ-पाठः।

§ 'विकारो (विवारो)'—इति च-पाठः।

‖ "हृदयशूलान्ते वपनम्"—इति का० श्रौ० सू० ५. ११.२६। 'पर्वसंस्थासु यद् वपन मुक्तं वैकल्पिकम्, तत् सपशुषु हृदयशूलान्ते= हृदयशूलसमिदाधानान्ते कर्त्तव्य मित्यर्थः'—इति तट्टीकायां या० दे०। अन्यत् सर्व मत्र निरूढवदिति चैतावतैव सम्पन्नम्।

असावादित्य इत्यादिना। सर्वतः सर्वासु दिक्षु मुखं रसादानसामर्थ्यं यस्य स तथोक्तः। सर्वतोमुखत्व मुपपादयति— "एष वा इति। 'निर्धयति' रसं निष्कृष्य पिबति। अत एतत् सर्वं घर्मकाले 'शुष्यति' शोषणं प्राप्नोति, सर्वं जगद् व्याप्य स्थितस्य सूर्यस्य स्वकिरणैनेत्यर्थः॥ १४॥

"सर्वतोमुखोऽय मग्निरिति। अत्रापि तथैव योजना। "यतो ह्येवेति। यतः कुतश्चिदपि दिग्भागादित्यर्थः। 'अभ्यादधति' अभिप्रक्षिपति। "तत एवेति। तस्मिन्नपि दिग्भागे इत्यर्थः॥ १५॥

एव मग्न्यादित्ययोः सर्वतोमुखत्वेन अन्नादत्त्वं प्रतिपाद्य पुरुषस्य स्वाभाविकं तद्वैपरीत्य माह— "अथाय मिति। 'अथ'-शब्दः त्वर्थे। 'अयं' तु 'पुरुषः' यजमानः 'अन्यतोमुखः'। अन्यशब्द एकशब्दपर्यायः। अन्यतः एकत्र स्थित मेव मुखं यस्य, स तथोक्तः। तस्य सर्वतोमुखत्वसम्पत्ति माह— "स एतदिति। 'यद्' यस्मात् परितः शिरो वर्त्तयते, केशान् वापयति, 'एतत्' एतेन अलोमकत्वसाम्यात् शिरसः प्रान्तदेशा अपि मुख मिव भवन्तीति स यजमानः सर्वतोमुखो भवति। इत्थं पुरुषस्य सर्वतोमुखत्वं प्रतिपाद्य प्रागुक्तं दृष्टान्तद्वयसिद्ध मर्थं दार्ष्टान्तिके योजयति— "स एव मेवेति। 'यथा' 'एतौ' आदित्योऽग्निश्च सर्वतोमुखत्वात् अन्नादौ, 'एव मेव' यजमानोऽपि 'अन्नादः' सर्वतो दित्तः समत्तुं समर्थो भवति। "तस्मादिति, उपपादितस्य परिवर्त्तनस्य निगमनम्॥ १६॥

प्रकारान्तरेण सर्वतोमुखत्वं प्रतिपादयन् परिवर्त्तनं न कर्त्तव्य मिति पक्षान्तर माह— "तदु होवाचेति। 'तत्'

तत्र, तस्मिन् परिवर्त्तनविषये 'आसुरिः' नाम महर्षिः आह स्म। 'यदपि' यदि नाम 'सर्वाण्येव लोमानि' परितो 'वपेत', तथापि तत्तन्मुण्डिते देशे 'मुखस्य' सम्बन्धि किन्नामावयवजातं निष्पन्नं भवति? न ह्यलोमकत्वमात्रेण मुख मिति व्यवहर्त्तुं शक्यते, किन्तु बहुश्रोत्राद्यवयवमत्त्वयैव; अतो नैतेन परिवर्त्तनेन सर्वतोमुखत्वं लभ्यत इत्यर्थः। कथन्तर्हि सर्वतोमुखत्वं पुरुषस्य? तत्राह— "त्रिः संवत्सरस्येति। 'संवत्सरस्य' मध्ये वैश्वदेवादिभेदेन 'त्रिः यजते', 'तेनैव' अयं यजमानः 'सर्वतोमुखः'; कृत्स्नस्य संवत्सरस्य यागेन प्राप्तत्वात्। "तेनैवेति। अन्नादहेतुभूतं सर्वतोमुखत्वं प्रकारान्तरेणैव सिध्यति। "तस्मादिति। 'तस्मात्' परिवर्त्तनं 'न आद्रियेत' इत्यासुरेर्मतस्य निगमनम् ॥ १७ ॥ ४ * [ ६. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे षष्ठाध्यायस्य तृतीयं ब्राह्मणम् ॥

---

* त्रिविधानि चातुर्मास्यानि भवन्ति। ऐष्टिकानि, पाशुकानि, सौमिकानि च। तत्र ऐष्टिकान्येवेहोक्तानि विशेषतः, छान्दोग्यादिविहितानि सौमिकानि तु का० श्रौ० सू० द्वाविंशाध्याये सप्तम्यां कण्डिकायां वर्णितानि, पाशुकान्यपि तत्रैव तत उत्तरस्मिन्नध्याये वर्णितानीति द्रष्टव्यम्। "सपशुषु पशुतन्त्रम् प्राधान्यात्, पूर्वेद्युर्वैश्वदेवे पाशुकम्"—इत्यादीनि च सूत्राणीह ( का० श्रौ० सू० ५. ११. १९—३१. ) समालोच्यानीति दिक् ॥

( अथ चतुर्थं ब्राह्मणम् )

तद्यदाहुः । साकमेधैर्व्वै देवा व्वृत्रमघ्नंस्तैर्व्वैव * व्यजयन्त येय मेषां व्विजितिस्ता मिति सर्व्वैर्ह त्वेव देवाश्चातुर्मास्यै व्वृत्र मघ्नंस्तैर्व्वैव व्यजयन्त येय मेषां व्विजितिस्ताम् † ॥ १ ॥

ते होचुः । केन राज्ञा केनानीकेन योत्स्याम इति स हाग्निरुवाच मया राज्ञा मयानीकेनेति ते ऽग्निना राज्ञाग्निनानीकेन चतुरो मासः प्राजयंस्तान् ब्रह्मणा च त्रय्या च व्विद्यया पर्य्यगृह्णन् ॥ २ ॥

ते होचुः । केनैव राज्ञा केनानीकेन योत्स्याम इति स ह व्वरुण उवाच मया राज्ञा मयानीकेनेति ते व्वरुणेनैव राज्ञा व्वरुणेनानीकेनापरांश्चतुरो मासः प्राजयंस्तान् ब्रह्मणा चैव त्रय्या च व्विद्यया पर्य्यगृह्णन् ॥ ३ ॥

---

* ०स्तैर्य्येव'—इति, ०वैर्य्येव'—इति च पाठौ दृष्टौ डा०-वेबरेण ।

† 'व्विजितिस्ताम्'—इति ग, घ ।

ते होचुः । केनैव राज्ञा केनानीकेन योत्स्याम इति स हेन्द्र उवाच मया राज्ञा मयानीकेनेति त ऽइन्द्रेणैव राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्राजयंस्तान् ब्रह्मणा चैव त्रय्या च विद्यया पर्यगृह्णन् ॥ ४ ॥

स यद्वैश्वदेवेन यजते । अग्निनैवैतद्राज्ञाग्निनानीकेन चतुरो मासः प्रजयति तत् त्रेनी शलली भवति लोहः क्षुरः सा या त्रेनी शलली सा त्रय्यै विद्यायै रूपं लोहः क्षुरो ब्रह्मणो रूप मग्निर्हि ब्रह्म लोहित इव ह्यग्निस्तस्माल्लोहः क्षुरो भवति तेन परिवर्त्तयते तद् ब्रह्मणा चैवैन मेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ५ ॥

अथ यद्वरुणप्रघासैर्यजते व्वरुणेनैवैतद्राज्ञा व्वरुणेनानीकेनापरांश्चतुरो मासः प्रजयति तत् त्रेनी शलली भवति लोहः क्षुरस्तेन परिवर्त्तयते तद् ब्रह्मणा चैवैन मेतत् त्रय्या च व्विद्यया परिगृह्णाति ॥ ६ ॥

अथ यत्साकमेधै र्यजते । इन्द्रेणैवैद्राज्ञेन्द्रेणानीकेनापरांश्चतुरो मासः प्रजयति तत्

चेयनी शलली भवति लोहः क्षुरस्तेन परिवर्त्त-यते तद् ब्रह्मणा चैवैन मेतत्त्रय्या च विद्यया परिगृह्णाति ॥ ७ ॥

स यद्वैश्वदेवेन यजते। अग्निरेव तर्हि भवत्यग्नेरेव सायुज्यꣳ सलोकतां जयत्यथ यद् वरुणप्रघासैर्यजते वरुण एव तर्हि भवति वरुण-स्यैव सायुज्यꣳ सलोकतां जयत्यथ यत्साकमेधै-र्यजत ऽइन्द्र एव तर्हि भवतीन्द्रस्यैव सायुज्यꣳ सलोकतां जयति ॥ ८ ॥

स यस्मिन् हऽर्तावमुं लोक मेति। स एन मृतुः परस्मा ऽऋतवे प्रयच्छति पर उ परस्मा ऽऋतवे प्रयच्छति स परम मेव स्थानं परमां गतिं गच्छति चातुर्मास्ययाजी तदाहुर्न चातु-र्मास्ययाजिन मनुविन्दन्ति परमꣳ ह्येव खलु * स स्थानं परमां गतिं गच्छतीति ॥ ९ ॥ ५ ॥

॥ इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् [६. ४.] ॥

---

* 'खलु'—इति च इष्टो डा०-वेबरेण।

वैश्वदेवादिषु सर्वेषु परिवर्त्तनं सेतिकर्त्तव्यताकं विधित्सु-स्तेषां सर्वेषां वृत्रवधहेतुत्वं विजयहेतुत्वं च समान मिति प्रतिपादयति— "तद्यदाहुरिति। 'तत्' तत्र उक्तविषये साक-मेधाना मेव वृत्रवधहेतुत्वं जयहेतुत्वञ्चेति 'यद्' 'आहुः' कथ-यन्ति, तन्न; तथा 'सर्वैरेव' हि 'चातुर्मास्यैः' चतुर्षु-चतुर्षु मासेषु प्रयुज्यमानैः वैश्वदेवादिभिः वृत्रहननं विजयञ्च प्राप्त-वन्तो 'देवाः' इत्यर्थः ॥ १ ॥

तत्र वैश्वदेवेन जित मर्थं माख्यायिकया दर्शयति—"ते होचुरिति। 'ते' देवाः खलु प्रजापतिं पितर मभिलक्ष्य परस्परं वाचम् 'ऊचुः'। "केनानीकेनेति। अनीकं सेना-मुखम्, सेनान्येत्यर्थः। "चतुरो मास इति। "पद्न०"-इत्यादिना * मासशब्दस्य मास् इत्यय मादेशः। "तान् ब्रह्मणा चेति। 'तान्' विजितान् मासान् 'ब्रह्मणा' "अग्नि र्हि ब्रह्म"-इत्यग्रे विवरिष्यते †, अतो ब्रह्मणा अग्निना, 'त्रय्या' वेदत्रयरूपया 'विद्यया च' देवाः 'पर्यगृह्णन्' परितो धारयन् ॥ २ ॥

एवं वैश्वदेवस्याग्निप्रमुखत्व मुक्त्वा वरुणप्रघासेषु वरुण-प्रमुखत्वञ्चाह— "ते होचुरिति। "अपरांश्चतुर इति। आषा-ढादीनित्यर्थः। अन्यत् पूर्ववत् ॥ एवं साकमेधेषु इन्द्रप्रमुखत्वम्, 'अपरान्' कार्त्तिकादीनित्येव विशेषः ॥ ३, ४ ॥

इत्थं प्रतिकृत्युपन्यासेन वैश्वदेवादिषु पर्वसु प्रतिपादित मर्थं यजमानेऽपि क्रमेण योजयति— "स यद् वैश्वदेवेनेत्यादिना। "ब्रह्मणा च त्रय्या च विद्यया पर्यगृह्णन्"-इति यदुक्तम्, तस्य प्रतिकृति माह — "त्रेग्नीति। त्रिषु स्थानेषु 'एतः'

---

* पा० सू० ६, १, ६३। † उत्तरकण्डिकायां द्रष्टव्यम्।

श्वेतवर्णो * यस्याः सा त्रेनी। "वर्णादनुदात्तात्०"—इति † एतशब्दात् ङीप्, तकारस्य नकारादेशश्च। श्वाविन्नामकस्य मृगस्य लोम 'शलली' ‡। उक्तलक्षणा सा वक्ष्यमाणपरिवर्त्तन-हेतुत्वेन स्वीकार्या। तत्र शलल्यास्त्रयीप्रतिरूपत्व माह— "सा येति। 'सा' पूर्वोक्ता 'या' 'त्रेनी शलली', सा त्रित्वसङ्ख्या-विशिष्टगुणोपेतत्वात् त्रय्या विद्यायाः स्वरूपम्। 'लोहः' लोहितवर्णस्ताम्रमयः 'क्षुरः', स 'ब्रह्मणो रूपम्'। कथं ब्रह्मणो लोहितवर्णत्व मिति तदाह— 'अग्निर्हीति। स च ब्रह्मशब्दवाच्यो ऽग्निः लोहितवर्णः 'इव' हि भवति; 'तस्मात्' लोहितवर्णः 'क्षुरः' ब्रह्मणः प्रतिरूप मित्यर्थः। "तेनेत्यादि। 'तेन' क्षुरेण, तया शलल्या च 'परिवर्त्तयते' शलल्या केशान् विभज्य क्षुरेण परितो वापयेदित्यर्थः §। "ब्रह्मणा चैवेति। 'एनं' यजमानम् 'एतत्' एतेन शललीलोहक्षुरकृतेन परि-वर्त्तनेन, अग्निरूपेण तेन 'ब्रह्मणा' क्षुरनिदानभूतेन, 'त्रय्या वेदत्रयरूपया 'विद्यया' च सर्वतोमुखत्वसम्पादनद्वारा अनया 'परिगृह्णाति' परितः सर्वासु दिक्षु धारयतीत्यर्थः ‖ ॥ ५ ॥

---

* 'एतं (एनं) श्वेतं वर्णः'—इति च-पाठः।

† पा० सू० ४. १. ३९।

‡ 'शल्यकण्टकस्याङ्गरुहा सूचिः शलली'—इति (८. ४. १.) आप० श्रौ० सू० व्याख्यायां रुद्रदत्तः।

§ 'वापेत्'—इति क-ज-पाठो डा०-वेबर-दृष्टश्च।

‖ "त्रेन्या शलल्येक्षुकाण्डेनेक्षुशलाकया वा लौहेन च क्षुरेणौ-दुम्बरेण नि केशान् वर्त्तयते वापयते श्मश्रूणि"—इति आप० श्रौ० सू० ८. ४. १। 'निवर्त्तयते= छिनत्ति'—इति रुद्रः। प्रथमस्य वैश्वदेवपर्वणः फलम् तै० ब्रा० १. ४. १०. १-५ द्रष्टव्यम्।

वरुणप्रघासयागस्य वरुणप्रधानकत्वात् तेन जेतव्यं फल मनुक्रामति— "अथ यद् वरुणप्रघासैरिति। "त्र्यनीशलल्लीत्यादि, उक्तार्थम् * ॥ ६ ॥

साकमेधयागस्येन्द्रप्रधानकत्वात् तेन जेतव्यं फल मनुक्रामति— "अथ यत् साकमेधैरिति † ॥ ७ ॥

इत्थं वैश्वदेवादिभिः पर्वभिः द्वादशमासात्मकसंवत्सरस्वरूपावाप्तिं फलत्वेन प्रतिपाद्य ‡, अग्न्यादिदेवतासायुज्य मपि तेषां फलत्वेनाचष्टे— "स यदिति। "अग्निरेव तर्हीति। 'तर्हि' तस्मिन् वैश्वदेवे यागेऽनुष्ठिते 'सः' यजमानः 'अग्निः' अग्न्यात्मकः 'एव भवति'। 'अग्नेरेव सायुज्यम्'–इति, अस्यैव विवरणम्। प्रथम मग्नेः सालोक्यं जयति, पश्चात् सायुज्य मिति योजनाक्रमः। "वरुण एव तर्हि"–इत्यादावप्येवं योज्यम् ॥ ८ ॥

अथ म्रियमानस्य चातुर्मास्ययाजिनो मार्गं ब्रुवन् ब्रह्मलोकप्राप्तिपर्यन्तं फल माह— "स यस्मिन्निति। 'सः' खलु चातुर्मास्ययाजी 'यस्मिन् ऋतौ' 'अमुं' विप्रकृष्टं परं 'लोकम्' 'एति' म्रियते, 'सः' ऋतुः 'एनं' यजमानं स्वस्मात् 'परस्मै ऋतवे' 'प्रयच्छति'। उक्तेऽर्थे विदुषः सिद्धिं सम्पादयति— "तदाहुरिति। यस्मात् चातुर्मास्ययाजी परमां गतिं प्राप्तवान्, 'तत्' तस्मात् अभिज्ञाः 'आहुः' कथयन्ति। किं

---

* द्वितीयस्य वरुणप्रघासपर्वणः फलम् तै० ब्रा० १. ४. १०. ६, ७।

† तृतीयस्य साकमेधपर्वणः फलम् तै० ब्रा० १. ४. १०. ८।

‡ चतुर्थस्य शुनासीरीयपर्वणः फल मपि तै० ब्रा० १, ४. १०, ३।

मिति, तदुच्यते— 'चातुर्मास्ययाजिनम्' चातुर्मास्येनेष्टवन्तं यजमानम् अन्विष्यन्तो जनाः ब्रह्मलोकादवाचीनेषु लोकेषु 'न विन्दन्ति' न लभन्ते *। "परमं ह्येवेति, तत्र कारणाभिधानम् ॥ ८ ॥ ५ [ ६. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे षष्ठाध्यायस्य चतुर्थं ब्राह्मणम् ॥

---

* "विराजो वा एषा विक्रान्तिः, यच्चातुर्मास्यानि। वैश्वदेवेनास्मिंल्लोके प्रत्यतिष्ठत्, वरुणप्रघासैरन्तरिक्षे, साकमेधैरमुष्मिंल्लोके; एष ह त्वा वै तत् सर्वं भवति, य एवं विद्वांश्चातुर्मास्यैर्यजते""—इति तै० ब्रा० १. ४. ८. ५। अत्रैव दशमेऽनुवाके वैश्वदेववरुणप्रघाससाकमेधपितृयज्ञत्र्यम्बकहविःशुनासीरीयाणां प्रशंसाः पृथक्-पृथगाम्नाताः, तास्तत्रैव द्रष्टव्याः। चातुर्मास्ययाजिनः पुनरावृत्तिराहित्यरूप मपि फलं तदन्ते समाम्नात मिति ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् * पञ्चसीरीं-†-स्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः ‡ सिङ्गणार्यो §,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो ‖ राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा ¶ लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
द्वितीयकाण्डे षष्ठाध्यायः समाप्तः ॥ ६ ॥

---

* 'पञ्चाब्धीन्'—इति ठ (१) । † 'सप्तसीरीं'—इति ठ ।
‡ 'सायणः' स्यात् ? § स्यात् 'सिङ्गनार्यो' ?
‖ 'मजडं'—इति ठ । ¶ 'प्राज्यबुद्धिर्'—इति ठ ।
(१) ठ-इति प्रथमकाण्डीयसम्पादकोक्त्यां विवृतं द्रष्टव्यम् ।

॥ इति द्वितीयकाण्डे पञ्चमः प्रपाठकः समाप्तः* ॥

॥ इत्येकपादिकानाम द्वितीयं काण्डं समाप्तम् † ॥

---

* "कण्डिकासङ्ख्या १०४"—इति क, "कण्डिकाः १०४"—इति ख, "कण्डिकासङ्ख्या १०४"—इति ग-घौ। तत्र १ ब्रा० ११ क०, २ ब्रा० ४८ क०, ३ ब्रा० १६ क०, ४ ब्रा० १७ क०, ५ब्रा० ६ क०; सङ्कलनयात्र प्रपाठके १०४ कण्डिकाः सम्पन्नाः॥

† "एवं काण्डे ब्राह्मणानि सङ्ख्या २४। एवं काण्डे कण्डिकासङ्ख्या शत ५४७"—इति क, खत्वन्त्यपृष्ठं मतिजीर्णं मित्यपाठ्यम्, "अस्मिन् काण्डे कण्डिकासङ्ख्या ५४६"—इति ग-घौ। तत्र प्रथमे प्रपाठके ११४, द्वितीये १०३, तृतीये ११३, चतुर्थे ५०५, पञ्चमे १०४; सर्वसङ्कलनयात्र काण्डे ५४६ कण्डिकाः श्रुता इति सिद्धम्॥

BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 1051.



# ॥ शतपथब्राह्मणम् ॥

## ॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA

OF THE WHITE YAJURVEDA,

WITH THE

COMMENTARY OF SĀYAṆA ĀCĀRYA.

EDITED BY

ĀCĀRYA SATYAVRATA SĀMAS'RAMI.

VOL. III, FASCICULUS I.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET,

1903.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA;**

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MESSRS. LUZAC & CO.,
46, GREAT RUSSELL STREET, LONDON, W.C., AND MR. OTTO HARRASSOWI, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—som of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| Title | Rs. | As. |
|---|---|---|
| Advaita Brahma Siddhi, (Text) Fasc. 1–4 @ /6/ each ... | Rs. 1 | 8 |
| Advaitachinta Kaustubhe, Fasc. 1 ... ... ... | 0 | |
| *Agni Purāṇa, (Text) Fasc. 4–14 @ /6/ each ... ... | 4 | 2 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5 and Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–5, Vol. IV, Fasc. 1–5 @ /6/ ... ... | 7 | 8 |
| Aṇu Bhāṣyam, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... ... | 0 | 12 |
| Aṣṭasāhasrikā Prajñāpāramitā, (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Açvavaidyaka, (Text) Fasc. 1–5 @ /6/ each ... ... | 1 | 14 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–5; Vol. II. Fasc. 1–5 @ 1/ each ... ... ... | 10 | 0 |
| *Bhāmatī, (Text) Fasc. 4–8 @ /6/ each ... ... | 1 | 14 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1–4 ... ... ... | 1 | 8 |
| Bṛhaddēvatā (Text) Fasc. 1–4 @ /6/ each ... ... | 1 | 8 |
| Bṛhaddharma Purāṇa, (Text) Fasc. 1–6 @ /6/ each ... | 2 | 4 |
| Bodhicaryavatara of Cantidevi, Fasc. 1–2 ... ... | 0 | 12 |
| Catadusani, Fasc. 1 ... ... ... ... | 0 | 6 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–3 @ 2/ each ... | 6 | 0 |
| Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1 ... | 3 | 0 |
| Catasahasrika Prajnaparamita, (Text) Fasc. 1–5 @ /6/ each ... | 1 | 14 |
| *Caturvarga Chintāmaṇi (Text) Vols. II, 1–25; III. Part I, Fasc. 1–18. Part II, Fasc. 1–10 @ /6/ each ... ... ... | 19 | 14 |
| Catadusani, Fasc. 1 ... ... ... ... | 0 | 6 |
| Çlokavartika, (English) Fasc. 1–3 ... ... ... | 2 | 4 |
| *Çrauta Sūtra of Āpastamba, (Text) Fasc. 4–17 @ /6/ each ... | 5 | 4 |
| Ditto Çāṅkhāyana, (Text) Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4; Vol. III, Fasc. 1–4 @ /6/ each ... ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1–3 @ /6/ each ... ... | 1 | 2 |
| Dan Kriya Kaumudi, Fasc. 1-2 ... ... ... | 0 | 12 |
| Gadadhara Paddhati Kālasāra, Vol I, Fasc. 1–6... ... | 2 | 4 |
| Kāla Mādhava, (Text) Fasc. 1–4 @ /6/ each ... ... | 1 | 8 |
| Kāla Viveka, Fasc. 1–5 ... ... ... ... | 1 | 14 |
| Kātantra, (Text) Fasc. 1–6 @ /12/ each ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1–14 @ /12/ each ... | 10 | 8 |
| Kūrma Purāṇa, (Text) Fasc. 1–9 @ /6/ each ... ... | 3 | 6 |
| Lalita-Vistara, (English) Fasc. 1–3 @ /12/ each ... | 2 | 4 |
| Madana Pārijāta, (Text) Fasc. 1–11 @ /6/ each... ... | 4 | 2 |
| Mahā-bhāṣya-pradīpōdyōta, (Text) Fasc. 1–9 & Vol. II, Fasc. 1–9 @ /6/ each ... ... ... ... ... | 6 | 12 |
| Manuṭīkā Saṅgraha, (Text) Fasc. 1–3 @ /6/ each ... | 1 | 2 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1–6 @ /12 each ... | 4 | 8 |
| *Mīmāṁsā Darçana, (Text) Fasc. 7–19 @ /6/ each ... | 4 | 14 |
| Nārada Smṛti, (Text) Fasc. 1–3 @ /6/ ... ... | 1 | 2 |
| Nyāyavārtika, (Text) Fasc. 1–5 @ /6/ ... ... | 1 | 14 |
| *Nirukta, (Text) Vol. III, Fasc. 1–6; Vol. IV, Fasc. 1–8 @ /6/ each ... | 5 | 4 |
| Nityacarapaddhati Fasc. 1–7 (Text) @ /6/ ... ... | 2 | 10 |
| Nityacarapradiph Fasc. 1 ... ... ... ... | 0 | 6 |
| Nyayabinduṭıkā, (Text) ... ... ... ... | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–3 @ /6/ each ... ... ... ... | 3 | 9 |

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NOS. 1051, 1061, 1081, 1086, 1095, 1108, AND 1121.

---

THE

# ÇATAPATHA BRĀHMAṆA

OF

## THE WHITE YAJURVEDA,

WITH THE

## COMMENTARY OF SĀYAṆA ĀCĀRYA,

EDITED BY

ĀCĀRYA SATYA VRATA SĀMAS'RAMÍ,

*Associate Member of the Asiatic Society of Bengal; Editor, Author, Commentator, Annotator, Compiler, Translator and Publisher of different Vedic Works, &c., &c.*

VOL. III, KANDA III.

---

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1905.

# ॥ शतपथब्राह्मणम् ॥

( शुक्लयजुर्वेदस्य माध्यन्दिनशाखीयम् )

## ॥ श्रीमत्सायणाचार्यकृतवेदार्थप्रकाशभाष्यसहितम् ॥



वङ्गदेशीयास्यायितिकसमितेरनुमत्या व्ययेन च,

सामश्रमीत्युपनामाचार्यसत्यव्रतशर्म्मणा

यथामति संशोध्य सट्टीक्य च सम्पादितम् ।

॥ ३ भा० । ३ का० ॥

( तृतीयकाण्डात्मकस्तृतीयोभागः )

कालीकोठा-राजन्वत्याम्,

१९६२-संवत्सरमायां वाप्तिस्तमिशनयन्त्रे मुद्रितम् ।

## ॥ अथ सम्पादकोक्तिः ॥



अथ यद्यपि प्रथमकाण्डानन्तरं क्रमप्राप्तं द्वितीयकाण्डसम्पादन मेव युक्तम्, परं द्वितीयकाण्डभाष्यस्य सङ्गृहीतादर्शपुस्तकेभ्योऽपर मेक मपि विशुद्धं पुस्तकं सङ्ग्रहणीयं तच्च कालसापेक्ष मिति धिया क्रम मुल्लङ्घ्याप्यस्य तृतीयकाण्डस्य सम्पादने प्रवृत्तोऽभव मितीद मेवैवंविधक्रम-व्यत्यासस्य निदानम् ।

तस्यैतत्तृतीयकाण्डस्य पाठान्तरादिसम्पादनाय सङ्गृहीताना मादर्श-पुस्तकाना मेवं नामधेयानि कल्पितानि—

क = १६४-पत्रात्मकम्, १६७३–संवल्लिखितम्, पूर्णम् ।
ख = ४८-पत्रात्मकम्, १६०५ (?)–संवल्लिखितम्, पूर्णम् ।
ग = डा०-वेबर-सम्पादितम्, ख्री०-१८४६-बार्लिन्मुद्रितम्, पूर्णम् ।
घ = अजमेर-वैदिकयन्त्रालये १९५९-संवन्मुद्रितम्, पूर्णम् ।
ङ = १८५-पत्रात्मकम्, १६६१-संवल्लिखितम्, पूर्णम् ।
च = ३२-पत्रात्मकम्, १८२६-ख्री०-लिखितम्, पूर्णम् ।
छ = डा०-वेबरेणालुप्ताक्षराणि विचित्य समाहृतं ग-मुद्रितम् ।
ज = श्रीरामपुरकलेजीयं ख्री०-१८१८-लिखितम्, पूर्णम् ।

एष्वष्टस्वादर्शपुस्तकेष्वाद्यं चतुष्कं मूलस्यापरं तु चतुष्कं भाष्यस्य । तत्र ग-घयोरैक्य मुपलभ्यते, समुपलभ्यते च ङ-च-जाना मेकादर्शबीजत्वम्, तत्रापि जस्य परित्याज्यतैव सम्पन्ना ।

अस्मिन् काण्डेऽग्निष्टोमसंस्थस्य सोमयागस्य शालानिर्माणादि-सोमाभिषवान्तानि कर्म्माणि विहितानि । तत्र दीक्षणीया, प्रायणीया, आतिथ्या, उपसद्, अग्निप्रणयनीया, अग्नीषोमीया, सुत्या चेति प्रधानाङ्ग-कर्म्माणि ; तेष्वेव यूपनिखननादीनि निग्राभ्यास्वभिषुतसोमरसग्रहणा-न्तानि प्रत्यङ्गकर्म्माणि समाश्रितानीति विवेकः ।

एकाहाहीनसत्रेतित्रैविध्य मापन्नानां सर्वेषा मेव सोमयागानां प्रकृतिभूतस्याग्निष्टोमस्याध्वरस्यादिभूताङ्गप्रत्यङ्गकर्मणां शालानिर्माणादीना मिह विधान माम्नात मितीदं काण्ड मध्वर मित्याचक्षते । "अध्वर मिति

यज्ञनाम; ध्वरतिर्हिंसाकर्म्मा, तत्प्रतिषेधः"—इत्याह हि यास्कः ( निरु० १. ३. ३. )। यद्यप्यत्रैव काण्डे पशुसञ्ज्ञपनं विहितम्, तथाप्यस्याध्वरत्वं न विहन्यते; अग्नीषोमीयपशुसञ्ज्ञपनस्याम्नायविहितत्वेन हिंसात्वाभावात्। तथाह्युक्तं भगवता यास्केन— "आम्नायवचनादहिंसा प्रतीयेत"–इति ( निरु० १. ५. २. )। एव मेव सिद्धान्तितं मीमांसादर्शनेऽपि महामुनि-जैमिन्यादिभिः। तदेवं "दृष्टवदानुश्रविकः; स ह्यविशुद्धिः"–इति ( सां० त० कौ० २ का० ) साङ्ख्याचार्यसिद्धान्तो जलमध्यस्थमसीह्रोदवत् किं न विक्लिन्न इति सुधीभिर्विभाव्य मेव।

इह काण्डे यावन्त्याख्यानानि श्रुतानि, तेषु "सौपर्णीकाद्रव" नाम (११८, ३६२ पृ० ) प्रधानं मन्यतेऽस्माभिः। वस्तुतस्त्वेतदाख्यानं स्याच्छत-पथाम्नानाच्च पूर्वतनम्; कथ मन्यथा ह्युपपद्येताऽत्र ब्राह्मणे तद्याख्यानम्। एतस्याख्यानस्याधियज्ञव्याख्यानतोऽधिदैवतं ( वैज्ञानिकं ) व्याख्यान मुत्कृष्टतरम्, ज्ञेयं तु तद् गुरूपदेशादिभिः।

एतदेवाख्यानं रामायण–महाभारत–भागवताग्निपुराणादिषु बहुधा प्रपञ्चित मतिपल्लवितञ्च। तत्तत्स्थिद मुपाख्यानं किञ्चिदुपदेशप्रदानाय, वक्तव्यविषयस्य नीरसत्वपरिहाराय च कविकल्पनाप्रसूतं सर्वं मन्दत मेव। तदिद मस्य यज्ञीयव्याख्यानतोऽपि सुप्रतीयते; तथाच "वागेव सुपर्णी, इयं कद्रूः"–इत्यादिकं ( ३६१ पृ० ) द्रष्टव्यम्। तैत्तिरीयकेऽप्येव मेव—"इयं कद्रूः, असौ सुपर्णी, छन्दांसि सौपर्णेयाः"–इति ( सं० ६. १. ६. २. )। अतएवोक्त मग्निपुराणेऽपि—"गायत्र्यादीनि छन्दांसि सौपर्णेयानि पक्षिणः"–इति। वैदिकाख्यायिकाना मेषैव गतिः प्रायः सर्वत्रोप-लभ्यते। उक्तं चैतन्मीमांसादर्शनेऽतिसुव्यक्तम्—"असद् वृत्तान्ताख्या-नम्"—इत्यादि ( जै० सू० १. २. १० शा० भा० )। एवञ्चैतन्मूलक-महाकाव्येतिहासपुराणग्रन्थाना मपि सर्वेषा मेवमेव गतिः सर्वैः शेमुषी-मद्भिः स्वीकार्यत्यत्र किमु वक्तव्य मस्तीति शम्॥

कालीकोठा-नाम-राजन्वती। सं १९६१। ख्रृ० १९०५। } श्रीसत्यव्रतशर्म्मा। ( आवसथः, सामश्रमी, आचार्य्यश्च )

# ॥ अथमूलशुद्धिपत्रम् ॥

| अशुद्धम् | शुद्धम् | प्र० ब्रा० क० | पृष्ठ |
|---|---|---|---|
| सुव्वँ ... ... | सुव्वैं ... | १. २. १४. ... | १५ |
| पुष्पन्निति ... | पुष्यन्निति ... | १. २. २०. ... | १७ |
| पुष्पन्निति ... | पुष्यन्निति ... | १. २. २०. ... | १७ |
| घेन्वै ... ... | धेन्वै ... | १. २. २१. ... | १७ |
| मुत्तरं ... ... | मुन्तरं ... | १. ५. ११. ... | ६० |
| म्नित्येत्तुतो ... | म्नियेत्तुतो ... | १. ५. ३१. ... | ६४ |
| युद्वाचंयमो ... | यद्वाचंयमो ... | १. ५. ३८. ... | ६६ |
| कुरुपञ्चालवा ... | कुरुपञ्चालत्रा ... | २. २. १५. ... | १०५ |
| तद्धिरण्यानां ... | तद्धिरण्यानां ... | २. ३. १. ... | ११९ |
| वेदागा ... | चेदागा ... | २. ३. ४. ... | ११९ |
| व्युख्यसुदिति- ... | व्युस्यसुदिति- | २. ४. २. ... | १३९ |
| व्वीर्य्यं ... ... | व्वीर्य्यं ... | १. ६. ७. ... | १६६ |
| सुम्भूता ... | सुम्मूता ... | २. ६. ८. ... | १६६ |
| व्रत्यच्छं ... | व्रत्यश्वं ... | २. ६. ११. ... | १६७ |
| यक्कुन्दोभ्यः ... | यच्छन्दोभ्यः ... | ३. २. ८. ... | २१० |
| वे ... ... | वै ... ... | ३. ४. ८. ... | २४३ |
| ऽश्मानाना मौवधि* | ऽश्मनाना:जौषधि | ३. ४. १३. ... | २४४ |
| निक्कुर्वीन्नु ... | निक्कुर्वीरन्नु ... | ३. ४. २०. ... | २४६ |
| हामि ... | हामिं ... | ३. ५. ११. ... | २५९ |

* एव मेव पाठो ग-घ-पुस्तकयोः।

| अशुद्धम् | | शुद्धम् | | प्र० आ० क० | | पृष्ठे |
|---|---|---|---|---|---|---|
| दुरीयसी | ... | दुरीयसी | ... | ४. १. ११. | ... | २७३ |
| मेतुद्दिग्भ्यो | ... | मेतुद्दिग्भ्यो | ... | ४. १. ३२. | ... | २७९ |
| ह्वैवास्या | ... | ह्वैवास्य | ... | ४. २. १५. | ... | २९८ |
| भ्रूवेण ... | ... | भ्रुवेण | ... | ५. ४. १६. | ... | ३४४ |
| युद्वै ... | ... | युद्वै | ... | ५. २. १. | ... | ३७६ |
| मुध्ये- ... | ... | मुध्ये- | ... | ४. ५. १४. | ... | ४११ |
| मुग्ध्वानुव्व्रता | ... | मुग्धानुव्व्रता | ... | ५. ४. २२. | ... | ४१३ |
| यूप प्राकलु | ... | यूपप्राकलु | ... | ५. ४. ३०. | ... | ४१५ |
| एत ... | ... | एतं | ... | ५. ५. २. | ... | ४३३ |
| ॥ ११ ॥ | ... | ॥ १२ ॥ | ... | ६. २. १२. | ... | ४५४ |
| ऽस्मिनु ... | ... | ऽस्मिनुं | ... | ६. ३. १२. | ... | ४६६ |
| ऽस्मिनु ... | ... | ऽस्मिनुं | ... | ६. ३. १२. | ... | ४६६ |
| रेतुन्त्स्तोकान् | ... | रेतान्त्स्तोकान् | | ६. ३. २२. | ... | ४६८ |
| सुन्दधत्ते | ... | सुन्दधते | ... | ६. ३. ३०. | ... | ४७० |
| भूतोनर्थ्युः | ... | भूतोऽनर्थ्युः | ... | ६. ४. १५. | ... | ४८४ |
| न्नमुरित्यु | ... | नन्नमुरित्यु | ... | ७. ४. ३१. | ... | ५५१ |

स्यादेव मन्योऽन्योऽपि चाशुद्धपाठः शोधकदृष्ट्यादिदोषतः ॥

# शतपथब्राह्मण-तृतीयकाण्डस्य
# सूचीपत्राणि ।

## ॥ अथ प्रपाठकसूची ॥


अथ प्रथमः प्रपाठकः ( देवयजनं १अ० १ब्रा० ) ... १९०

अथ द्वितीयः प्रपाठकः ( वाचं यच्छति २अ० २ब्रा० ) ... ८१

अथ तृतीयः प्रपाठकः ( नीडे कृष्णाजिन ३अ० ४ब्रा० ) ... १८१

अथ चतुर्थः प्रपाठकः ( तद्य एष पूर्वार्द्ध्यो ५अ० १ब्रा० ) ... २७२

अथ पञ्चमः प्रपाठकः ( व्विजामानो हैवास्य ६अ० २ब्रा० ) ३६१

अथ षष्ठः प्रपाठकः ( पाशं कृत्वा ७अ० ४ब्रा० ) ... ४४१

अथ सप्तमः प्रपाठकः ( सोऽत्युपयजति ८अ० ५ब्रा० ) ... ५१३


## ॥ अथाध्यायसूची ॥


अथ प्रथमाध्यायः ( देवयजनं १प्र० १ब्रा० ) ... ... १९०

अथ द्वितीयाध्यायः ( दक्षिणेनाहवनीयं १प्र० ५ब्रा० ) ... ५८

अथ तृतीयाध्यायः ( सप्त पदान्यनु- २प्र० ४ब्रा० ) ... १३९

अथ चतुर्थाध्यायः ( शिरो वै यज्ञस्यातिथ्यं ३प्र० २ब्रा० )... २०९

अथ पञ्चमाध्यायः ( तद्य एष पूर्वार्द्ध्यो ४प्र० १ब्रा० ) ... २७२

अथ षष्ठाध्यायः ( उदर मेवास्य सदः ४प्र० ५ब्रा० ) ... ३४१

अथ सप्तमाध्यायः ( अभ्रि मादत्ते ५प्र० ४ब्रा० ) ... ४०८

अथाष्टमाध्यायः ( तद्यत्रैतत् प्रचरतो ६प्र० १ब्रा० ) ... ४५१

अथ नवमाध्यायः ( प्रजापतिर्व्वै प्रजाः ७प्र० २ब्रा० ) ... ५२१

# ॥ अथ ब्राह्मणसूची ॥



| सङ्ख्या | ब्राह्मणनाम | प्रपाठकस्य | | अध्यायस्य | | पृष्ठे |
|---|---|---|---|---|---|---|
| १ | देवयजनब्राह्मणम् ... | १प्र० | १ब्रा० ... | १अ० | १ब्रा० ... | १ |
| २ | दीक्षाब्राह्मणम् ... | १प्र० | २ब्रा० ... | १अ० | २ब्रा० ... | १२ |
| ३ | आग्नावैष्णवेष्टिब्राह्मणम् | १प्र० | ३ब्रा० ... | १अ० | ३ब्रा० ... | २६ |
| ४ | औदुम्भणब्राह्मणम् ... | १प्र० | ४ब्रा० ... | १अ० | ४ब्रा० ... | ४४ |
| ५ | अजिनदीक्षादिब्राह्मणम् | १प्र० | ५ब्रा० ... | २अ० | १ब्रा० ... | ५८ |
| ६ | दीक्षितव्रतब्राह्मणम् | २प्र० | १ब्रा० ... | २अ० | २ब्रा० ... | ८१ |
| ७ | प्रायणीयेष्टिब्राह्मणम् | २प्र० | २ब्रा० ... | २अ० | ३ब्रा० ... | १०३ |
| ८ | सोमाख्यानब्राह्मणम् | २प्र० | ३ब्रा० ... | २अ० | ४ब्रा० ... | ११९ |
| ९ | सोमक्रयणीब्राह्मणम् | २प्र० | ४ब्रा० ... | ३अ० | १ब्रा० ... | १३९ |
| १० | सोमोपनहनब्राह्मणम् | २प्र० | ५ब्रा० ... | ३अ० | २ब्रा० ... | १५१ |
| ११ | सोमप्रणयनब्राह्मणम् | २प्र० | ६ब्रा० ... | ३अ० | ३ब्रा० ... | १६४ |
| १२ | सोमपर्याणहनब्राह्मणम् | ३प्र० | १ब्रा० ... | ३अ० | ४ब्रा० ... | १८१ |
| १३ | आतिथ्येष्टिब्राह्मणम् | ३प्र० | २ब्रा० ... | ४अ० | १ब्रा० ... | २०९ |
| १४ | तानूनप्त्रब्राह्मणम् ... | ३प्र० | ३ब्रा० ... | ४अ० | २ब्रा० ... | २२६ |
| १५ | अवान्तरदीक्षाब्राह्मणम् | ३प्र० | ४ब्रा० ... | ४अ० | ३ब्रा० ... | २४१ |
| १६ | उपसदिष्टिब्राह्मणम् | ३प्र० | ५ब्रा० ... | ४अ० | ४ब्रा० ... | २५७ |
| १७ | वेदिनिर्म्माणब्राह्मणम् | ४प्र० | १ब्रा० ... | ५अ० | १ब्रा० ... | २७३ |
| १८ | अग्निप्रणयनब्राह्मणम् | ४प्र० | २ब्रा० ... | ५अ० | २ब्रा० ... | २९५ |
| १९ | यज्ञपुरुषब्राह्मणम् ... | ४प्र० | ३ब्रा० ... | ५अ० | ३ब्रा० ... | ३०५ |
| २० | सोमाभिषवब्राह्मणम् | ४प्र० | ४ब्रा० ... | ५अ० | ४ब्रा० ... | ३२५ |
| २१ | सदोब्राह्मणम् ... | ४प्र० | ५ब्रा० ... | ६अ० | १ब्रा० ... | ३४१ |
| २२ | धिष्ण्यब्राह्मणम् ... | ५प्र० | १ब्रा० ... | ६अ० | २ब्रा० ... | ३६१ |
| २३ | वैसर्जनब्राह्मणम् ... | ५प्र० | २ब्रा० ... | ६अ० | ३ब्रा० ... | ३७७ |

| सङ्ख्या | ब्राह्मणनाम | प्रपाठकस्य | अध्यायस्य | पृष्ठे |
|---|---|---|---|---|
| २४ | यूपमानब्राह्मणम् ... | ५प्र० ३ब्रा० ... | ६अ० ४ब्रा० ... | ३९४ |
| २५ | यूपनिधानब्राह्मणम् | ५प्र० ४ब्रा० ... | ७अ० १ब्रा० ... | ४०८ |
| २६ | यूपैकादशिनीब्राह्मणम् | ५प्र० ५ब्रा० ... | ७अ० २ब्रा० ... | ४२६ |
| २७ | पशूपाकरणब्राह्मणम् | ५प्र० ६ब्रा० ... | ७अ० ३ब्रा० ... | ४३३ |
| २८ | पशुसञ्ज्ञपनब्राह्मणम् | ६प्र० १ब्रा० ... | ७अ० ४ब्रा० ... | ४४१ |
| २९ | आप्रीब्राह्मणम् ... | ६प्र० २ब्रा० ... | ८अ० १ब्रा० ... | ४५१ |
| ३० | पशुवपाब्राह्मणम् ... | ६प्र० ३ब्रा० ... | ८अ० २ब्रा० ... | ४६३ |
| ३१ | पशुपुरोडाशब्राह्मणम् | ६प्र० ४ब्रा० ... | ८अ० ३ब्रा० ... | ४८१ |
| ३२ | प्रयाजानुयाजब्राह्मणम् | ६प्र० ५ब्रा० ... | ८अ० ४ब्रा० ... | ५०४ |
| ३३ | उपयाजब्राह्मणम् ... | ७प्र० १ब्रा० ... | ८अ० ५ब्रा० ... | ५१३ |
| ३४ | पश्वेकादशिनीब्राह्मणम् | ७प्र० २ब्रा० ... | ९अ० १ब्रा० ... | ५२१ |
| ३५ | वसतीवरीब्राह्मणम् | ७प्र० ३ब्रा० ... | ९अ० २ब्रा० ... | ५३२ |
| ३६ | सुत्याब्राह्मणम् ... | ७प्र० ४ब्रा० ... | ९अ० ३ब्रा० ... | ५४४ |
| ३७ | अधिषवणब्राह्मणम्... | ७प्र० ५ब्रा० ... | ९अ० ४ब्रा० ... | ५७३ |



---

## ॥ अथ कण्डिकासूची ॥



| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| अग्नये त्वा रायस्पोषदे ... | २११ |
| अग्निं वैश्वानरं ... ... | ५१३ |
| अग्निर्ब्रह्मेति ... ... | ८३ |
| अग्नीषोमौ वै देवानाᳬ ... | २५८ |
| अतिच्छन्दसा मिमीते ... | १५३ |
| अतिथेरातिथ्य मसि ... | २११ |
| अत्र हैके । अङ्गुलीश्च ... | ६५ |
| अत्र हैके । उदपात्र ... | १८९ |
| अत्र हैके । दर्भं वा ... | १५३ |
| अथ ऽइतरथाहुः ... ... | ३२६ |
| अथ कृष्णविषाणाᳬ ... | ६१ |
| अथ खनति । प्राञ्च ०—० उपरेण ... ... ... | ४०८ |
| अथ खनति । प्राञ्च ०—० यजमानेन ... ... | ३४२ |
| अथ गृह्णाति । समुद्रस्य ... | ५५० |

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| अथ ग्रावाण मादत्ते ... | ५७४ |
| अथ ग्राव्णा उपावहरति | ३३० |
| अथ चतुर्थीं जुहोति ... | ४७ |
| अथ चत्वारो राजासन्दी ... | १८८ |
| अथ चषाल मुदीक्षते ... | ४१२ |
| अथ चषाल मुभयतः ... | ४१० |
| अथ चात्वाले मार्ज्जयन्ते ... | ४७० |
| अथ छदिरधिनिदधाति ... | ३४५ |
| अथ जघनेन कृष्णाजिने ... | ५८ |
| अथ जाघन्या पत्नीः ... | ५१४ |
| अथ जिह्वायै । सा ... | ४८५ |
| अथ जुहोति । उरु विष्णो | ३८० |
| अथ जुहोति । त्वꣳ सोम | ३७८ |
| अथ जुहोति । यया ०—० या ते ऽग्ने रजःशया | २६१ |
| अथ जुहोति । यया ०—० या ते ऽग्ने हरिशया | २६१ |
| अथ जुह्वा पृषदाज्यस्योपघ्नन् | ४८८ |
| अथ जुह्वा पृषदाज्यस्योपहत्य | ४८२ |
| अथ तृण मादायोपाकरोति | ४३४ |
| अथ दक्षिणतः प्रोक्षति ... | २९६ |
| अथ दक्षिणेन जानु ... | ५९ |
| अथ दर्भतरुणक मन्तर्दधाति ०—० क्षुरस्तथो ... | १४ |
| अथ दर्भतरुणक मन्तर्दधाति ०—० परशुस्तथो ... | ३९६ |
| अथ दर्भतरुणके निदधाति | २१३ |
| अथ देवाः । व्रीणा मेव ... | १२० |
| अथ द्वितीय माश्रावयति | ४४४ |
| अथ द्वितीयां कुम्भी ... | ३६३ |
| अथ न दीक्षितः । काष्ठेन | ६४ |
| अथ नापिताय क्षुरं प्रयच्छति | १४ |
| अथ निग्राभ्या आहरति... | ५७५ |
| अथ निग्राभ्याभिरुपसृजति | ५७७ |
| अथ निग्राभ्याभ्यो ग्रहान् | ५८१ |
| अथ नियुनक्ति ... ... | ४४२ |
| अथ नीवि मुद्गूहते ... | ९१ |
| अथ पत्नीभ्यः पत्नीयूप ... | ४२७ |
| अथ पत्न्यै पदं प्रति ... | १४१ |
| अथ परिधीन् परिददाति | २९८ |
| अथ परिव्ययति ... ... | ४१२ |
| अथ पर्युहति । ब्रह्मवनि त्वा | ३४४ |
| अथ पर्यूषति । ब्रह्म दृꣳह | ३४४ |
| अथ पशुं विशास्ति ... | ४८१ |
| अथ पशुꣳ सम्प्रशाति ... | ४८९ |
| अथ पशोः प्राणानद्भिः ... | ४६४ |
| अथ पश्चात्परिक्रम्य ... | १८५ |
| अथ पश्चात्प्रोक्षति ... | २९६ |
| अथ पार्श्वेन वासिना ... | ४८६ |

| कण्डिकाप्रतीकम् | पृष्ठे | कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|---|---|
| अथ पुनः प्रपद्य ... ... | ३०७ | अथ मिनोति । या ते ... | ४११ |
| अथ पुनरेत्याहवनीय ... | ४५४ | अथ मुखं व्मिमृष्टे... ... | ५१३ |
| अथ पुनर्ल्लोष्टं न्यस्येति ... | ८७ | अथ मेखलां परिहरते ... | ६० |
| अथ पुरस्तात् । उदीचीँ | २७८ | अथ मैत्रावरुणचमसेनैता | ५५० |
| अथ पूर्व्वयोरुत्तरस्याम् ... | २९८ | अथ य एष मध्यमः ... | ३४१ |
| अथ पृषदाज्यं गृह्णाति ... | ५०५ | अथ यच्चतुर्व्विँशतिविक्रमा | २७३ |
| अथ पौष्णम् । पशवो ... | ५२२ | अथ यजमानाय पदं ... | १४० |
| अथ प्रतिप्रस्थाता । अग्रेण | १८७ | अथ यत् त्रिँशत् ... ... | २७३ |
| अथ प्रतिप्रस्थाता । उत्तरँ | ३१० | अथ यत्पत्नीकृत्वः पवते ... | १९६ |
| अथ प्रस्तरे निह्नवते ... | २४६ | अथ यत्पत्नीकृत्वो गृह्णाति | २११ |
| अथ प्रहरिष्यन् । यं ... | ५७८ | अथ यत्पत्नीकृत्वो मिमीते | ५७६ |
| अथ प्राङ्विवोदङ्क्रामति | १५ | अथ यत्पत्न्यध्वस्य ... ... | ३०९ |
| अथ प्रोर्णुते । गर्भो वा ... | ६१ | अथ यत्पत्न्युपस्पृशति ... | ४६४ |
| अथ बर्हीँषि •—• | | अथ यत्पश्चादरीयसी ... | २७३ |
| अस्या एतद् ... ... | ३४३ | अथ यत्र मेक्ष्यन् भवति ... | ८६ |
| अथ बर्हीँषि •—• | | अथ यत्र सुप्त्वा पुनर् ... | ८७ |
| अस्यैतद् ... ... | ४०९ | अथ यत् षट्त्रिँशत् ... | २७३ |
| अथ बार्हस्पत्यम् ... ... | ५२३ | अथ यत्समिध मभ्यादधाति | ५४६ |
| अथ मदन्तीरुपस्पृश्य ... | २४३ | अथ यत्स्वाहा स्वाहेति ... | ३२ |
| अथ मध्य ऽआघारयति ... | २९८ | अथ यदच्छाया ... ... | ४८६ |
| अथ मध्यमं छदिरुप ... | ३११ | अथ यदग्नौ होष्यन्ति ... | ३६५ |
| अथ मध्येऽङ्गुल्याकाशं ... | १५५ | अथ यदपा मन्ते क्षीणाति | १९९ |
| अथ मनोतायै हविषो ... | ४८४ | अथ यदि द्वे कृष्णाजिने ... | १८३ |
| अथ मारुतम् । विशो वै | ५२४ | अथ यदुपभृत्याज्यं ... | २५९ |
| अथ मिनोति । द्युतानस्त्वा | ३४४ | अथ यद्ग्रहत्वो मिमीते... | १५४ |

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| अथ यद्दीक्षितः । अन्नत्यं वा | ८८ |
| अथ यद्दीक्षितः । ऋचं वा यजुर्वा साम ... ... | ६५ |
| अथ यद्दीक्षितायाभिहरन्ति | ८८ |
| अथ यद् ध्रुवाया माज्यं ०—० तज्जुह्वां चतुष्कृत्वो ... | १२० |
| अथ यद् ध्रुवाया माज्यं ०—० तज्जुह्वा मानयति ... | ४८ |
| अथ यद् ब्राह्मण इत्याह... | ६६ |
| अथ यद्यु परिशिष्यते ... | ४८६ |
| अथ यद्वपया प्रचर्य्य ... | ४८१ |
| अथ यद्वसाहोमस्य ... | ४८६ |
| अथ यद्वाचं यच्छति ... | ६६ |
| अथ यद् वृष्णोस्तुका ... | २६६ |
| अथ यन्निग्राभ मुपैति ... | ५७६ |
| अथ यवमत्यः प्रोक्षण्यो ... | ३४२ |
| अथ यस्मात्सोमो नाम ... | ५८० |
| अथ यस्मात्स्वरुर्नाम ... | ४१३ |
| अथ यस्मादातिथ्यं ... | २०६ |
| अथ यस्माद्यज्ञो नाम ... | ५८० |
| अथ याः प्रोक्षण्यः परि-शिष्यन्ते । तद्ये ... | २६७ |
| अथ याः प्रोक्षण्यः परि-शिष्यन्ते । ता ऽअवटे-ष्ववनयति ... ... | ३२६ |

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| अथ याः प्रोक्षण्यः परि-शिष्यन्ते । ता ऽअवटे ऽवनयति ... | ३४३, ४०६ |
| अथ या आपः परिशिष्यन्ते | ४६४ |
| अथ यान्युपभृत्यवदानानि | ४८८ |
| अथ यां पञ्चमीꣳ स्रुचा ... | ४८ |
| अथ यावेतौ जघनेनाग्नी... | ३०६ |
| अथ यास्तद्देवाः । जुष्टास्तनूः ०—० तस्माद्वꣳ सन्नद्धे | २३१ |
| अथ यास्तद्देवाः । जुष्टास्तनूः ०—०तदिन्द्रे सन्नदधतैष | २३० |
| अथ युनक्ति । उस्रावेतं ... | १८४ |
| अथ यूपशकल मवगूहति | ४१३ |
| अथ यूपशकल मादत्ते ... | ४५२ |
| अथ यूपशकलं प्रास्यति ... | ४०६ |
| अथ रराट्या मुपस्पृश्य ... | ३११ |
| अथ राजान मादत्ते ... | १६७ |
| अथ राजानमादायोत्तिष्ठति | १६८ |
| अथ राजानमादायारोहण | १६८ |
| अथ राजान मुपावहरति | ५४४ |
| अथ लस्पूजन्या०—०इन्द्रस्य | ३४६ |
| अथ लस्पूजन्या०—०विष्णोः | ३११ |
| अथ वपा मुत्खिदन्ति ... | ४६६ |
| अथ वसाहोमं गृह्णाति... | ४८५ |
| अथ व्रतं व्रतयति ... | ८५ |

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| अथ व्रतं व्रतयित्वा ... | ८५ |
| अथ वाचं यच्छति... ... | ५७५ |
| अथ वाचयति । परि ... | १६८ |
| अथ वाचयति । प्राची... | ३०६ |
| अथ वाचयति । भद्रो ... | १८५ |
| अथ वाचयति । रेवति ... | ४५२ |
| अथ वारुण मन्तत ... | ५२५ |
| अथ वासः । द्विगुणं ... | १५२ |
| अथ वासः परिधत्ते ... | १५ |
| अथ वैश्वदेवम् ... ... | ५२३ |
| अथ शमितारञ्ँ ... ... | ४८१ |
| अथ शम्याश्च स्फ्यश्च ... | २७७ |
| अथ शरीर मेवान्ववहन्ति | १८६ |
| अथ सप्तमं पदं ... ... | १३९ |
| अथ समिध मभ्यादधदाह | ५४६ |
| अथ सम्प्रेष्यति । मैत्रावरुणस्य चमसाध्वर्यवेहि | ५४८ |
| अथ सम्प्रेष्यति । सोमोपनहन माहर ... ... | १५१ |
| अथ सारस्वतम् ... ... | ५२२ |
| अथ सावित्रम् ... ... | ५२५ |
| अथ सुब्रह्मण्या माह्वयति | १८६ |
| अथ सोमक्रयणानुदिशति | १६७ |
| अथ सोमपर्य्याणहनेन ... | १८२ |
| अथ सोमविक्रयिण मभि | १६६ |
| अथ सोमोपनहनस्य ... | १५५ |
| अथ सौम्यम् ... ... | ५२२ |
| अथ स्तीर्यायै वेदेः ... | ४५३ |
| अथ स्नाति । अमेध्यो वै... | १४ |
| अथ स्फ्य मादाय ... ... | १४० |
| अथ स्रुवेणोपस्पृशति ... | ३९५ |
| अथ स्रुवेणोपहत्याज्यम् । अग्नि मभिजुहोति ... | २१४ |
| अथ स्रुवेणोपहत्याज्यम् । अवट मभिजुहोति ... | ४१० |
| अथ स्रुवेणोपहत्याज्यम् । अध्वर्युर्वपा मभिजुहोति | ४६८ |
| अथ स्रुवेणोपहत्याज्यम् । विष्टप मभिजुहोति ... | ३४५ |
| अथ हरति ... ... | २७८ |
| अथ हविर्द्धानयोः... ... | ३४६ |
| अथ हिरण्य मपोद्धरति... | १२१ |
| अथ हिरण्ये वाचयति ... | १६६ |
| अथ हृदयशूलं प्रयच्छति... | ५१४ |
| अथ हृदयशूलेनावभृथं ... | ५१४ |
| अथाक्ष्यावानक्ति ... ... | २८ |
| अथाग्नये परिदाय ... | ८७ |
| अथाग्नि मभ्याहृत्य... ... | ८२ |
| अथाङ्गुलीर्न्यचति ... ... | ३१ |
| अथाग्रेण राजानं ... ... | १५२ |

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| अथाग्नेय शालां तिष्ठन्नभ्यङ्क्ते | २७ |
| अथाजायां प्रतीचीन मुख्यां | १६६ |
| अथाज्य मुपस्तृणीते । अथ | ४६६ |
| अथाज्य मुपस्तृणीते । जुह्वां | ४८३ |
| अथातः समवमृशन्त्येव ... | २२६ |
| अथातो गृह्णात्येव । आप-<br>तये त्वा परिपतये ... | २२६ |
| अथातो गृह्णात्येव । हवि-<br>ष्मतीरिमा आप इति... | ५३४ |
| अथातो व्रतोपसदा ... | २६१ |
| अथातो होमस्यैव... ... | ४६ |
| अथात्युपयजति ... ... | ५०७ |
| अथात्रापोर्णुते ... ... | १६८ |
| अथाधरारणिं निदधाति... | २१३ |
| अथाधिषवणं ... ... | ३३० |
| अथाधिषवणे पर्युपविशन्ति | ५७३ |
| अथाधिषवणे फलके ... | ३३० |
| अथाध्वर्युरात्मान मुपस्पृशति | १४१ |
| अथाध्वर्युरारोहणं ... | १८८ |
| अथाध्वर्युस्च ... ... | ३२८ |
| अथानड्वाहावाजन्ति ... | १८४ |
| अथानुवेद्यन्तम् ... ... | २७८ |
| अथानुव्यूहति ... ... | २७६ |
| अथानुस्पृज्योपतिष्ठते ।<br>एतत् त्वं ... ... | ३८१ |
| अथानुस्पृज्योपतिष्ठते ।<br>विश्वास्त्वां ... ... | ५४५ |
| अथाप उपनिनयति | १४०, ३४४ |
| अथापरं चतुर्गृहीत माज्यं<br>गृहीत्वा । अन्वारभस्व | १२२ |
| अथापरं चतुर्गृहीत माज्यं<br>गृहीत्वा । उदङ् प्रयन् | ५४८ |
| अथापरं चतुर्गृहीत माज्यं<br>गृहीत्वा । उपनिष्क्रामति | ३०८ |
| अथापरयोर्द्दक्षिणे ... | ३२६ |
| अथाप्तवे द्वितीया ... ... | ३७८ |
| अथाप्रीभिश्चरन्ति ... | ४५१ |
| अथाभिमन्त्रयते ... ... | ५१५ |
| अथारणी पाणौ कृत्वा ... | ४ |
| अथावटं परिलिखति | ३४२, ४०८ |
| अथाव्रस्चन मभिजुहोति... | ३६७ |
| अथाश्रिषा मारम्भं ... | ३१ |
| अथाश्राव्य न होतारं ... | २५८ |
| अथासाद्य स्रुचः ... ... | ३८१ |
| अथास्याᳪं हिरण्यं ... | १५१ |
| अथास्मै दण्डं प्रयच्छति ... | ६५ |
| अथास्मै व्रतं प्रदास्यन्नप ... | ८५ |
| अथास्मै व्रतं प्रयच्छति ... | ८५ |
| अथास्मै व्रतᳪं श्रपयन्ति... | ८३ |
| अथाह पर्यग्नयेऽनु .... | ४५२ |

| कण्डिकाप्रतीकम् | पृष्ठे |
| --- | --- |
| अथाह प्रतिप्रस्थाता ... | ४६८ |
| अथाह समुत्सृप्य ... ... | २४६ |
| अथाह सोमायानुब्रूहीति | २५९ |
| अथाह स्तोकेभ्योऽनुब्रूहीति | ४६८ |
| अथाहाग्नये समिध्यमानाय | ४४३ |
| अथैत्याहवनीये ... ... | ३८२ |
| अथैक उद्दरति ... ... | ६६ |
| अथैनꣳ शालां प्रपादयति। स जघनेनाहवनीय ... | ३२ |
| अथैनꣳ शालां प्रपादयति। स धेन्वै चानडुहश्च ... | १७ |
| अथैनꣳ शालां प्रपादयति। स प्रपादयन् ... ... | १८९ |
| अथैनं दर्भपवित्रेण ... | २९ |
| अथैन मतो मदन्तीभिर्... | २४३ |
| अथैन्द्रम्। इन्द्रियं... ... | ५२४ |
| अथैन्द्राग्नम्। तेजो ... | ५२४ |
| अथैभ्यः पथ्या स्वस्तिः ... | १०४ |
| अथैभ्यः सविता ... ... | १०४ |
| अथैभ्यः सूर्य्यं ... ... | २७५ |
| अथैभ्यः सोमः प्रारोचत... | १०४ |
| अथैभ्योऽग्निः प्रारोचत... | १०४ |
| अथैव मभिपद्य ०—० अस्तभ्नाद् ... ... | १८१ |
| अथैव मभिपद्य०—०ध्रुवासि | ३४४ |
| अथैव मभिपद्य ०—० विष्णोः ... ... ... | ४११ |
| अथो ऽअपि त्रयस्त्रिꣳशत् | २७३ |
| अथो ऽअपि त्रीणि स्युः ... | ३० |
| अथो ऽअपि सप्त स्युः ... | ३० |
| अथो ऽइतरथाहुः ... | ४२७ |
| अथोत्तरतः। प्राचीꣳ ... | २७८ |
| अथोत्तरतः प्रोच्छति ... | २९६ |
| अथोत्तरतस्तिष्ठन्नपां ... | ४६७ |
| अथोत्तरेण पर्य्येत्याध्वर्य्युः... | ३१० |
| अथोत्तरेण शालां परिश्रयन्ति | १३ |
| अथोत्तानं पशुं पर्य्यस्यन्ति... | ४६५ |
| अथोद्यच्छन्तीध्मम्... ... | २९६ |
| अथोपगृह्णाति ... ... | ४४२ |
| अथोपनिष्क्रम्याभि ... | १२२ |
| अथोपनिष्क्रामति... ... | ३८२ |
| अथोपभृति। त्र्यङ्गस्य ... | ४८५ |
| अथोपाकृत्य पशुम् ... | ४३३ |
| अथोल्मुक मादायाग्नीत्... | ४५३ |
| अथोल्लिखति ... ... | ६४ |
| अनव्वा प्रेहीति ... ... | ४६३ |
| अनु त्वा माता मन्यता ... | ४४२ |
| अनेनैव व्वाचं ... ... | ८२ |
| अनेनो हैके व्वाचं ... | ८२ |
| अन्तक मु तर्हि पश्चात् ... | ५८ |

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| अन्तरतो देवानां ... ... | ५१४ |
| अन्तरिक्षं गच्छ स्वाहेति ... | ५०६ |
| अन्तरेणार्द्धौ ... ... | ४८७ |
| अन्तरेणेषु ऽउपावहरति ... | ५४४ |
| अपः प्रणीय । आम्नावैष्णव | २६ |
| अप एवाभ्यवेत्य ... ... | ५१४ |
| अपराह्णे दीक्षेत । पुरा केश- | १२ |
| अभि मादत्ते ... ... | ४०८ |
| अमिमीत वरिमाणं ... | १८२ |
| अयुक्षा-अयुक्षा एकधना | ५५२ |
| अर्वाक् त्वा परेभ्यो ... | ३९५ |
| अवच्छिन्नो हि वै पुरुषः ... | १५ |
| अष्टारत्निं परिवासयेत् ... | ३९८ |
| अष्टौ ह वै पुत्रा अदितेः | २६ |
| असुरा ह वा ऽअग्रे ... | ४८७ |
| अस्य हविषस्त्मना ... | ४५४ |
| अहोरात्रे गच्छ स्वाहेति ... | ५०७ |
| आकुत्यै ०—० आत्मना वा | ४६ |
| आकूत्यै ०—० नात एकश्च | ४६ |
| आतिथ्येन वै देवा इष्ट्वा । ०—० चतुर्द्धा व्यद्रवन् | २२६ |
| आतिथ्येन वै देवा इष्ट्वा । ०—० तानूनप्त्रैः ... | २४१ |
| आददते ग्राव्णः ... ... | ३७९ |
| आददे रावासीति ... | ५७५ |
| आदित्यं चरुं प्रायणीयं ... | १०३ |
| आन्त मम्मिष्ठा मनक्ति ... | ४११ |
| आश्ववालः प्रस्तरः... ... | २१२ |
| आसाद्य हवीꣳष्यग्निं ... | २१३ |
| आसीदद्भिश्वा भुवनानि ... | १८२ |
| इदं वै पशोः सञ्ज्ञप्यमानस्य | ४४३ |
| इद मह्वं तं ०—० सजातो | ३२८ |
| इद मह्वं तं ०—० सबन्धुर् | ३२७ |
| इद मह्वं तं ०—० समानो | ३२७ |
| इध्म मभ्यादधति ... ... | २९५ |
| इन्द्रागच्छेति ... ... | १८६ |
| इन्द्रायाभ्यच्छत्तायेति... ... | १२३ |
| इन्द्रो ह वा ऽईक्षाञ्चक्रे ... | ६३ |
| इमे वै प्राणाः ... ... | ८४ |
| उदर मेवास्य सदः | ३०६, ३४१ |
| उदीची मेव दिशम् ... | १०५ |
| उद्धते प्रऽउगे फलके ... | १८४ |
| उद्यच्छन्तीध्मम् ... ... | ३७८ |
| उभयतो द्वारꣳ हविर्द्धानं | ३०६ |
| उम्रिजो व्रज्जितमानिति... | ४३५ |

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| ऊर्द्धा मेव दिशम् ... ... | १०५ |
| ऊष्मणो व्यथिषदिति ... | ४८६ |
| ऋणᳩ ह वै पुरुषो ... | ३६४ |
| ऋतवो मुग्धा आसन् ... | १०४ |
| ऋत्विजो हैव देवयजनम् | २ |
| एकादशारत्निं परिवासयेत् | ३९८ |
| एतद्ध वै विश्वेदेवा ... | ५३२ |
| एतद्वाचयेत् ... ... | ३१० |
| एतया सर्व्वाभिः ... ... | १५४ |
| एताभिर्व्वै देवा ... ... | २५७ |
| ऐन्द्राग्नौ विधृती ... ... | २१२ |
| ऐन्द्रः प्राणः। अङ्गे ऽअङ्गे ... | ४८६ |
| औदुम्बरी भवति ... ... | १८८ |
| औदुम्बरो भवति ... ... | ६५ |
| कार्ष्मर्य्यमयाः परिधयः ... | २१२ |
| कार्ष्मर्य्यमय्यौ वपाश्रपण्यौ ... | ४६७ |
| कौशिक ब्राह्मण ... ... | १८६ |
| खदिरेण ह सोम माचखाद | ३६३ |
| गन्धो हैवास्य ... ... | २९९ |
| गभीर मिम मध्वरं कृधीति | ५७४ |
| गुदं त्रेधा करोति ... ... | ४८५ |
| गुदो वै पशुः। मेदो ... | ५०५ |
| गुप्त्यै वा ऽएताः परिक्रियन्ते | ५३५ |
| गोपीथाय ता ऽएता ... | ५३३ |
| गौर्वै प्रतिधुक्। तस्यै ... | १६५ |
| ग्रीवा वै यज्ञस्योपसदः ... | २५७ |
| चतुर्गृहीत माज्यं गृहीत्वा | ३०८ |
| छन्दाᳩसि गच्छ स्वाहेति ... | ५०७ |
| जुष्टा विष्णव इति ... | १२१ |
| तं वा इति हरन्ति ... | १६६ |
| तं वै पूर्व्वार्द्धे मिनोति ... | ४१४ |
| तᳩ सप्तभिः सप्तभिः ... | ३० |
| तᳩ ह स्मैतं देवा ... ... | ४१४ |
| त ऽआप्याययन्ति ... ... | २४५ |
| त ऽआयन्ति। तᳩ होता | ५५१ |
| त ऽआयन्ति। प्रत्युपतिष्ठते | ५५१ |
| त ऽउदञ्चो निष्क्रामन्ति ... | ५४८ |
| त ऽउपरुध्यैव पशून् ... | ४३४ |

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| न ऽउ हैव ऽऊचुः । देवा... | २६ |
| तच्छालां वा विमितं वा ... | ३ |
| तं जघनेन चात्वाल ... | ४८३ |
| ततो देवा एतं वज्रं ... | ४३३ |
| ततो यानि त्रीणि स्रुवेण... | ८५ |
| तत्परिधत्ते । दीक्षातपसोस्तनू- | १७ |
| तत्परिश्रयन्ति ... ... | ३४५ |
| तन्नैता मपि वाच मुवाद | ५८१ |
| तन्नैता मपि वाच मूदुः ... | ६३ |
| तथेति देवा अब्रुवन् । तवैव | १०३ |
| तथेति देवा अब्रुवन् सोम- | ३६४ |
| तथो ऽएवैष एतत् । उपरुद्धैव | ४३४ |
| तथो ऽएवैष एतत् । यूपशकल | ४१५ |
| तथो ऽएवैष एतत् । सद्धैव | ५४९ |
| तदायत्सु व्वाचयति । अग्ने नय | ३७९ |
| तदायत्सु व्वाचयति । एष ते | १५२ |
| तदाहुः । अक्तो ... ... | २४६ |
| तदाहुः । अनद्धैवैता ... | ४६ |
| तदाहुः । उत्तरवेदेः ... | ३१० |
| तदाहुः । एता मेवैकां ... | ४९ |
| तदाहुः । कः प्रातरनुवाकस्य | ५४६ |
| तदाहुः । किं तद्यज्ञे ... | ५०४ |
| तदाहुः । नैष यजमानेनान्वा-रभ्यो ... ... ... | ४५३ |
| तदाहुः । नोपाकुर्यान्नाग्निं | ४३४ |
| तदाहुः । पुनरेतदुल्मुकᳬ | ४५२ |
| तदाहुः । पूर्व्वोऽतीत्य ... | २०९ |
| तदाहुः । यदेव प्रायणीये | १०६ |
| तदाहुः । यस्मा ऽएतदा ... | २४३ |
| तदिडान्तं भवति ... ... | २१४ |
| तदु तथा न कुर्यात् । अग्निष्ठ | ४२७ |
| तदु तथा न कुर्यात् । काम | १०६ |
| तदु तथा न कुर्यात् । यथा वै | ४५२ |
| तदु तथा न कुर्यात् । विमुच्यैव | २१० |
| तदु तथा न कुर्य्यात् । सार्द्ध | ३७८ |
| तदुदीचीनवᳬशᳬ सदा भवति | ३४५ |
| तदुपास्याभितिष्ठति ... | ४६६ |
| तदु हैक आहुः ... ... | ५४६ |
| तदु होवाच याज्ञवल्क्यः ... | २ |
| तदेव निदधति ग्रावाणः ... | ३८० |
| तद्धैके । आदित्येभ्यस्त्वरं ... | २६ |
| तद्धैके । आहवनीयाः ... | १८७ |
| तद्धैके । एव मैत्रावरुणचमसे | ५५१ |
| तद्धैके । औत्तरवेदेरनु ... | २९६ |
| तद्धैके । चतुर्द्धा कुर्व्वन्ति ... | ३७७ |
| तद्धैके । नक्षत्रं दृष्ट्वा ... | ८२ |
| तद्धैके । प्रथमे व्व्रत ऽउभौ | ८४ |
| तद्धैके । प्रथमे व्व्रते सर्व्वा- | ८४ |
| तद्धैके । सर्व्व ऽएव व्वपन्ते | १३ |
| तद्य एष पूर्व्वार्द्धो... ... | २७२ |

| कण्डिकाप्रतीकम् | पृष्ठे |
|---|---|
| तद्यत् क्रूरीकुर्वन्ति ०—० नेदेत- ... ... ... | ४६५ |
| तद्यत् क्रूरीकुर्वन्ति ०—० सन्धत्तः ... ... ... | ४६५ |
| तद्यत् क्रूरीकुर्वन्ति ०—० सन्धत्तस्तत्ते ... ... | ४६५ |
| तद्यत्पश्चक्षत्व आनक्ति ... | २९ |
| तद्यत् पृच्छति घृतं वै ... | ४८२ |
| तद्यत् पृच्छति घृतेन ... | ४८२ |
| तद् यत् पौष्ण मनु ... | ५२३ |
| तद्यत्रैतत् प्रवृतो होता ... | ४५१ |
| तद्यत्रैनं निविध्यन्ति ... | ४५४ |
| तद्यत्रैनं विप्रसन्ति ... | ४५४ |
| तद् यत् सारस्वत मनु ... | ५२२ |
| तद्यदन्तरेण... ... ... | ४८८ |
| तद्यदाप्याययन्ति ... ... | २४४ |
| तद्यदैन्द्र मनु भवति ... | ५२४ |
| तद्यद्धिरण्यशकलावभितो ०—० भवतः ... ... | ४८६ |
| तद्यद्धिरण्यशकलावभितो ०—० भवत आश्राव्याह | ४६९ |
| तद्यद् बार्हस्पत्य मनु ... | ५२३ |
| तद्यदपया चरन्ति... ... | ४७० |
| तद्यद् वैश्वदेव मनु... ... | ५२४ |
| तद्यन्मैत्रावरुणचमसेन ... | ५५० |
| तद्याः पूर्वाह्णेऽनुवाक्या ... | २५७ |
| तद्यावेतौ पूर्व्यौ ... ... | ३२६ |
| तदश्मं सत् समꣳ स्यात् ... | १ |
| तद्वा ऽअन्यतर एव ... | २०९ |
| तद्वा ऽअहतꣳ स्यात् ... | १६ |
| तद्वा ऽऋषीणा मनुश्रुत मास। ०—० यदेतानि | ४५ |
| तद्वा ऽऋषीणा मनुश्रुत मास। ०—० यो दीक्षते | ८१ |
| तद्वा ऽऋषीणा मनुश्रुत मास। ०—० सम्भृत एवं | ९०, २४५ |
| तद्वा ऽऋषीणा मनुश्रुत मास। ०—० सम्भृत एष ... | ८३ |
| तद्वा ऽएकꣳ स्यात् ... | ३० |
| तद्वा ऽएतदुभयं ... ... | १२० |
| तद्वा ऽएतदेकं कुर्वन् ... | २९७ |
| तद्वा ऽएतदेको द्वाभ्यां ... | ५०६ |
| तद्वै देवा अस्पृण्वत। त एताभिर् ... ... | २५७ |
| तद्वै देवा अस्पृण्वत। त एतैः कृत्यां ... ... | ३२६ |
| तद्वै देवा अस्पृण्वत। त एतैः सर्वाः ... ... | ३४२ |
| तद्वै देवा अस्पृण्वत तेऽस्यैतेन | ५७७ |
| तद्वै नवनीतं भवति। घृतं | २७ |

मा"-इति[1] त्रिषु मन्त्रेषु, एकैकेन मन्त्रेण पावयेत् । "अच्छिद्रेण पवित्रेण"-इति मन्त्रशेषः सर्वत्रानुषज्यते । तत्राप्ययं विभागः— सप्तभिः प्रथममन्त्रेण नाभितः आरभ्योर्द्ध मुन्मृज्यात्, पुनश्च सप्तभि-र्द्वितीयमन्त्रेणाप्येवम्, अवशिष्टैः सप्तभिः तृतीयेन मन्त्रेण नाभेरध आरभ्यावमृज्यात् । तथा च कात्यायनः— "सप्तभिः-सप्तभिः प्रतिमन्त्र मच्छिद्रेणेति सर्वत्र द्विरुपरि नाभेरुन्मृज्य प्रदक्षिणं सकृदर्वाङ्केन त्रिभिः सप्तभिरेकविंशतिभिर्वा"-इति[2] । आपस्तम्बस्तु चित्पतिस्त्वेति पावकस्य, चित्पतिर्मेति पाव्यमानस्य च विभज्योभय मप्युक्तवान्[3] । सर्वशेषभूतस्याच्छिद्रेणेत्यस्यार्थ माह— "अच्छिद्रेणेति । सर्वदा सर्वत्र पवनात् 'एषः' वायुः 'अच्छिद्रं पवित्रम्' ॥ २२ ॥

मन्त्रशेषं व्याचष्टे— "तस्य त इति । पवित्राणि रश्मयः; शोधकत्वात्[4] । अग्निः पवित्रपतिः[5]; तत्पाठात् स्वरूप मपि 'पवित्र-

---

१— वा० स० ४. ४. १, २, ३ ।

२— का० श्रौ० सू० ७. ३. १—४ । बेर्लिन-मुद्रितपुस्तके तु 'द्विरुपरि नाभ्युन्मृज्य'—इति पाठः, 'एकविंशतिभिः'—इति पदस्याभावश्च ।

३— तथाहि— "अथैन मुत्तरेण बर्हिः प्राग्वंशात् दर्भपुञ्जीलैः पावयति । + + + । एकविंशत्या त्रेधा विभक्तया सप्तभिः सप्तभिर्द्विरूर्द्धं नाभेरुन्मार्ष्टि सकृदर्वाक् । + + + । चित्पतिस्त्वा पुनात्वित्येतैः प्रतिमन्त्र मच्छिद्रेण पवित्रेणेति सर्वत्रानुषजति । चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्विति पाव्यमानो जपति"—इत्यादि आप० श्रौ० सू० १०. ७. ५—१४ ।

४— "रश्मयः पवित्र मुच्यन्ते"—इत्यादि निरु० ५. २. १ ।

५— "अग्निः पवित्र मुच्यते"—इत्यादि निरु० ५. २. १ ।

पतिर्भवति' खलु। स्पष्ट मन्यत्। 'उदृचं' उपरिभाविनी ऋक् उदृक्। अनेन च समाप्तिर्लक्ष्यते। तेन यज्ञस्यान्तं प्राप्नुवानीत्यर्थः। अस्य मर्थम् 'एतत्' एतेन "तच्छकेयम्"-'इति' अनेन, मन्त्रः[1] 'आह' इत्यर्थः॥ २३॥

"अथाशिषा मिति। "आ वो देवासः"-इति[2]-मन्त्रस्य 'आशिषा मारम्भः'-इति नाम; भाव्याशिषा मस्यारम्भरूपत्वात्। मन्त्रपाठस्य प्रयोजन माह—"तदस्मा इति। 'तत्' तेन आशिषा मारम्भवाचनेन सर्वासा माशिषा मादावेव यजमानेन परिगृहीतत्वात् 'स्वाः' स्वकीया एव 'सतीः' ता एव 'आशिषः' 'ऋत्विजः' तन्मन्त्रेषु यजमानार्थ माशासते[3]॥ २४॥

"अथाङ्गुलीरिति। 'न्यचति' सङ्कोचयतीत्यर्थः। तत्प्रकार माह— "स्वाहेत्यादिना[4]। एकैकेन मन्त्रेण हस्तद्वयेऽपि कनिष्ठिकादिक्रमेण द्वे-द्वे[5] अङ्गुली न्यञ्चतीत्यर्थः। एवं करद्वयाङ्गुलिन्यञ्चनक्रमेणोक्तमेन मन्त्रेण[6] पाणी मुष्टीकुर्यात्[7]। "उत्तमेन मुष्टीकृत्वा"-इति सूत्रम्[8]।

---

१— "चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतं यत्कामः पुने तच्छकेयम्"-इति वा० सं० ४. ४. १-३।

२— वा० स० ४. ५. १।

३— का० श्रौ० सू० ७. ३. ६।

४— वा० स० ४. ६. १—३।

५— 'द्वे'-इत्येव च।

६— वा० सं० ४. ६. ४।

७— का० श्रौ० सू० ७. ३. ८।

८— का० श्रौ० सू० ७ ३. ९ क।

तत्प्रयोजन माह— "न वै यज्ञ इति। यज्ञस्य वासोदण्डादिवद्धस्ते धारयितु मशक्यत्वात्; अत एव परोक्षान्मन्त्रेण मुष्टिबन्धन मेव प्रत्यक्षधारण मित्यर्थः ॥ २५ ॥

"स यदाहेत्यादि। मन्त्रस्य क्रमेण व्याख्यानम्। स्पष्टम्। 'वातादारभे'-इति वातेन प्राणेन व्याप्रियमाणत्वात् 'वातो यज्ञः'। 'वै'-शब्देन "वातो यज्ञः प्रयुज्यताम्"-इत्यादिमन्त्रप्रसिद्धि-र्द्योत्यते ॥ २६ ॥

"अथ यत्स्वाहेति। हविस्त्यागस्य यज्ञत्वात्, स्वाहाकारेण च हविःप्रदानात्, स्वाहाकारस्य च यज्ञात्मकता। अनन्तरं वाग्यमनं विधत्ते— "अथ वाचं यच्छतीति[१]। वाग्व्यवहारमन्त्ररूपेण यज्ञ-निष्पत्तेः 'वाक् यज्ञः'। तस्या बहिर्निर्गमन मकृत्वा आत्मनि नियमात् 'यज्ञ मेव' आत्मनि धृतवान् भवति ॥ २७ ॥

शालायाः फलोद्देशे यजमानस्याभ्यञ्जनादिक मुक्तम्, तस्य दीक्षाकृत्यर्थं शालाप्रवेशनं विधत्ते— "अथैन मिति[२]। प्रविष्टस्य तथा कर्मार्थं सञ्चरनिर्देश माह— "स जघनेनेति। 'आहवनीयं जघनेन' तत्पश्चाद्देशे, 'गार्हपत्य मग्रेण', तयोर्मध्यपथि कर्मार्थं गच्छति[३]। अय मेव 'अस्य' 'सञ्चरो भवति'[४]। उक्तसञ्चरं प्रशंसति—

---

१— "स्वाहेत्युक्त्वा वाग्यतः"-इति का० श्रौ० सू० ७. ३. ६ ख।

२— का० श्रौ० सू० ७. ३. ११।

३— का० श्रौ० सू० ७. ३. १२।

४— का० श्रौ० सू० ७. ३. १३। "अत ऊर्ध्वं यजमानस्य सञ्चरो भवति"-इति आप० श्रौ० सू० १०. ८. २।

"अग्निर्वा इति। यस्मादुत्पद्यते स योनिः; आहुतिप्रदानात्मकस्य 'यज्ञस्य' 'योनिः' 'अग्निः'। मानुषदेहपरित्यागेन दीक्षासंस्कारेण देवदेहोत्पत्तेस्तत्संस्कृतो दीक्षितः 'गर्भः'। अतस्तत्र योनिगत्वेन तस्य तयोरन्तराले सञ्चारो युक्तः। उक्त मर्थ मिदानीन्तनगर्भवर्णनेन दृढयति— "तस्मादिमे गर्भा इति। त्वच्छब्द एकशब्दपर्यायः; एकदेत्यर्थः। अथ वाव्यय मिदं चार्थे। 'यत्' यस्मात् 'सः' गर्भसंयुतो यजमानः 'एजति त्वत्' चलति च, 'पर्यावर्त्तते त्वत्' परिभ्रमति च; 'तस्मात्' इदानीन्तना गर्भा अप्येवं भवन्तीत्यर्थः॥ १८॥ ३ [१.३.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे प्रथमाध्याये तृतीयं ब्राह्मणम्॥

---

(अथ चतुर्थं ब्राह्मणम्)

सर्व्वाणि ह वै दीक्षाया यजूꣳष्यौद्ग्रभणानि। उद्ग्रभ्णीते* वा ऽएषोऽस्माल्लोकाद्देवलोक मभि यो दीक्षत ऽएतैरेव तद्यजुर्भिरुद्ग्रभ्णीते तस्मादाहुः सर्व्वाणि दीक्षाया यजूꣳष्यौद्ग्रभणानीति तत एतान्यवान्तरा

* 'उद्गृह्णीते'—इति सा०-सम्मत इति डा० वेबरः।

माचक्षत ऽऔद्ग्रभणानीत्याहुतयो ह्येता आहुतिर्हि यज्ञः परोऽक्षं वै यजुर्जपत्यथैष प्रत्यक्षं यज्ञो यदाहुतिस्तदेतेन यज्ञेनोद्गृभ्णीतेऽस्माल्लोकाद्देवलोकमभि* ॥ १ ॥

ततो यानि त्रीणि स्रुवेण जुहोति। तान्याधीतयजूꣳषीत्याचक्षते सम्पद ऽएव कामाय चतुर्थꣳ ह्रयतेऽथ यत्पञ्चमꣳ स्रुचा जुहोति तदेव प्रत्यक्ष मौद्ग्रभणमनुष्टुभा हि तज्जुहोति व्वाग्घ्यनुष्टुब् व्वाग्घि यज्ञः ॥ २ ॥

यज्ञेन वै देवाः। इमां जितिं जिग्युर्यैषा मियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥ ३ ॥

तद्वा ऽऋषीणा मनुश्रुत मास। ते यज्ञꣳ समभरन् यथायं यज्ञः सम्भृत एवं वा ऽएष यज्ञꣳ सम्भरति यदेतानि जुहोति ॥ ४ ॥

तानि वै पञ्च जुहोति। संव्वत्सरसम्मितो वै यज्ञः पञ्च वा ऋतवः संव्वत्सरस्य तं पञ्चभिराप्नोति तस्मात् पञ्च जुहोति ॥ ५ ॥

---

* 'मभि'–इति ग।

अथातो होमस्यैव*। आकूत्यै प्रयुजेऽग्नये स्वाहेत्या वा ऽग्रे कुवते युजेयेति तद्युदेवाच यज्ञस्य तदेवैतत्सम्भृत्यात्मन् कुरुते ॥ ६ ॥

मेधायै मनसेऽग्नये स्वाहेति। मेधया वै मनसाभिगच्छति युजेयेति तद्युदेवाच यज्ञस्य तदेवैतत्सम्भृत्यात्मन् कुरुते ॥ ७ ॥

दीक्षायै तपसेऽग्नये स्वाहेति†। अन्वेवैतदुच्यते नेत्तु ह्रूयते ॥ ८ ॥

सरस्वत्यै पूष्णेऽग्नये स्वाहेति। व्वाग्वै सरस्वती व्वाग्यज्ञः पशवो वै पूषा पुष्टिर्व्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तद्युदेवाच यज्ञस्य तदेवैतत्सम्भृत्यात्मन् कुरुते ॥ ९ ॥

तदाहुः। अनद्धेवैता आहुतयो ह्रूयन्ते ऽप्रतिष्ठिता अदेवकास्तत्र नेन्द्रो न सोमो नाग्निरिति‡ ॥ १० ॥

आकूत्यै प्रयुजेऽग्नये स्वाहेति। नात एकञ्चन नाग्निर्व्वा ऽअद्धेवाग्निः प्रतिष्ठितः स यदग्नौ जुहोति तेनैवैता अद्धेव तेन प्रतिष्ठितास्तस्माद् सर्व्वास्वेवाग्नये स्वाहेति जुहोति तत एतान्याधीतयजूꣳषीत्याचक्षते ॥ ११ ॥

आकूत्यै प्रयुजेऽग्नये स्वाहेति। आत्मना वा ऽअग्र ऽआकुवते युजेयेति त मात्मन ऽएव प्रयुङ्क्ते युत्तनुते त

* 'होमस्यैव'—इति ग। † 'स्वाहेति'—इति ग। ‡ 'रिति'—इति ग।

ऽअस्यैते ऽआत्मन् देवते ऽआधीते भवत आकूतिश्च प्रयुक् च ॥ १२ ॥

मेधायै मनसेऽग्नये स्वाहेति। मेधया वै मनसाभिगच्छति युजेयेति ते ऽअस्यैते ऽआत्मन् देवते ऽआधीते भवतो मेधा च मनश्च ॥ १३ ॥

सरस्वत्यै पूष्णेऽग्नये स्वाहेति। व्वाग् वै सरस्वती व्वाग् यज्ञः सास्यैषात्मन् देवताधीता भवति व्वाक् पशवो वै पूषा पुष्टिर्व्वै पूषा पुष्टिः पशवः पशवो हि यज्ञस्तेऽस्यैत ऽआत्मन् पशव आधीता भवन्ति तद्यदस्यैता आत्मन् देवता आधीता भवन्ति तस्मादाधीतयजूꣳषि नाम* ॥ १४ ॥

अथ चतुर्थीं जुहोति। आपो देवीर्बृहतीर्व्विश्वशम्भुवो द्यावापृथिवी ऽउरो ऽअन्तरिक्ष। बृहस्पतये हविषा व्विधेम स्वाहेत्येषा ह नेदीयो यज्ञस्यापाꣳ हि कीर्त्तयत्यापो हि यज्ञो द्यावापृथिवी ऽउरो ऽअन्तरिक्षेति लोकानाꣳ हि कीर्त्तयति बृहस्पतये हविषा व्विधेम स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञ एतेनो हैषा नेदीयो यज्ञस्य† ॥ १५ ॥

---

* 'नाम'—इति ग। † यज्ञस्य'—इति ग।

अथ यां पञ्चमीꣳ स्रुचा जुहोति। सा हैव प्रत्यक्षं यज्ञोऽनुष्टुभा हि तां जुहोति वागनुष्टुब् वाग्घि यज्ञः* ॥ १६ ॥

अथ यद्ध्रुवाया माज्यं परिशिष्टं भवति। तज्जुह्वा मानयति त्रिः स्रुवेणाज्यविलापन्या ऽअधि जुह्वां गृह्णाति यत् तृतीयं गृह्णाति तत् स्रुव मभिपूरयति ॥ १७ ॥

स जुहोति। विश्वो देवस्य नेतुर्मर्त्तो वुरीत सख्यम्†। विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहेति‡ ॥ १८ ॥

सैषा देवताभिः पङ्क्तिर्भवति। विश्वो देवस्येति वैश्वदेवं नेतुरिति सावित्रं मर्त्तो वुरीतेति मैत्रं द्युम्नं वृणीतेति बार्हस्पत्यं द्युम्नꣳ हि बृहस्पतिः पुष्यस ऽइति पौष्णꣳ§ ॥ १९ ॥

सैषा देवताभिः पङ्क्तिर्भवति। पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्सरस्यैत मेवैतयाप्नोति यद्देवताभिः पङ्क्तिर्भवति ॥ २० ॥

तां वा ऽअनुष्टुभा जुहोति। वाग्वा ऽअनुष्टुब् वाग्यज्ञस्तद्यज्ञं प्रत्यक्ष माप्नोति ॥ २१ ॥

---

* यज्ञः'—इति ग। † 'सख्यम्'—इति ग।

‡ स्वाहेति'—इति ग। § 'पौष्णꣳ'—इति ग।

तदाहुः। एता मेवैकां जुहुयाद् यस्मै कामायेतरा हूयन्त ऽएतयैव तं काम माप्नोतीति तां वै यद्येकां जुहुयात् पूर्णां जुहुयात्सर्व्वं व्वै पूर्णꣳ सर्व्वं मेवैनयै-तदाप्नोत्यथ यत् स्रुव मभिपूरयति स्रुचं तदभिपूरयति तां पूर्णां जुहोत्यन्वेवैतदुच्यते सर्व्वास्त्वेव हूयन्ते ॥ २२ ॥

तां वा ऽअनुष्टुभा जुहोति*। सैषानुष्टुप्सत्येकत्रिꣳश-दक्षरा भवति दश पाण्या अङ्गुलयो दश पाद्या दश प्राणा आत्मैकत्रिꣳशो यस्मिन्नेते प्राणाः प्रतिष्ठिता एता-वान्वै पुरुषः पुरुषो यज्ञः पुरुषसम्मितो यज्ञः स यावा-नेव यज्ञो यावत्यस्य मात्रा तावन्त मेवैनयैतदाप्नोति यदनुष्टुभैकत्रिꣳशदक्षरया जुहोति ॥ २३ ॥ ४ ॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [१. ४.] ॥

अथ दीक्षाहुतीर्विधातु माह— "सर्वाणि ह वा इति। यजु-स्सम्बन्धात् दीक्षासम्बन्धिनी 'यजूंषि औद्ग्रभणानि'। तदुद्ग्रभणत्व मेव कुत इति तद् दर्शयति— "उद्गृभ्णीते वा इति। 'तत्' तदा 'एतैः' दीक्षाङ्गभूतैः सर्वैः 'यजुर्भिः' एव ; अतो 'दीक्षायाः' प्रकरणानि 'सर्वाणि' अपि 'यजूंषि' 'औद्ग्रभणानि' औद्ग्रहणानीति[1]।

---

* 'जुह्वोति'—इति ग।

१— "औद्ग्रभणानि जुहोति"—इति का० श्रौ० सू० ७. ३. १६।

"इग्रहोर्भः"-इति[1] भत्वम्। 'ततः' तेषु यजुष्षु मध्ये 'एतानि' एव दीचाकूतिसाधनानि आकूत्यादीनि 'औद्ग्रभणानि' उद्ग्रहणेऽत्यन्तं सन्निहितानीत्यर्थः। तत् कथ मिति, उच्यते—"आकूतयो हीति। तावता श्रैष्ठ्ये किं मायात मिति, तत्राह— 'आकूतिर्हीति। जप्यानां होम्यानां च तारतम्य माह— "परोक्षं वा इति ॥ १ ॥

एतासा मप्युद्ग्रहणसाधनतां विभज्य दर्शयन् प्रशंसति— "ततो यानीति। 'यानि' आदितः 'त्रीणि' यजूंषि 'स्रुवेण जुहोति', 'तानि' 'आधीतयजूंषि' आधानलिङ्गकानि; तन्मन्त्रेष्वाधानव्यापार-लिङ्गदर्शनात्। 'सम्पदे कामाय'। सम्पद्यत इति 'सम्पत्', काम्यत इति 'कामः', सम्पाद्याय स्वर्गफलाय (चेत्यर्थः। अय मभिप्रायः—[2]) यथा लोके किञ्चित् फलं सिषाधयिषुः आदौ तत् ज्ञात्वा, पश्चात् कामयित्वा, तत्साधन मनुष्ठायान्ते तल्लभते; एवं त्रिभिः स्वर्गफल माध्याय, चतुर्थेन तत्साधन मनुष्ठाय, पञ्चमेन तदुद्गृहीतवान् भवतीति। अत्र चतुर्थस्य होमसाधनानभिधानेनापि पञ्चमस्य विशेषितत्वात् चतुर्थ मपि स्रुवेणैवेति वेदितव्यम्। पञ्चमस्य साक्षादुद्ग्रहणसाधनत्वं तन्मन्त्रस्यानुष्टुप्त्वे सिद्ध मित्याह— "अनुष्टुभा हीति। 'अनुष्टुभा' वाचा, मन्त्रेण साध्यत्वात् 'वाग् यज्ञः'। "अनुष्टुप् चतुरुत्तराणि छन्दांस्युदपादयत्"— इति सामब्राह्मणेऽभिधानाद् वाचोऽनुष्टुप्त्वम् ॥ २ ॥

---

१— पा० ८. २. ३२ सू० वा० १।

२— च-पुस्तके नास्त्येष पाठः।

अथ पुरातनवृत्तान्तप्रदर्शनमुखेनैतेषां स्वर्गोद्ग्रहणे साधनता मुपपादयति— "यज्ञेन वा इति। एतत् प्रथमकाण्डे पञ्चम-प्रपाठकादावाग्नेयपुरोडाशार्थवादे[1] व्याख्यातम् ॥ ३ ॥

"तद्वा इति। "यथाय मिति। येन प्रकारेण देवानुष्ठित-प्रकारं जानद्भिर्ऋषिभिः 'अयं यज्ञः' औद्ग्रभणहोमेन 'सम्भृतः', 'एवम्' एतेषा मनुष्ठानेन 'एषः' यजमानोऽपि 'यज्ञं' सम्भृतवान् भवति ॥ ४ ॥

तद्गतपञ्चसङ्ख्यां प्रशंसति— "तानि वै पञ्चेति[2] ॥ ५ ॥

"अथातो होमस्यैवेति। मन्त्रा व्याख्यायन्त इति शेषः[3]। 'अग्रे' यागानुष्ठानात् पूर्वम् 'आ कुवते' खलु। 'कुवन'-शब्देन[4] तत्प्राग्भावी मनोव्यापारो लक्ष्यते। 'यजेय'—इति सङ्कल्पयतीत्यर्थः। अतो 'यज्ञस्य' देवकर्त्तव्य मङ्गजातं सर्वं 'सम्भृत्य' सङ्कल्पात्मनैकीकृत्य स्वात्मनि 'कुरुते' स्थापयति ॥ ६ ॥

द्वितीयमन्त्रस्य तात्पर्य माह— "मेधायै मनस इति। "मेधयेति। सङ्कल्पितस्यार्थस्य धारयित्री बुद्धिर्मेधा, तया, 'मनसा' च साधनेन उभाभ्याम् 'अभिगच्छति'। यथा कश्चित् प्रथम मिदं सम्यगिति सङ्कल्प्य तत्साधनप्रकारविशेष मवबुध्यते, तद्वदित्यर्थः ॥ ७ ॥

---

१— पुरस्तात् ( १का० ६अ० २ब्रा० १क० ) ४०८ पृ० द्रष्टव्यम्।

२— का० श्रौ० सू० ७. ३. १६।

३— वा० सं० ४. ७. १–५।

४— 'कुट्-शब्देन'–इति च।

तृतीयस्य मन्त्रस्यापि होमसाधनत्वप्रसक्तौ जप्यता माह— "दीक्षाया इति। 'अनु उच्यते एव'—इति, एवकारतात्पर्य माह[1]— "नेत्त्विति। अत एव कात्यायनः— "तृतीयं जपति"— इत्युक्तवान्[2] ॥ ८ ॥

होमे तृतीयं मन्त्रं व्याचष्टे— "सरस्वत्या इति। "पशवो वा इति। पशूनां पूषत्वम्, पूषगतपुष्टिधर्मसद्भावात्; पूष्णोऽपि पोषकत्वम्, "पोषाँ अपुष्यत्"—इत्यादिश्रुतेः[3] सिद्धम्। पशुगतक्षीरादिसाध्यत्वात् 'पशवो यज्ञः' ॥ ९ ॥

उक्तमन्त्रत्रयेऽपि 'अग्नये' यदस्ति, तत्राग्नेः कः प्रसङ्ग इति तद् दर्शयितु माह— "तदाहुरिति। 'अनद्धेव' अप्रत्यक्ष मिव 'एताः' तिस्रः 'आकूतयः' 'हूयन्ते'। अस्तु को दोष इति तत्राह— "अप्रतिष्ठिता इति। किमर्थ मप्रतिष्ठिततेति, तत्राह— "अदेवका इति। यद्यपि सन्त्याकूत्याद्याः, तथापि तासां देवतात्वेन प्रसिद्ध्यभावात् इन्द्रादिना भवितव्य मिति प्रदर्शयति— "तत्र नेन्द्र इत्यादि ॥ १० ॥

तत्र प्रसिद्धदेवताना मभावं दर्शयितु मनुवदति— "आकूत्या

---

१— 'एवकारयावत्य माह'-इति च।

२— "तृतीयं जपयेत्"-इति का० श्रौ० सू० ७. ३. १७।

३— तै० सं० ७. १. ६. १। "पूषेयं हीदं सर्वं पुष्यति यदिदं किञ्च"-इति चेहैवोपरिष्टात् (१४. ४. २. २५.)। "यद्रश्मिपोषं पुष्यति तत् पूषा भवति"-इति पूष्णो निर्वचनम्। निरु १२. २. ५। "पौष्णाः पशवः"-इति चोपरिष्टादिहैव (५. २. ५. ७.)।

इति । "नात एकञ्चनेति । 'अतः' अस्मात् आकूत्या इत्येव-मादिकात् वाक्यात् एक मपि इन्द्रादिकं देवं नोपलभामहे । इति वदतोऽय मभिप्रायः— तेषु मन्त्रेषु आकूतिमेधादेः प्रशंसितत्वेनाग्नि मतिविहायाय माक्षेप इति । अनद्धात्वपरिहार माह— "अग्निर्वा इति । 'सः' यजमानः 'यत्' यस्मात् 'अग्नौ' प्रत्यक्षेण 'जुहोति', अत एव 'अग्निः' 'अद्धा इव' प्रत्यक्ष मिव, अत एव 'प्रतिष्ठितः' च; 'तेन' खलु 'एताः' तिस्रोऽपि 'अद्धेव', 'प्रतिष्ठिताः' च । "तत एता-नीति । यत उक्तरीत्याग्न्यादिप्राधान्यम्, तत इत्यर्थः । इत्य मग्निं प्रशस्यावशिष्टाकूतिप्रयुगाग्निदेवताचय माध्यानसम्बन्धेन प्रशंसति— "तत एतान्याधीतयजूंषीति"-इति ॥ ११ ॥

"आकूत्यै प्रयुज इति । 'अग्रे' प्रथमम् 'आत्मना' बुद्ध्यैव 'यजे-येति' 'आ कुरुते' सङ्कल्पयति । 'तम्' तत् सङ्कल्पितम् 'आत्मनः एव' विस्तीर्य 'प्रयुङ्क्ते' भवतः । प्रयुज्यत इति 'प्रयुक्' । उभयोरपि बुद्धिविषयभावात् उभे अपि 'देवते' आकूतिप्रयुजौ, 'अस्य' यज-मानस्य 'आत्मन्' आत्मनि 'आधीते' आध्यानेन विषयीकृते भवतः । आधीतप्रतिपादकत्वात् 'आधीतयजूंषि'-इत्युच्यते ॥

एव मुत्तरवाक्यान्यपि[1] योज्यानि ॥ १२ ॥ १३ ॥

"सरस्वत्यै पूष्ण इति । अत्र 'पूषन्'-शब्दवाच्यानां पशूनां बहुत्वात् पृथङ्निर्द्दिश्यते— "पशवो वा इत्यादि । प्राग् व्याख्यातम्[2] ॥ १४ ॥

इत्य माधीतत्वसमानधर्मसम्भवात् आकूतित्रयं पृथक् विधाय,

---

१— "मेधायै मनसेऽग्नये स्वाहेत्यादीनीति (१३ क०) यावत् ।

२— ५२ पृ० ५ पं० द्रष्टव्यम् ।

प्रश्नस्य च चतुर्थी माहुतिं तन्मन्त्रं च विधत्ते— "अथ चतुर्थी मित्यादि। मन्त्रवाक्यानि क्रमेणोदाहृत्य व्याचष्टे— "एषा हेति। 'एषा' ऋगित्यर्थः। 'यज्ञस्य' 'नेदीयः' अत्यन्तं सन्निहितम्। कथम्? यस्मात् 'एषा अपां कीर्त्तयति', तस्मान्नेदीयः। तत्कीर्त्तनेन यज्ञं प्रति कथं नेदीयस्त्व मिति तत्राह— "आपो हीति। अभिषवसंयवनादिसाधनत्वात् अपां यज्ञत्वम्। स्पष्ट मन्यत् ॥

उक्ताहुतिचतुष्टयस्याज्यस्थाल्याः स्रुवेण होमः। तथाच सूत्रम्— "औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाहुत्यै प्रतिमन्त्रम्"-इति[1] ॥ १५ ॥

"अथ यां पञ्चमी मिति। स्पष्टम् ॥ १६ ॥

पञ्चमस्य द्रव्य माह— "अथ यद् ध्रुवाया माज्यं परिशिष्ट मित्यादिना। अय मर्थः। दीक्षणीयेष्टेः सम्बन्धि 'यदाज्यं' 'ध्रुवायाम्' अवशिष्टम्, 'तत्' पञ्चमाहुत्यर्थं 'जुह्वाम्' अवनयेत्। एतदेक मवत्तम्। अथाज्यस्थाल्याः सकाशात् 'स्रुवेण' जुह्वा मुपरि 'त्रिः' निनयति[2]। एवं चतुरवत्तं भवति। तत्र 'यत्' 'तृतीयम्', 'तत्' 'आज्यविलापन्या अधि' जुह्वा उपरि उत्तानं स्रुवं निधाय यथा पूर्णं भवति तथा स्रुवस्याभित आज्येन पूरयेत्। तथाच सूत्रम्— "जुह्वां ध्रौव मासिच्य द्विस्त्रि स्थाल्याः स्रुवेण तृतीयं स्रुव मभि पूरयति"—इति[3] ॥ १७ ॥

---

१— का० श्रौ० सू० ७. ३. १६।
२— 'त्रिरानयति'-इति च।
३— का० श्रौ० सू० ७. ३. १८।

पञ्चमस्य मन्त्र माह— "स जुहोति विश्वो देवस्येति[1] ॥ १८ ॥

तं प्रशंसति— "सैषा देवताभिरिति। "पञ्चाक्षरा पङ्क्तिः"— इति[2]-श्रुतेः पञ्चसङ्ख्यासम्बन्धात् 'एषा' 'पङ्क्तिर्भवति'। तद्योजयति— "विश्वो देवस्य"—इति विश्वदेवशब्दश्रवणात् 'इदं' मन्त्रवाक्यं[3] 'वैश्वदेवम्'। नयनस्य सवितृव्यापारत्वात् 'नेतृ'-शब्दश्रवणात् 'सावित्रम्'। "मर्त्तो वुरीत"—इत्येतेन मनुष्यैर्वरणीयत्वाभिधानात् 'मैत्रम्'; मित्रस्य हि वरणीयत्वं प्रसिद्धम्। बार्हस्पत्यमन्त्रेषु "द्रविणं धेहि चित्रम्"—इति द्युम्नसमानार्थस्य द्रविणस्य दाने बृहस्पति-सम्बन्धश्रवणात् "द्युम्नं वृणीत"—इत्यनेन बार्हस्पत्यम्। "पुष्यसे"- इति पोषणधर्मश्रवणात् 'पौष्णम्' इति ॥ १९ ॥

"सैषेति। 'देवताभिः' पङ्क्तित्वं भवति। ततः किमित्यत आह— "पाङ्क्तो यज्ञ इत्यादिना ॥ २० ॥

"अथ छन्दोद्वारा प्रशंसति— "तां वा अनुष्टुभेति ॥ २१ ॥

इत्थं पञ्चाना माहुतीनां समुच्चयपक्ष मुक्त्वा पञ्चमी मेवैकां जुहुयादिति केषाञ्चित् पक्ष माह— "तदाहुरिति[4]। इतराभ्यो यत् फलं तस्यैकयैव सिद्धेरकामे 'एता मेव' 'जुहुयात्'। तत्रापि 'पूर्णां' कृत्वा 'जुहुयात्', पूर्णाहुतिं कुर्यादित्यर्थः। यत् 'पूर्णं'

---

१— वा० सं० ११. ८. १ ; का० श्रौ० सू० ७. ३. १८।

२— तै० ब्रा० २. ७. १०. २।

३— पूर्वस्यां कण्डिकायां (४८ पृ० ७ पं०) द्रष्टव्यम् (वा०सं० ११. ८. १.)।

४— का० श्रौ० सू० ७. ३. १८ सूत्रस्य याज्ञिकदेवकृता वृत्तिर्द्रष्टव्या।

तद्न्यूनत्वेन 'सर्वम्', अतस्तेन सर्वफल माप्नोति। 'यत्' यदा पूर्णाहुतिसमये 'स्रुवम्' अभि पूरयेत्, 'तत्' तदा, स्रुवेणैव होम मकृत्वा आज्येन 'स्रुचम्' अभिपूरयेत्। तथा कृत्वा 'ताम्' आहुतिं पूर्णाहुतिं कृत्वा जुहुयात्। तथा च सूत्रम्— "एता मेव वा पूर्णां जुहुयात्"-इति[1] ॥ २२ ॥

अक्षरसङ्ख्याद्वारा तं मन्त्रं प्रशंसति— "तं वा अनुष्टुभेति। "दश प्राणाः"-इति। शीर्षगतसप्तच्छिद्रस्थाः सप्त प्राणाः, अवाञ्चौ द्वौ, इत्यसाधारणा नव; मुख्यप्राणस्त्वेकः; इति प्राणानां दशत्वम्। 'आत्मा' देहः। 'एकविंशः' पुरुषः। 'एतावान्' एकविंशात्मकः। 'पुरुषो यज्ञः'-इत्यस्योपपादनम्— "पुरुषसम्मितो यज्ञ इति। यज्ञस्य पुरुष-सम्मितत्व मुपरिष्टाद् वक्ष्यते[2]। 'यावानेव यज्ञः'-इत्यस्य विवरणम्— "यावत्यस्य मात्रेति। 'अस्य' यज्ञस्य 'मात्रा'। मीयत इति मात्रा, अवयवसमष्टिः, एकविंशदात्मिका, 'अनया' "विश्वो देवस्य"— इत्यनया[3] 'तावन्त मेव' यज्ञम् 'आप्नोति' ॥ २३ ॥ ४ [ १. ४ ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥

---

१— का० श्रौ० सू० ७. ३. १९.।
२— अस्मिन्नेव काण्डे पञ्चमाध्यायस्य तृतीयं ब्राह्मणं द्रष्टव्यम्।
३— अष्टादशी कण्डी द्रष्टव्या ( ४८ पृ० ७ पं० )।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन्[1] पञ्चसीरीं[2]स्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः शिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो[3] राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा[4] लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्शिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे प्रथमाध्यायः समाप्तः ॥ १ ॥

---

१— 'पञ्चाब्धीन्'–इति ठ । २— 'सप्तसीरीं'–इति ठ ।
३— 'मजडं'–इति ठ । ४— 'प्राज्यबुद्धिर्'–इति ठ ।

[ अथ द्वितीयाध्याये प्रथमं ब्राह्मणम् ]



दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिने ऽउपस्तृणाति। तयोरेन मधि दीक्षयति यदि द्वे भवतस्तदनयोर्ल्लोकयो रूपं तदेन मनयोर्ल्लोकयोरधि दीक्षयति ॥१॥

सम्बद्धान्ते भवतः। सम्बद्धान्ताविव हीमौ लोकौ तन्मंसमुते पश्चाद्भवतस्तदिमावेव लोकौ मिथुनीकृत्य तयोरेन मधि दीक्षयति ॥ २ ॥

यद्यु ऽएकं भवति। तदेषां लोकानाᳬ रूपं तदेन मेषु लोकेष्वधि दीक्षयति यानि शुक्लानि तानि दिवो रूपं यानि कृष्णानि तान्यस्यै यदि वेतरथा यान्येव कृष्णानि तानि दिवो रूपं यानि शुक्लानि तान्यस्यै यान्येव बभ्रूणीव हरीणि तान्यन्तरिक्षस्य रूपं तदेन मेषु लोकेष्वधि दीक्षयति ॥ ३ ॥

अन्तक मु तर्हि पश्चात् प्रत्यस्येत्। तदिमानेव लोकान् मिथुनीकृत्य तेष्वेन मधि दीक्षयति ॥ ४ ॥

अथ जघनेन कृष्णाजिने पश्चात् प्राङ् जान्वाक्न उपविशति। स यत्र शुक्लानां च कृष्णानां च सन्धिर्भवति तदेव मभिमृश्य जपत्यृक्सामयोः शिल्पे स्थ ऽइति यद्वै

प्रतिरूपं तच्छिल्प मृचां च साम्नां च प्रतिरूपे स्थ इत्येवै-तदाह ॥ ५ ॥

ते वा मारभ ऽइति। गर्भो वा ऽएष भवति यो दीक्षते स छन्दाꣳसि प्रविशति तस्मान्न्यक्नाङ्गुलिरिव भवति न्यक्नाङ्गुलय इव हि गर्भाः ॥ ६ ॥

स यदाह। ते वा मारभ ऽइति ते वां प्रविशामीत्येवै-तदाह ते मा पात मास्य यज्ञस्योदृच इति ते मा गोपा-यत मास्य यज्ञस्य सꣳस्थाया इत्येवैतदाह ॥ ७ ॥

अथ दक्षिणेन* जानुनारोहति। शर्म्मासि शर्म्म मे यच्छेति चर्म्म वा ऽएतत् कृष्णस्य तदस्य तन्मानुषꣳ शर्म्म देवत्रा तस्मादाह शर्म्मासि शर्म्म मे यच्छेति नमस्ते ऽअस्तु मा मा हिꣳसीरिति श्रेयाꣳसं वा ऽएष उपाधिरोहति यो यज्ञं यज्ञो हि कृष्णाजिनं तस्मा ऽएवैतद्यज्ञाय निह्नुते तथो हैनमेष यज्ञो न हिनस्ति तस्मादाह नमस्ते ऽअस्तु मा मा हिꣳसीरिति ॥ ८ ॥

स वै जघनार्द्ध ऽइवैवाग्र ऽआसीत। अथ यदग्र ऽएव मध्य उपविशेद्य एनं तत्रानुव्याहरेद् द्रप्स्यति वा प्र वा पतिष्यतीति तथा हैव स्यात् तस्माज्जघनार्द्ध ऽइवैवाग्र ऽआसीत ॥ ९ ॥

---

* 'दक्षिणेन'—इति ग, घ।

अथ मेखलां परिहरते। अङ्गिरसो ह वै दीक्षितानबल्य मविन्दन्त* नान्यद् व्रताद्शन मवाकल्पयंस्त एतामूर्ज्जं मपश्यन्त्समाप्तिं तां मध्यत आत्मन ऊर्ज्जं मदधत समाप्तिं तया समाप्नुवंस्तथो एवैष एतां मध्यत आत्मन ऊर्ज्जं धत्ते समाप्तिं तया समाप्नोति ॥ १० ॥

सा वै शाणी भवति। मृद्व्यसदिति न्वेव शाणी यत्र वै प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञात्तस्य यन्नेदिष्ठ मुल्ब मासीत्ते शणास्तस्मात्ते पूतयो वान्ति यदस्य जरायासीत्तद्दीक्षितवसन मुत्तरं वा उल्बं जरायुणो भवति तस्मादेषान्तरा वाससो भवति स यथैवातः प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञादेव मेवैषोऽतो जायते गर्भो भूत्वैतस्माद् यज्ञात्† ॥ ११ ॥

सा वै त्रिवृद्भवति। त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत् तृतीयं तस्मात् त्रिवृद्भवति ॥ १२ ॥

मुञ्जवल्बशेनान्वस्ता भवति। वज्रो वै शरो विरक्षस्तायै स्तुकासर्गः सृष्टा भवति सा यत् प्रसलवि सृष्टा स्याद्यथेद मन्या रज्जवो मानुषी स्याद्यदपसलवि

---

* "दीक्षिता न बल्य मविन्दन् ते"–इति सा०-सम्मत इति वेबरः। इहोपरिष्टाच्चान्यत्रान्वेवं द्रष्टव्यम् (४. २. १; ३. १; ६. १. २९.)।

† 'यज्ञात्'–इति ग, घ।

सृष्टा स्यात् पितृदेवत्या स्यात्तस्मात् स्तुकासर्गꣳ सृष्टा भवति॥ १३ ॥

तां परिहरते। ऊर्गस्याङ्गिरसीत्यङ्गिरसो ह्येता मूर्ज मपश्यन्नूर्णम्रदा ऊर्जं मयि धेहीति नाच तिरोहित मिवास्ति ॥ १४ ॥

अथ नीवि मुद्गूहते। सोमस्य नीविरसीत्यदीक्षितस्य वा ऽअस्यैषाग्रे नीविर्भवत्यथाच दीक्षितस्य सोमस्य तस्मादाह सोमस्य नीविरसीति* ॥ १५ ॥

अथ प्रोर्णुते। गर्भो वा ऽएष भवति यो दीक्षते प्रावृता वै गर्भा उल्बेनेव जरायुणेव तस्माद्वै प्रोर्णुते॥ १६॥

स प्रोर्णुते। विष्णोः शर्म्मासि शर्म्म यजमानस्येत्युभयं वा ऽएषोऽच भवति यो दीक्षते विष्णुश्च यजमानश्च यदह दीक्षते तद्विष्णुर्भवति यद्यजते तद्यजमानस्तस्मादाह विष्णोः शर्म्मासि शर्म्म यजमानस्येति† ॥ १७ ॥

अथ कृष्णविषाणाꣳ सिचि बध्नीते। देवाश्च वा ऽअसुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्द्दाय मुपेयुर्म्मन एव देवा उपायन् वाच मसुरा यज्ञ मेव तद्देवा उपायन् वाच मसुरा अमू मेव देवा उपायन्निमा मसुराः॥ १८॥

ते देवा यज्ञ मब्रुवन्। योषा वा ऽइयं वागुपमन्त्रयस्व

---

* 'सीति'–इति ग, घ।  † 'स्येति'–इति ग, घ।

ह्वयिष्यते वै त्वेति स्वयं वा हैवैक्षत योषा वा ऽइयं वागुपमन्त्रयै ह्वयिष्यते वै मेति ता मुपामन्त्रयत सा हास्मा ऽआरकादिवैवाग्र ऽआसूयत् तस्माद् स्त्री पुंसोपमन्त्रितारकादिवैवाग्रे ऽसूयति स होवाचारकादिव वै म ऽआसूयीदिति ॥ १९ ॥

ते होचुः। उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति ता मुपामन्त्रयत सा हास्मै निपलाश मिवोवाद तस्माद् स्त्री पुंसोपमन्त्रिता निपलाश मिवैव वदति स होवाच निपलाश मिव वै मेऽवादीदिति ॥ २० ॥

ते होचुः। उपैव भगवो मन्त्रयस्व ह्वयिष्यते वै त्वेति ता मुपामन्त्रयत सा हैनं जुहुवे तस्माद् स्त्री पुमांसं ह्वयत* ऽएवोत्तमं स होवाचाह्वत वै मेति[†] ॥ २१ ॥

ते देवा ईक्षाञ्चक्रिरे। योषा वा ऽइयं वाग्यदेनं न युवितेहैव मा तिष्ठन्त मभ्येहीति ब्रूहि तां तु न ऽआगतां प्रतिप्रब्रूतादिति सा हैनं तदेव तिष्ठन्त मभ्येयाय तस्माद् स्त्री पुमांसं संस्कृते[‡] तिष्ठन्त मभ्यैति तां हैभ्य ऽआगतां प्रतिप्रोवाचेयं वा ऽआगादिति ॥ २२ ॥

---

* 'ह्वयन्त'–इति घ। † 'मेति'–इति ग, घ।

‡ 'संस्कृते'–इति क, ख, वेबरदृष्टस्य।

तां देवाः*। असुरेभ्योऽन्तरायंस्ताᳬ स्त्रीकृत्याग्नावेव परिगृह्य सर्व्वहुत मजुहवुराहुतिर्हि देवानाᳬ स यामेवामू मनुष्टुभाजुहवुस्तद्देवैनां तद्देवाः स्व्यकुर्व्वत तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति व्वदन्तः पराबभूवुः॥ २३॥

तत्रैता मपि वाच मूदुः। उपजिज्ञास्याᳬ स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्य्या हैषा व्वागेव मेवैष द्विषताᳬ सपत्नाना मादत्ते व्वाचं तेऽस्यात्तवचसः पराभवन्ति य एव मेतद्वेद†॥ २४॥

सोऽयं यज्ञो व्वाच मभिदध्यौ। मिथुन्येनया स्यामिति ताᳬ सम्बभूव॥ २५॥

इन्द्रो ह वा ऽईक्षाञ्चक्रे। महद्वा ऽइतोऽभ्वं जनिष्यते यज्ञस्य च मिथुनाद्वाचश्च यन्मा तन्नाभिभवेदिति स इन्द्र एव गर्भो भूत्वैतन्मिथुनं प्रविवेश॥ २६॥

स ह संवत्सरे जायमान ईक्षाञ्चक्रे। महावीर्य्या वा ऽइयं योनिर्या मा मदीधरत यद्वै मेतो महदेवाभ्वं नानुप्रजायेत यन्मा तन्नाभिभवेदिति॥ २७॥

तां प्रतिपरामृश्यावेष्ट्याच्छिनत्। तां यज्ञस्य शीर्षन् प्रत्यदधाद्यज्ञो हि कृष्णः स यः स यज्ञस्तत् कृष्णाजिनं

---

* 'देवाः'—इति ग, घ। † 'वेद'—इति ग, घ।

यो सा योनिः सा कृष्णविषाणाथ यदेना मिन्द्र आवेष्ट्याच्छिनत्तस्मादावेष्टितेव स यथैवात इन्द्रोऽजायत गर्भो भूत्वैतस्मान्मिथुनादेव मेवैषोऽतो जायते गर्भो भूत्वैतस्मान्मिथुनात्* ॥ २८ ॥

तां वा ऽउत्ताना मिव बध्नाति। उत्तानेव वै योनि-र्गर्भं बिभर्त्त्यथ दक्षिणां भ्रुव मुपर्य्युपरि ललाट मुप-स्पृशतीन्द्रस्य योनिरसीतीन्द्रस्य ह्येषा योनिरतो वा ह्येनां प्रविशन् विशत्यतो वा जायमानो जायते तस्मा-दाहेन्द्रस्य योनिरसीति† ॥ २९ ॥

अथोल्लिखति। सुसस्याः कृषीस्कृधीति यज्ञ मेवै-तज्जनयति यदा वै सुषमं भवत्यथालं यज्ञाय भवति यदो दुःषुमं भवति न तर्ह्यात्मने च नालं भवति तद्यज्ञ मेवैतज्जनयति ॥ ३० ॥

अथ नु दीक्षितः। काष्ठेन वा नखेन वा कण्डूयेत गर्भो वा ऽएष भवति यो दीक्षते यो वै गर्भस्य काष्ठेन वा नखेन वा कण्डूयेदपास्यन्‡ म्रित्येत्ततो दीक्षितः पामनो भवितोर्द्दीक्षितं वा ऽअनु रेताꣳसि ततो रेताꣳसि पामनानि जनितोः स्वा वै योनी रेतो न हिनस्त्येषा

---

* 'नात्'—इति ग, घ। † 'सीति'—इति ग, घ।

‡ 'दपास्यं'—इति क, ख, वेबरदृष्टश्च।

वा ऽएतस्य स्वा योनिर्भवति यत् कृष्णविषाणा तथो हैन मेषा न हिनस्ति तस्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नान्येन कृष्णविषाणायाः ॥ ३१ ॥

अथास्मै दण्डं प्रयच्छति। व्वज्रो वै दण्डो व्विरक्षस्तायै ॥ ३२ ॥

औदुम्बरो भवति। अन्नं वा ऽऊर्गुदुम्बर ऊर्ज्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरो भवति ॥ ३३ ॥

मुखसम्मितो भवति। एतावद्वै व्वीर्य्यँ स यावदेव व्वीर्य्यं तावांस्तद्भवति यन्मुखसम्मितः ॥ ३४ ॥

त मुच्छ्रयति। उच्छ्रयस्व व्वनस्पत ऽऊर्द्ध्वो मा पाह्यँहस ऽआस्य यज्ञस्योदृच इत्यूर्द्ध्वो मा गोपायास्य यज्ञस्य सँस्थाया इत्येवैतदाह ॥ ३५ ॥

अच हैके। अङ्गुलीश्च न्युचन्ति व्वाचं यच्छन्त्युतो हि किञ्च न जपिष्यन् भवतीति व्वदन्तस्तदु तथा न कुर्य्याद्यथा पराञ्चं धावन्त मनुलिप्सेत तन्नानुलभेतैवँ ह स यज्ञं नानुलभते तस्मादमुचैवाङ्गुलीर्न्युचेदमुच व्वाचं यच्छेत् ॥ ३६ ॥

अथ यद्दीक्षितः* । ऋचं वा यजुर्व्वा साम वाभिव्याहरत्यभिस्थिर मभिस्थिर मेवैतद्यज्ञ मारभते तस्मादमुचैवाङ्गुलीर्न्युचेदमुच व्वाचं यच्छेत् ॥ ३७ ॥

---

* 'च्छितः'–इति ग, घ ।

अथ यद्वाचं यच्छति। व्वाग् वै यज्ञो यज्ञ मेवैतदात्मन् धत्तेऽथ यद्वाचंयमो व्याहरति तस्माद् हैष व्विसृष्टो यज्ञः पराङावर्त्तते तत्रो व्वैष्णवी मृचं वा यजुर्वा जपेद् यज्ञो वै व्विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः ॥ ३८ ॥

अथैक उद्वदति। दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मण इति निवेदित मेवैन मेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्य्यो यो यज्ञं प्रापदित्ययं युष्माकैको-ऽभूत् तं गोपायतेत्येवैतदाह चिष्कृत्व आह चिरद्धि यज्ञः* ॥ ३९ ॥

अथ यद् ब्राह्मण इत्याह। अनद्धेव वा ऽअस्यातः पुरा जानं भवतीदं ह्याह रक्षांसि योषित मनुसचन्ते तदुत रक्षांस्येव रेत आदधतीत्यथाचाद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा व्वैश्यं वा ब्राह्मण इत्येव ब्रूयाद् ब्रह्मणो हि जायते यो यज्ञाज्जायते तस्मादाहुर्न सवनकृतं हन्यादेनस्वी हैव सवनकृतेति ॥ ४० ॥ ५ ॥

॥ इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् [२. १.] ॥

---

* 'यज्ञः'—इति ग, घ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

दीक्षाऽऽहुतीर्विधायाथ कृष्णाजिनदीक्षा माह— "दक्षिणेनाहव-नीय मिति । आहवनीयस्य दक्षिणे देशे द्वे कृष्णाजिने आस्तीर्य 'तयोरधि' 'एन' यजमानं 'दीक्षयति' । तद्गतं द्वित्वं प्रशंसति— "यदि द्वे भवत इति ॥ १ ॥

"सम्बद्धान्ते भवत इति । ते च परस्परं सम्बद्धपर्यन्तप्रदेशे भवतः, आस्तरणे । प्रकाशं कात्यायन आह— "आहवनीयं दक्षिणेन कृष्णाजिने मांससहिते स्यूतान्ते तर्द्मसु पश्चादासञ्जनवती निद-धाति"-इति[1] । "तर्द्मसमुते"-इति । ययोभयोर्मांसप्रदेशयोः सम्बन्धो भवति, यथा च तर्दनप्रदेशेषु पश्चाद्भागे 'उते' 'परस्परं' स्यूते भवतः, तथैकस्योपर्यपर मास्तृणुयात् । तथापस्तम्बोऽपि— "अन्तर्मांसाभ्याम्बहिर्लोमभ्याम्"-इति[2] ॥ २ ॥

एककृष्णाजिनपक्ष मुक्त्वा प्रशंसति— "यद्यु एक मिति । 'तत्' 'एकम्' एव कृष्णाजिनं लोकत्रयात्मकम्; अत एकेनापि दीक्षयेत् । 'दिवः' द्योतमानत्वेन शुक्लरोमांशस्तद्रूपं भवति । पृथिव्याः श्यामत्वात् कृष्णानां तद्रूपत्वम् । "यदि वेतरथेति । भूलोकस्वर्लोकयोर्मनुष्यैः परिदृश्यमानापरिदृश्यमानत्व मपेक्ष्य वैपरीत्योपन्यासः । "यान्येवेति । 'यान्येव' लोमानि 'बभ्रूणि' बभ्रुवर्णानि, 'हरीणितानि' हरित-

---

१— का० श्रौ० सू० ७. ३. २० ।
२— आप० श्रौ० सू० १०. ८. १२ ।

वर्णानि च दृश्यन्ते, 'तानि अन्तरिक्षस्य रूपम्'; "नीलं नभः"-इति लोकप्रसिद्धेः ॥ ३ ॥

"अन्तक मु तर्हीति । 'तर्हि' तस्मिन्नेककृष्णाजिनपक्षे 'अन्तक मु' अन्तप्रदेश मेव 'पश्चात्' भागे 'प्रत्यस्येत्' सङ्कोचयेत्, सन्धिप्रदेशेन द्विगुणीकुर्यादित्यर्थः । तथा च सूत्रम्— "एकं चेत् पश्चात् पादद्विगुणम्"-इति[1] ॥ ४ ॥

कृष्णाजिनदीक्षार्थ मुपवेशनप्रकार माह— "अथ जघनेनेति । कृष्णाजिनयोः पश्चाद्भागेन स्वय मपि पश्चात् प्राङ्मुखो दक्षिणजान्वाक्नः उपविशेत् । 'जान्वाक्नः' सङ्कुचितजानुकः, आरुह्योपविशेदित्यर्थः । "दक्षिणं जान्वाच्यास्ते पश्चादेनयोः"-इति[2] सूत्रम् । आसीनः तत्सन्धिस्थान मित्यर्थः । "एव मभिमृश्य जपतीति । एव मित्यभिमर्शनप्रकारस्याभिनयः[3] ॥

मन्त्रस्थं शिल्पपदं[4] व्याचष्टे— "यद्वा इति । 'प्रतिरूपं' प्रतिकृतिः । 'वै'-शब्देन लोकप्रसिद्धिरुच्यते । लौकिका हि हरितुरगादिप्रतिरूपं शिल्प मित्याहुः । शुक्लकृष्णयोरेवर्क्सामप्रतिरूपत्वं तैत्तिरीयके उक्तम्— "एष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत् कृष्णम्"-इति[5] ॥ ५ ॥

---

१— का० श्रौ० सू० ७. ३. २१ ।
२— का० श्रौ० सू० ७. ३. २२ । 'जान्वाच्य' नीचं भूमिस्पृष्टं कृत्वेति दे० ।
३— का० श्रौ० सू० ७. ३. २३ ।
४— वा० सं० ४. ९. १ द्रष्टव्यम् ।
५— तै० स० ६. १. ३ ।

द्वितीयं भागं व्याचष्टे— "ते वा मिति। "गर्भो वा एष भवति"-इति[1]। 'वै'-शब्दोऽत्र श्रुत्यन्तरप्रसिद्धिरुच्यते। तथा चैतरेयकम्— "पुनर्वा एत मृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति"— इति[2]। 'छन्दांसि' गायत्र्यादीनि। 'न्यक्ताङ्गुलिः' मुष्टीकरणेन सङ्कुचिताङ्गुलिः[3]। उक्तलक्षण मुपवेशनं प्रसिद्धगर्भसामान्येन दृढयति— "न्यक्ताङ्गुलय इव हीति॥ ६ ॥

"स यदाहेति। उदृक्-शब्दार्थ माह— "आस्य यज्ञस्येति। संस्थाया इत्यर्थः। उत्तमा ऋक् 'उदृक्', तेन समाप्तिर्लक्ष्यत इति ह्यसकृदुक्तम्[4]॥ ७ ॥

अनन्तरं कृष्णाजिनारोहणं विधत्ते— "अथ दक्षिणेनेति। "चर्म वा इत्यादि। मनुष्येषु यत् 'चर्म'-इति प्रसिद्धम्, 'एतद्' 'देवत्रा' देवेषु सुखहेतुत्वात् 'शर्म'-शब्दाभिधेयम्; अतो दैविकेन स्वरूपेण शर्मासीति[5] कृष्णाजिनस्य स्तुतिः। हिंसापरिहारप्रसक्तिं दर्शयति— "श्रेयांस मित्यादिना। यज्ञाख्यश्रेयोऽतिरिक्तक्रमेणापराद्धं प्रार्थनं युक्त मित्यर्थः॥ ८ ॥

---

१— "शुक्रशोणितं गर्भाशयस्थ मात्मप्रकृतिविकारसम्मूर्च्छितं गर्भ इत्युच्यते"—इति सुश्रु० १. ३३६. २०।

२— ऐ० ब्रा० १. १. ३। "गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते तस्माद् गर्भाः प्रावृता जायन्ते"—इति च तै० सं० ६. १. ३. २।

३— "मुष्टी कृत्वा गर्भोऽन्तः शेते, मुष्टी कृत्वा कुमारो जायते"—इति च ऐ० ब्रा० १. १. ३।

४— पुरस्ताद् (१२ पृ० २ पं०, ४२ पृ० १ पं०) द्रष्टव्यम्।

५— वा० सं० ४. ९. २ द्रष्टव्यम्।

"स जघनार्द्धं इति। 'सः' आरूढः 'जघनार्द्धे' कृष्णाजिनस्य पश्चाद्भागे एव 'अग्रे' प्रथमम् 'आसीत्'[1]। विपक्षे बाध माह— "अथ यदग्र इति। 'यः' 'एनं' मध्यप्रदेश मारूढं ब्रूयात्, अन्यः 'इङ्ख्यति' इङ्गः कुत्सितगतिर्भविष्यति, ततः 'पतिष्यति' चेति॥ ९ ॥

अथ मेखलादीक्षा माह— "अथ मेखला मिति। 'परिहरति' मध्ये परितो वेष्टयेदित्यर्थः। पुरोवृत्तान्ताभिधानेन तां मेखलां प्रशंसति— "अङ्गिरस इति। 'बल्यं' बलार्हं बलकरं वस्तु 'नाविन्दन्'। दौर्बल्ये कारण माह— 'व्रतात्' तत्साधनात् पयसः 'अन्यत्' अशनं 'नावाकल्पयन्' यतः, अत इत्यर्थः। 'ते' 'एताम्' 'ऊर्जम्'। 'ऊर्क्' बलं, तत्साधनत्वात् मेखला ऊर्गित्युच्यते। ऊर्गिति विशिनष्टि— "समाप्ति मिति। सम्यगाप्यायते बल मनयेति 'समाप्तिः' मेखला॥ १० ॥

तस्या उपादानद्रव्य माह— "सा वै शाणीति। 'सा' समाप्तिः 'शाणी' शणमयी भवेत्। 'मृद्वी' सुखसंस्पर्शा 'असत्' भवेत्। 'इति न्वेव' अनेन खल्वभिप्रायेण, गर्भाणां मार्दवत्वोपेक्षितत्वादित्यर्थः। शणवाससोरुत्पत्ति माह— "यत्र वा इति। 'यत्र' यस्मिन् काले 'प्रजापतिः' यज्ञसकाशादुत्पन्नः, 'तस्य' प्रजापतेर्गर्भभूतस्य 'नेदिष्ठम्' अत्यन्तसन्निहितं 'यदुल्ब मासीत्', 'ते' 'शणाः' अभवन्। 'तस्मात्' गर्भमालिन्यसम्भवात् 'ते' शणाः 'पूतयो वान्ति' दुर्गन्धा

---

[1]— का० श्रौ० सू० ७. ३. २५ द्रष्टव्यम्।

भवन्ति । उल्बं नाम पटसदृशं गर्भस्यान्तर्वेष्टनम्[1] । "स उल्बावृतो गर्भो भवति"-इत्येतदारण्यकम्[2] । प्रतिनिर्देशे बहुवचनं शणापेक्षम् । जरायुर्बहिर्वेष्टनम्[3] । प्रजापतेः सम्बन्धि तत् दीक्षितेन धार्यं वस्त्रमभूत् । उभेऽपि गर्भरूपप्रजापतिवद्दीक्षितस्यापि गर्भत्वात् धार्ये अभूताम् । मेखलाया वसनान्तरत्वं विधत्ते— "अन्तरं वेति । "स यथैवेत्यादि । स्पष्टम् ॥ ११ ॥

"सा वा इत्यादि । अजाव्यादिरूप मन्नं पितृमातृपुत्रात्मना 'त्रिवृद् भवति' यतः, अतस्तदात्मकत्वात् मेखलापि त्रिगुणा कर्त्तव्या ॥ १२ ॥

तस्या मुञ्जशाखामिश्रितत्वं विधत्ते—"मुञ्जवल्शेनान्वस्ता इति । शरस्य वज्रावयवत्वात् रक्षोविवासकत्वम् । तथा च तैत्तिरीयकम्— "इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत्"—इत्युपक्रम्य "येऽन्तः शरा अशीर्यन्त ताः शर्करा अभवन् तच्छर्कराणां शर्करत्वं वज्रो वै शर्कराः"-इति[4] । मेखलायाः केशवेणीवन्निर्माणं विधत्ते— "स्तुकासर्गं सृष्टा भवतीति । 'स्तुका' केशवेणी, सा यथा सृज्यते, तथा सृष्टा निर्मिता भवेत् । उक्तप्रकारं प्रशंसितुं प्रकारान्तरयोर्दोष माह— "सा प्रसव्वीति । 'सा' मेखला, 'यत्' यदि 'प्रसव्वि सृष्टा'

---

१, ३— "गर्भो जरायुणावृत उल्बं जहाति जन्मना"–इति वा० सं० १९. ७६. १ द्रष्टव्यम् ।

२— छान्दो० ब्रा० उप० ५. ९. १ । ऐ० ब्रा० १. १. ३ । निरु० ६. ६. ७ ।

४— तै० सं० ५. २. ६. ४ । "इन्द्रो०—०व्यभवत् । स्फ्यस्तृतीयं, रथस्तृतीयं, यूपस्तृतीयम् । ०—० येऽन्तःशरा इत्यादि ।

दक्षिणपाणेर्व्यापारेण निर्मिता स्यात्, तदा 'यथा' येन प्रकारेण 'अन्याः' लौकिक्यः, गवादिबन्धनरज्जवो मानुष्या भवन्ति, एव मिय मपि मानुष्येव भवेत्। 'यत्' यदि 'अपसलवि सृष्टा' सव्य-पाणिनोपरि व्यापृतेन निर्मिता स्यात्, तदा 'पितृदेवत्या स्यात्'। तस्मात् "सुकासर्गं सृष्टेति उपसंहारः ॥ १३ ॥

बन्धनमन्त्रं विधाय व्याचष्टे— "तां परिहरतीति। "अङ्गिरसो ह्येता मूर्ज मिति। अत्र 'हि'-शब्देन श्रुत्यन्तरे प्रसिद्धिराविष्क्रि-यते। तथा च तैत्तिरीयकम्— "अङ्गिरसः सुवर्गं लोकं यन्त ऊर्जं व्यभजन्त"-इत्यादि[१]। अत्र कात्यायनः— "मेखलां बध्नीते वेणीं त्रिवृतं शणमुञ्जमिश्रा मन्तरां वासस ऊर्गसीति"-इति ॥ १४ ॥

वस्त्रान्तस्य समन्त्रक मुद्गूहन माह— "अथ नीवि मिति[२]। 'अग्रे' सोमयागात् पूर्वम्। 'दीक्षितस्य' 'सोमस्य' सोमयागकर्त्तृत्वाद् दीक्षितो ह्युपचारेण सोम इत्याचक्षते ॥ १५ ॥

वाससा आच्छादनं विधत्ते— "अथ प्रोर्णुत इति। 'ऊर्णुते' आच्छादयति ॥ १६ ॥

"स प्रोर्णुत इति। आच्छाद्यप्रदेशविशेषः सूत्रे[३] स्पष्ट उक्तः— "शिरः प्रोर्णुते विष्णोः शर्मासीति"—इति[४]। विष्णुशब्दः पुरुषो-

---

१— अङ्गिरसः०—० व्यभजन्त। ततो यदशिष्यत् ते शरा अभवन्नूर्ग् वै शरा यच्छरमयी मेखला भवत्यूर्ज मेवावरुन्धे"—इति तै० सं० ५. ४. २. ६।

२— का० श्रौ० सू० ७. ३. २६। मन्त्रपाठस्तु वा० सं० ४. १०. १।

३— का० श्रौ० सू० ७. ३. २७।

४— मन्त्र एषः— वा० सं० ४. १०. २।

त्तमे प्रसिद्धः; अत्राभिमत मर्थ माह— "उभयं वा एष इति। दीक्षणीयेष्टौ आग्नावैष्णवे हविषि विष्णुर्देवतेति तत्संस्कारसंस्कृतो यजमानोऽपि विष्णुरित्यभिप्रायः ॥ १७ ॥

वस्त्रान्ते कृष्णविषाणबन्धन माह— "अथ कृष्णविषाण मिति[१]। 'सिचि' सिग् वस्त्रान्तः[२], तत्र बध्नीयात्। कृष्णविषाणोत्पत्त्यर्थ माख्यायिका माह— "देवाश्च वा असुराश्चेत्यादिना। 'प्राजापत्याः' प्रजापतेः पुत्राः 'पितुर्दायं' पैतृकं धनम्। इन्द्रियेषु मध्ये 'मन एव देवाः' प्राप्ताः, 'वाचं' वागिन्द्रियम् 'असुराः'। तथा यज्ञ मेव 'देवाः' उपगताः, 'वाचम्' इन्द्रियम् 'असुराः'। 'अमूं' दिव मेव 'देवाः', 'इमाम्' पृथिवीम् 'असुराः' ॥ १८ ॥

"ते देवा इति। एवं सति देवा वाचोऽपि स्वाधीनत्वकरणाय 'यज्ञम्' एवम् 'अब्रुवन्'— यज्ञ ! 'इयं वाक्' 'योषा', त्वं तु पुमान्; तस्मात् ताम् 'उपामन्त्रयस्व' सम्भोगार्थं सङ्केतेनाहूय, सापि 'त्वा' त्वां 'ह्वयिष्यते' आकारयिष्यति 'इति' अब्रुवन्। तत्तद् वृत्तान्तं जानती श्रुतिर्ब्रूते— न केवलं तेषां वचन मेव, किन्तु 'स्वयं वा ह एव' यज्ञः स्वय मपि 'ऐक्षत' विचारितवान्। ईक्षणप्रकार मनुवदति— "योषेति। 'मा' मा मपि 'ह्वयिष्यते' अतः 'उपमन्त्रयै' अह मिति। उपमन्त्रिता 'सा' 'अग्रे' प्रथमवारम् 'आरकात्' आर

---

१— का० श्रौ० सू० ७. ३. २८। मन्त्रस्त्वस्य — वा० सं० ४.१०. ३।

२— वसनस्य दशा इति यावत्; अतएवाह स्पष्टम्— का० श्रौ० ७. ३. २९ सूत्रे 'दशायाम्'–इति। काण्वाना मुत्तरीये बन्धन माम्नातम्।

मेव आरकम्,[1] तस्मादेव। लोकदृष्टान्तकथनं स्पष्टम्। जातं वृत्तान्तं देवेभ्यो निवेदयति— "स होवाचेति॥ १९॥

"ते होचुरिति। अथ पुनर्देवैर्याच्यमानो यज्ञः 'ता मुपामन्त्रयत'। 'सा' अपि 'निपलाश मिव' निपतितपर्णं वृक्षादिक मिव, तद्यथा केवलं कम्पते, एवं शिरश्चालनेन 'उवाच' इत्यर्थः। अथवा पलाशनिपतन मिव ओष्ठचालनेनेत्यर्थः। "तस्मादित्यादि पूर्ववत्॥ २०॥ २१॥

"ते देवा इति। तृतीयवारे लाङ्गतवती आकामं वृत्तान्तं ज्ञातवन्तो 'देवाः हि ईचाञ्चक्रिरे'। कथम्? 'इयं वाक् योषा' खलु अस्तु नामेत्यत आह 'यत्' यस्मात् 'एनं' यज्ञं 'न युविता' न मिलितवती, अतो न विश्वसितव्येत्यर्थः। एव मीचिला, हे यज्ञ! तवान्तिके कथं गच्छामि, किन्तु हे वाक्! त्वम् 'इह' स्थाने 'एव' 'तिष्ठन्तं' 'मा' माम् अभिगच्छ 'इति ब्रूहि' इत्यब्रुवन्। तथा 'ता मागतां' वाचं 'नः' अस्माकं 'प्रतिप्रब्रूतात्' निवेदयतु 'इति' च अब्रुवन्। साप्याकारिता 'तदेव' तत्र सङ्केतप्रदेशे तिष्ठन्त मेव यज्ञ मभिगता। अथ स यज्ञो वागागतेति देवेभ्यः प्रोवाच॥ २२॥

"तां देवा इति। 'तां' वाचं 'देवाः' 'असुरेभ्यः' 'अन्तरायन्' तया वर्जितानकुर्वन्। 'स्वीकृत्य' चाग्निमुख मन्तरेण स्वभोगायोगात् 'अग्नावेव' 'तां' वाचम् 'अनुष्टुभा' "विश्वो देवस्य नेतुः"-इत्येतया यथा पुनरसुराणां निराशा भवति तथा सर्वतः 'अजुहवुः'। केवला

---

१— "अरा चर्मप्रभेदिका"— इत्यमरः २. ७०. ३५।

किं न स्वीकृतेत्यत आह— "आकृतिर्हीति। आकृतिरूपेणाग्नी दत्त मेव देवानां प्रिय मित्यर्थः। अथ 'ते असुराः' 'आत्तवचसः' देवैः स्वीकृतवचसः "हे अरयः हे अरयः"-इत्युच्चारयितु मशक्ताः "हेऽलवः हेऽलवः"-'इति वदन्तः' पराभूताः[१] ॥ २३ ॥

प्रसङ्गात् कश्चिद् वाग्विषयं नियम माह— "तत्रेति। 'उपजिज्ञास्यां' ज्ञातव्यां, सन्दिग्धां वाचम्, 'ऊचुः' उक्तवन्तोऽसुराः। 'स म्लेच्छः' सन्दिग्धार्थस्यापभ्रंशरूपस्य वचसो भाषणं यत्, तत् म्लेच्छन मित्यर्थः। यद्वा य ईदृशीं वाचं वदति, स म्लेच्छः। 'तस्मात्' 'न म्लेच्छेत्' म्लेच्छो न भवेत्, तदीया मपार्थिकां भाषां न ब्रूयादित्यर्थः। 'असुर्या' असुरेष्वाहिता। उक्तार्थपरिज्ञानं प्रशंसति— "एव मेवैष इति। 'अस्य' सपत्नाः, अनेन ज्ञात्वा अपहृतवचसः सन्तः 'पराभवन्ति' ॥ २४ ॥

यदर्थ माख्यायिका प्रपञ्चिता, त मर्थं विधातु माह— "सोऽयं यज्ञ इति। अभिध्यानप्रकारः प्रदर्श्यते— "मिथुनीति। 'सम्बभूव' सङ्गतोऽभूत् ॥ ( २५ ॥

"इन्द्रो ह वा इति।) 'इतः' अस्मात् 'मिथुनात्' 'अभ्वम्' अपत्यं यज्ञवाचोर्मिथुनात् 'यत्' 'जनिष्यते', 'तत्' तस्मात् 'मा' मां 'नाभिभवेत्' 'इति'। एव मीक्षित्वा अन्योत्पत्तिभयात् 'सः इन्द्रः एव' वाग्योन्यां स्वयं 'गर्भो' भूत्वा प्रविष्टः॥ ( २६ ॥

---

१— व्याकरणाध्ययनप्रयोजनकथनपरवार्त्तिकव्याख्यानावसरे पातञ्जले महाभाष्ये पस्पशायां चैषा श्रुतिरुद्धृता, परं तत्र तु 'हेऽलयो हेऽलयः'-इति पाठः।

"स ह संवत्सर इति।) तत्र संवत्सर मुषित्वा अजायत। "मा मदीधरतेति। स्वसामर्थ्याविष्करणम्, तच्च योनेर्बहुवीर्यत्वप्रशंसनायोपयुज्यते। एतस्मात् मिथुनात् मा मनु अन्यत् महत् 'अभ्वम्' अपत्यं नोत्पाद्येत, 'यन्मा मभिभवेदिति' ॥ (२७ ॥

"तां प्रतिपरामृश्येति।) 'प्रतिपरामृश्य' योनिर्देशे किमुत्पादक मिति विचार्य, 'ताम्' 'आवेष्ट्य' हस्तेनावेष्टनं कृत्वा 'अदधात्' यज्ञशिरसि स्थापितवान्। "यज्ञो हि कृष्ण इति। 'हि'-शब्देन "यज्ञो देवेभ्यो निलायत कृष्णो रूपं कृत्वा"—इत्यादिश्रुतिप्रसिद्धिरभिधीयते[1]। अतः प्रसिद्धो 'यः' 'कृष्णः' मृगोऽस्ति, 'सः' एव निदानेन 'यज्ञः', 'तत्' एव यजमानेन धार्यं 'कृष्णाजिनम्' तस्या वाचो 'योनिः'। 'सा कृष्णविषाणा' यान्या। कृष्णविषाणधारणे लिङ्गं दर्शयति— "यदेना मिति। उक्तार्थज्ञं प्रशंसति— "स यथैवात इति ॥ २८ ॥

तस्या बन्धने ऊर्द्ध्वमुखत्वं विधत्ते— "तां वा इति। योनिर्यद्यधोमुखं गर्भं बिभृयात्, तदा पतेदेव, अत उत्तानभरणं सिद्धम्; तत्साधर्म्यात् 'ताम्' 'उत्तानाम्' बध्नीयात्। बन्धनप्रकार माह— 'दक्षिणां भ्रुवम्' आरभ्य ललाटस्येषदुपरिप्रदेशं स्पृशेत्। अत्र सूत्रम्— "कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते तया कण्डूयनम् उपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरिति"—इति[2]। मन्त्रं व्याचष्टे— "इन्द्रस्येति। 'अतः हि'

---

१— १ का० १. ४. १, तै० सं० ६. १. ३. १, वा० सं० २. १. १।

२— का० श्रौ० सू० ७. ३. २६, ३०, ३१। वा० सं० ४. १०. ४।

अस्या योनेः सकाशात् खलु 'प्रविशति' गर्भरूपेणेन्द्रः। गर्भप्रवेश-निर्गमयोः साधनत्वादिन्द्रस्य योनित्वं सिद्धम् ॥ २९ ॥

तथा भूमेरुपरि समन्त्रक मुल्लेखनं विधत्ते— "अथोल्लिखतीति[1]। 'कृषीः' कृष्टस्थलीः सम्पद्धयस्याः 'कृधीति' मन्त्रार्थः[2]। 'कृषीस्कृधि' —इत्यत्र कस्कादित्वात् सत्वम्[3]। 'एतत्' एतेनोल्लेखनेन। स्पष्ट मन्यत्। "यदा वा इति। 'यदा' खलु 'सुषमं' कृष्यादिसम्पत्त्या 'सुषमं' सुखप्रदः संवत्सरो 'भवति', तदैव यज्ञोऽनुष्ठानाय प्रभवति; यदा उक्तवैपरीत्येन 'दुःषमं' दुःखहेतुः संवत्सरो भवति, तदा 'आत्मने' स्वशरीररक्षणायापि न प्रभवति; का कथा यज्ञस्येति ॥ ३० ॥

कृष्णविषाणया कण्डूयनप्रशंसनार्थं साधनान्तरं निन्दति— "अथ न दीक्षित इति। 'यः' कश्चिद् 'गर्भस्य' इति कर्मणि षष्ठी, गर्भं काष्ठादिना विकर्षेत्, तदा स 'गर्भः' अपगच्छन् मृतिं प्राप्नुयात्। ततोऽन्यस्य साधनस्य दुष्टत्वात् तेन विकर्षमाणः 'दीक्षितः पामनो भवितोः'। 'पामा' विचर्चिका, मत्वर्थीयो नः[4], तद्वान् भवितुं समर्थो भवतीत्यर्थः। न केवलं दीक्षितः स्वय मेव पामनो भवति, किन्तु तदुत्पन्नाः पुत्रा अपि तादृश भवन्तीत्याह— "दीक्षितं वा अन्विति। विपक्षे दोष मुक्त्वा स्वपक्षे तदभावं दर्शयितु माह— "स्वा वा इति। कृष्णविषाणाया योनित्वात्, दीक्षितस्य गर्भत्वात्, हिंसा-भावाय 'कृष्णविषाणयैव कण्डूयेत' इति विधिः[5] ॥ ३१ ॥

---

१— का० श्रौ० सू० ७. ३. ३२। २— मन्त्रस्तु वा० सं० ४. १०. ५।
३— पा० सू० ८. ३. ४८। ४— पा० सू० ५. २. १००।
५— का० श्रौ० सू० ७. ३. ३०।

अथ दण्डेन दीक्षां विधत्ते— "अथास्मा इति । प्रहारसाधनत्वाद् दण्डस्य वज्रत्वम् ॥ २२ ॥

"औदुम्बरो भवतीति । 'ऊर्क्' बलकररसरूपम् 'अन्नम्' । उदुम्बरस्योक्तरूपत्वं तैत्तिरीयके आम्नातम्— "देवा वा ऊर्जं व्यभजन्त त उदुम्बर उदतिष्ठत्"-इति[1] ॥ २३ ॥

"मुखसम्मित इत्यादि[2] । स्पष्टम् । मुखपर्यन्तम् । प्रत्यक्षे वीर्यसम्भवात् ततोऽधः कण्ठादिसम्मितं न कुर्यादित्यर्थः ॥ २४ ॥

दण्डस्योच्छ्रयणं समन्त्रकं विधत्ते—"त मुच्छ्रयतीति[3] । उदृक्शब्दस्य समाप्तिवाचकत्वप्रकारोऽसकृत् प्रदर्शितः[4] ॥ २५ ॥

दर्भैः पावनानन्तरं मुष्टीकरणवाग्यमावुक्तौ । स एव स्वाभिमतः कालः । स्वाभिमतत्वज्ञाच 'वाचं च यच्छन्ति'-इति चकारेणावगम्यते दण्डदीक्षानन्तरं तयोः काल इतीमं केषाञ्चित् पक्ष मुपन्यस्य तेषा मभिप्राय माविष्कृत्य स्वपक्ष मुपसंहरति— "अत्र हैक इत्यादिना । 'अतो हि' अस्माद् दण्डग्रहणकालादूर्द्धकाले किञ्चिदपि 'न जपिष्यन् भवति', जप्यस्य च सर्वस्य पूर्व मेव निष्पन्नत्वादिति भावः । "यथा पराञ्च मिति । तेषां पक्षे दोषप्रदर्शनं परावृत्तस्य पुनर्ग्रहणं दुर्घट मिति 'अमुत्रैव' प्रागुक्ते[5] काले, दर्भपावनानन्तर मेव कर्त्तव्य मित्यर्थः ॥ २६ ॥

---

१— "ऊर्ग्वा अन्नाद्य मुदुम्बरः"-इति ऐ० ब्रा० ८. २. ४ ।

२— का० श्रौ० सू० ७. ४. १ ।

३— का० श्रौ० सू० ७. ४. २ । मन्त्रः— वा० सं० ४. १०. ६ ।

४— १२ पृ० २पं०, ४२पृ० १पं०, ६८पृ० ६पं० द्रष्टव्यम् ।

५— १. ३. २५, २७ कण्डिके (४२, ४३ पृ०) द्रष्टव्ये ।

स्वपक्षे गुणान्तर माह— "अथ यद् दीक्षित इति। वाङ्नय-कारणस्य व्यर्थवचसो नियमितत्वेन ऋगादिमन्त्राभिव्याहरणसमयस्यैव स्थैर्योपादानान्मन्त्रोच्चारणकृतो न वाङ्नियमस्य भङ्ग इति प्रागेव कर्त्तव्यम्। कात्यायनस्तु दण्डधारणानन्तरं वाग्यमन मपि विकल्पे-नोक्तवान्— "अत्र वा मुष्टिकरणवाग्यमने"-इति[१] ॥ २७ ॥

गृहीतवचसः पुनर्वाग्व्यवहारे प्रायश्चित्त मभिधातुं वाग्यमनस्य प्रयोजन माह— "अथ यदिति। 'वैष्णवी मृचं' "इदं विष्णु-र्विचक्रमे"-इत्येवमादिकाम्[२] ॥ २८ ॥

अध्वर्युकर्त्तृकं दीक्षितावेदनं विधत्ते— "अथैक उद्वदतीति। 'एकः' अध्वर्युः 'उद्वदति' उच्चैरावेदयति। 'अयं ब्राह्मणः दीक्षितः' दीक्षणीयेष्टिकृष्णाजिनादिदीक्षासंस्कारेण संस्कृतः 'इति'। 'अयं महावीर्यः' इत्येतत् पूर्वं व्याख्यातम्। सूत्रे तु अध्वर्युव्यतिरिक्तेन कर्त्ता आवेदन मुक्तम्। "अन्यो दीक्षितोऽयं ब्राह्मण इत्याह त्रिरुच्चैः"— इति[३]। अन्यशब्दोऽध्वर्युसन्निकर्षादाध्वर्यवसमाख्यानबलात् प्रतिप्रस्थातृपरः, उच्चैरित्यनेन चानुपांशुपक्षः सूचितः"-इति कर्कोपा-ध्यायेन व्याख्यातम्। तस्य चावेदनवाक्यस्य त्रिरावृत्तिं विधत्ते— "त्रिः कृत्व इति ॥ २९ ॥

आवेदनवाक्यगतस्य ब्राह्मणपदस्य प्रयोजन माह— "अथ यद्

---

१— का० श्रौ० सू० ७. ४. ४। "आत्तमयाद् वाचं यच्छति"—इति वाग्यमनकालसीमा च तत्रैव (१२ सू०), इहाप्यस्युत्तरत्र (८१ पृ०)।

२— ऋ० सं० १. २२. १७। वा० सं० ५. १५. १.।

३— का० श्रौ० सू० ७. ४. ११।

ब्राह्मण इति । 'अतः' 'अस्याः' दीक्षायाः 'पुरा' 'जातं' जन्म 'अनद्धेव' अविनिश्चित मिव 'भवति' । अनद्धात्वे कारण माह— "इदं ह्याहुरिति" । 'इदं' वक्ष्यमाणम् 'आहुः' अभिज्ञाः । यतो राक्षसाः स्त्रियम् 'अनुषचन्ते' अनुसंश्रयन्ति, गर्भाधानसमये 'रेतः' च 'आदधति', अतो योनितो जन्यते । ब्राह्मण इत्यस्य व्याख्यानम्— "यज्ञादिति । यज्ञशब्दाभिधेयात् ब्रह्मणो जातत्वाद् 'ब्राह्मण'-शब्दव्यवहारः । अत एव राजन्यवैश्ययोरपि दीक्षितयोः "दीक्षितोऽयं ब्राह्मणः"-'इत्येवं ब्रूयात्'[१] । यज्ञजन्मप्रशंसार्थं कश्चिन्नियम माह— "न सवनकृत मिति । 'सवनकृतं' अभिषवकर्त्तारं यष्टारं त्रैवर्णिके ष्वन्यतम मपीत्यर्थः । 'सवनकृता' सवनकृतनिमित्तेन, तद्वधेनेत्यर्थः ॥ ४० ॥ ५ [ २. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

## ॥ इति तृतीयकाण्डे प्रथमः प्रपाठकः समाप्तः[२] ॥

---

१— "ब्राह्मण इत्येव वैश्यराजन्ययोरपि ; श्रुतेः"—इति का० ७. ४. १२ ।

२— "कण्डिकासङ्ख्या १२४"—इति च । तत्र १ ब्रा० १२ क०, २ ब्रा० २१ क०, ३ ब्रा० २८ क०, ४ ब्रा० २३ क०, ५ ब्रा० ४०क०, सङ्कलनया १२४ इति सिद्धम् ।

## अथ

### द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

### द्वितीयाध्याये द्वितीयं ब्राह्मणम् ।

॥ हरिः ॐ ॥

व्वाचं यच्छति । स व्वाचंयम आस्त ऽआस्तमयात् तद्यद्वाचं यच्छति ॥ १ ॥

यज्ञेन वै देवाः । इमां जितिं जिग्युर्य्यैषा मियं जितिस्ते होचुः कथन्न इदं मनुष्यैरनभ्यारोह्युं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥ २ ॥

तद्वा ऽऋषीणा मनुश्रुत मास । ते* यज्ञं समभरन्यथायं यज्ञः सम्भृत एवं वा ऽएष यज्ञं सम्भरति यो दीक्षते व्वाग् वै यज्ञः† ॥ ३ ॥

* 'तेन'–इति क ।    † 'यज्ञः'–इति ग, घ ।

ता मस्तमिते व्वाचं व्विसृजते । संवत्सरो वै प्रजापतिः प्रजापतिर्य्यज्ञो ऽहोरात्रे वै संवत्सर एते ह्येनं परिप्लवमाने कुरुतः सोऽहं न दीक्षिष्ट स रात्रिं प्रापत्स यावानेव यज्ञो यावत्यस्य मात्रा तावन्त मेवैतदाप्त्वा व्वाचं व्विसृजते ॥ ४ ॥

तद्धैके । नक्षत्रं दृष्ट्वा व्वाचं व्विसर्जयन्त्युतानुष्ठ्यास्तमितो भवतीति व्वदन्तस्तदु तथा न कुर्यात् क्व ते स्युर्य्यन्मेघः स्यात्तस्माद्युतैवानुष्ठ्यास्तमितं मन्येत तदेव व्वाचं व्विसर्ज्जयेत् ॥ ५ ॥

अनेनो हैके व्वाचं व्विसर्ज्जयन्ति । भूर्भुवः स्वरिति यज्ञ माप्याययामो यज्ञꣳ सन्दध्म इति व्वदन्तस्तदु तथा न कुर्यान्न ह स यज्ञ माप्याययति न सन्दधाति य एतेन व्वाचं व्विसर्ज्जयति ॥ ६ ॥

अनेनैव व्वाचं व्विसर्ज्जयेत् । व्रतं कृणुत व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो व्वनस्पतिर्यज्ञिय इत्येष ह्यस्यात्र यज्ञो भवत्येतद्धविर्यथा पुराग्निहोत्रं तद्यज्ञेनैवैतद्यज्ञꣳ सम्भृत्य यज्ञे यज्ञं प्रतिष्ठापयति यज्ञेन यज्ञꣳ सन्तनोति सन्ततꣳ ह्येवास्यैतद् व्रतं भवत्या सुत्यायै त्रिष्कृत्व आह त्रिवृद्धि यज्ञः ॥ ७ ॥

अथाग्नि मभ्यावृत्य व्वाचं व्विसृजते । न ह स यज्ञ

माप्याययति न सन्दधाति योऽतोऽन्येन वाचं विसृजते स प्रथमं व्याहरन्त्सत्यं वाचोऽभिव्याहरति ॥ ८ ॥

अग्निर्ब्रह्मेति। अग्निर्ह्येव ब्रह्माग्निर्यज्ञ इत्यग्निर्ह्येव यज्ञो वनस्पतिर्यज्ञिय इति वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन् यद् वनस्पतयो न स्युस्तस्मादाह वनस्पतिर्यज्ञिय इति* ॥ ९ ॥

अथास्मै व्रतं श्रपयन्ति। देवान्वा ऽएष उपावर्त्तते यो दीक्षते स देवतानामेको भवति शृतं वै देवानां हविर्नाशृतं तस्माच्छ्रपयन्ति तदेष एव व्रतयति नाग्नौ जुहोति तद्यदेष एव व्रतयति नाग्नौ† जुहोति ॥ १० ॥

यज्ञेन वै देवा। इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथन्न इदं मनुष्यैरनभ्यारोह्यं स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥ ११ ॥

तद्वा ऽऋषीणामनुश्रुतमास। ते यज्ञं समभरन् यथायं यज्ञः सम्भृत एष वा ऽअत्र यज्ञो भवति यो दीक्षत ऽएष ह्येनं तनुत ऽएष एनं जनयति तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति यदेष एव

* 'इति'–इति ग, घ। † 'नाग्नौ'–इति ग, घ।

व्रतयति नाग्नौ जुहोति न ह्याप्याययेद्यदग्नौ जुहुयाज्जुह्वदु हैव मन्येत नाजुह्वत् ॥ १२ ॥

इमे वै प्राणाः* । मनोजाता मनोयुजो दक्षक्रतवो व्वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं व्विश्वे देवा एतासु हैवास्यैतद्देवतासु हुतं भवति॥ १३॥

तद्धैके । प्रथमे व्रत ऽउभौ व्रीहियवावावपन्त्युभाभ्याᳵ रसाभ्यां यदेवात्र यज्ञस्य निर्ह्वीतं यद्विदुग्धं तत्पुनराप्याययाम इति व्वदन्तो यद्यु व्रतदुघा न दुहीत यस्यैवातः कामयेत तस्य व्रतं कुर्यादेतदु ह्येवास्यैता ऽउभौ व्रीहियवावन्वारब्धौ भवत इति तदु तथा न कुर्यान्न ह स यज्ञ माप्याययति न सन्दधाति य उभौ व्रीहियवावावपति तस्मादन्यतर मेवावपेद्यविवा ऽअस्यैता ऽउभौ व्रीहियवौ भवतः स यदेवास्यैतौ हविर्भवतस्तदेवास्यैतावन्वारब्धौ भवतो यद्यु व्रतदुघा न दुहीत यस्यैवातः कामयेत तस्य व्रतं कुर्यात् ॥ १४ ॥

तद्धैके । प्रथमे व्रते सर्व्वौषधᳵ सर्वसुरभ्यावपन्ति यदि दीक्षित मार्त्तिर्व्विन्देद्येनैवातः कामयेत तेन भिषज्येद् यथा व्रतेन भिषज्येदिति तदु तथा न कुर्यान्मानुषᳵ ह ते यज्ञे कुर्व्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्

* 'प्राणाः'—इति ग, घ ।

व्यृद्धं यज्ञे करवाणीति यदि दीक्षित मार्त्तिर्व्विन्देद्येनैवातः कामयेत तेन भिषज्येत् समाप्तिर्ह्येव पुण्या* ॥ १५ ॥

अथास्मै व्रतं प्रयच्छति। अतिनीय मानुषं कालꣳ सायन्दुग्ध मपरराचे प्रातर्दुग्ध मपराह्ले व्याहृत्या ऽएव दैवञ्चैवैतन्मानुषं च व्याकरोति ॥ १६ ॥

अथास्मै व्रतं प्रदास्यन्नप उपस्पर्शयति। दैवीन्धियं मनामहे सुमृडीका मभिष्टये व्वर्चोधां यज्ञवाहसꣳ सुतीर्था नो ऽअसद्वश ऽइति मानुषाय वा ऽएष पुराशनायावनेनिक्तेऽथाच दैव्यै धिये तस्मादाह दैवीं धियं मनामहे सुमृडीका मभिष्टये व्वर्चोधां यज्ञवाहसꣳ सुतीर्था नो ऽअसद्वश ऽइति स यावत् कियच्च व्रतं व्रतयिष्यन्नप उपस्पृशेदेतेनैवोपस्पृशेत् ॥ १७ ॥

अथ व्रतं व्रतयति। ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहेति तद्यथा व्वषट्कृतꣳ हुत मेव मस्यैतद्भवति ॥ १८ ॥

अथ व्रतं व्रतयित्वा नाभि मुपस्पृशते। श्वात्राः पीता भवत यूय मापो ऽअस्माक मन्तरुदरे सुशेवाः। ता अस्मभ्य मयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृध इति† देवान् वा ऽएष उपावर्त्तते यो दीक्षते स देव-

---

* 'पुण्या'—इति ग, घ।

† 'इति'—इति ग, घ।

ताना मेको भवत्यनुत्सिक्तं वै देवानाᳬ हविर्यैतद् व्रत-
प्रदो मिथ्याकरोति व्रत मुपोत्सिञ्चन् व्रतं प्रमीणाति
तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं
भवति न व्रतं प्रमीणाति तस्मादाह श्वात्राः पीता भवत
यूय मापो ऽअस्माक मन्तरुदरे सुशेवा। ता अस्मभ्य
मयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋता-
वृध इति स यावत्कियच्च व्रतं व्रतयित्वा नाभि मुपस्पृशे-
देतेनैवोपस्पृशेत् कस्तद्वेद यद् व्रतप्रदो व्रत मुपोत्सि-
ञ्चेत्* ॥ १९ ॥

अथ यत्र मेक्ष्यन् भवति। तत् कृष्णविषाणया लोष्टं
वा किञ्चिद्वोपहन्तीयं ते यज्ञिया तनूरितीयं वै पृथिवी
देवी देवयजनी सा दीक्षितेन नाभिमिह्या तस्या एत-
दङ्गृह्यैव यज्ञियां तनू मथायज्ञियᳬ शरीर मभिमेहत्यपो
मुञ्चामि न प्रजा मित्यभयं वा ऽअत एत्यापश्च रेतश्च स
एतदप एव मुञ्चति न प्रजा मᳬहोमुचः स्वाहाकृता
इत्यᳬहस इव ह्येता मुञ्चन्ति यदुदरे गुष्टितं भवति
तस्मादाहाᳬहोमुच इति स्वाहाकृताः पृथिवी माविश-
तेत्याहुतयो भूत्वा शान्ताः पृथिवी माविशतेत्ये-
वैतदाह ॥ २० ॥

---

* 'श्चेत्'–इति ग, घ।

अथ पुनर्लोष्टं न्यस्यति। पृथिव्या सम्भवेतीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या तस्या एतदङ्गृह्यैव यज्ञियां तनू मथायज्ञियꣳ शरीर मभ्यमिक्षत्ता मेवास्या मेतत् पुनर्यज्ञियां तनूं दधाति तस्मादाह पृथिव्या सम्भवेति* ॥ २१ ॥

अथाग्नये परिदाय स्वपिति। देवान् वा ऽएष उपावर्त्तते यो दीक्षते स देवताना मेको भवति न वै देवाः स्वपन्त्यनवरुद्धो वा ऽएतस्यास्वप्नो भवत्यग्निर्वै देवानां व्रतपतिस्तस्मा ऽएवैतत् परिदाय स्वपित्यग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहीत्यग्ने त्वं जागृहि वयꣳ स्वप्स्याम इत्येवैतदाह रक्षा णो ऽअप्रयुच्छन्निति गोपाय नो ऽप्रमत्त इत्येवैतदाह प्रबुधे नः पुनस्कृधीति यथेतः सुप्त्वा स्वस्ति प्रबुध्यामहा ऽएवं नः कुर्व्वित्येवैतदाह† ॥ २२ ॥

अथ यत्र सुप्त्वा पुनर्नावद्रास्यन् भवति। तद्वाचयति पुनर्म्मनः पुनरायुर्म्म ऽआगन् पुनः प्राणः पुनरात्मा म ऽआगन् पुनश्चक्षुः पुनः श्रोत्रं म ऽआगन्निति सर्वं ह वा ऽएते स्वपतोऽपक्रामन्ति प्राण एव न तैरेवैतत् सुप्त्वा पुनः सङ्गच्छते तस्मादाह पुनर्मनः पुनरायुर्म ऽआगन्

---

* 'वेति'–इति ग, घ।   † 'दाह'–इति ग, घ।

पुनः प्राणः पुनरात्मा म ऽआगन् पुनश्चक्षुः पुनः श्रोत्रं म ऽआगन्। व्वैश्वानरो ऽअदब्धस्तनूपा अग्निर्न्नः पातु दुरितादवद्यादिति तद्यदेवाच स्वप्नेन वा येन वा मिथ्याकर्म्म तस्मान्नः सर्व्वस्मादग्निर्गोपायत्वित्येवैतदाह तस्मादाह व्वैश्वानरो अदब्धस्तनूपा अग्निर्न्नः पातु दुरितादवद्यादिति* ॥ २३ ॥

अथ यद्दीक्षितः। अव्रत्यं वा व्याहरति क्रुध्यति वा तन्मिथ्याकरोति व्रतं प्रमीणात्यक्रोधो ह्येव दीक्षितस्याग्निर्वै देवानां व्रतपतिस्त मेवैतदुपधावति त्व मग्ने व्रतपा असि देव ऽआ मर्त्त्येष्वा†। त्वं यज्ञेष्वीड्य ऽइति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह त्व मग्ने व्रतपा असि देव ऽआमर्त्त्येष्वा‡। त्वं यज्ञेष्वीड्य इति§ ॥ २४ ॥

अथ यद्दीक्षितायाभिहरन्ति। तस्मिन् वाचयति रास्वे यत्सोमा भूयो भरेति सोमो ह ऽवा अस्मा ऽएतद्युते यद्दीक्षितायाभिहरन्ति स यदाह रास्वे यत्सोमेति रास्व न इयत्सोमेत्येवैतदाहा भूयो भरेत्या नो भूयो हरेत्येवैतदाह देवो नः सविता व्वसोर्द्दाता व्वसुदा-

---

* 'दिति'– ग, घ। † 'मर्त्त्येष्वा'–इति ग, घ।

‡ 'मर्त्त्येष्वा'–इति ग, घ। § 'इति'–इति ग, घ।

दिति तथो हास्मा एतत्सवितृप्रसूत मेव दानाय भवति ॥ २५ ॥

पुरास्तमयादाह । दीक्षित व्वाचं यच्छेति ता मुस्त-मिते व्वाचं व्विसृजते पुरोदयादाह दीक्षित व्वाचं यच्छेति ता मुदिते व्वाचं व्विसृजते सन्तत्या ऽएवाह-रेवैतद्रात्र्या सन्तनोत्यह्ना रात्रिम्* ॥ २६ ॥

नैन मन्युच्च चरन्त मभ्युस्तमियात् । न स्वपन्त मभ्यु-दियात्स यदेन मन्युच्च चरन्त मभ्युस्तमियाद्रात्रेरेनं तद-न्तरियाद्यत् स्वपन्त मभ्युदियादह्न एनं तदन्तरियान्नाच प्रायश्चित्तिरस्ति प्रतिगुप्य† मेवैतस्मान्न पुरावभृथादपो ऽभ्यवेयान्नैन मभिवर्षेदनवक्लृप्तꣳ ह तद्यत् पुरावभृथाद-पोऽभ्यवेयाद्यदेन मभिवर्षेदथ परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृतां तद्यत्परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृताम् ॥ २७ ॥

यज्ञेन वै देवाः । इमां जितिं जिग्युर्यैषा मियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥ २८ ॥

---

* 'रात्रिम्'—इति ग, घ ।

† 'प्रतिगुह्य'—इति सा०-सम्मत इति डा० वेबरः ।

तद्वा ऽऋषीणा मनुश्रूत मास। ते यज्ञꣳ समभरन् यथायं यज्ञः सम्भृत एवं वा ऽएष यज्ञꣳ सम्भरति* यो दीक्षते व्वाग् वै यज्ञस्तद्युदेवाच यज्ञस्य निर्द्धीतं यद्विदुग्धं तदेवैतत् पुनराप्याययति यत् परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृतां न ह्याप्याययेद्यत् प्रसृतां मानुषीं व्वाचं व्वदेत्तस्मात् परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृताम्[†] ॥ २९ ॥

स वै धीक्षते। व्वाचे हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि व्वाग् धीक्षितो ह वै नामैतद्युद्दीक्षित इति॥ ३० ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [ २. २. ] ॥

गृहीतस्य वचसो विसर्गकालविधानाय पुनरनुवदति— "वाचं यच्छतीति[१] ॥ १ ॥

वाग्यमनं प्रशंसितु माख्यायिका माह— "यज्ञेन वै देवा इत्यादिना। एतत् प्राग् व्याख्यातम्[२] ॥ २ ॥ ३ ॥

---

* 'सम्भवति'—इति च पाठो दृष्टो डा०-वेबरेण।

† 'प्रुह्वतां'—इति ख, 'प्रुह्वताꣳ'—इति ग, घ।

१— का० श्रौ० सू० ७. ४. १३।

२— १. ५. १. १. ( १ भा० ४०५ पृ० )।

वाग्विमोकं विधत्ते— "ता मस्तमिते वाच मिति[१]। अस्तमयानन्तरभावित्वं वाग्विमोकस्य प्रशंसति— "संवत्सरो वा इति। 'एते' एव 'अहोरात्रे' 'परिप्लवमाने' पुनःपुनरावर्त्तमाने 'एनं' संवत्सरं 'कुरुतः' निष्पादयतः। 'सः' उक्तलक्षणः 'प्रजापतिः' पुरा स्वयज्ञसमये 'अहन्' अहनि 'अदीक्षिष्ट' लुङ्[२], दीक्षितवान्। कृतदीक्षः 'सः' प्रजापतिः, 'रात्रिम्' 'प्रापत्' प्राप्तवान्। दीक्षितोपलक्षितां वाचं रात्रिपर्यन्त मन्ववर्त्तयदित्यर्थः। अतस्तावत्पर्यन्तं वाग्यमनं कुर्वन् दीक्षितो 'यावान्' 'यज्ञः' संवत्सर-प्रजापत्यात्मकोऽस्ति, 'अस्य' च 'यावती' 'मात्रा' परिमितिरस्ति, 'तावन्तं' सकल मपि 'एतत्' एतेन नियमेन 'आप्त्वा' 'वाचं' विसृष्टवान् भवति ॥४॥

वाग्विमोके केषाञ्चित् पक्ष माह— "तद्धैक इति[३]। 'अत्र' नक्षत्रदर्शनकाले। 'अनुष्ठ्या' सम्यगित्यर्थः। सर्वैः प्रज्ञातत्वेन सूर्यं 'अस्तमितो भवतीति' 'वदन्तः'। त मिमं पक्षं दूषयति— "तदु तथेति। 'ते' तथानुष्ठातारो यदि 'मेघः' नक्षत्राच्छादकः 'स्यात्', तर्हि 'क्व स्युः' कुत्र वाग्विसर्गकर्त्तारो भवेयुः। 'तस्माद्' 'यत्र' काले 'अस्तमितम्' 'अनुष्ठ्या' सम्यक् प्रज्ञातं, 'मन्येत' तदैव परित्यजेत्; न नक्षत्रोदये वाग्विसर्गः ॥ ५ ॥

मन्त्रविषये केषाञ्चित् पक्ष मनूद्य निराचष्टे— "अनेनो हैक

---

१— का० श्रौ० सू० ७. ४. १४।

२— पा० सू० ३. २. ११०।

३— "न पुरा नक्षत्रेभ्यो वाचं विसृजेत्"-इति आप० श्रौ० सू० १०. १६. १।

इति[1]। यज्ञाप्यायनसन्धानयोस्तन्मन्त्रे[2] स्फुट मप्रतिभानात् 'न ह'—इत्युक्तम् ॥ ६ ॥

"अनेनैवेति। "अग्निर्ब्रह्मेत्यादिः पृथग् मन्त्रो वाग्विसर्जनार्थः[3]। तथा च सूत्रम्— "व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्त्वाग्निर्ब्रह्मेति सकृदिति"-इति[4]। व्रतकरणं प्रशंसति— "एष हीति। 'एषः' व्रताख्यः पदार्थः 'अत्र' दीक्षाकाले 'यज्ञः भवति'। तथा 'एतत्' एव व्रतं 'हविः' अपि भवति। 'यथा' 'पुरा' दीक्षादिव्रतात् पूर्वम् 'अग्निहोत्रम्', एव मिदम्। यथा ह्यापस्तम्बः— "न त्वेव न व्रतयेदग्निहोत्रस्याविच्छेदाय'-इति[5]। अत एतद्व्रताख्येन 'यज्ञेन' प्रवर्त्तमानेन चिकीर्षितं ज्योतिष्टोमं 'यज्ञं' व्रताख्यं 'सम्भृत्य' एकीकृत्य, तत्रैव प्रतिष्ठाप्य च तं ज्योतिष्टोम मेतेन विस्तारितवान् भवति। अत एतन्मन्त्रेऽभिगतयज्ञसन्धानसम्भवादयं पक्ष एव श्रेयानित्यर्थः। विहितव्रतं सुत्यादिवसपर्यन्तं कर्त्तव्य मित्याह— "सन्तत मिति ॥ ७ ॥

वाग्विमोकोऽग्न्यभिमुखं कर्त्तव्य इत्याह— "अथाग्नि मिति[6]।

---

१— का० श्रौ० सू० ७. ४. १६।

२— तन्मन्त्रस्तु भूर्भुवरिति— वा० सं० ३. ५. १; ३७. १; ३६. ३. १।

३— व्रतं कृणुतेत्येको मन्त्रः, अग्निर्ब्रह्मेत्यपर इति भावः। मन्त्रावेतौ— वा० सं० ४. ११. १, २ द्रष्टव्यौ।

४— का० श्रौ० सू० ७. ४. १५ ख, ग।

५— आप० श्रौ० सू० १०. १६. ११।

६— का० श्रौ० सू० ७. ४. १५ क।

उक्त मर्थं व्यतिरेकेण प्रशंसति— "न हेति । 'अतोऽन्येन' भूर्भुवः-स्वरित्यनेन[1] । मन्त्रपदानि व्याचष्टे— "स प्रथम मिति । वाग्व्यव-हारस्यादावग्निर्ब्रह्मेति[2] ब्रुवन् सत्य मेवोक्तवान् भवति; "सत्यं ब्रह्म"-इति श्रुतेः ॥ ८ ॥

"अग्निरिति । वनस्पतेर्यज्ञार्हत्वं श्रुतिरेवोपपादयति— "न हि मनुष्या इति ॥ ९ ॥

"अथास्मा इति । "शृतं वा इत्यादि । 'शृतं' पक्वम् । 'वै'-शब्देन श्रुत्यन्तरप्रसिद्धिरभिधीयते । तथा च तैत्तिरीयकम्— "यः शृतः स सदेवस्तस्मादविदहता शृतङ्कृत्यः सदेवत्वाय"-इति[3] । 'तत्' शृतं क्षीरम् 'एष एव' पिबत[4] । एवकारव्युदसनीय माह— "नाग्नाविति ॥ १० ॥

आत्मन्येव होमं पुरातनवृत्तान्ताभिधानेन प्रशंसति— "यज्ञेन वा इति । गतम्[5] । देवैराच्छादितस्यापि पयोव्रतस्य तदवगच्छद्भिः पूर्वोक्तर्षिभिः सम्भृतत्वादनेनापि सम्भर्त्तव्य मित्यर्थः ॥ ११ ॥

"तद्वा ऋषीणा मिति । ननु सर्व मपि हविरग्नावेव हूयते,

---

१— वा० सं० ३. ५. १ ; ३७. १ ; ३६. ३. १ ।

२— वा० सं० ४. ११. २ ।

३— "यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः ०—० सदेव-त्वाय"—इति तै० सं० २. ६. ३. ४ ।

४— का० श्रौ० ७. ४. २० सू० द्रष्टव्यम् ।

५— १. ५. १. १ ( १ भा० ४०५ पृ० ) द्रष्टव्यम् ।

कि मिदं पीयत इत्याशङ्क्य दीक्षितस्याप्यग्नित्व मुपपादयति— "एष वा अचेति। 'यज्ञ'-शब्देनात्राग्निरभिधीयते, यज्ञोत्पादकत्वाभिधानात्। अतः स्वात्माग्नौ होमेन 'यज्ञस्य' ज्योतिष्टोमस्य 'यत्' 'निर्ह्वीतं' निष्पीतम् अनुष्ठानेन विफलम्, 'यत्' च 'विदुग्धं' विपरीतानुष्ठानेन विपरीतफलम् अङ्गम्, 'तत्' 'पुनः' आप्यायितवान् भवति। अतिरेके दोष माह— "न हेति। "जुहुदु हैव मन्येतेति। उक्तम् ॥ १२ ॥

देवताप्रीणनाभावात् कथं तादृशी मतिरुत्पद्यत इत्यत आह— "इमे वा इति। वागादीनां मुख्यप्राणप्रवेशेन प्राणशब्दव्यवहारस्य 'इमे प्राणाः' वागादयः ('मनोजाताः') मनस उत्पन्नाः, मनोव्यतिरेकेण स्वतः प्रवृत्त्यभावात्। 'मनोयुजः' च स्वस्वव्यापारेषु मनसः कर्त्तृत्वात्। त एवं 'दक्षक्रतवः' दक्षाः प्रवृद्धाः स्वस्वोचिताः क्रतवः कर्माणि येषां ते तथोक्ताः। तेषां देवता विभज्य योजयति— "वागेवाग्निरित्यादिना। "अग्निर्वाग् भूत्वा मुखं प्राविशत्"-इति श्रुतेः। इन्द्रिय-तदभिमानिदेवतयोरभेदव्यवहारः। यस्मात् 'एतासु' 'देवतासु' प्रीणयति, तस्मादेतासु निमित्तभूतासु स्वात्मनि 'हुतं भवति'। यद्वा अग्नौ चेदेव कस्मिन्नेव हुतं भवेत्, आत्मनि तु तत्तदिन्द्रियदेवतासु सर्वास्वपि हुतं भवतीति व्याख्येयम्। तस्माज्जुहुयान्मन्यत इत्यर्थः ॥ १३ ॥

प्रथमव्रतविषयक मेकेषाञ्चित् पक्ष माह— "तद्धैक इति। 'प्रथमे व्रते' प्रथमव्रतार्हे क्षीरे निर्ह्वीतविदग्धयोरप्यङ्गयोराप्यायनायोभयोरपि समाधानायोभयावापे सति उभे अपि हविषी अन्वा-

रब्धे भवत इति तेषा मभिप्रायः[१]। तन्निषेधति— "तद्विति। उभयावापस्याप्रयोजकता माह— "न ह्येति। तर्हि किं कुर्यादिति, तत्राह— "तस्मादन्यतर मिति। अन्यतरावापपक्षे उभयान्वारम्भः कथं सिद्ध्यतीति, तत्राह— "हविर्वा अस्येति। दर्शपूर्णमासयोर्व्रीहि-यवयोरुभयोरपि हविष्करणात् तत्रैवान्वारब्धौ भवतो न नूतने। अतोऽप्रयोजकत्वादुभयोरेवापोऽनपेक्षित इत्यर्थः[२]। व्रतधुग्दुग्धाभावे किं कुर्यादित्यत आह— "यद्यु इति। यतो व्रीहियवावन्वारब्धौ, 'अतः' अनयोर्व्रीहियवयोर्मध्ये 'यस्यैव' व्रतं 'कामयेत', 'तस्य' एतद् 'व्रतं' कुर्यात्[३] ॥ १४ ॥

प्रथमव्रतविषय एवेतरेषां पक्ष माह— "तद्धैक इति। कचित्तु प्रथमव्रत एव यत् ('सर्वौषधम्') व्रीहियवप्रियङ्गुगोधूमादिकं, यच्च ('सुरभि') सुगन्धि पिप्पल्यादि, तत् सर्वम् 'आवपन्ति'। तथा सति उत्तरत्र दीक्षितस्यार्त्तौ सत्यां यादृशाया आर्त्तेर्यदौषध मिति तत् कामयेत, तत् क्षीरे प्रक्षिप्य पाकं कृत्वा प्रयच्छेत्। तथा सति प्रथमव्रते सर्वौषधस्यान्वारब्धत्वात् व्रताविरोधेनैव चिकित्सा कृता भवतीति तेषा मभिप्रायः[४]। तन्निराचष्टे— "तद्विति। तथा सति यथा मनुष्या औषधं क्षीरे प्रक्षिप्य प्रयच्छन्ति, तद्वदेतत् स्यात्।

---

१— का० श्रौ० ७. ४. २२ सू० द्रष्टव्यम्।

२— का० श्रौ० ७. ४. २१ सू० द्रष्टव्यम्।

३— का० श्रौ० ७. ४. १९, २३ सू० द्रष्टव्ये।

४— का० श्रौ० ७. ४. २४ सू० द्रष्टव्यम्।

तच्च यज्ञविरुद्धम्। अतो यद्यस्य प्रतिक्रियां कामयेत, केवलं तदेव प्रयच्छेत्। यस्मात् 'समाप्तिः' यागसम्पूर्त्तिः 'पुण्या' दृष्टा, तस्माद्-न्वारम्भेनाप्यौषधेन भिषज्येदित्यर्थः। अनेनैवार्त्तिभावेऽपि सर्वौषध-पक्षो निरस्तः आर्त्तेरेवोपेक्षितत्वात्, सर्वप्रक्षेपाभावेऽपि तत्सम्भवात्। अत्र सूत्रम्— "प्रथमे व्रते व्रीहियवयोरन्यतर मावपत्युभावेके एकतरव्रत मदोहे[१] सर्वौषधं सर्वसुरभि चैके"-इति[२]। आवपेदिति शेषः ॥ १५ ॥

"अथास्मा इत्यादि। मानुषकालातिक्रान्तौ कौ कालाविति, तौ दर्शयति— "सायन्दुग्ध मित्यादिना[३]। "व्याकृत्या एवेति। 'व्याकृतिः' व्याकरणम्, देवमानुषयोर्विभाग इति यावत् ॥ १६ ॥

अध्वर्युकारयितृकं यजमानकर्त्तृक मुदकोपस्पर्शनं विधत्ते— "अथास्मै व्रत मिति[४]। लौकिकाशनाय हस्तावनेजनव्याप्तये मन्त्रे-णावनेजनं युक्तम्, तत्रापि पयोव्रतस्य दीक्षितविषयत्वेन देवाशन-त्वात् "दैवीं धिय मिति[५] मन्त्रो युज्यत इत्यर्थः। प्रकरणात् पयोव्रत एव हस्तप्रक्षालनेऽयं मन्त्र इति प्राप्तौ सर्वव्रतावनेजन-साधारणता माह— "स यावदिति ॥ १७ ॥

समन्त्रकं व्रतपानं विधत्ते— "अथ व्रतं व्रतयतीति[६]। मनो-

---

१— "तद्व्रत मदोहे"—इति मुद्रित-का-श्रौ-सू-पाठः।

२— का० श्रौ० सू० ७. ४. २१—२४।

३— का० श्रौ० सू० ७. ४. ३०, ३१।

४— का० श्रौ० सू० ७. ४. ३२।

५— वा० सं० ४. ११. ३।

६— का० श्रौ० सू० ७. ४. ३३।

जातादयो व्याख्याताः[1]। यथा अन्यत्र यागे वषट्कारेण दत्तं हवि-र्हुतं भवति, एव मस्य समन्त्रकं व्रतं स्वाहाकृतत्वात् हुत मेव भवतीत्यर्थः[2] ॥ १८ ॥

"अथ व्रतं व्रतयित्वेति[3]। समन्त्रकनाभ्युपस्पर्शनस्य प्रयोजन माह— "देवान् वा इत्यादिना। देवार्थस्य हविषः स्कन्दनायो-ग्यत्वाद् दीक्षितस्यापि देवत्वाद् व्रतप्रदानेऽप्यध्वर्योः प्रमादात् स्कन्द-नादेः सम्भवात् यज्ञदोषः सम्भाव्येत, तस्यायं मन्त्रः[4], प्रायश्चित्त मित्यर्थः। अस्मिन् मन्त्रे पयसा मितस्ततः पतनराहित्येन शीघ्र-पीतत्वस्योदरान्तःप्रवेशस्य च प्रार्थनात् उदकोपस्पर्शनमन्त्रवत् नाभ्युपस्पर्शनमन्त्रस्यापि सर्वव्रतसाधारण्य माह— "स यावत् किय-दिति। नाभ्युपस्पर्शनात्मकप्रायश्चित्तस्य सर्वत्र कर्त्तव्यत्वे कारण माह— "कस्तदिति। 'उपोत्सिञ्चेत्' सर्वतो विकिरेत् ॥ १९ ॥

दीक्षितस्य मूत्रोत्सर्गे विशेष माह— "अथ यत्रेति। 'यत्र' यस्मिन् प्रदेशे 'मेक्ष्यन्' मूत्रसेकं करिष्यन् 'भवति'। 'किञ्चिद्वा' लोष्टाभावे तत्सम्बन्धि मृदादिकं वा 'कृष्णविषाणया' 'उपहन्ति' उपाददीतेत्यर्थः; "लोष्टं वा किञ्चिद् वा"-इति[5]-सूत्रात्। तत्र मन्त्र माह— "इयं त इति[6]। व्याचष्टे— "इयं वा इति। पृथिव्या देवयजनार्हत्वं कृतवान् भवतीत्यर्थः। मेहनमन्त्र माह—

---

१— पुरस्तात् ( ९४ पृ० ) १३-कण्डीभाष्ये द्रष्टव्याः।

२— वा० सं० ४. ११. ४।

३— का० श्रौ० सू० ७. ४. ३५।

४— वा० सं० ४. १२. १।

५— का० श्रौ० सू० ७. ४. ३६।

६— वा० सं० ४. १३. १।

"अपो मुञ्चामीति[1]। 'अतः' अस्मान्मूत्रद्वारात् अत्रैतयोरुभयोरपि निर्गमसम्भवादप एव मुञ्चामि, न प्रजोत्पादकं रेत इति मन्त्रेणोच्यत इत्यर्थः। अतोऽनेन मूत्रं कुर्यादिति विधिरुन्नेयः। तथा च कात्यायनः— "अपो मुञ्चामीति मेहतीति[2]। द्वितीयभागं व्याचष्टे— "अंहोमुच इति। देहान्तर्गतेन पापेन सहैवैता मूत्ररूपा अपो मुञ्चन्ति खलु मूत्रयितारः ; तस्मादंहोमुच इति पठेत्। "स्वाहाकृताः"-इत्यस्य तात्पर्याभिधानं स्पष्टम्॥ २०॥

"अथ पुनरिति। स्वीकृतस्य लोष्टस्य पुनःप्रक्षेपमन्त्रब्राह्मणं पूर्ववद् व्याख्येयम्। हे स्वीकृतलोष्ट! त्वं 'पृथिव्या' 'सम्भव' सङ्गतो भवेत्यर्थः। एतन्मन्त्रपाठेन[3] या पूर्वं यज्ञिया तनूः स्वीकृता, सा पुनः-स्थापिता भवति[4]॥ २१॥

दीक्षितस्य स्वापकाले अग्नये परिदान माह— "अथाग्नय इति। 'परिदानं' रक्षणार्थं दानम्। परिदाने प्रसक्तिं दर्शयति— "देवान् वा इत्यादिना। अत्र "अग्ने त्वम्"—इति,[5] एतन्मन्त्रपाठ एव परिदानम्। पूर्वार्द्धस्य तात्पर्य माह— "अग्ने त्व मिति। हे 'अग्ने!' 'त्वं' 'सुजागृहि' मम भयपरिहाराय सुष्ठु विनिद्रो भवेत्यर्थः। "मन्दिषीमहि"—इत्यस्य तात्पर्याभिधानं 'स्वप्स्यामः'—इति। स्वापविघाते सति मोदस्यैवाभावादेवं प्रार्थ्यते। "अप्रयुच्छन्"—

---

१— वा० सं० ४. १३. २। २— का० श्रौ० सू० ७. ४. ३७।

३— वा० सं० ४. १३. ३। ४— का० श्रौ० सू० ७. ४. ३८॥

५— वा० सं० ४. १४. १।

इत्यस्य तात्पर्याभिधानम् 'अप्रमत्तः'—इति । "युच्छ प्रमादे[१]" । "यथेत इति। 'इतः' अस्मात् स्थानात् स्वापानन्तरं 'स्वस्ति' क्षेमेण, ज्वरशिरोव्यथादिराहित्येन यथा 'प्रबुध्यामहे', तथा 'कुर्विति' मन्त्रभागः 'आह' इत्यर्थः[२] ॥ २२ ॥

दीक्षितस्य स्वापानन्तरं प्रबोधे सति पुनर्निद्राया अप्राप्तौ तदा समन्त्रकं जपं विधत्ते— "अथ यत्रेति । 'यत्र' यस्मिन् काले 'तत्' तदा मनआदेः पुनःप्राप्तिसमर्थनाय । तदपगमनप्रसक्तिं दर्शयति— "सर्वं ह वा इति । 'प्राण एव' 'न', अपक्रामतीति शेषः । प्राण-स्याप्यपगमे सर्वात्मना मृतिप्रसङ्गात् प्राणस्यानपगमाभिधानम् । 'प्राणः' घ्राणेन्द्रियम् । 'आत्मा' बुद्धिः । द्वितीयभागस्य तात्पर्य माह— "वैश्वानर इति[३] । 'स्वप्नेन वा' साधनेन 'येन वा' अन्ये-न्द्रियद्वारा मलनिर्गमनादिनिमित्तेन 'मिथ्या' अशास्त्रीयम्, 'अकर्म' कृतवन्तः स्म । स्पष्ट मन्यत्[४] ॥ २३ ॥

"अथ यदित्यादि । 'अव्रत्यं' व्रतं दीक्षा, व्रतविरोधि व्यर्थं वचन मभिवदेत्, क्रोधं करोति 'वा', 'तत्' तेनोभयेन 'मिथ्या-करोति' । तावता को दोष इत्यत आह— 'व्रतं प्रमीणाति' हिनस्ति । क्रोधस्य दीक्षितेन वर्ज्यता माह— "अक्रोधो हीति । "अग्निर्वा इत्यादि । व्रतहिंसासमाधानाय 'एतत्' एतेन, "त्व मग्ने

---

१— श्रा० प० २१४ धा० । २— का० श्रौ० सू० ७. ४. ३६ ।
३— वा० सं० ४. १५. १ । ४— का० श्रौ० सू० ७. ४. ४० ।

व्रतपाः"—इत्यनेन[१] साक्षाद् व्रतपतिम् ('त मेव') अग्नि मेव ('उपधावति') रक्षणाय प्राप्तवान् भवति। अत्र सूत्रम्— "त्व मग्न इत्याह क्रुद्धा, अन्नत्यं वा व्याहृत्य"-इति[२] ॥ २४ ॥

दीक्षितस्य यज्ञार्थगवादिधनलाभे वाच्यं मन्त्रं विधत्ते— "अथ यद् दीक्षितायेति[३]। 'अभिहरन्ति' धनं प्रयच्छन्ति। 'वाचयति' अध्वर्युः[४]। दाने सोमसम्बन्धस्य कः प्रसङ्ग इति, तत्राह— "सोमो ह वा इति। 'अस्मै दीक्षिताय' 'एतत्' धनं खलु 'युते' मिश्रयति, 'इयत् तदिति' प्रदेयं धनं हस्तेनापि नीयते[५]। द्वितीयभागस्य तात्पर्य माह— "आ नो भूय इति। न केवल मियत्परिमित मेव, किन्तु ततो 'भूयः' अन्यदपि 'आहर' इति, मन्त्रः 'आह' इत्यर्थः। "देवो न इत्यादि। एतन्मन्त्रभागपाठेन सवित्राभ्यनुज्ञातत्वात् लब्धं धनं दक्षिणार्हं भवतीत्यर्थः॥ २५ ॥

"पुरास्तमयादित्यादि। अस्तमयोदयकालयोः प्रतिदिवसं सन्ध्या मापततः प्रागेव "दीक्षित! वाचं यच्छ"—'इति' सम्प्रैष मध्वर्युर्ब्रूयात्। अस्तमिते उदिते च तस्या वाचो विसर्जन मिति स्वातन्त्र्यप्रदर्शनम्— "अहरेवैतदिति[६] ॥ २६ ॥

अस्तमयोदयकाले दीक्षितस्य स्वस्थानादन्यत्र सञ्चारं स्वापं च

---

१— वा० सं० ४. १६ १.। २— का० श्रौ० सू० ७. ५. १, २।

३— का० श्रौ० सू० ७. ५. ३, ४।

४— तन्मन्त्रपाठस्तु—वा० सं० ४. १६. २।

५— विशेषतस्तु तै० सं० १. २. ३. २ सा० भा० द्रष्टव्यम्।

६— का० श्रौ० सू० ७. ४. १७।

निषेधति— "नैन मिति । विपक्षे बाध माह— "स यदिति । रात्रेरङ्गस्य सायम्प्रातःकालयोरुभयोरुपक्रमरूपत्वात् अन्यत्र सञ्चार-स्वापयोः करणे कृच्छ्रयोरपि तयोः सकाशादय मन्तरितो भवतीत्यर्थः । "न प्रायश्चित्तिरस्तीति[1] । प्रायश्चित्तस्य निषेधेन सञ्चारस्वापयोर्निषेधस्यावश्यकत्व मुक्तं भवति। यस्मादेवं तस्मात्, 'एतस्मात्' सञ्चारस्वापात् 'प्रतिगुप्य मेव' रक्षणं कर्त्तव्य मेवेत्यर्थः। दीक्षितस्याव भृथपर्यन्तं जलावगाहन मभिवर्षणं च वर्जनीय मित्याह— "न पुरावभृथादिति । यागान्तेऽनुष्ठेयस्य अवभृथाभिषेकस्य दीक्षितता-विमोचनार्थत्वात् ततः प्रागेव जलावसेचनस्य दीक्षाविघातकत्वात् तत् 'अनवक्लृप्तम्' अविहित मित्यर्थः[2] । अभिवदनप्रस्तुते सत्यपि दैवी[3] मेव वाचं वदेन्न मानुष मित्याह— "अथ परिक्षाल मिति । 'परिक्षालम्' परिणीतां संस्कृता मित्यर्थः । "क्षल ह्वल चलने"[4] । 'प्रसृतां' सर्वत्र व्याप्ताम्, 'मानुषीं' केवलसर्वमनुष्यसाधारणीम्, न वदेत् । तथा चापस्तम्बः— "परिणयेन मानुषीं वाचं वदति"— इति[5] ॥ २७ ॥

---

१— का० श्रौ० सू० ७. ५. १० । 'यत्न एवात्र कर्त्तव्यो यथापराधो न भवति, नात्र प्रायश्चित्तिरस्ति'–इति चात्र वृत्तौ या० दे० ।

२— का० श्रौ० सू० ७. ५. ५. ।

३— 'दैवी मेव वाचं वदेत् अर्थपरिस्खलनपरिणीतां संस्कृता मित्यर्थः"–इति क-पाठः ।

४— भा० प० ८०७, ८०८ धा० ।

५— आप० श्रौ० सू० १०. १२. ६ ।

एतदेव प्रशंसितु मुपोद्घात माह— "यज्ञेन वा इत्यादिना। एतदस्पष्ट गतम्[1] ॥ २८ ॥

"तद्वा इति। औपोद्घातिक माह— "एवं वा इति। यज्ञाप्यायनरूपत्वेन प्रशस्तत्वात् परिक्लत्ववाग्व्यवहारः कर्त्तव्य इत्यर्थः[2] ॥ २९ ॥

वाचं यज्ञसाधनत्वेन प्रशंसति— "स वै धीक्षित इति[3]। प्रसङ्गाद् दीक्षितशब्दं निर्वक्ति— "धीक्षितो[4] ह वा इति। 'यत्' यस्मात् 'दीक्षित इति नाम', तादृशी दीक्षा वाक्साध्येति वाक्स्तुतिः॥ ३० ॥ १ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥

---

१— १. ५. १. १ ( १ भा० ४०५ पृ० )।
२— का० श्रौ० सू० ७. ५. ६। 'परिक्लत्वं कोमलम्, मृदु वचनम्'–इति [तत्र या० दे०।
३— 'दीक्षित इति'–इति ङ, च।
४— 'दीक्षितो'–इति ङ, च।

( अथ तृतीयं ब्राह्मणम् ) ॥

आदित्यं चरुं प्रायणीयं निर्व्वपति। देवा ह वा अस्यां यज्ञं तन्वाना इमां यज्ञादन्तरीयुः सा हैषा मियं यज्ञं मोहयाञ्चकार कथन्नु मयि यज्ञं तन्वाना मां यज्ञादन्तरीयुरिति तं᳭ ह यज्ञं न प्रजज्ञुः ॥ १ ॥

ते होचुः। यन्न्वस्या मेव यज्ञ मतᳰस्महि कथं नु नोऽमुहत् कथं न प्रजानीम इति ॥ २ ॥

ते होचुः। अस्या मेव यज्ञं तन्वाना इमां यज्ञादन्तरगाम सा न इय मेव यज्ञ ममूमुहदिमा मेवोपधावामेति ॥ ३ ॥

ते होचुः। यन्नु त्वय्येव यज्ञ मतᳰस्महि कथं नु नोऽमुहत् कथन्न प्रजानीम इति ॥ ४ ॥

सा होवाच। मय्येव यज्ञं तन्वाना मां यज्ञादन्तरगात सा वोऽह्व मेव यज्ञ ममूमुहं भागन्नु मे कल्पयताथ यज्ञं द्रक्ष्यथाथ प्रज्ञास्यथेति ॥ ५ ॥

तथेति देवा अब्रुवन्। तवैव प्रायणीयस्तवोदयनीय इति तस्मादेष आदित्य एव प्रायणीयो भवत्यादित्य उदयनीय इयं᳭ ह्येवादितिस्ततो यज्ञ मपश्यंस्त मतन्वत ॥ ६ ॥

स यदादित्यं चरुं प्रायणीयं निर्व्वपति। यज्ञस्यैव

हृष्यै यज्ञं दृष्ट्वा क्षीणानि तं तनवाऽइति तस्मादादित्यं चरुं प्रायणीयं निर्व्वपति तद्वै निरुप्तं हविरासीद्-निष्टा देवता* ॥ ७ ॥

अथैभ्यः पथ्या स्वस्तिः प्रारोचत। ता मयजन् वाग् वै पथ्या स्वस्तिर्व्वाग्यज्ञस्तद्यज्ञ मपश्यंस्त मतन्वत ॥ ८ ॥

अथैभ्योऽग्निः प्रारोचत। त मयजन्त्स यदाग्नेयं यज्ञस्यासीत्तदपश्यन्यद्वै शुष्कं यज्ञस्य तदाग्नेयं तदपश्यं-स्तदतन्वत ॥ ९ ॥

अथैभ्यः सोमः प्रारोचत। त मयजन्त्स यत्सौम्यं यज्ञस्यासीत्तदपश्यन्यद्वा ऽआर्द्रं यज्ञस्य तत्सौम्यं तद-पश्यंस्तदतन्वत ॥ १० ॥

अथैभ्यः सविता प्रारोचत। त मयजन् पशवो वै सविता पशवो यज्ञस्तद्यज्ञ मपश्यंस्त मतन्वताथ यस्यै देवतायै हविर्निरुप्त मासीत्ता मयजन् ॥ ११ ॥

ता वा ऽएताः† । पञ्च देवता यजति यो वै स यज्ञो मुग्ध आसीत् प्राङ्गो वै स आसीत्त मेताभिः पञ्चभि-र्देवताभिः प्राजानन् ॥ १२ ॥

ऋतवो मुग्धा आसन् पञ्च। तानेताभिरेव पञ्चभि-र्देवताभिः प्राजानन् ॥ १३ ॥

---

* 'देवता'-इति ग, घ।   † 'ऽएताः'-इति ग, घ।

दिशो मुग्धा आसन् पञ्च । ता एताभिरेव पञ्चभि-र्देवताभिः प्राजानन् ॥ १४ ॥

उदीचीमेव दिशम् । पथ्यया स्वस्त्या प्राजानंस्तस्मा-दत्रोत्तरा हि वाग्* वदति कुरुपञ्चालत्रा वाग्घ्येषा निदानेनोदीचीँ ह्येतया दिशं प्राजानन्नुदीची ह्येतस्यै दिक्[†] ॥ १५ ॥

प्राचीमेव दिशम् । अग्निना प्राजानंस्तस्मादग्निं पश्चात् प्राञ्चमुद्धृत्योपासते प्राचीँ ह्येतेन दिशं प्राजानन् प्राची ह्येतस्य दिक्[‡] ॥ १६ ॥

दक्षिणामेव दिशँ । सोमेन प्राजानंस्तस्मात् सोमं क्रीतं दक्षिणा परिवहन्ति तस्मादाहुः पितृदेवत्यः सोम इति दक्षिणाँ ह्येतेन दिशं प्राजानन् दक्षिणा ह्येतस्य दिक् ॥ १७ ॥

प्रतीचीमेव दिशँ । सवित्रा प्राजानन्नेष वै सविता य एष तपति तस्मादेष प्रत्यङ्ङेति प्रतीचीँ ह्येतेन दिशं प्राजानन् प्रतीची ह्येतस्य दिक् ॥ १८ ॥

ऊर्द्ध्वामेव दिशम् । अदित्या प्राजानन्नियं वा ऽअदितिस्तस्मादस्या मूर्द्ध्वा ओषधयो जायन्त ऽऊर्द्ध्वा

---

* 'दत्रोत्तरा वाग्'—इति सा॰—सम्मत इति डा॰ वेबरः ।

† 'दिक्'—इति ग, घ ।　　‡ 'दिक्'—इति ग, घ ।

वनस्पतय ऊर्ध्वाꣳ ह्येतया दिशं प्राजानन्नूर्ध्वा ह्येतस्यै दिक्* ॥ १९ ॥

शिरो वै यज्ञस्यातिथ्यम्। बाहू प्रायणीयोदयनीया-वभितो वै शिरो बाहू भवतस्तस्मादभित आतिथ्य मेते हविषी भवतः प्रायणीयश्चोदयनीयश्च ॥ २० ॥

तदाहुः। यदेव प्रायणीये क्रियेत तदुदयनीये क्रियेत यदेव प्रायणीयस्य बर्हिर्भवति तदुदयनीयस्य बर्हिर्भवतीति तदपोद्धृत्य निदधाति† ताꣳ स्थालीꣳ सुक्षामकर्षां प्रमृज्य मेक्षणं निदधाति‡ य ऽएव प्राय-णीयस्यर्त्विजो भवन्ति त ऽउदयनीयस्यर्त्विजो भवन्ति तद्यदेतत्समानं यज्ञे क्रियते तेन बाहू सदृशौ तेन सरूपौ ॥ २१ ॥

तदु तथा न कुर्यात्। काम मेवैतद्बर्हिरनुप्रहरेदेवं मेक्षणं निर्णिज्य स्थालीं निदध्याद्य ऽएव प्रायणीयस्य-र्त्विजो भवन्ति त ऽउदयनीयस्यर्त्विजो भवन्ति यद्यु ते व्विप्रेताः स्युरप्यन्य ऽएव स्युः स यद्वै समानीर्देवता यजति समानानि हवीꣳषि भवन्ति तेनैव बाहू सदृशौ तेन सरूपौ ॥ २२ ॥

---

* 'दिक्'—इति ग, घ।

†, ‡ 'निदधति'—इति क, डा०-वेबर्-दृष्टश्च।

स वै पञ्च प्रायणीये देवता* यजति । पञ्चोदयनीये तस्मात् पञ्चेत्यादङ्गुलयः पञ्चेत्यात्तच्छुंग्वन्तं† भवति न पत्नीः संयाजयन्ति पूर्वार्द्धं वा ऽअन्वात्मानो बाहू पूर्वार्द्ध मेवैतद् यज्ञस्याभिसंस्करोति तस्माच्छुंग्वन्तं‡ भवति न पत्नीः संयाजन्ति ॥ २३ ॥ २ ॥

॥ इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् [ २. ३. ] ॥

एवं वाग्यमनादयो दीक्षितधर्मा उक्ताः; अवशिष्टासु दीक्षणीयसु अनुष्ठेयां प्रायणीयेष्टिं[1] संविधत्ते— "आदित्यं चरुं प्रायणीय मिति । अदितिर्देवता अस्येति आदित्यः; न त्वादित्यो देवता अस्येति; उत्तरत्रादितेः संस्तूयमानत्वात् । सास्य देवतेत्यर्थे प्राग्दीव्यतीयो ण्यः[2] । प्रारभतेऽनेन सौमिकं कर्मेति प्रायणीयः । तथाच तैत्तिरीयकम्[3]— "स्वर्गं वा एतेन लोक मुपप्रयन्ति यत् प्रायणीयस्तत् प्रायणीयस्य प्रायणीयत्वम्"— इति[4] । अत्र तद्धितश्रुत्यवगतद्रव्यदेवतानुबन्धान्यथानुपपत्त्या यागे परिकल्प्ये सति इतराङ्ग-

---

* 'देवता'—इति ग, घ ।

†, ‡ 'च्छुम्ग्वन्तं'—इति ग, । 'च्छुम्ग्वन्तं—इति घ ।

१— "दीक्षान्ते प्रायणीयम्"—इति का० श्रौ० सू० ७. ५. १३ ।

२— पा० सू० ४. २. २४, ४. १. ८३, ८५ ।

३— स्यादत्र "एतरेयकम्"—इति पाठः ।

४— ऐ० ब्रा० १. २. १ द्रष्टव्यम् ।

लाग्नेयोदकप्राप्तस्य निर्वापस्य निर्वपतिरनुवादः, "सौर्यं चरुं निर्वपेत्" —इतिवत् । न च द्रव्यदेवतयोरुभयोरपि विधाने विधेयद्वैविध्यात् वाक्यभेद इति वाच्यम्, कर्मणोऽप्राप्तत्वेन तदुभयविशिष्टस्य तस्यैव विधेयत्वात् । अथाग्नेयाष्टाकपालोपोद्घातत्वेन तथाकृतं मोह मुपन्यस्यति— "देवा ह वा इत्यादिना । "यज्ञं तन्वाना इत्यादि । अत्रेदमा सर्वदा सर्वजनसन्निहिता पृथिवी परामृश्यते । 'अस्यां' पृथिव्यां 'यज्ञं' विस्तारयन्तो 'देवाः', 'इमां' पृथिवीं 'यज्ञात्' 'अन्तरीयुः' अन्तरितां भागरहिता मकुर्वन् । 'सा' 'इयं' पृथिवी 'एषां' देवानां 'यज्ञं मोहयाञ्चकार' यज्ञविषयं मोहं जनयामास, यज्ञो यथा देवैर्न ज्ञायते तथा कृतवतीत्यर्थः । "कथन्नु मपीत्यादि । तस्या अभिप्रायवर्णनम् । एवं मोहने सति ते च देवा यज्ञं न प्रज्ञातवन्तः ॥ १ ॥

तदनन्तरं देवैर्विचारपुरस्सरं तदप्रज्ञानकारणं निर्णीतम्, तद्दर्शयति— "ते होचुरिति । "अतंस्महीति । अतनिष्महे, तननमकार्ष्मेत्यर्थः । "तनु विस्तारे[1]"—इत्यस्माल्लुङि छान्दस इडभावः । 'कथं नु' केन खलु कारणेन 'नः' अस्माकं यज्ञः 'अमुहत्' मुग्धः, अदृश्योऽभूदित्यर्थः । लुङि युवादित्वादङ्[2] ॥ २ ॥

"ते होचुरिति । "अन्तरगामेति । अन्तरिता मकृष्महि । "इणो गा लुङि"—इति[3] गादेशः । "गातिस्था"—इति[4] सिचो लुक् । "सा न इति । 'सा' 'इयम्' पृथिवी 'एव' कृतापराधानां 'नः' अस्माकं

---

१— त० उ० १धा० । २— पा० सू० ३. १. ५५ ।
३— पा० सू० २. ४. ४५ । ४— पा० सू० २. ४. ७७ ।

'यज्ञम् अमूमुहत्' यज्ञविषयं मोह मज्ञानं प्रापयदित्यर्थः। मोह-यतेर्लुङि "णिश्रिद्रुस्रुभ्यः"-इति[1] च्लेश्चङादेशः। 'इमा मेव' पृथिवीम् 'उपधावाम' क्लृप्तेन हविर्भागेनोपगच्छामेत्यर्थः ॥ ३ ॥

"ते होचुरिति। 'यत्' यस्मात् हे अदिते! 'त्वय्येव यज्ञम् अतंस्महि'। 'कथं नु' कस्मात् कारणात् 'नः' अस्माकं यज्ञः 'अमुहत्' मोहविषयोऽभूत्, वयं च किङ्कारणं 'न प्रजानीमः'। 'इति'-शब्दः प्रश्नसमाप्तौ ॥ ४ ॥

"सा होवाचेति। हे देवाः! यूयं 'मां' 'यज्ञात्' 'मा अन्तरगात्' अन्तरितां भागरहितां मा कृणुध्वम्। यत एवम्, अतः कारणात् 'अह मेव' 'वः' युष्माकं 'यज्ञम्' 'अमूमुहम्' मोहं प्रापितम्। येन भागेन 'यज्ञं' 'इच्छथ', तं 'भागं' मदर्थं कल्पयत। 'अथ' अनन्तरम्। एवं मोहापसरणाद् यदा चैवं दर्शनविषयो यज्ञो जातः, अनन्तरं तं प्रकर्षेण ज्ञास्यथेति सम्बन्धः ॥ ५ ॥

एव मदितिदेवतयोक्तैर्देवैः कृतां भागक्लृप्तिं दर्शयति—"तथेति। "देवा इत्यादि। प्रायणीयोदयनीयाख्यौ सोमयागस्य पुरस्तादुपरिष्टाच्चानुष्ठेयौ यागौ तव भागत्वेनास्माभिर्दत्तावित्यर्थः। उपपादित मर्थ मुपसंहरति— "तस्मादेव इति। अत्रोदयनीययागस्यादितिदेवताकत्वप्रतिपादनं प्रासङ्गिकम्। ननु "देवा ह वा अस्या मित्यादौ[2] 'इदं'-शब्देन पृथिवी निर्दिष्टा, तत् कथ मदितेर्देवतात्ववर्णन मित्यत आह— "इयं ह्येवादितिरिति। दितिः खण्डनं न विद्यतेऽस्या मिति व्युत्पत्तेः 'इय मेव' पृथिवी 'अदिति'-

१— पा० सू० ३. १. ४८। २— १०३ पृ० २पं०।

शब्दवाच्या । अत एव पृथिवीनामसु यास्केन परिपठितम्[१]— "अदितिः, इळा, निर्ऋतिरिति[२] । अत एव तैत्तिरीयके— "इयं वा अदितिः"-इति[३] । यत्तूपरिष्टात् 'अदिति'-शब्दस्य निर्वचन माम्नायते— "स यद्यद्देवासृजत तत्तदत्तु मध्रियत, सर्वं वा अत्तीति तददितेरदितित्वम्"-इति[४], तत् सृष्ट्यादिकारणेन ब्रह्मविषयम् । स्वात्मनि जात मोषधिवनस्पत्यादिकं पार्थिवं सर्व मत्तीत्यदितिरिति योजनीयम् । एव मदितियागे सति देवानां यज्ञप्राप्तिर्जातेत्याह— "ततो यज्ञ मपश्यंस्त मतन्वतेति । 'ततः' तस्मात्, अदितेर्हविर्भाक्त्क-कल्पनात् । स्पष्ट मन्यत् ॥ ६ ॥

आख्यायिकया प्रायणीयस्य चरोर्यज्ञदर्शनहेतुत्व मुपपाद्य प्रकृते योजयति— "स यदिति । यदेतत् प्रायणीययागस्यानुष्ठानम्, तद् व्यामोहविषयता मापन्नस्य कृत्स्नस्य 'यज्ञस्यैव' दर्शनाय सम्पद्यते । तद्दर्शन मपि किमर्थ मित्यत आह— "यज्ञं दृष्ट्वेति । सोमसाध्यं 'यज्ञं' प्रथमं 'दृष्ट्वा', पश्चात् तत्साधनं सोमं 'क्रीणाति' सोमविक्रयिणः सका-शात्,— "तं वै ते क्रीणानीत्यादिवक्ष्यमाणप्रकारेण[५] स्वीकरवाणि । तेन च क्रीतेन सोमेन 'तं' सोमसाध्यं यज्ञं 'तनवै' विस्तारयाणि । 'इति'-शब्दो वाक्यसमाप्तौ । एवं यज्ञदर्शनस्य प्रयोजनतां प्रतिपाद्य

---

१— वस्तुतो न तु यास्केन; अपि तु निघण्टुसमाम्नायकृतेति बोध्यम् ।

२— निघ० १. १. १४, १५, १६ ।

३— ऐ० ब्रा० ३. ३. ७ ।

४— १० का० ६ अ० ५ ब्रा० ५ क० (=बृ० आ० उ० १. २. ५.) ।

५— अस्मिन्नेव काण्डे ३अ० ३ ब्रा० १क० द्रष्टव्यम् ।

तद्धेतुभूतं प्रायणीययागं निगमयति— "तस्मादादित्य मिति। एवं प्रायणीयेष्टौ चरुसाध्य मादित्ययागं विधायान्यांश्चतुरो यागान् विधित्सुस्तेषां काल माह— "तद्दा इत्यादि। "निरुप्त मिति, हविः-संस्कारोपलक्षणम्। आदित्यस्य हविषो निर्वापप्रोक्षणाद्यासादनान्ताः संस्काराः कृता भवेयुः। प्रधानदेवता च 'अनिष्टा' अकृत-यागा भवति, तस्मिन् काले वक्ष्यमाणास्तस्रो देवता यष्टव्या इत्यर्थः[1] ॥ ७ ॥

अथ तान् यागान् पूर्ववदाख्यायिकया विधित्सुस्तत्र प्रथम-यागस्य विधि मर्थवादेनोन्नयति— "अथैभ्य इति। अथेत्याज्यभागा-नन्तर्य्ये। ननु प्रायणीयाया माज्यभागौ न स्तः, अत एवाश्वलायनो-ऽप्यसूत्रयत्— "शंय्वन्तेय मनाज्यभागेति[2]। अस्य वानाज्यभागपक्षस्य लिङ्ग मापस्तम्बेनापि दर्शितम्— "स्विष्टकृतं षष्ठ मिति[3]। यदि ह्या-ज्यभागौ स्यातां, तदा पथ्यास्वस्त्यादयः पञ्चेति स्विष्टकृदष्टमः स्यात्। नैष दोषः; वाजसनेयिशाखान्तराभिप्रायेणाज्यभागसद्भावात्। अत एव कात्यायनेन सूत्रितम्— "आज्यभागाविष्ट्वाज्येन देवतास्तस्रो यजति, पथ्यां स्वस्ति मग्निं सोमं सवितारञ्च"-इति[4]। "पथ्या स्वस्तिरिति। 'एभ्यः'— इति "रुच्यर्थानां प्रीयमाणः"-इति[5] चतुर्थी।

---

१— ऐ० ब्रा० १. २. १ द्रष्टव्यम्।
२— आश्व० श्रौ० सू० ४. ३. २, ३।
३— आप० श्रौ० सू० १०. २१. १२।
४— का० श्रौ० सू० ७. ५. १५।
५— पा० सू० १. ४. २३।

ते च देवाः 'ताम्' 'पथ्यां स्वस्तिम्' 'अजनयन्'। मन्त्ररूपा 'वाक्' एव 'पथ्या स्वस्तिः'— इत्युच्यते। पथोऽनपेता 'पथ्या'। "धर्म्मपथ्यर्थन्यायादनपेते"-इति[1] यत्। 'स्वस्तिः' शोभनरूपेति। 'पथ्या-स्वस्ति'-शब्दनिर्वचनस्य वाचि सम्भवात्[2]। सा च वाक् यज्ञात्मिका। अतस्तस्या दर्शनेन 'यज्ञम्' एव 'अपश्यन्'। एवं पुरावृत्तप्रतिपादनेन पथ्या स्वस्तिः प्रथमं यष्टव्येति प्रतिपादितं भवति॥ ८॥

अथाग्नेयस्य द्वितीययागस्य विधि मुन्नयति— "अथैभ्योऽग्निरिति। 'आग्नेयम्'-इति सामान्योक्तस्य विवरणं "यद्वै शुष्क मिति। यत् खलु यज्ञसम्बन्धि 'शुष्कं' नीरसं समिदादि द्रव्यम्, 'तत् आग्नेयम्'। अन्यत् समानं पूर्वेण॥ ९॥

अथ सौम्यस्य तृतीययागस्य विधि मुन्नयति— "अथैभ्यः सोम इति। "स यदिति। सर्वत्र तच्छब्दः प्रसिद्धिद्योतकः। 'सौम्यं' सोमदेवत्यम्। "सोमाट्ट्यण्"[3]। 'यत्' खलु यज्ञसम्बन्धि 'आर्द्रं' रसयुक्तं सोमादि द्रव्यम्, 'तत् सौम्यम्'। शुष्कार्द्रयोर्ह्यग्नीषोमाभिमानिदेवते। एतच्च प्रागप्याम्नातम्— "द्वयं वा ऽइदं न तृतीय मस्त्यार्द्रञ्चैव शुष्कञ्च"-इत्यादिना[4]॥ १०॥

---

१— पा० सू० ४. ४. ९२।

२— "पथ्या स्वस्तिः, पन्था अन्तरिक्षं तन्निवासात्"-इति, "स्वस्तीत्यविनाशिनामास्तिरभिपूजितः सु अस्तीति"-इति च यास्कीयं निर्वचनम् (११. ४. ११, ३. ४. ४.)।

३— पा० सू० ४. २. ३०।

४— १का० ५प्र० २ब्रा० २३क० (१ भा० ४१८ पृ०)।

अथ सावित्रस्य चतुर्थयागस्य विधिमुन्नयति— "अर्थेभ्यः सवितेति । सवितुः प्रेरकत्वात्, पशूनां च तत्प्रेर्यत्वात् प्रेर्यप्रेरकयोरभेदं विवक्षित्वा 'सविता पशवः'-इति तादात्म्यव्यपदेशः। सवितुश्च पशुप्रेरकत्वं "देवो वः सविता प्रार्पयतु"-इति[1]-मन्त्रवर्णादवगम्यते । ते च पशवो हृदयाद्यवदानद्वारेण पयःप्रभृतिद्रव्योपादानत्वेन च यज्ञात्मकाः। यस्मादेवं चतसृभिर्देवताभिर्देवाः कृत्स्नं यज्ञ मपश्यन्, दृष्ट्वा चाकुर्वन्, तस्मादिमाश्चतस्रो देवताश्चिकीर्षितयज्ञस्य प्रथमत आज्येन यष्टव्या इति समुदायार्थः। एव माज्यहविष्कांश्चतुरः प्रधानयागान् कृत्वा प्रथमनिरुप्तेन हविषा अदितिर्यष्टव्येत्याह— "अथ यस्यै देवताया इति । यस्मादेवं देवाः पञ्चमी मदिति मयजन्, तस्मादिदानीन्तनोऽपि यजमानो यागसमये अदितियागं पञ्चमं कुर्यादित्यर्थः ॥ ११ ॥

पञ्चसङ्ख्या मनूद्य प्रशंसति— "ता वा इति । 'एताः' पथ्यास्वस्त्याद्याः । 'मुग्ध आसीत्' मोहविषयो भवेदित्यर्थः । अस्तेर्हि लिङि "अस्तिसिचोऽपृक्ते"-इतीट्[2] । "पाङ्क्तो वा इति । पञ्चपदा पङ्क्तिः; तद्वाचिना पङ्क्तिशब्देन पञ्चसङ्ख्या लक्ष्यते; तद्योगाद् 'यज्ञः पाङ्क्तः' । तद्योगश्च तैत्तिरीयके स्पष्ट माम्नातः— "धानाः करम्भः परिवापः पुरोडाशः पयस्या, तेन पङ्क्तिराप्यते, तद् यज्ञस्य पाङ्क्तत्वम्"-इति[3] । ऐतरेयके तु तत् पाङ्क्तत्वं "यो वै यज्ञं हविष्पङ्क्तिं वेद"-इत्यादिना बहुश आम्नातम्[4] ॥ १२ ॥

---

१— वा० सं० १. १. ४ । २— पा० सू० ७. ३. ९६ ।
३—तै० सं० ६. ४. ११. ४, ५ । ४— ऐ० ब्रा० २. ३. ९ द्रष्टव्यम् ।

ऋतुपरिज्ञानहेतुत्वादपि तां पञ्चसञ्ज्ञां प्रशंसति— "ऋतवो मुग्धा इति। हेमन्तशिशिरावेकीकृत्य ऋतूनां पञ्चत्वम्। तथा चैतरेयकं प्रागुदाहृतम्— "हेमन्तशिशिरयोः समासेनेति[१]। ऋतु-परिज्ञानाभावे हि वसन्तादिकालसाध्यो यज्ञो विकलः स्यात्, अतस्तत्परिहारायैतद्यागपञ्चकानुष्ठान मिति स्तुतिः ॥ १३ ॥

दिङ्मोहनिवृत्तिहेतुत्वेनापि पञ्चसञ्ज्ञां प्रशंसति— "दिशो मुग्धा इति। यज्ञानुष्ठानाय वसन्तादिकाला एव तदुपयुक्ताः। प्राच्याद्याः 'पञ्च दिशः' 'मुग्धा आसन्' व्यामूढा अभवन्। गत मन्यत् ॥१४॥

तत्र कीदृश्या देवतया कतमा दिक् प्रज्ञातेत्याशङ्क्य प्रथमदेवता-ज्ञातां दिशं प्रदर्श्योपपादयति— "उदीची मेवेति। यस्मादेवं पथ्या-स्वस्त्याख्यया प्रथमदेवतया उदीची दिक् देवैः प्रज्ञाता, 'तस्मात्' 'अत्र' अस्मिन् लोके कुरुपञ्चालाख्येषु जनपदेषु 'उत्तरा' उच्चतरा 'वाग्' 'वदति' भृशं शब्दायते; अत्युन्नतसम्भाषणस्य तत्रो-पलम्भात्। "देवमनुष्येत्यादौ[२] परिगणनाभावेऽपि बहुलग्रहणात् कुरुपञ्चालशब्दादपि त्रा-प्रत्ययः। ननु वाच उत्तरदिक्सम्बन्धोऽस्तु, कुतः पथ्या-स्वस्त्या दिशः सम्बन्धः? इति, तत्राह— "वाग्घीति। 'एषा' पथ्या स्वस्तिः, यस्मात् 'निदानेन' कारणेन निरूप्यमाणा सती 'वाक्' एव; "वाग्वै पथ्या स्वस्तिः"-इति ह्युक्तम्[३]; अत उत्तरस्यां

---

१— ऐ० ब्रा० १. १. १.। २— पा० सू० ५. ४. ५६।

३— "वाग्वै पथ्या स्वस्तिस्तस्मादुदीच्यां दिशि प्रज्ञाततरा वागुद्यत उदञ्च उ एव यन्ति वाचं शिक्षितुं यो वा तत आगच्छति तस्य वा शुश्रूषन्त इति ह स्माहैषा वाचो दिक् प्रज्ञाता"-इति कौ० ब्रा० ७. ६।

दिशि वाचः प्रसिद्धिर्युक्तेति भावः। 'हि' यस्मादेवम् 'एतया' 'उदीचीं दिशं' देवाः 'प्राजानन्', तस्मात्। 'एतस्यै' षष्ठ्यर्थे चतुर्थी[1], एतस्याः पथ्यायाः स्वस्तेः 'उदीची दिक्' स्वभूता ॥ १५ ॥

अथ द्वितीयदेवतया प्रज्ञातां दिश मुपन्यस्योपपादयति— "प्राची मेवेति। यस्मादग्निः प्राच्या दिशो ज्ञानहेतुः, तस्मात् 'पश्चाद्' अवस्थितम् 'अग्निम्' आहवनीयरूपेण 'प्राञ्च मुद्धृत्योपासते' अग्निहोत्रहोमादिरूप मुपासनं कुर्वन्ति। यस्मात् देवाः 'प्राचीं दिशम्' 'एतेन' अग्निना 'प्राजानन्', तस्मात् 'एतस्य' अग्नेः 'प्राची दिक्' स्वभूतेत्यर्थः। अत एवान्यत्राम्नायते— "प्राची दिगग्निर्देवतेति[2] ॥ १६ ॥

अथ तृतीयदेवतया प्रज्ञातां दिश मुपन्यस्योपपादयति— "दक्षिणा मेवेति। यस्मात् दक्षिणा दिक् 'सोमेन' परिज्ञाता, 'तस्मात्' उपरवदेशे 'क्रीतं सोमं' महावेदेर्दक्षिणतोऽनसा 'परिवहन्ति'। "दक्षिणादाच्"–इत्याच्[3] प्रत्ययः। 'तस्मात्' दक्षिणदिक्प्रवर्त्तनाद्धेतोः वल्लीरूपः 'सोमः' 'पितृदेवत्यः'। पितृदेवताकदक्षिणदिक्प्राप्तेः सोमस्य पितृदेवत्यत्वं युक्तम् ॥ १७ ॥

अथ चतुर्थदेवतया प्रज्ञातां दिश मुपन्यस्यति— "प्रतीची मेवेति। 'एषः' सूर्यः 'प्रत्यङ्ङेति' प्रत्यङ्मुखो गच्छति। स्पष्ट मन्यत् ॥ १८ ॥

---

१— पा० २. ३. ६२ सू० वा० १।
२— कौ० ब्रा० ७. ६।
३— पा० सू० ५. ३. ३६।

अथ पञ्चमदेवतया प्रज्ञातां दिश मुपन्यस्यति— "ऊर्द्ध्वा मेवेति। यस्माद् भूम्या मुत्पन्नाः ओषधिवनस्पतय ऊर्द्ध्वमुखा एव वर्द्धन्ते, तस्मात् अदित्यभिधानाया भूम्याः सकाशादूर्द्ध्वदिक्परिज्ञानं युक्त मित्यर्थः। इत्थं पञ्चदिग्व्यामोहपरिहारोपन्याससुखेन प्रायणीयेष्टौ पञ्चदेवता यष्टव्या इत्युक्तम् ॥ १९ ॥

अथातिथ्यायाः प्राक् प्रायणीयो कर्त्तव्य इत्यभिधातुं प्रायणीयोदयनीययोर्बाहुद्वयरूपता मातिथ्यायाः शिरोरूपताञ्चाह— "शिरो वै यज्ञस्येति। आतिथ्यमध्येऽनुष्ठेयत्वेन प्राधान्याच्छिरस्त्वव्यवहारः। 'एते हविषी' एतौ यागावित्यर्थः; यागस्य हविः-प्रधानत्वात्। लोके शिरस उभयतो बाह्वोर्दर्शनात्, आतिथ्यस्य शिरस्त्वाभिधानाद्, बाहुस्थानीययोरनुष्ठानं युक्तम्[1] ॥ २० ॥

उक्तं बाहुत्व मुपजीव्य प्रायणीयोदयनीययोरेकरूपता माह— "तदाहुरिति। सङ्क्षेपेणोक्तं यच्छब्दार्थं विशदयति— "यदेवेति। मध्ये कर्मान्तरव्यवधानात् कथं तस्य बर्हिषोऽवस्थान मित्याशङ्क्य तदुपायं दर्शयति— "तदपोद्धृत्येति। प्रहरण मकृत्वा बर्हिरुद्धृत्योपरि प्रज्ञातं निदध्यात्। बर्हिर्वत् स्थालीमेक्षणयोरप्युदयनीयार्थं मवस्थान माह— "तां स्थाली मिति। या प्रायणीयचरुस्थाली, 'तां' 'सक्षामकर्षाम्'; अग्निसंयोगेनान्तरीषद्दग्धस्वरः 'क्षामः', तस्य 'कर्षो' लोपः, तत्सहिता मित्यर्थः। "क्षायो मः"-इति[2] निष्ठातकारस्य

---

१— यज्ञस्य पुरुषसम्मितत्वं वक्ष्यतीहैवानुपदम् (अ० ५. ब्रा० ३.)।

२— पा० सू० ८. २. ५३।

मलम् । 'मेक्षणं' चरुनिष्पादनसाधनं काष्ठम्[1] । तत् 'प्रमृज्य' चरुणा लेपयित्वा स्थाल्या सह निदध्यादित्यर्थः । ऋत्विगैक्यं च विधत्ते— "य एव प्रायणीयस्येति । इदानीन्तनाना मपि वाक्योः सरूपत्वं प्रायणीयोदयनीययोरैकरूप्यनिबन्धन मित्याह— "तद्यदे-तदिति । सादृश्य मेकदेशेनापि भवतीति तद् विशेष्यते— "सरू-पाविति ॥ २१ ॥

उक्तो बर्हिराद्यैकरूप्यपक्षो न नियत इत्याह— "तदु तथेति । "एवं मेक्षण मिति । बर्हिर्वेदग्नौ प्रहरेदित्यर्थः । 'स्थालीं' 'निर्णिज्य' चामकर्ष मपि प्रगमय्य ऋत्विजा मेव च नियम मङ्गीकृत्य । तेषा मपि केनचिन्निमित्तेन विगमे सति तदेकत्व मपि नियमेन भवि-तव्य मित्याह— "य एव प्रायणीयस्येति । 'विप्रेताः स्युः' विविधदेशं प्राप्ता भवेयुः । तर्ह्यैकरूपत्वं किन्निबन्धन मित्याह— "स यदिति । 'यद्वै' यदेव बर्हिर्यागस्य स्वरूपम्, अतस्तयोरैकरूप्य मेव नियमेन भवितव्य मित्यर्थः । 'तेनैव'-इति एवकारेण पूर्वोक्तं बर्हिरा-द्यैकरूप्यं व्यावर्त्तते । तेनैव द्रव्यदेवतैक्येन कारणेनैवेदानी मपि

---

१— "अग्नौ मेक्षण मभ्यादधाति इतीहैव गतं पुरस्तात् (२. ४. २. १३.) । सामिधेनीकाष्ठानि पञ्चदश, द्वे आघारसमिधौ अनूयाजसमिदेकेति त्रयः परिधयः, उपवेषो मेक्षणं धृष्टिरिति तिस्रः समिध इत्येकविंशतिः । तत्र प्रादेशमात्रं हविरवदानसाधनं चरोरुपधानसाधनं च काष्ठखण्ड' मेक्षण मुच्यते । तदेतत् सर्वं व्याख्यातं तै० ब्रा० ( १. ३. १०. ४, ३. ७. ४. ६.) सा० भा० । "इध्मजातीय मिध्मार्द्धप्रमाणं मेक्षणं भवेत् । वृत्तं चाङ्गुष्ठपृथ्वग्र मवदानक्रियाक्षमम्"—इति कर्म-प्र० २. ५. १४ । "मेक्षणेन जुहोति"—इत्यस्य ( का० श्रौ० ४. १. ७. ) सूत्रस्य व्याख्याने 'मेक्षणं च होमसाधनत्वाद् वैकङ्कतं पालाश मपि भवतीति च याज्ञिकदेवः ।

मनुष्याणां 'बाह्य सरूपौ' भवत इत्यर्थः। तथाच कात्यायनोऽपि— "चरुमेवणबर्हिर्निदधात्युदयनीयायै, सलेपं चरुं प्रमृष्टं मेक्षणं, प्रक्षालयति वा चरुम्, अनुप्रहरतीतरे, न एवर्त्विजो, विप्रेतेष्व-न्येऽपि"-इति[1]। 'इतरे' बर्हिर्मेक्षणे॥ २२॥

देवतैक्याभिधानप्रसङ्गेन पञ्चसङ्ख्यां प्रशंसति— "स वा इति। 'सः' अध्वर्युः। 'तस्मात्' देवतानां पञ्चत्वाद्धेतोः 'इत्था' इत्थम्, अनेन इदानीं परिदृश्यमानेन प्रकारेण 'पञ्चाङ्गुलयः' लभ्यन्ते। हस्तद्वय मभिनीय प्रदर्शयितुं द्विरभिधानम्। प्रकृतिभूतदर्शपूर्ण-मासेष्टिवत् साकल्येनानुष्ठानप्रसक्तौ तत् प्रतिषेधति— "तच्छंय्वन्तं भवतीति। अन्तग्रहणेन सिद्धौ उपरितनाङ्गनिषेधो नित्यानुवाद-तया पुनर्निषिध्यते— 'न पत्नीः संयाजयन्तीति। प्रायणीयोदय-नीययोर्बाहुत्वनिरूपणादप्युत्तराङ्गजातं न कर्त्तव्य मित्याह— "पूर्वार्द्धं वा अन्वात्मनो बाहू इति। 'आत्मनः' शरीरस्य 'पूर्वार्द्धं मनु' 'बाहू' वर्त्तेते, न सर्वाङ्गे; अतः 'एतत्' एतेन तदुभयत्र शंय्वन्तानुष्ठानेन, यज्ञस्य 'पूर्वार्द्धं मेव' संस्कृतवान् भवति[2]॥ २३॥ २ [२. ३.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम्॥

---

१— का० श्रौ० सू० ७. ५. १६–२१।

२— "शंय्वन्तं भवति"-इति च का० श्रौ० सू० ७. ५. २२। एतदुत्तरत्र त्विह बहुविचाराः कृता दृश्यन्ते।

( अथ चतुर्थं ब्राह्मणम् )

दिवि वै सोम आसीत् । अथेह देवास्ते देवा अकामयन्ता नः सोमो गच्छेत् तेनागतेन यजेमहीति त ऽएते माये ऽअसृजन्त सुपर्णीं च कद्रूं च तद्धिरण्यानां ब्राह्मणे व्याख्यायते सौपर्णीकाद्रवं यथा तदास ॥ १ ॥

तेभ्यो गायत्री सोम मच्छापतत् । तस्या ऽआहरन्त्यै गन्धर्वो विश्वावसुः पर्यमुष्णात्ते देवा अविदुः प्रच्युतो वै परस्तात् सोमोऽथ नो नागच्छति गन्धर्वा वै पर्य्य-मोषिषुरिति ॥ २ ॥

ते होचुः । योषित्कामा वै गन्धर्वा वाच मेवैभ्यः प्रहिणवाम सा नः सह सोमेनागमिष्यतीति तेभ्यो वाचं प्राहिण्वन्त्सैनान्त्सह सोमेनागच्छत् ॥ ३ ॥

ते गन्धर्वा* अन्वागत्याब्रुवन् । सोमो युष्माकं वा-गेवास्माक मिति तथेति देवा अब्रुवन्निहो वेदागान्मैना मभीषुहेव नैष्ट विह्वयामहा ऽइति तां व्यह्वयन्त ॥ ४ ॥

तस्यै गन्धर्वाः । वेदानेव प्रोचिर ऽइति वै वयं विद्मेति वयं विद्मेति† ॥ ५ ॥

---

* 'गन्धर्वा'—इति ग, घ ।

† 'विद्मेति'—इति ख, 'विद्मेति'—इति ग, घ ।

अथ देवाः*। वीणा मेव सृष्ट्वा वादयन्तो निगायन्तो निषेदुरिति वै ते वयं गास्याम[†] इति त्वा प्रमोदयिष्यामह ऽइति सा देवानुपाववर्त्त सा वै सा तन्मोघ मुपाववर्त्त या स्तुवद्भ्यः शृꣳसद्भ्यो नृत्तं गीत मुपाववर्त्त तस्मादप्येतर्हि मोघसꣳहिता एव योषा एवꣳ हि वागुपावर्त्तत ता मु ह्यन्या अनु योषास्तस्माद्य एव नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमा इव ॥ ६ ॥

तद्वा ऽएतदुभयं देवेष्वासीत्। सोमश्च वाक् च स यत् सोमं क्रीणात्यागत्या ऽएवागतेन यजा ऽइत्यनागतेन ह वै स सोमेन यजते यो ऽक्रीतेन यजते ॥ ७ ॥

अथ यद् ध्रुवाया माज्यं परिशिष्टं भवति। तज्जुह्वां चतुष्कृत्वो विगृह्णाति बर्हिषा हिरण्यं प्रबध्यावधाय जुहोति कृत्स्नेन पयसा जुहवानीति समानजन्म वै पयश्च हिरण्यञ्चोभयꣳ ह्यग्निरेतसम्[‡] ॥ ८ ॥

स हिरण्य मुवदधाति। एषा ते शुक्र तनूरेतद्वर्च इति वर्चो वा ऽएतद्यद्धिरण्यं तया सम्भव भ्राजं गच्छेति स यदाह तया सम्भवेति तया सम्पृच्यस्वेत्येवैतदाह भ्राजं गच्छेति सोमो वै भ्राट् सोमं गच्छेत्येवैतदाह ॥ ९ ॥

---

* 'देवाः'—इति ग, घ।	† 'गमिष्याम'—इति क।

‡ 'ह्यग्निरेतसं'—इति ख, 'ह्यग्निरेतसꣳ'—इति ग, घ।

तां यथैवादो देवाः[*]। प्राहिण्वन्त्सोम मच्छैव मेवैना मेष एतत् प्रहिणोति सोम मच्छ व्वाग् वै सोमक्रयणी निदानेन ता मेतयाहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति ॥ १० ॥

स जुहोति। जूरसीत्येतद्ध वा अस्या एकं नाम यज्जूरसीति धृता मनसेति मनसा वा ऽइयं व्वाग् धृता मनो वा ऽइदं पुरस्ताद्वाच इत्थं व्वद मैतद्वादीरित्यलग्न मिव[†] ह वै व्वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति ॥ ११[‡] ॥

जुष्टा व्विष्णव ऽइति। जुष्टा सोमायेत्येवैतदाह य मच्छेम इति तस्यास्ते सत्यसवसः प्रसव ऽइति सत्यप्रसवा न एधि सोमन्नोऽच्छेहीत्येवैतदाह तन्वो यन्त्र मशीय स्वाहेति स ह वै तन्वो यन्त्र मश्नुते यो यज्ञस्योदृचं गच्छति यज्ञस्योदृचं गच्छानीत्येवैतदाह[§] ॥ १२ ॥

अथ हिरण्य मपोद्धरति। तन्मनुष्येषु हिरण्यं करोति

---

* 'देवाः'—इति ग, घ।

† '०लग्न मिव'—इति सा०–सम्मत इति डा० वेबरः।

‡ एतदनन्तरम् "अर्द्धप्रपा० ६४"—इति क-ख-पुस्तकयोः।

§ 'दाह'—इति ख।

16

स यत् सहिरण्यं जुहुयात् परागु हैवैतन्मनुष्येभ्यो हिरण्यं प्रवृञ्ज्यात्तन्न मनुष्येषु हिरण्य मभिगम्येत्* ॥१३॥

सोऽपोद्धरति। शुक्र मसि चन्द्र मस्यमृत मसि वैश्वदेव मसीति कृत्स्नेन पयसा हुत्वा यद्देवैतत्तदाह शुक्र मसीति शुक्रꣳ ह्येतच्चन्द्रमसीति चन्द्रꣳ ह्येतदमृत मसीत्यमृतꣳ ह्येतद्वैश्वदेव मसीति व्वैश्वदेवꣳ ह्येतत् प्रमुच्य तृणं बर्हिष्युपसृजति सूत्रेण हिरण्यं प्रबध्नीते ॥ १४ ॥

अथापरं चतुर्गृहीत माज्यं गृहीत्वा। अन्वारभस्व† यजमानेत्याहापोर्सवन्ति शालायै द्वारे दक्षिणतः सोमक्रयण्युपतिष्ठते तत्प्रहिता मेवैना मेतत्सतीं प्राहैषीद्वाग् वै सोमक्रयणी निदानेन ता मेतयाहुत्या-प्रैषीत् प्रीतया सोमं क्रीणानीति‡ ॥ १५ ॥

अथोपनिष्क्रम्याभिमन्त्रयते। चिदसि मनासीति चित्तं वा ऽइदं मनो व्वागनुवदति धीरसि दक्षिणेति धिया धिया ह्येतया मनुष्या जुज्यूषन्त्यु§नूक्तेनेव प्रकामोद्येनेव गाथाभिरिव तस्मादाह धीरसीति दक्षिणेति

---

* 'मभिगम्येत्'—इति ख, 'मभिगम्येत्'—इति ग, 'मभिगम्येत्'—इति घ।

† 'गृहीत्वा। न्वारभस्व'—इति ख।

‡ 'क्रीणानीति'—इति ख, 'क्रीणानीति'—इति ग, घ।

§ 'जिज्यूषन्त्यु'—इति सा॰-सम्मतो गम्यते।

दक्षिणा ह्येषा क्षत्रियासि यज्ञियासीति क्षत्रिया ह्येषा यज्ञिया ह्येषादितिरस्युभयतःशीर्ष्णीति स यदेनया समानꣳ सद्विपर्य्यासं व्वदति यदपरं तत् पूर्व्वं करोति यत् पूर्व्वं तदपरं तेनोभयतःशीर्ष्णी तस्मादाहादितिरस्युभयतःशीर्ष्णीति ॥ १६ ॥

सा नः सुप्राची सुप्रतीच्येधीति। सुप्राची न एधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची त एधि सोमेन नः सह पुनरेहीत्येवैतदाह तस्मादाह सा नः सुप्राची सुप्रतीच्येधीति ॥ १७ ॥

मित्रस्त्वा पदि बध्नीता मिति। व्वरुण्या वा ऽएषा यद्रज्जुः सा यद्रज्ज्वाभिहिता स्याद्वरुण्या स्याद्यद्वनभिहिता स्यादयतेव स्यादेतद्वा ऽअवरुण्यं यन्मैत्रꣳ सा यथा रज्ज्वाभिहिता यतैव मस्यैतद्भवति यदाह मित्रस्त्वा पदि बध्नीता मिति ॥ १८ ॥

पूषाध्वनस्पात्विति। इयं वै पृथिवी पूषा यस्य वा ऽइय मध्वन् गोप्त्री भवति तस्य न का चन ह्वला भवति तस्मादाह पूषाध्वनस्पात्विति* ॥ १९ ॥

इन्द्रायाध्यक्षायेति। स्वध्यक्षासदित्येवैतदाह यदाहेन्द्रायाध्यक्षायेत्यनु त्वा माता मन्यता मनु पितानु

* 'त्विति'—इति ख, 'त्व़ि़ति'—इति ग, घ।

भ्राता सगर्भ्योऽनु सखा सयूथ्य इति सा यत्ते जन्म तेन नोऽनुमता सोम मच्छेहीत्येवैतदाह सा देवि देव मच्छेहीति देवी ह्येषा देव मच्छैति यद्वाक् सोमं तस्मादाह सा देवि देव मच्छेहीतीन्द्राय सोम मितीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय सोम मिति रुद्रस्त्वावर्त्तयत्वित्य प्रणाशायैतदाह रुद्रꣳ हि नाति पशवः स्वस्ति सोमसखा पुनरेहीति स्वस्ति नः सोमेन सह पुनरेहीत्येवैतदाह ॥ २० ॥

तां यथैवादो देवाः*। प्राहिण्वन्त्सोम मच्छ सैनान्त्सह सोमेनागच्छदेव मेवैना मेष एतत् प्रहिणोति सोम मच्छ सैनꣳ सह सोमेनागच्छति ॥ २१ ॥

तां यथैवादो देवाः†। व्यह्वयन्त गन्धर्व्वैः सा देवानुपावर्त्ततैव मेवैना मेतद्यजमानो व्विह्वयते सा यजमान मुपावर्त्तते ता मुदीचीमत्याकुर्व्वन्त्युदीची हि मनुष्याणां दिक् सो ऽएव यजमानस्य तस्मादुदीचीमत्याकुर्वन्ति ॥ २२ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् [ २. ४. ] ॥

---

* 'देवाः'–इति ग, घ । † 'देवा'–इति ग, घ ।

सोमक्रयं विधातु माख्यायिका माह— "दिवि वै सोम इत्यादिना। "दिवि वा इति। 'वै'-शब्देन "तृतीयस्या मितो दिवि सोमः[१]"—इत्यादिश्रुत्यन्तरप्रसिद्धिर्द्योत्यते। 'इह' भूमौ 'देवाः' आसन्निति शेषः। सोमागमनप्रयोजनम्— "तेनागतेन यजेमहीति। "त एत इत्यादि। परव्यामोहनकारिणी शक्तिः 'माया'। 'ते' देवाः 'एते' द्वे मायाभिरूपे स्त्रियौ सोमरक्षकाणां गन्धर्वाणां व्यामोहाय सृष्टवन्त इत्यर्थः। तथा चोत्तरत्राम्नास्यते— "त एते माये असृजन्त सुपर्णीञ्च कद्रूञ्च वागेव सुपर्णीयं कद्रूः"-इति[२]। होतृमैत्रावरुणादीनां शंसनप्रदेशेषु पुरतः स्थापिता अग्नयो धिष्ण्याः होत्रीयादयः। ते खलु पुरा दिवि सोमरक्षकाः, पश्चात् सोमे आहृते सति तेन सह भूमावागत्य देवेभ्यो लब्धवराः सन्तोऽत्रापि सोमरक्षणाय धिष्ण्यतां प्राप्ताः। तथा चोपरिष्टाद् वक्ष्यन्ते—"त मेते गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या इमा होत्राः"-इति[३]। तेषां ('धिष्ण्यानां') 'ब्राह्मणे' 'व्याख्यायते सौपर्णीकाद्रवम्, सुपर्णीकद्रोर्वृत्तान्तः सर्वोऽपि विवरिष्यत इत्यर्थः[४]। तत्र हि माया-

---

१— तै० सं० ३. ५. ७. २।

२— इहैव षष्ठेऽध्याये द्वितीये ब्राह्मणे द्वितीया कण्डी द्रष्टव्या। "इयं वै कद्रूरसौ सुपर्णी छन्दांसि सौपर्णेयाः"-इति तै० सं० ६. १. ६. १। महाभारते आदिपर्वणि, भागवते च षष्ठे स्कन्धे एषा कथा पल्लविता, वस्तुतो रूपकमूलैवेति निर्मूलैव।

३— इहैव षष्ठ-द्वितीयस्य नवम्यां द्रष्टव्यम्।

४— "एतद् व्याख्यानं सौपर्णीकाद्रव मिति"-इतीहैव काण्डे ६. २. ७।

मध्योः सुपर्णीकद्र्वोरुत्पत्तिः, तयोर्मिथः कलहः, परस्परजयपराजय-निमित्तकः समयबन्धः, ततः कद्रूजयः, पराजितायाः सुपर्ण्याः स्वात्मनिष्क्रयाय सोमोपहरणार्थं छन्दसां सुपर्ण्याः सकाशादुत्पत्ति-र्गायत्र्या च सोमाहरणम्,— इत्येवमादयोऽर्था अस्मिन्नेव काण्डे पञ्चमप्रपाठकादौ "विजामानो हैवास्य धिष्ण्याः"—इत्याद्युपक्रम्य, "दिवि वै सोम आसीदथेह देवास्ते देवा अकामयन्त"—इत्यादिना[1] आम्नास्यन्ते ॥ १ ॥

"तेभ्यो गायत्रीति। 'तेभ्यः' देवेभ्योऽर्थाय सुपर्ण्या निर्मिता 'गायत्री' छन्दोदेवता पक्षिरूपेण दिवि स्थितं 'सोमम्' 'अच्छ' अभिमुख मगमत्। 'आहरन्त्यै' आहरन्त्यास्तस्याः स्वभूतं सोमम्, षष्ठ्यर्थे चतुर्थी[2], 'विश्वावसुः' नाम 'गन्धर्वः' 'पर्यमुष्णात्' अप-जहार। ततः 'ते देवाः' 'अविदुः'। किमिति 'परस्तात्' द्युलोकात् 'सोमः प्रच्युतः', 'अथ' 'नः' अस्मान् 'नागच्छति'; 'गन्धर्वाः' विश्वावसोर्भृत्याः 'वै' नूनं 'पर्यमोषिषुः' स्तेय मकार्षुः 'इति' ॥ २ ॥

"ते होचुरिति। योषितः कामयन्त इति 'योषित्कामाः'। 'एभ्यः' गन्धर्वेभ्यो व्यामोहाय 'वाचं' 'प्रहिणवाम' प्रेषयाम। वाचं प्रेष्यता मभिप्रायः— "आ नः सह सोमेनागमिष्यतीति ॥ ३ ॥

"ते गन्धर्वा इति। सोम मुपायेनानयन्तो स्वय मपि प्रति-निवर्त्तयिष्यत इति 'सोमो युष्माकं वागेवास्माकम्' अस्त्विति। अथ गन्धर्वाविरोधेनैव देवैर्दृष्टं वाग्लाभोपायं दर्शयति— "इहो चेदागादित्यादि। प्रेषयामो वयं वाचं सोमैरिह 'आगात्'

---

१— ५प्र० १ब्रा० १—१६क०। २— पा० २. ३. ६२ सू० १ वा०।

आगच्छेत्। 'उ'-शब्दोऽनर्थकः। हे गन्धर्वाः! 'एनाम्' 'इह' आगताम् 'अभीषहे'। 'व'-इति वाक्यालङ्कारे। अभिषहन मभीषट्, अभिभवः। तेन बलात्कारेण 'मा नैष्ट' मा प्राहार्षत[१]। "न माङ्योगे[२]"-इत्यड्भावः। 'विह्वयामहै' यूयं वयं च वाचं विविध माकारयामः ॥ ४ ॥

एवं मिथः समये कृते गन्धर्वाणा माह्वानप्रकार माह— "तस्यै गन्धर्वा वेदानेवेति। 'प्रोचिरे' प्रवचन मकुर्वन्। तस्या वाचो वशीकरणायेति शेषः। एव मिदं ब्रुवतां तेषा मभिप्रायः— "इति वै वयं विद्मेति। एवं खलु वाचः स्वाधीनत्वकरणोपायं जानीम इति, अय मुपायः सर्वेषां स्वकीयाना मभिमत इति प्रदर्शयितुं वीप्सयाभिधानम् ॥ ५ ॥

देवैः कृतं वाचः स्वीकरणोपाय माह— "अथ देवा वीणा मेवेति। 'वीणां वादयन्तः' निषादादिस्वरानुकूल्येन ध्वनि मुत्पादयन्तः, तदनु स्वयं 'गायन्तः' 'निषेदुः' उपसन्नाः। "इति वा इति। एवं खलु 'ते' त्वदर्थं 'गास्यामः'। न केवल मीदृशं गान मस्माकं किन्तु हे वाग्देवते! 'त्वा' त्वाम् 'इति' एवम्प्रकारेण खलु तोषयामः। 'इति'-शब्दो वाक्यसमाप्तौ। 'सा देवान् उपाववर्त्त' उपावर्त्तते, प्रत्यावृत्ता। 'या' वाक् 'स्तुवद्भ्यः शंसद्भ्यः' स्तोत्रशस्त्ररूपं वेदानुवचनं कुर्वद्भ्यो गन्धर्वेभ्यः सकाशात् देवैः कृतं 'नृत्तं' 'गीतम्' चोपावृत्ता, 'सा वै' सा खलु। 'सा' पूर्वं सोमाहरणाय

---

१— 'मा प्राहार्ष्ट'—इति ग।　　२— पा० सू० ६. ४. ७४।

प्रेषिता वाक् 'तत्' तदानीं 'मोघं' व्यर्थ मेवोपावृत्ता। स्तुत-शस्त्ररूपपरित्यागस्यानौचित्यादिति भावः। इदानीन्तनस्त्रीणां मोघस्वभावत्वं वाग्देवतोपक्रम मित्याह— "तस्मादिति। 'तां' वाचम् 'अनु' 'अन्याः' अपि योषितः। अप्रकृत मपि नर्त्तनं गानवत् स्त्रीव्यामोहसाधन मिति गानेन सहोपन्यस्तम्। 'एताः' योषितः 'निमिश्लतमा इव' विशेषणैकीभूताः, अत्यन्त मनुरक्ता भवन्तीति शेषः। अय मर्थः सर्वोऽप्यैतरेयब्राह्मणे "सोमो वै राजा गन्धर्वेष्विति खण्डे[1] प्रपञ्चितः॥ ६॥

इदानीं गानसिद्धार्थ मनूद्य[2] सोमक्रयं विदधाति— "तद्वा एतदुभय मिति। यस्मात् सोमो देवानां स्व मासीत्, तस्मात् 'आगत्या एव' सोमप्राप्त्या एव 'सोमं' 'क्रीणाति' क्रीणीयात्। अपूर्वार्थत्वाद् यच्छब्द मनादृत्य विधिः कल्पयितव्यः। आगत्या अपि प्रयोजन माह— "आगतेन यजा इति। अक्रीतस्य यागानर्हता माह— "अनागतेनेति। आगतोऽपि सोमः क्रयसंस्कारेणानागतत्वात् अनागत इत्युच्यते॥ ७॥

सोमक्रयात् प्राक् कर्त्तव्यं च कञ्चिद्धोमं विदधाति— "अथेति। 'ध्रुवायाम् आज्यं परिशिष्टं' प्रायणीयार्थ मुपयुज्य यद् घृतं ध्रुवाया मवशिष्टम्, 'तत्' 'जुह्वां' 'चतुष्कृत्वः' चतुर्वारं गृहीत्वा, 'बर्हिषा' दर्भेण 'हिरण्यं' 'प्रबध्य' जुह्वाम् 'अवधाय' आधाय जुहुयात्। तथा च कात्यायनः— "शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति,

---

१— १. ५. १ ( १ भा० १९४ पृ० )।

२— 'इदानीं —० मनूद्य'–इत्यस्य स्थाने 'सिद्धार्थं मनूद्य'–इत्येव ग।

बर्हिस्तृणेन हिरण्यं बध्वावदधात्येषा त इतीति[१]। हिरण्यावधान-प्रयोजनम्— "कृत्स्नेन पयसेति। पयःप्रकृतिकत्वाद् आज्यं पयः। सति हिरण्यस्य पयस्त्वे भवत्येव कार्त्स्न्यम्। तदेव कुत इत्यत आह— "समानजन्म वा इति। 'पयश्च हिरण्यञ्च' इति वस्तुद्वयं 'समानजन्म' समानोत्पत्तिकम्, एकत्रोत्पन्न मित्यर्थः। कथं समानत्वं जन्मनः? 'हि' यस्मात् 'उभयम्' अपि 'अग्निरेतसम्' अग्नेः रेतो वीर्यं यस्योभयस्य तत् तथोक्तम्। यस्मादेवं तस्मादित्यर्थः। "अन-सन्तान्नपुंसकाच्छन्दसि"-इति[२] अच् प्रत्ययः समासान्तः। पयसो-ऽग्निरेतस्त्वं द्वितीयकाण्डे उक्तम्। तथाहि गोरुत्पत्तिं प्रस्तुत्य— "ता मु हाग्निरभिदध्यौ। मिथुन्येनया स्या मिति तां सम्बभूव तस्यां रेतः प्रासिञ्चत् तत् पयोऽभवत्"-इति[३]। हिरण्यस्याप्यग्निरेतस्त्वं तैत्तिरीये— "आपो वरुणस्य पत्नय आसन्, ता अग्निरभ्यध्यायन्, ताः समभवन्, तस्य रेतः परापतत्, तद्धिरण्य मभवत्"-इति[४] ॥ ८ ॥

मन्त्र मभिधाय पुनरनुवदति— "स हिरण्य मिति। 'सः' अध्वर्युः। हिरण्यनिधानमन्त्रं त्रेधा विभज्य व्याचष्टे— "एषा त इत्यादिना[५]। हे 'शुक्र!' 'एषा' एतद्धिरण्यं 'ते' 'तनूः' शरीरम्। तन्वपेक्षया स्त्रीलिङ्गता, अथवा 'एषा' जुहूरिति व्याख्येयम्। 'एतत्' एव आज्यं तव 'वर्चः' तेजः। शिष्टं ब्राह्मणेनैव व्याख्यातम्। व्याख्येयभागद्वय मुपादाय प्रथमभागस्य 'सम्भव'-शब्दस्यार्थ माह—

१— का० श्रौ० सू० ७.६.७, ८। २— पा० सू० ५.४.१०३।
३— २ अध्या० ४ ब्रा० १५ क०। ४— तै० ब्रा० १.१.३.८।
५— "एषा ते"-इति मन्त्रस्तु वा० सं० ४.११.१।

"यदाह तया सम्भवेत्यादि। 'यदाह' मन्त्रः, 'एतत्' एतेन 'तया सम्पृच्यस्व'— 'इत्येवाह'। अत्र सम्पर्क एकीभावः। 'भ्राट्'-शब्दार्थ माह— "सोमो वै भ्राडिति। भ्राजमानत्वात् 'भ्राट्' सोमः ; अतः "आज्यं भ्राजं गच्छतीति ब्रुवती श्रुतिः, सोमं गच्छेत्युक्तवतीत्यर्थः। सोमप्राप्तिप्रकारस्त्वित्थं वेदितव्यः,— हिरण्यसंस्कृताज्यहोमः सोमक्रयणार्थः, स च क्रेतव्यसोमार्थ इति विहिता साहुतिं सोमक्रयणीप्रीतिहेतुत्वेन प्रशंसयंस्तदर्थः ॥ ९ ॥

सोमक्रयण्यानयनप्रयोजन माह— "तां यथैवेति। 'अदः' व्यवहितकाले 'तां' वाचं 'प्राहिण्वन्' गन्धर्वापहृतां प्रति प्रागमयन्। 'एव मेव' अध्वर्युः एतेन सोमक्रयणीप्रेरणेन प्रेरितवान् भवति। तयोः कः सम्बन्ध इति तत्राह— "वाग्वै सोमक्रयणीति। 'निदानं' वास्तवं स्वरूपम् ॥ १० ॥

होममन्त्रं पञ्चधा विभज्य व्याचष्टे— "स जुहोतीति[१]। "जूरसीत्यादिना मन्त्रस्य[२] ब्राह्मणेनैव साकल्येन व्याख्यातत्वात् नास्माभिर्व्याख्यातः। 'जू'-इति सौत्रो धातुर्गत्यर्थः। जवति सोमं प्रति गच्छतीति 'जूः'। 'अस्याः' वाग्रूपायाः सोमक्रयण्याः प्रतिज्ञातम्। मनसो वागाधारत्व मुपपत्त्या साधयति— "मनो वा इदं पुरस्ताद् वाच इति। मनः पूर्वरूपम्, वागुत्तररूपम्। मनो वा इति 'वै'-शब्देन "यद्वै मनसा ध्यायति तद्वाचा वदति"— इत्यादि[३]-श्रुत्यन्तरप्रसिद्धिर्द्योत्यते। "इत्थं वदेति। यद्यपि हितोपदेष्टृवन्मनो

---

१— का० श्रौ० सू० ७. ६. ६। २— वा० सं० ४. १७. १।

३— शत० ब्रा० १२का० ९अ० १ब्रा० १३क०।

न वाग्व्यापारं करोति, तथापीदं वक्तव्य मिदं नेति गुणदोषविकल्पनस्य मनोव्यापारत्वाद् वाग्विधिनिषेधकर्त्तृव्यवहारः। व्यतिरेकदोषोपन्यासेन मनोवाचोरेकत्वं दृढयति— "अलग्न मिवेति। 'अलग्न मिव' वक्तव्यपदार्थेन सहासंसृष्ट मिव; हृदयपूर्वकत्वाभावात् ॥ ११ ॥

"जुष्टा विष्णव इतीति। विष्णुशब्दस्याभिमत मर्थ माह— "जुष्टा सोमायेत्येवैतदाहेति। भुवनत्रयव्यापकत्वात् सोमो विष्णुः। "रुच्यर्थानां प्रीयमाणः"-इति[1] जुषतियोगे चतुर्थी। 'यं' सोमम् 'अच्छ' अभिमुखम् 'इमः' गच्छेमो वयम् 'इति' अनेनाभिप्रायेण सोमायेत्याहेत्यर्थः। 'सत्यसवसः' सत्यानुज्ञायाः 'तस्याः' देवैः प्रेरिताया वाचः 'प्रसवे' अनुज्ञायां सत्या मिति मन्त्रभागस्यार्थः। अस्य भागस्य तात्पर्य माह— "सत्यप्रसवा न एधीति। चरमभागस्य तात्पर्य माह— "तन्वो यन्त्र मिति। 'उदृक्' उत्तमा ऋक्, उदृचया यज्ञसमाप्तिर्लक्ष्यते; अतो 'यः' यज्ञसमाप्तिं 'गच्छति', 'सः' एव 'तन्वो यन्त्रम् अश्नुते' ॥ १२ ॥

हिरण्यस्यापोद्धारं विधाय प्रशंसति— "अथ हिरण्य मिति[2]। प्राण्युपभोगस्य धनमूलत्वात् हिरण्यापोद्धारेण मनुष्येषु हिरण्यस्थापनं च कृतं भवति। विपक्षे बाधदर्शनेन विहित मर्थं प्रशंसति— "स यत् सहिरण्य मिति। 'सहिरण्यं' हिरण्येन सहित माज्यम्। 'पराक् प्रवृञ्ज्यात्' अपुनरागमनं 'मनुष्येभ्यः' सकाशाद् वर्जयेत्। अस्तु, किं तत इत्याह— "तन्नेति। 'तत्' तर्हि 'मनुष्येषु' 'हिरण्यं' 'न' अनुवर्त्तेत ॥ १३ ॥

---

१— पा० सू० १. ४. ३५। २— का० श्रौ० सू० ७. ६. १०।

अपोद्धार मनूद्य मन्त्र माह— "सोऽपोद्धरति शुक्र मसीति[1]। हे हिरण्य! त्वं 'शुक्रं' दीप्तम् 'असि', 'चन्द्रं' सर्वाह्लादकम् 'असि', 'अमृतम्' अमरणधर्मकम् 'असि'; अत्यन्ताग्निसंयोगेऽपि विनाशा-दर्शनात्। वैश्वदेव्याः सर्वदेवताप्रीतिकरत्वात् तदीय मथ मपोद्धारो होमानन्तरं कार्य मित्याह— "कृत्स्नेनेति। प्रागेव यद्यपोद्धरेत् तदा हिरण्यात्मकस्य पयसोऽभावात् आज्यं रूपं पयसोऽकृत्स्नं स्यात्, तस्मादुच्यते— "कृत्स्नेनेति। मन्त्रगतं हिरण्यस्य शुक्राद्यात्मकत्वं न स्तुत्यर्थ मित्याह— "यदेवैतत्तदाहेति। 'यदेव' 'एतत्' हिरण्यस्य स्वाभाविकं रूपम्, 'तत्' एष मन्त्रः 'आह'। यद्यपि हिरण्य माग्नेयं तथापि सर्वप्रियत्वाद् वैश्वदेव मुच्यते। "प्रमुच्य तृण मिति। हिरण्ये बद्धं तृणं विमुच्य, 'बर्हिषि' अपिसृज्य, पुनः 'सूत्रेण' बध्नीयात्। तथाच सूत्रम्— "हिरण्य मुद्धृत्य वेद्यां तृणं विदधाति सूत्र-बद्धं हिरण्यं कुरुते"-इति[2] ॥ १४ ॥

"अथापर मिति। पूर्वोक्तप्रायणीयशेषादेवान्यतः 'चतुर्गृहीत माज्यं गृहीत्वा' 'यजमान अन्वारभस्व'-'इति' ब्रूयात्[3]। अध्वर्यो-रनुस्पर्शोऽन्वारम्भः। 'शालायै' शालायाः 'अपोर्णुवन्ति', द्वाराणीति शेषः। सूत्रकारेण "शालाया द्वाराण्यपिधाय"-इत्युक्तत्वात्[4]। पूर्वं विहितानि द्वाराणि सर्वाण्यपवृत्तानि कुर्युः[5]। 'द्वारे' आहवनीयात् प्राक्तने, सोमक्रयार्थं 'दक्षिणतः' दक्षिणदेशे 'सोमक्रयणी' गौः

---

१— वा० सं० ४. १८. १। २— का० श्रौ० सू० ७. ६. ११।
३— का० श्रौ० सू० ७. ६. १२। ४— का० श्रौ० सू० ७. ६. ७।
५— का० श्रौ० सू० ७. ६. १३।

'उपतिष्ठते'[1]। सोमक्रयण्यवस्थापनं प्रशंसति— "तत्प्रहिता मिति। 'एतत्' एतेनावस्थापनेन 'एनां' सोमक्रयणीं 'तत्प्रहिता मेव सतीं' तथा देवैः प्रेषितया वाचा प्रेरितां सतीम्। अथवा 'तत्' तथा सती 'प्रहिता मेव' इमां सोमक्रयार्थं गमयेति स्वप्रेरितां सती मेवैताम् 'एतत्' एतेनावस्थापनेन 'प्राहैषीत्' प्रेरितवान् भवति। तस्या इतरगोसाधारण्यं वारयति— "वाग्वै सोमक्रयणीति। "ता मेतयेति। 'तां' वाग्रूपां सोमक्रयणीं यस्मात् 'एतया' पूर्वविहितया "धूरसि"-इत्यादिमन्त्रदेवतया 'अप्रैषीत्' अध्वर्युः प्रेरितवान्। कया बुद्ध्या? 'प्रीतया' तृप्तया 'सोमं क्रीणातीति' ॥ १५ ॥

तस्या अभिमन्त्रणं विधत्ते— "अथोपनिष्क्रम्याभिमन्त्रयत इति[2]। 'उपनिष्क्रम्य' शालातो निर्गम्य। अभिमन्त्रणमन्त्रं विभज्य व्याचष्टे— "चिदसि मनासीत्यादिना[3]। मन्त्रवाक्यानि तु ब्राह्मणेनैव साकल्येन व्याख्यातानीत्यतो नास्माभिर्वक्तव्य मस्ति। 'इदम्' इदानीं सर्वविदितप्रकारेण 'चित्तं' 'मनः'; मनसा 'वागनुवदति', चित्तेन ज्ञानम्। मनसा मत मेवार्थं वाक् प्रकाशयतीत्यर्थः। अतो हे सोमक्रयणि! त्वं चेतनावस्थापन्ना सती 'चिदसि', तथा मननेन 'मना' अपि 'असि'। धीरूपत्वसमर्थनम्— "धिया-धियेति। 'धिया' इत्थं वदिष्यामीति बुद्ध्या, चित्तवदभिवदनरूपेण कर्मणा वा। धीरिति कर्मनाम[4]। 'जिज्यूषन्ति' जीवितु मिच्छन्ति मनुष्याः।

---

१— "दक्षिणेन द्वारं सोमक्रयणी तिष्ठति"-इति का० श्रौ० ७. ६. १४।
२— का० श्रौ० सू० ७. ६. १५। ३— वा० सं० ४. १९. २०।
४— निघ० २. १. २१।

"जीव प्राणधारणे[1]"-इत्यस्मात् सनन्तादुठि कृते रूपम्। तथा जीवनप्रकारं स्वय मेव दर्शयति— "अनूक्तेनेत्यादिना। 'अनूक्तेन' अनुवचनेन, वेदाध्ययनेनेत्यर्थः। 'प्रकामोद्यम्' इच्छया लौकिक-भाषणम्। 'गाथा' गद्यपद्यगीत्यात्मिका। सर्वत्र 'इव'-शब्दो वाक्यालङ्कारार्थः। एवंविधैर्वाग्विशेषैर्यतो जीवितु मिच्छन्ति, अतो धीरसीत्युक्तम्। सोमविक्रयिण आनत्यर्थं दीयमानत्वात् साक्षात् दक्षिणापि खल्वेषा वस्तुतो भवति। क्षत्रं बलं तदर्हतीति 'क्षत्रिया' गौः। पयआदिसाधनत्वेन तस्या बलकरत्वं सिद्धम्। अथवा क्षत्रं सोमः; "सोमो वै राजा"-इति[2] सर्वत्र राजशब्देन व्यवहारात्। न यज्ञयोगाद्राजत्वं किन्तु राजत्वं नाम, क्षत्रियत्व मित्युक्तम्। श्रूयते च— "यान्येतानि देवतया क्षत्रियाणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यः"-इत्यादि[3]। अतस्तत्सम्बन्धात् क्षत्रियैवैषा। यज्ञियत्वं तु सिद्ध मेव। "अदितिरसीति। हे सोमक्रयणि! वस्तुतो वाग्रूपा त्वम् 'उभयतः-शीर्ष्णी अदितिरसि' प्रदेशद्वयशिरोयुक्ता अखण्डनीया गौरसि। कुत एतदित्यत आह— "स यदिति। 'सः' वक्ता 'यत्' यस्मात् 'एनया' अदित्या उभयतः-शिरस्कया[4] निमित्तभूतया 'समानम्' एक मेव 'सद्' वाक्यं 'विपर्यासं' व्यत्यासेन 'वदति'। तथाहि— "भुङ्क्ष्व देवदत्त! तिष्ठ विष्णुमित्र!"—इत्यादौ 'यदेवापरं'

---

१— धा० प० ५६२ धा०।

२— ऐ० ब्रा० १. ३. १., ३. ३. १। अत्रापि ३. ३. ३. १।

३— उपरिष्टात् १४. ४. २. २३—२७।

४— 'उभयशिरस्कया'-इति ग।

वचनं देवदत्तेत्येवमादि[1], 'तदेव पूर्वं करोति' उक्तवैपरीत्येन; 'यत् पूर्वं' भुङ्क्ष्वे-त्यादिकम्, 'तद्' 'अपरम्' "देवदत्त! भुङ्क्ष्व"— इत्यादिरूपेणापरं च 'करोति'। तस्माद्वाग्रूपां सोमक्रयणीम् 'उभयतः-शीर्ष्णी अदितिरसि'—'इत्याह' मन्त्रः। तैत्तिरीयके तु सोम-यागस्याद्यन्तभूतयोः प्रायणीयोदयनीययोः शिरोवत्प्रधानभूतयो-र्वर्त्तमानयोरदितिर्देवतास्ति, सासीत्यर्थः[2]। तथा च तैत्तिरीयकम्— "अदितिरस्युभयतः-शीर्ष्णीत्याह यदेवादित्यः प्रायणीयो यज्ञाना मादित्य उदयनीयः"-इति[3] ॥ १६ ॥

"सा नः"—इति[4]मन्त्रभागे न इत्यस्य 'नः सोमम्'-इत्यर्थ इति व्याचष्टे— "सा नः सुप्राचीति। सोमक्रयणावसरे 'सुप्राची' भव, पुनर्यजमानगृहप्राप्त्यवसरे क्रीतेन सोमेन सह 'सुप्रतीची' भव। यथा देवप्रेरिता वाक् सोमेन सह पुनरागता, तदात्मकत्वात् त्व मपि सोमक्रयं साधयित्वा क्रीतेन सोमेन सह पुनरावर्त्तस्वेत्यर्थः ॥ १७॥

"मित्रस्त्वेत्यादि। मित्रदेवतायाः पादबन्धनोपयोगं दर्शयति— "वरुण्या वा इति। पाशस्य वरुणस्वामिकत्वात्[5] वरुणदेवताका 'रज्जुः'। 'यत्' यदि तया 'अभिहिता' बद्धा स्यात्। तद्दोषपरि-हाराय मन्त्रे मित्रकर्त्तृकपादबन्धन मित्याह— "एतद्वा अवरुण्य

---

१— 'देवदत्त [ विष्णुमित्रेत्यादिकम्, तत् पूर्वं देवदत्त भुङ्क्ष्व ] इत्येवं-रूपेण'—इति ग।

२— "द्वे शीर्षे प्रायणीयोदयनीये"—इति यास्कः ( निरु० प० १३. ७. )।

३— तै० सं० ६. १. ७. ६।　　४— वा० सं० ४. १९. १।

५— "उदुत्तमं वरुण पाश मस्मादवाधमं वि मध्यमं श्रथाय ( ऋ० सं० १. २. १५. )"—इत्यादिश्रुतेः।

मिति। "सा यथेति। दृष्टान्तेन मन्त्रभागपाठमात्राद् बन्धनं भवत्येवेति समर्थ्यते ॥ १८ ॥

"पूषाध्वन इत्यादि। पोषणात् 'पूषा' 'पृथिवी'। "यस्य वा इय मिति। 'अध्वन्' अध्वनि। 'क्लृत' "क्लृत चलने"[१]। 'प्रच्युतिः' विनाशः। यस्मात् पूष्णा रचितस्य प्रच्युतिर्नास्ति, 'तस्मात् "पूषाध्वनः"-इत्याह' मन्त्रः। पूष्णो मार्गाणां कर्त्तृत्वं "पूषा त्वेतो नयतु"-इत्यादि[२]मन्त्रप्रसिद्धम् ॥ १९ ॥

"इन्द्रायाध्यक्षायेति। अध्यक्षः स्वामी, तथाविधेन्द्रार्थं पूषा पात्वित्यर्थः। सोमस्येन्द्रस्वामिकत्वात् तदर्थायाः सोमक्रयण्या अपि तत्स्वामित्वम्। 'स्वध्यक्षा असत्' एषा शोभनस्वामिका भवेत्,—इत्यनेनाभिप्रायेन मन्त्र एव माहेत्यर्थः। "अनु त्वा मातेत्यादि[३]। हे सोमक्रयणि! 'त्वा' त्वां मात्रादिबन्धुवर्गः क्रयार्थं गमनम् 'अनुमन्यताम्' अनुमतिं करोत्विति मन्त्रभागस्यार्थः। 'सगर्भ्यः' समानगर्भभवः, अनेन 'भ्राता' विशिष्यते। 'सयूथ्यः' यूथं सजातीयानां सङ्घः, समाने यूथे भवः 'सयूथ्यः', तादृशः 'सखा' च 'अनु' मन्यताम्। "यत्ते जन्मेति। तादृश्यास्तव सम्बन्धि 'यत्' तव 'जन्म' जायत इति जन्म, मात्रादिबन्धुवर्गः, 'तेन' 'अनुमता'। "सा देवि" -इत्यत्र[४] सोमस्य देवत्वं विधित्सितसोमेनानन्यत्वाच्च सिद्धम्। सोमक्रयण्या देवीत्वं न स्तुत्यर्थ मित्यवगमयितुं "यद्वाक् सोम मित्युक्तम्। "इन्द्राय सोम मिति। सम्पादये इति शेषः। अतो 'देव मच्छे-

---

१— स्वा० प० ८०५ धा०। २— ऋ० सं० ८. ३. २५।
३— वा० सं० ४. २०. १।
४— "सा देवि देव मच्छेहीन्द्राय"-इति मन्त्रापराद्ध (वा० सं० ४. २०.)।

ह्वीति' पूर्वत्रान्वयः। "इन्द्रो वै यज्ञस्य देवता"-इति। 'यज्ञस्य' तत्साधनस्य सोमस्य 'इन्द्रो देवता'। तथा च तैत्तिरीयकम्— "इन्द्राय हि सोम आह्रियते"-इति[१]। "रुद्रस्त्वा वर्त्तयत्विति। रुद्रस्य पश्वधिपतित्वात् स्वय मगच्छन् पुनरावर्त्तयत्वित्यभिधानं तस्या अप्रणाशाय भवति। कथं हिंसाप्रसङ्ग इति तत्राह— "रुद्रं ह्वीति। 'नाति' वर्त्तत इति शेषः। "स्वस्ति सोमसखेति। "स्वस्तीत्य-विनाशनाम"-इति निरुक्तम्[२]। उक्तो नाशप्रसङ्गः, अतः क्षेमेण सोमसखा यस्य, तेन सहितः पुनरागच्छेति मन्त्रस्यार्थः ॥ २० ॥

इत्थं मन्त्रवाक्यानां विभज्य तात्पर्य मभिधायेदानीं कृत्स्न-मन्त्रतात्पर्य माह— "तां यथैवादो देवा इत्यादिना। सोमक्रयण्या वस्तुतो वागात्मकत्वात् तस्याः सोमक्रयप्रदेशप्राप्तिप्रार्थनं देवैः कृतं सोमानयनार्थवाक्प्रेषणस्थानीयम्, पुनरागमनप्रार्थनन्तु देवानां पुनर्वागाह्वानस्थानीय मिति सङ्ग्रहार्थः ॥ २१ ॥

"तां यथैवाद इति। यथा विप्रकृष्टे काले, पूर्वं मित्यर्थः। 'गन्धर्वैः' सोमपालैः विश्वावसुप्रभृतिभिः साकं 'व्याह्वयन्त' विविध माह्वयन्। गन्तव्यद्वारदेशस्थायाः[३] सोमक्रयण्याः उदक्प्रायणं सार्थ-वादं विधत्ते— "ता मुदीची मिति[४]। 'उदीची मत्याकुर्वन्ति' उदङ्मुखा यन्ति, अध्वर्युः प्रमुखाः। 'सा एव' सैव मनुष्यान्तर्वर्त्ति-त्वाद् यजमानस्यापि दिक् ॥ २२ ॥ ३ [ २. ४. ] ॥

---

१— तै० सं० ६. १. ७. ११। २— निरु० ६. ४. ४।

३— 'द्वारदक्षिणदेशस्थायाः'—इति ग०।

४— का० श्रौ० सू० ७. ६. १६ द्रष्टव्यम्।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ २ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः[1] सिङ्गनार्यो,[2]
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पाचसात्सिङ्गनार्यः[3] ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे द्वितीयाध्यायः समाप्तः ॥ २ ॥

---

१— 'सायणः'—इति स्यात् ?
२— 'सिङ्गणार्यः' स्यात् ? सिङ्गणदेशस्य राजेति तस्यार्थः सम्पद्येत ।
३— एतच्छ्लोकद्वयपाठभेदास्तु पूर्वत्रैव द्रष्टव्या इतीतो न लेख्याः ।

[ अथ तृतीयाध्याये प्रथमं ब्राह्मणम् ]



सप्त पदान्यनुनिक्रामति। वृङ्क्त ऽएवैना मेतत् तस्मात् सप्त पदान्यनुनिक्रामति यच्च व्वै व्वाचः प्रजातानि छन्दाᳬसि सप्तपदा वै तेषां पराद्ध्यां शक्करी ता मेवैतत्परस्तादर्व्वाचीं वृङ्क्ते तस्मात् सप्त पदान्यनुनिक्रामति ॥ १ ॥

स वै व्वाच एव रूपेणानुनिक्रामति। व्वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासीति व्वस्वी ह्येषादितिह्र्येषादित्या ह्येषा रुद्रा ह्येषा चन्द्रा ह्येषा बृहस्पतिष्ट्वा सुम्ने रम्णात्विति ब्रह्म वै बृहस्पतिर्बृहस्पतिष्ट्वा साधुनावर्त्तयत्वित्येवैतदाह रुद्रो व्वसुभिराचक ऽइत्यप्रणाशायैतदाह रुद्रᳬ हि नाति पशवः* ॥ २ ॥

अथ सप्तमं पदं पर्य्युपविशन्ति। स हिरण्यं पदे निधाय जुहोति न वा ऽअनग्नावाहुतिर्हूयतेऽग्निरेतसं वै हिरण्यं तथो हास्यैषाग्निमत्येवाहुतिर्हुता भवति व्वज्रो वा ऽआज्यं व्वज्रेणैवैतदाज्येन स्पृणुते ताᳬ स्पृत्वा स्वीकुरुते ॥ ३ ॥

---

* 'पशवः'—इति ग, घ।

स जुहोति। अदित्यास्त्वा मूर्द्धन्नाजिघर्म्मीतीयं वै पृथिव्यदितिरस्यै हि मूर्द्धन्* जुहोति देवयजने पृथिव्या ऽइति देवयजने हि पृथिव्यै जुहोतीडायास्पद मसि घृतवत् स्वाहेति गौर्व्वा ऽइडा गोर्हि पदे जुहोति घृतवत्स्वाहेति घृतवद्धयेतदभिहुतं भवति ॥ ४ ॥

अथ स्फ्य मादाय परिलिखति। व्वज्रो वै स्फ्यो व्वज्रेणैवैतत्परिलिखति त्रिष्कृत्वः परिलिखति त्रिवृतैवैतद्वज्रेण समन्तं परिगृह्णात्यनतिक्रमाय ॥ ५ ॥

स परिलिखति। अस्मे रमस्वेति यजमाने रमस्वेत्येवैतदाहाथ समुल्लिख्य पदꣳ स्थाल्याꣳ संव्वपत्यस्मे ते बन्धुरिति यजमाने ते बन्धुरित्येवैतदाह ॥ ६ ॥

अथाप उपनिनयति। यत्र वा ऽअस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादप उपनिनयति ॥ ७ ॥

अथ यजमानाय पदं प्रयच्छति। त्वे राय इति पशवो वै रायस्त्वयि पशव इत्येवैतदाह तद्यजमानः प्रतिगृह्णाति मे राय इति पशवो वै रायो मयि पशव इत्येवैतदाह ॥ ८ ॥

---

* 'मूर्द्धं'—इति क, 'मूर्द्धन्'—इति ख ।

अथाध्वर्युरात्मान मुपस्पृशति। मा व्वयꣳ राय-स्पोषेण व्वियौष्मेति तथो हाध्वर्युः पशुभ्य आत्मानं नान्तरेति ॥ ९ ॥

अथ पत्न्यै पदं प्रतिपराहरन्ति। गृहा वै पत्न्यै प्रतिष्ठा तद् गृहेष्वेवैना मेतत् प्रतिष्ठायां प्रतिष्ठापयति तस्मात् पत्न्यै पदं प्रतिपराहरन्ति ॥ १० ॥

तां नेष्टा व्वाचयति। तोतो राय इत्यथैनाꣳ सोम-क्रयण्या सङ्ख्यापयति व्वृषा वै सोमो योषा पत्न्येष वा ऽअत्र सोमो भवति यत् सोमक्रयणी मिथुन मेवैतत् प्रजननं क्रियते तस्मादेनाꣳ सोमक्रयण्या सङ्ख्या-पयति ॥ ११ ॥

स सङ्ख्यापयति। समख्ये देव्या धिया सन्दक्षिणयो-रुचक्षसा। मा म ऽआयुः प्रमोषीर्मो ऽअहं तव व्वीरं व्विदेय तव देवि सन्दृशीत्याशिष मेवैतदाशास्ते पुत्रो वै व्वीरः पुत्रं व्विदेय तव सन्दृशीत्येवैतदाह ॥ १२ ॥

सा या बभ्रूः पिङ्गाक्षी*। सा सोमक्रयणी यत्र[†] वा ऽइन्द्राविष्णू त्रेधा सहस्रं व्यैरयेतां तदेकात्यरिच्यत

---

* 'पिङ्गाच्ची'—इति ग, घ।

† 'सा या०—० क्रयणी। यत्र'—इति क।

तां त्रेधा प्राजनयतां तस्माद्योऽप्येतर्हि त्रेधा सहस्रं व्याकुर्यादेकैवातिरिच्येत ॥ १३ ॥

सा या बभ्रुः पिङ्गाक्षी*। सा सोमक्रयण्यथ† या रोहिणी सा व्वार्त्रघ्नी या मिदꣳ राजा सङ्ग्रामं जित्वोदाकुरुते ऽथ या रोहिणी श्येताक्षी सा पितृदेवत्या या मिदं पितृभ्यो घ्नन्ति ॥ १४‡ ॥

सा या बभ्रुः पिङ्गाक्षी§। सा सोमक्रयणी स्याद्यदि¶ बभ्रुं पिङ्गाक्षीं न विन्देदरुणा स्याद्यद्यरुणां न विन्देद्रोहिणी व्वार्त्रघ्नी स्याद्रोहिण्यै ह त्वेव श्येताक्ष्या ऽऽशान्नेयात्|| ॥ १५ ॥

सा स्यादप्रवीता। व्वाग्वा ऽएषा निदानेन यत्सोमक्रयण्ययातयाम्नी वा ऽइयं वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात् सा स्यादवण्डाकूटाकाणाकर्णालक्षिता सप्तशफा सा ह्येकरूपैकरूपा हीयं व्वाक् ॥ १६ ॥ ४ ॥

॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् [३. १.] ॥

---

* 'पिङ्गाच्ची'–इति ग, घ। † 'सा या ०—० क्रयणी। अथ'–इति क।
‡ इतोऽनन्तरम् "कण्डिकासङ्ख्या १६००"–इति सर्व-पुस्तकेषु।
§ 'पिङ्गाच्ची'–इति ग, घ। ¶ 'सा या०—० स्यात्। यदि'–इति क।
|| 'ऽआशान्नेयात्'–इति वेबर्-दृष्टोऽपि, 'आशां नेयात्'–इति ग, घ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ तृतीयाध्याये सोमक्रयण्यनुगमाद्युपसदन्ताः प्रयोगा निरूप्यन्ते । तत्र, सोमक्रयण्या अनुक्रमणं विधत्ते— "सप्त पदानीति । "अनुनिक्रामतीति[1] । सा यदा प्रथमं पदं निष्क्रामति, तदा तदनु अध्वर्युः स्वय मपि प्रथमं पदं निष्क्रामेत्; द्वितीय मनु द्वितीयम् । तत्र 'वृङ्क्ते' केवलोऽपि वृजिराङ्पूर्वो द्रष्टव्यः, आवर्जितवान् भवति । सप्तसङ्ख्यां प्रशंसति— "यत्र वा इति[2] । 'यत्र' छन्दसा मुत्पत्तिकाले 'वाचः' सुपर्णानुरूपेणावस्थितायाः सकाशात् 'प्रजातानि' यानि छन्दांसि । वाचः सकाशात् छन्दसा मुत्पत्तिरुत्तरत्र "वागेव सुपर्णी"-इत्यभिधायः "तयेति सा छन्दांसि ससृजे"-इत्याम्नाता[3] । तेषां छन्दसां 'पराद्ध्या शक्करी' । पराद्र्धे उपरि भागे भवा पराद्ध्या, "परावराधमोत्तमपूर्वाच्च"-इति[4] यत् । शक्कर्याः सप्तपदत्वं प्रसिद्धम्[5] । "परस्तादर्वाचीं वृङ्क्ते"-इति । पदादिक्रमेण 'परस्तात्'

---

१— अनुनिष्क्रमणं पदोपरि पदनिधानम् । यत्र सोमक्रयणी पदं निदधाति, तत्र द्वयोः पदयोर्निधान मिति शास्त्रदीपिकाव्याख्याने सोमनाथदीक्षितः ( ४. १. ) ।

२— का० श्रौ० सू० ७. ६. १७ द्रष्टव्यम् ।

३— ६अ० २ब्रा० १—८ कण्डिकासु द्रष्टव्या ।

४— पा० सू० ४. ३. ५ ।

५— "सप्तपदा शक्करी"-इति श्रुतिश्च तै० सं० ६. १. ८. २ ।

अवस्थितां गायत्र्याद्यन्तर्भावेन सर्वच्छन्दोरूपां शक्करीम् 'अर्वाचीं वृङ्क्ते' आवृङ्क्ते, स्वाभिमुख मावर्जितवान् भवतीत्यर्थः ॥ १ ॥

अनुक्रमणं समन्त्रकं कर्त्तव्य मित्याह— "स वै वाच इति। अनुक्रमणमन्त्रे सोमक्रयण्यवस्थादिरूपत्वाभिधानं न स्तुत्यर्थ मित्याह— "वस्वी ह्येषेत्यादिना[1]। वसुरुद्रादित्याः सवनत्रयदेवताः। 'अदितिः' प्रायणीयोदयनीयदेवता। 'चन्द्र'-शब्देनाल्हादकत्वादिह सुवर्णम्। हे सोमक्रयणि! त्वं वस्वादीनां स्वरूप मसि। तदपेक्षित-सोमसाधनत्वात् 'वस्वी ह्येषा'-इत्यभिधानम्। 'रम्णातु' रमयतु[2]। "रमु क्रीड़ायाम्[3]", व्यत्ययेन श्ना[4]। बृहस्पतिस्त्वेत्यस्यार्थ माह— "ब्रह्म वै बृहस्पतिरिति। 'बृहस्पतिः' बृहतो मन्त्रस्य पालयिता, तदभिमनी देवता, गच्छतीं त्वां 'सुम्ने' सुखकरे। यत् सुखकरं तत् साधु; अतः "सुम्ने रम्णातु"—इति यदाह, तेन 'साधुना' मार्गेण 'आवर्त्तयत्वित्येवाह'। "रुद्रो देवो वसुभिरिति। हे सोमक्रयणि! तव सुखं 'वसुभिः' सहितो 'रुद्रः' 'आचके' काम-यते। इति मन्त्रभागस्यार्थः। रुद्रौत्सुक्यप्रार्थनाया उपयोगं दर्शयति— "अप्रणाशायेति। शिष्टं गतम्[5] ॥ २ ॥

"अथ सप्तमं पद मिति[6]। यजमान मितरांस्त्वर्त्विजोऽपेक्ष्य 'पर्युपविशन्ति'-इति बहुवचनम्, 'परि' परितः। 'सः' अध्वर्युः।

---

१— वा० सं० ४. २१ द्रष्टव्यः।

२— "रम्णातिः संयमनकर्मा विसर्जनकर्मा वा"—इति निरु० १०. १. ९।

३— भ्वा० आ० ८५३ धा०। ४— पा० सू० ३. १. ८५।

५— १२७ पृ० ५ पं०। ६— का० श्रौ० सू० ७. ६. १८ क द्रष्टव्यम्।

होमाय हिरण्यनिधानं प्रशंसति— "न वा अनग्नाविति । हिरण्यस्याग्निरेतस्त्वं प्रागुक्तम् । होमसाधन माज्यं प्रशंसति— वज्रो वा इति । "घृतं वै देवा वज्रं कृत्वा सोम मघ्नन्"-इत्यादि[1]श्रुत्यन्तरप्रसिद्धिर्वज्रो वा इति 'वै'-शब्देन द्योत्यते । 'स्तृणुते' हिनस्ति, 'तां' पदप्रदेशस्थां मृद मित्यर्थः ॥ ३ ॥

पदे समन्त्रकं होमं विधत्ते— "स जुहोत्यदित्या इति[2] । अय मर्थः । हे आज्य ! 'त्वा' त्वाम् 'अदित्याः' पृथिव्याः 'मूर्द्धन्' मूर्द्धनि 'आजिघर्मि' सर्वतः चारयामि, जुहोमि । "घृ चरणदीप्त्योः[3]", अत्र चरण मर्थः । कीदृशे ? 'पृथिव्याः' अवयवभूते 'देवयजने' देवा इज्यन्ते अत्रेति देवयजनम् । 'घृतवत्' घृतोपेतम् । 'इडायाः' गोः । इडेति गोनाम[4] । तस्याः सोमक्रयण्याः 'पदं' पादनिधान मस्ति । अत इदं 'स्वाहा' स्वाहुत मस्तु[5] । इडापदस्य घृतोपेतत्वं तैत्तिरीयके श्रुतम्— "यदेवास्यै पदात् घृत मपीड्यत तस्मादेव माह"-इति[6] । मन्त्रं व्याचष्टे— "इयं वै पृथिव्यदितिरित्यादिना । 'घृतवत्स्वाहा'-इत्यस्य तात्पर्य माह— "घृतवद्धेतदिति । 'एतत्' एतेन मन्त्रभागपाठेन घृतयुक्त मेव सत् पुनराज्येन चापि संयुक्तं स्यादित्यर्थः ॥ ४ ॥

---

१— तै० सं० ६. २. १. ७ । इहाप्युत्तरत्र "वज्रो वा आज्य मेतेन वै देवा वज्रेणाज्येन पुरः प्राभिन्दन्"—इति ४. ४. ६ ।

२— का० श्रौ० सू० ७. ६. १८ ख ।
३— जु० प० १४ धा० ।

४— निघ० २. ११. ७ ।
५— मन्त्र एषः वा० सं० ४. २२. १ ।

६— तै० सं० ६. १. ८. ५ ।

पादस्य परिलेखनं सार्थवादं विधत्ते— "अथ स्फ्य मादायेति[१]। स्फ्यस्य वज्रत्वं तैत्तिरीयैः स्पष्ट माम्नातम्— "इन्द्रो वृत्राय वज्रं प्राहरत्, स त्रेधा व्यभवत्; स्फ्यस्तृतीयं, रथस्तृतीयं, यूपस्तृतीयम्"-इति[२]। परिलेखनस्य त्रिरावृत्तिं विधत्ते— "त्रिः ह्रल इति ॥ ५ ॥

परिलेखनमन्त्रं विधत्ते— "स परिलिखतीति[३]। 'अस्मे'-इत्यस्य तात्पर्य माह— 'यजमाने'-इति। 'अस्मे' अस्मदीये 'यजमाने'। सप्तमपदपांसोः स्थाल्यां स्थापनं समन्त्रकं विधत्ते— "अथ समुल्लिख्येति[४]। हे पदपांशो! 'ते' तव 'बन्धुः' स्नेहबन्धः 'अस्मे' अस्मदीये 'यजमाने' अस्त्विति मन्त्रार्थः[५]। "सुपां सुलुक्"-इत्युभयत्र सप्तम्याः शे-भावः[६] ॥ ६ ॥

"अथाप इति[७]। परिलिखितप्रदेशे अपां निनयनं विधाय, प्रशंसति— "यत्रेत्यादिना। खननं हिंसात्मकत्वात् क्रूरीकरणम्, अपान्त्वौष्ण्यनिवारकत्वाच्छान्तिरूपत्वं प्रसिद्धम्। अतः 'शान्त्या अद्भिः' शान्तिरूपाभिरद्भिः तत् क्रौर्यं शमितवान् भवति। निनयनस्य प्रयोजनान्तरम्— "तदद्भिरिति ॥ ७ ॥

"अथ यजमानायेति। "पदं प्रयच्छतीति[८]। 'पदं' स्थालीस्थं

---

१— का० श्रौ० सू० ७. ६. १६ द्रष्टव्यम्।
२— तै० सं० ६. १, ३. ११। ३— वा० सं० ४. २२. २।
४— का० श्रौ० सू० ७. ६. २० द्रष्टव्यम्। ५— वा० सं० ४. २२. ३।
६— पा० सू० ७. १. ३६। ७— का० श्रौ० सू० ७. ६. २१ क।
८— का० श्रौ० सू० ७. ६. २१ ख।

पदपांशुम्। 'रै'-शब्दार्थ माह— "पशवो वै राय इति। 'त्वे'-इत्येतत्[1] सप्तम्यन्त मिति व्याचष्टे—"त्वयि पशव इत्येवैतदाहेति। अध्वर्युदत्तस्य पांशोः समन्त्रकं प्रतिग्रहं विधत्ते— "तद्यजमान इति[2]। 'मे रायः' इति[3] पूर्ववद् व्याख्येयम् ॥ ८ ॥

"अथाध्वर्युरात्मान मिति[4]। 'वयं वियौष्म' इति[5] पूजार्थं बहुवचनम्। वियुक्ता मा भूत्वा यौष्मेति। "यु मिश्रणामिश्रणयोः[6]"-इत्यस्य लुङि माङ्योगादड्भावः[7] ॥ ९ ॥

"अथ पत्न्या इति। 'प्रतिपराहरन्ति' प्रयच्छेयुरित्यर्थः। तथा च कात्यायनः— "हृत्वा पत्न्यै पदं प्रयच्छति"-इति[8]। पत्नी खलु प्रतिष्ठानिलयनरूपा। गृहाणां बहुत्वेऽपि प्रतिष्ठाया एकत्वादेक-वचनम्। गृहं यथा धान्यादिनिक्षेपस्थान मेवं पत्न्यपीत्यर्थः। स्पष्ट मन्यत् ॥ १० ॥

"तां नेष्टेति। 'तां' गृहीतपांशुपत्नीम्। 'तोतः'-इति तोक-समानार्थः। 'रायः' धनानि, 'तोतः' पुत्रः, स्वीकरोत्वित्यर्थः। यद्वा 'तोतः' त्वत्तः, त्वयि रायः सन्त्विति शेषः[9]। "अथैनां सोमक्रयण्येति। 'एनां' पत्नीं 'सोमक्रयण्या' 'सञ्ज्ञापयति' 'नेष्टा'। सोमक्रयणी सेयम्, तया पत्नी मनेन मन्त्रेण दर्शयेत्। गतिबुद्ध्याद्यर्थाभावात्[10] सोमक्रयण्याः कर्मत्वाभावः। सञ्ज्ञापनं प्रशंसति— "वृषा वा इति।

१— वा० सं० ४. २२. ४।
२— का० श्रौ० सू० ७. ६. २२।
३— वा० सं ४. २२. ५।
४— का० श्रौ० सू० ७. ६. २३।
५— वा० सं० ४. २२. ६।
६— अदा० प० २३ धा०।
७— पा० सू० ६. ४. ७४।
८— का० श्रौ० सू० ७. ६. २४।
९— वा० सं० ४. २२. ७।
१०— पा० सू० १. ४. ५२।

"वृषा वै सोमः"-इति सोमो निर्दिष्टः। कस्तस्य प्रसङ्ग इति तत्राह— "एष वा अत्रेति। 'अत्र' सोमक्रयप्रस्तावे सोमक्रयण्याः सोमसम्पत्त्यर्थत्वात्। सैव 'एषः सोमः'। सोम इति विधेयस्य पुंल्लिङ्गत्व मपेक्ष्यैष इति पुंल्लिङ्गत्वम्। अतः 'एतत्' एतेन उभयोः सम्बन्धेन उत्पादनसमर्थं 'मिथुन मेव' सम्पादितं भवति॥ ११ ॥

"स सञ्ज्ञापयतीति। सञ्ज्ञापनमन्त्रं पठति— "समख्ये देवेत्यादिना[1]। अत्र कात्यायनः— "एनां वाचयति सोमक्रयण्या च समीक्ष्यमाणां समख्य इतीति[2]। मन्त्रस्याय मर्थः। अहं 'धिया देव्या' धीर्देवी हि सोमक्रयणी प्रागुक्ता[3]। अतो वाग्रूपया सोमक्रयण्या समख्ये दृष्टा भवामीत्यर्थः। "ख्या प्रकथने" इत्यस्य[4] लङुत्तमैकवचने "अस्यतिवक्ति"-इत्यादिना[5] अङ्, कर्मणि द्रष्टव्यः; अत एवात्मनेपदम्। "दक्षिणासि यज्ञियासि"—इति प्रागुक्तत्वात्[6] दक्षिणापि सोमक्रयणी। अतः 'उरुचक्षसा' प्रभूतदर्शनया तया समख्ये। अथ प्रत्यक्षवादः। हे सोमक्रयणि! 'मे आयुः मा प्रमोषीः'। 'मा उ अहं' अह मपि 'तव' आयुः मा प्रमोषिषम्। हे 'देवि!' 'तव' 'सन्दृशि' सन्दर्शने सति 'वीरं' पुत्रं 'विदेय' लभेय। अयं मन्त्र आशीःपर इत्याह— "आशिष मेवैतदिति। 'वीर'-शब्दार्थ माह— "पुत्रो वै वीरः"-इति॥ १२ ॥

---

१— वा० सं० ४. २३। २— का० श्रौ० सू० ७. ६. २६।
३— पुरस्तात् २. ४. १६ ( १३३ पृ० )।
४— अदा० प० १० ५० धा०। ५— पा० सू० ३. १. ५२।
६— वा० सं० ४. १९ मन्त्रव्याख्याने पुरस्तात् २. ४. १६ ( १२२ पृ० )।

सोमक्रयण्या लक्षण मभिधातु माह— "सा या बभ्रुः पिङ्गा-क्षीत्यादिना। बभ्रुः पिङ्गाक्षी सोमक्रयणी श्रेष्ठेत्यभिधातु माख्या-यिका माह— "यत्र वेति। गोसहस्रदक्षिणाविभागसमये 'सहस्रं' त्रेधा 'व्यैरयेता' विभज्य प्रेरितवन्तौ। 'ताम्' अतिरिक्तां 'त्रेधा' बभ्रुवरुणरोहिणीरूपेण त्रिविधां 'प्राजनयताम्' उदपादयताम्। उत्पादनप्रकारस्तैत्तिरीयकेऽपि स्पष्ट माम्नातः— "ता मप्सु प्रावे-शयन्त्सोमायो देहीति सा रोहिणी पिङ्गलैकहायनी रूपं कृत्वा त्रयस्त्रिंशता च त्रिभिश्च शतैः सहोदैत्"—इत्यादिना[1]। अतः 'एतर्हि' इदानी मपि ॥ १३ ॥

त्रिविधायास्तस्या गोः मुख्यानुकल्पभेदेन सोमक्रयणीत्वं प्रदर्शयितुं तद्विभाग माह— "सा येति। 'बभ्रुः' चतुर्वर्णा, पिङ्गले अक्षिणी यस्याः सा 'पिङ्गाक्षी', 'सा' सोमक्रयणार्हत्वात् 'सोम-क्रयणी'। 'रोहिणी' रोहितवर्णा, सा 'वार्त्रघ्नी' वृत्रहा इन्द्रः, तद्देवत्या। इदानीं ततो 'राजा सङ्ग्रामं जित्वा' परकीयाद् राष्ट्रात् 'यां' रोहिणीम् 'उदाकुरुते' स्वीकरोति[2], सा वार्त्रघ्नीत्यर्थः। 'श्येताक्षी' कृष्णलोचना, 'सा पितृदेवत्या'। 'इदं' इदानीं 'पितृभ्यः' अर्थाय 'घ्नन्ति' ॥ १४ ॥

इत्थं विधानस्वरूप मभिधाय विनियोगप्रकार माह— "सा येति। बभ्रु-पिङ्गाक्षी सोमक्रये मुख्या। तदभावे 'अरुणा' अव्यक्तरागा। तदभावे 'रोहिणी'। सा यदि श्येताक्षी स्यात्, तादृश्याः 'आशाम्' अपि 'नेयात्' न कुर्यात्। तत्र कात्यायनः— "सोमक्रयणी तिष्ठ-

---

१— तै० सं० ७.१.६.२।        २— 'वशीकुरुते'—इति च-पाठः।

त्यलक्षिताव्यङ्गाप्रवीतारज्जुबद्धा बभ्रुः पिङ्गला, पिङ्गलाभावेऽरुणा, अरुणाभावे रोहिण्यक्षेताक्षी"-इति[1] ॥ १५ ॥

सोमक्रयण्या गर्भात् प्राक् अवस्थानं सार्थवादं विधत्ते— "सा स्यादप्रवीतेति । "वी गतिप्रजननकान्त्यशनखादनेषु[2]", अत्र प्रजनन मर्थः । 'अप्रवीता' अगृहीतगर्भेत्यर्थः । 'अयातयाम्नी' अगतरसा । बहुभिरसकृदुच्यमानाया अपि वाचो गतरसत्वं प्रसिद्धम् । अतः सोमक्रयण्या वाग्रूपत्वादयातयाम्न्या भवितव्यम्[3] । अत एकहायनी-परिग्रहे गर्भरूपरसनिर्गमाभावात् वागानुगुण्यं भवति । तस्माद् अप्रवीता भवेत् । इत्थं वर्णवयोविशेष मभिधाय अङ्गवैकल्याभाव माह— "अवण्डाकूटेति । 'वण्डा' वर्द्धिष्णुः, 'अवण्डा' तद्विपरीता भवेत् । एव मुत्तरत्रापि । 'कूटा' एकशृङ्गी, 'काणा' एकाक्षी, 'कर्णा' छिन्नकर्णा, 'लक्षिता' तप्तायःशलाकया विहिता, 'सप्त शफा' एकस्मिन् पादे एकेन शफेन हीना; उक्तदोषवर्जिता । 'एकरूपा' उक्तदोषवर्जितत्व मेवैकरूप्यम्, सम्पूर्णावयवेत्यर्थः[4] ॥ १६ ॥ ४ [ ३. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ॥

---

१—का० श्रौ० सू० ७. ६. १४ द्रष्टव्यम् । २— अदा० प० ३८ धा० ।
३— "वाग् वा एषा सोमक्रयणी"-इति तै० सं० ६. १. ७. ८ ।
४— तैत्तिरीयेऽप्येव मेव ६. १. ७. १६—१८ द्रष्टव्यम् ।

( अथ द्वितीयं ब्राह्मणम् )

पदꣳ समुप्य पाणी ऽअवनेनिक्ते । तद्यत्पाणी ऽअवने-निक्ते व्वज्रो वा ऽआज्यꣳ रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमꣳ हिनसानीति तस्मात् पाणी ऽअवने-निक्ते ॥ १ ॥

अथास्याꣳ हिरण्यं बध्नीते । द्वयं वा ऽइदं न तृतीय मस्ति सत्यञ्चैवानृतं च सत्य मेव देवा अनृतं मनुष्या अग्निरेतसं वै हिरण्यꣳ सत्येनाꣳशूनुपस्पृशानि सत्येन सोमं पराहणानीति तस्माद्वा ऽअस्याꣳ हिरण्यं बध्नीते ॥ २ ॥

अथ सम्प्रेष्यति । सोमोपनहन माहर सोमपर्य्याणहन माहरोष्णीष माहरेति स यदेव शोभनं तत्सोमोपन-हनꣳ स्याद्वासो ह्यस्यैतद् भवति शोभनꣳ ह्येतस्य* व्वासः स यो हैनꣳ शोभनेनोपचरति शोभते हाथ य आह यदेव किञ्चेति यद्वैव किञ्च भवति तस्माद्यदेव शोभनं तत्सोमोपनहनꣳ स्याद्यदेव किञ्च सोमपर्य्या-णहनम् ॥ ३ ॥

यद्युष्णीषं व्विन्देत् । उष्णीषः स्याद् यद्युष्णीषं न†

---

* 'ह्येतस्य'–इति ग, घ ।　　　† 'न'–इति ग, घ ।

विन्देत्सोमपर्य्याणहनस्यैव द्व्यङ्गुलं वा* त्र्यङ्गुलं वावकृन्त्ये-दुष्णीषभाजन मध्वर्युर्वा यजमानो वा सोमोपनहन† मादत्ते य एव कश्च सोमपर्य्याणहनम् ॥ ४ ॥

अथाग्रेण राजानं व्विचिन्वन्ति। तदुदकुम्भ उपनि-हितो भवति तद् ब्राह्मण उपास्ते तदभ्यायन्ति प्राञ्चः ॥ ५ ॥

तदायत्सु व्वाचयति। एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोनामानाꣳ‡ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्येकं वा ऽएष क्रीयमाणोऽभिक्रीयते छन्दसा मेव राज्याय छन्दसाꣳ साम्राज्याय घ्नन्ति वा ऽएन मेतद् यदभिषुण्वन्ति त मेतदाह छन्दसा मेव त्वा राज्याय क्रीणामि छन्दसाꣳ साम्राज्याय न बधायेत्यथेत्य प्राङुपविशति§ ॥ ६ ॥

सोऽभिमृशति। आस्माकोऽसीति स्व इव ह्यस्यैतद् भवति यदागतस्तस्मादाहास्माकोऽसीति शुक्रस्ते ग्रह्य‖ इति शुक्रꣳ ह्यस्माद् ग्रहं ग्रहीष्यन् भवति व्विचितस्त्वा व्विचिन्वन्त्विति सर्व्वत्वायैतदाह ॥ ७ ॥

---

* 'वा'—इति वेबर्-दृष्टः। † 'सोमोपनह'—इति ग, घ।

‡ 'ब्रूताच्छन्दोमानाꣳ'—इति सा०—सम्मत इति डा० वेबरः।

§ 'प्राङुपविशति'—इति ग, घ। ‖ 'गृह्य'—इति क, सा०—सम्मतश्च।

अत्र हैके। तृणं वा काष्ठं वा विच्छा[*]पास्यन्ति तदु तथा न कुर्यात् क्षत्रं वै सोमो विडन्या ओषधयोऽन्नं वै क्षत्रियस्य विट् स यथा ग्रसित मनुहायाच्छिद्य परास्येदेवं तत् तस्मादभ्येव मृशेद्विचितस्त्वा विचिन्वन्त्विति तद्य एवास्य विचेतारस्त एनं विचिन्वन्ति ॥ ८ ॥

अथ व्यासः। द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति तद्राजानं मिमीते स यद्राजानं मिमीते तस्मान्मात्रा मनुष्येषु मात्रो[†] यो चाप्यन्या मात्रा ॥ ९ ॥

सावित्र्या मिमीते। सविता वै देवानां प्रसविता तथो हास्मा एष सवितृप्रसूत एव क्रयाय भवति ॥१०॥

अतिच्छन्दसा मिमीते। एषा वै सर्व्वाणि छन्दांसि यदतिच्छन्दास्तथो हास्यैष सर्वैरेव छन्दोभिर्म्मितो भवति तस्मादतिच्छन्दसा मिमीते ॥ ११ ॥

स मिमीते। अभि त्यं देवꣳ सवितार मोण्योः कविक्रतु मर्च्चामि सत्यसवꣳ रत्नधा मभि प्रिय मतिं कविम्[‡]।

---

* 'भित्त्वा'—इति सा०—सम्मतः।

† 'मात्रो'—इति क, ख ; सायणासम्मतोऽयं पाठ इति डा० वेबरस्य।

‡ 'कविं'—इत्यनुस्वारान्तः पाठः क-ख-पुस्तकयोः, डा०—वेबर्-दृष्टश्च।

ऊर्द्धा यस्यामतिर्भा ऽअदिद्युतत्सवीमनि हिरण्यपाणि-रमिमीत सुक्रतुः कृपा स्वरिति ॥ १२ ॥

एतया सर्व्वाभिः। एतया चतसृभिरेतया तिसृभि-रेतया द्वाभ्या मेतयैकयैतयैवैकयैतया द्वाभ्या मेतया तिसृभिरेतया चतसृभिरेतया सर्व्वाभिः समस्याञ्जलि-नाध्यावपति ॥ १३ ॥

स वा ऽउदाचं न्याचं मिमीते। स यदुदाचं न्याचं मिमीत ऽइमा एवैतदङ्गुलीर्न्नानाजानाः करोति तस्मा-दिमा नाना जायन्तेऽथ यत्सह सर्व्वाभिर्म्मिमीते* सुंश्लिष्टा इव हैवेमा जायेरंस्तस्माद्वा ऽउदाचं न्याचं मिमीते ॥ १४ ॥

यद्वेवोदाचं न्याचं मिमीते। इमा एवैतन्नानावीर्य्याः करोति तस्मादिमा नानावीर्य्यास्तस्माद्वा ऽउदाचं न्याचं मिमीते ॥ १५ ॥

यद्वेवोदाचं न्याचं मिमीते। व्विराज मेवैतदर्व्वाचीञ्च पराचीञ्च युनक्ति पराच्यह देवेभ्यो यज्ञं व्वहत्यर्व्वाची मनुष्यानवति तस्माद्वा ऽउदाचं न्याचं मिमीते ॥ १६ ॥

अथ यद्दशकृत्वो मिमीते। दशाक्षरा वै व्विराड् वैराजः सोमस्तस्माद्दशकृत्वो मिमीते ॥ १७ ॥

---

* '०र्म्मिमीत'-इति च डा०-वेबर्-दृष्टः पाठः।

अथ सोमोपनहनस्य। समुत्पाद्यान्तानुष्णीषेण विग्रथ्नाति प्रजाभ्यस्त्वेति प्रजाभ्यो ह्येनं क्रीणाति स यदेवेदꣳ शिरश्चाꣳसौ चान्तरोपेनित मिव तदेवास्यैतत् करोति ॥ १८ ॥

अथ मध्येऽङ्गुल्याकाशं करोति। प्रजास्त्वानुप्राणन्त्विति त मुयतीव वा ऽएन मेतत् समायच्छन्नप्राण मिव करोति तस्यैतदत एव मध्यतः प्राण मुत्सृजति तं ततः प्राणन्तं प्रजा अनुप्राणन्ति तस्मादाह प्रजास्त्वानुप्राणन्त्विन्ति तꣳ सोमविक्रयिणे प्रयच्छत्यथातः पणनस्यैव* ॥ १९ ॥ ५ ॥

॥ इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् [ ३. २. ] ॥

प्रासङ्गिक मभिधायेदानी मध्वर्योः पात्रे पांसुप्रक्षेपानन्तरं हस्तप्रक्षालनं विधत्ते— "पदं समुप्येति"[१]। अवनेजन मुदकेन शोधनम्। उक्तावनेजनं सोमहननपरिहारत्वेन प्रशंसति— "तद्यत् पाणी इति। "घृतं वै देवा वज्रं कृत्वा सोम मघ्नन्"-इति श्रुतेः[२] आज्यस्य वज्रत्वम्। सोमस्य यागसाधनद्वारेण सर्वौषधीयत्वेनान्ना-

---

* 'पणनस्यैव'-इति ग, घ।

१— का० श्रौ० सू० ७. ६. २७ क।

२— तै० सं० ६. २. २. ७। इहाप्युत्तरत्र ४. ४. ६ द्रष्टव्यम्।

द्यात्मकतया च सर्वजगदुत्पादकत्वात् रेतस्त्वम्। एतस्य हिंसानर्हत्वाद्, यजनीयान्यस्य सोमघातकत्वात्, सोमहतिपरिहारायावनेजनं कर्त्तव्य मिति स्तुतिः ॥ १ ॥

अध्वर्योः स्वाङ्गुल्यां हिरण्यबन्धनं विधाय प्रशंसति— "अथास्या मिति[1]। 'अस्याम्'-इत्यनामिकाङ्गुल्या मभिनयेन प्रदर्शनम्। हिरण्यस्य देवसम्बन्धद्वारा सत्यत्वाभिधानाय सत्यानृतद्वैविध्याभिधानम्। उक्तं हिरण्यस्याग्निरेतस्त्वम्[2]। उक्तप्रकारेण हिरण्यस्य सत्यत्वात् तेन 'अंशूनुपस्पृशानि' अभिषवाप्यायनादिषु। तेन 'सोमं' 'पराहणानि' व्यापारयाणि। उपस्पर्शाद्युपयोगाय हिरण्यं धारयेदित्यर्थः। पाणेर्हिरण्यबन्धनस्य कालविकल्पं कात्यायनो दर्शयति— "हिरण्यं बध्नीतेऽनामिकाया माप्यायनाभिषवाऽऽश्वदाभ्येषु वा[3]"-इति[4] ॥ २ ॥

सोमार्थ मध्वर्योः सम्प्रेषं दर्शयति— "अथ सम्प्रेष्यतीति[5]। सोम उपनह्यते येन तत् 'सोमोपनहनं' सोमबन्धनवस्त्रम्। 'सोमपर्याणहनम्' शकटेन सह सोमस्य परितो बन्धनवासः। 'उष्णीषं' सोमोपनहने स्थापितस्य सोमस्य बन्धनार्थं वासः। 'यद्' वस्त्रं 'शोभनं' बहुमूल्यम्, तत् 'एव' सोमोपनहनं कर्त्तव्यम्। तथा च कात्यायनः— "शोभनं सोमोपनहन मिति[6]। आपस्तम्बस्तु क्षौमं कर्त्तव्य मित्याह— "क्षौमं वासो द्विगुणं त्रिगुणं वा"—इत्यादिना[7]।

---

१— का० श्रौ० सू० ७. ६. २७ ख। २— पुरस्तात् १२० पृ० १४ पं०।
३— 'च'-इति जर्मन्-मुद्रितपाठः। ४— का० श्रौ० सू० ७. ६. २८।
५— का० श्रौ० सू० ७. ७. १। ६— का० श्रौ० सू० ७. ७. ३।
७— आप० श्रौ० सू० १०. १४. ७।

शोभनत्वे उपपत्ति माह— “वासो ह्यस्यैतद् भवतीति। सोमस्याच्छादनार्थत्वाच्छोभनेन भवितव्यम्। अतस्तेनोपचरन्नपि शोभनवस्त्रादिना स्वयं शोभते। विपर्यये चेप माह— “अथ य आहेति। यत् किञ्चिद् वासोऽत्र सोमाय नयेति[1] ब्रुवन्, स्वयं यत् किञ्चिद् भवति, लोकैरविदिताभासो[2] भवतीत्यर्थः। सोमपर्याणहने नायं नियम इत्याह— “यदेव किञ्चेति ॥ ३ ॥

उष्णीषस्थाने विकल्प माह— “यद्युष्णीषं विन्देदिति[3]। उष्णीषस्य स्वीकारः कर्त्तव्य इति शेषः। कर्त्तितवस्त्रांशः ‘उष्णीषभाजनम्’ उष्णीषस्थाने भवतीत्यर्थः। आनीतानां मध्ये सोमक्रयस्थानं प्रति सोमोपनहनस्यादान मध्वर्युयजमानयोरन्यतरेण कर्त्तव्य मित्याह— “अध्वर्युर्वेति[4]। सोमपर्याणहनस्यादाने तु न नियमः[5] ॥ ४ ॥

“अथाग्रेणेति। ‘अग्रेण’ प्राचीनवंशस्य पुरोदेशे, उपरवप्रदेशे इत्यर्थः। ‘विचिन्वन्ति’ साधयन्ति, अनुपादेयांश मपनयन्ति। ‘तत्’ तत्र क्रयप्रदेशे निहितोदककुम्भस्य समीपे ‘ब्राह्मणः’ सोमविक्रयी निवसेत्, ‘तत्’ स्थानं प्रत्यभिगच्छन्ति[6]। ‘प्राञ्चः’ सोमक्रयप्रदेशाभिमुखाः ॥ ५ ॥

---

१— ‘वासोमात्र मानयेति’–इति क।

२— ‘०रविदितप्रभासो’–इति, ‘०रविदित आभासो’–इति च, क।

३— का० श्रौ० सू० ७. ७. ४।

४— का० श्रौ० सू० ७. ७. ५।

५— अत एव सूचितं कात्यायनेन ‘अन्य इतरे’–इति ( ७. ७. ६. )।

६— का० श्रौ० सू० ७. ७. ७।

"तदायत्त्विति । 'आयतु' ऋत्विग्यजमानेषु क्रयदेशं समागच्छतु अध्वर्युर्यजमानम् "एष ते"— 'इति'[1] अमुं 'वाचयति' वाचयेत् । अथ मर्थः । हे सोम! 'ते' तव भागः' 'गायत्रः' प्रातस्सवने गायत्र्या सम्बन्धी भवति। अतो गायत्र्यादिदेवताप्रीत्यर्थ एव तव क्रयो न बधार्थ इत्यभिप्रायः। 'इति' एवं रूपं सोमस्तुत्यात्मकं 'मे' वचनं 'सोमाय'[2] 'ब्रूतात्' हे अध्वर्यो! ब्रूहि। एव मुत्तरयोरपि द्रष्टव्यम् । "गायत्रं प्रातस्सवनं"–"त्रैष्टुभं माध्यन्दिनं सवनम्"- इत्यादिश्रुत्या[3] प्रातस्सवनादीनां गायत्राद्यभिमानात्तत्सवनार्हाणां गायत्रादिसम्बन्धः । 'छन्दोमाः' चतुर्विंशश्चतुश्चत्वारिंशाष्टचत्वारिंशाः, तेषां 'छन्दोमानां' 'साम्राज्यं गच्छ' । स्तोमगतचतुर्विंशत्यादिसङ्ख्यासाम्याद् गायत्रादयः 'छन्दोमाः'[4], तेषां साम्राज्यप्राप्तिर्नाम सवनत्रयप्राप्तिरेव; "गायत्रं प्रातस्सवनम्"-इत्यादिश्रुतेः[5] । शिष्टं पूर्ववत् ॥

एतत् प्रशंसति— "एकं वा एष इति । 'एषः' 'क्रीयमाणः' क्रयेण सम्पाद्यमानः सोमः 'एकं वै' एकं खलु प्रयोजनम् 'अभि'

---

१— वा० सं० ४. २४. १ ।

२— 'स्तुत्यात्मक मेव वचनं मे सोमाय'-इति क ।

३— तै० सं० २. २. ९. ५ । छा० ब्रा० ५. १६. १ । ऐ० ब्रा० ६. १. २ ।

४— 'छन्दोभिर्गायत्रीत्रिष्टुब्जगतीभिरक्षरसङ्ख्याद्वारेण उपमीयन्ते इति चतुर्विंशादयस्त्रयश्छन्दोमाः'-इत्यादिः सायनग्रन्थो द्रष्टव्यः ( ऐ० ब्रा० ५. ३. १. ) । तदेवं चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाख्यास्त्रयः स्तोमाश्छन्दोमा ज्ञेयाः । तेषाञ्च विधायकवचनानि सामब्राह्मणे समाम्नातानि ( ३. ८. ९-११, १२, १३. ) ।

५— तृतीया टीप्पणी द्रष्टव्या ।

लक्ष्य 'क्रीयते' विक्रीयते, अभिषवादिना रसात्मना संस्क्रियते। किं तदेक मिति, तदुच्यते— 'छन्दसां राज्याय' तत्प्राप्तये। न केवलाय राज्याय, किन्तु 'साम्राज्याय'। प्रोत्साहनस्यार्थवत्तायै बाधप्रसक्तिं दर्शयति— "घ्नन्ति वेति। वस्तुत एवं सत्यपि सोम-भीत्यपगमाय 'तं' सोमं प्रति 'एतत्' छन्दसां साम्राज्य मिति वाक्यम् 'आह'। कि मिति 'छन्दसा मेव राज्याय त्वा क्रीणामि' इत्याह, 'न बधायेति'। "अथेत्यादि। 'अथ' सोमम् 'एत्य' 'प्राङ्' प्राङ्मुखः 'उपविशति'[१] ॥ ६ ॥

"सोऽभिमृशतीति[२]। "आस्माकोऽसि" —इत्यादिना[३] सोम मभिमृशेत्। हे सोम! त्वम् 'आस्माकोऽसि' अस्माकं सम्बन्ध्यसि। "तस्मिन्नणि च युष्माकास्माकौ"—इत्यण्[४], तत्सन्नियोगेनास्माका-देशश्च। 'एतत्' एतेन पाठेन 'स्व इव' य एव 'भवति', 'शुक्रः' शुक्राख्यः, 'ते' 'गृह्यः' ग्रहीतव्यः। "प्रत्यपिभ्यां ग्रहेः"-इति[५] अनुपसृष्टादपि ग्रहेश्छान्दसः क्यप्, ग्राह्य इत्यर्थः। "अमात्योऽसि शुक्रस्ते ग्रहः"-इति तैत्तिरीयकम्[६]। 'विचितः' विचयनस्य शोध-नस्य कर्त्तारः 'ते' त्वां 'विचिन्वन्तु' शोधयन्तु[७]। विचिन्वद्भिरेव विवेके सति वैगुण्यासम्भवात् सर्वत्वं कार्त्स्नं भवति ॥ ७ ॥

विवेचने विषये पक्षान्तर मुपन्यस्य निराचष्टे— "अत्र हैक

---

१— का० श्रौ० सू० ७. ७. ६ क। २— का० श्रौ० सू० ७. ७. ६ ख।
३— वा० सं० ४. २४. २। ४— पा० सू० ४. ३. २।
५— पा० सू० ३. १. ११८। ६— तै० सं० १. २. ६. १।
७— का० श्रौ० सू० ७. ७. १०।

इति[1]। 'अत्र' सोमविवेचनविषये सोममध्यगतं 'तृणं वा काष्ठं वा' 'भित्त्वा' सोमसकाशाद् भेदं कृत्वा बहिः प्रक्षिपन्ति। अत्र चैकं दोष माह— "क्षत्रं वै सोमः इति। सोमस्य क्षत्रत्वं श्रूयते— "यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः"— इत्यादिना[2]। इयं प्रसिद्धिः "क्षत्रं वै"-इति 'वै'-शब्देन द्योत्यते। 'ग्रसितं' ग्रस्तम्, भुञ्जितम्[3] 'अनुहाय' गृहीत्वा, 'आच्छिद्य' पृथक्-कृत्य 'परास्येत्' बहिः प्रक्षिपेत्। यस्मात् सोमान्तर्गतं तृणादिकं सोमस्यान्नम्, 'तस्मात्' स्वय मविवेचयन् यजमानोऽभ्यवमर्श मेव कुर्यात्; शोधनार्थन्तु 'विचिन्व-न्त्विति' पठेत्। अत्र सूत्रम्— "प्राङुपविश्यास्माकोऽसीति सोम मालभते न विचिनोत्यतस्तृणकाष्ठापासन मेके"-इति[4] ॥ ८ ॥

"अथ वास इत्यादि। 'वासः' सोमोपहननार्थं दशावस्त्राग्रम्। 'प्राग्दशं वा, उदग्दशं वा' प्रागग्र मुदगग्रं वेत्यर्थः[5]। आस्तृते वाससि सोमोन्मानं विधत्ते— "तद्राजानं मिमीते"-इति[6]। 'तत्' तत्र वाससि। 'तस्मात्' सोमोन्मानात् हेतोः 'मनुष्येषु' 'मात्रा' षण्णवत्यङ्गुल्यादिरूपा, इदानीं वर्त्तत इत्यर्थः। मात्रा यैवात्र सोमे, सा मनुष्येषु; सोमस्याखिलजगत्कारणत्वात्। न केवलं मनुष्यगतैव; अपि तु 'यो चापि' यैव खलु 'अन्या' पक्षिमृगवृक्षादिगता, सापि सोममात्रात्मिकैव ॥ ९ ॥

---

१— का० श्रौ० सू० ७. ७. ११।

२— उपरिष्टाद् (१४. ४. २. १३.) द्रष्टव्यम्।

३— 'भुजितम्'—इति क।  ४— का० श्रौ० सू० ७. ७. ९–११।

५— का० श्रौ० सू० ७. ७. १२।  ६—का० श्रौ० सू० ७. ७. १३।

विधीयमानोन्मानमन्त्रं देवताद्वारा प्रशंसति— “सावित्र्या मिमीत इति । ‘देवानां’ मध्ये ‘सविता’ सर्वकर्मविषयानुज्ञा-प्रदः ॥ १० ॥

मन्त्रगतं छन्दः प्रशंसति— “अतिच्छन्दसेति । अष्टिरतिशक्करी वास्य छन्दः, अतोऽतिच्छन्दस्त्वम् । एतस्मिन् छन्दसि चतुर्णां चतुर्णा मक्षराणां परित्यागेनाधस्तनानां छन्दसा मुत्पत्तेः सर्वच्छन्द-स्त्वम् ॥ ११ ॥

इदानीं मन्त्रं विधत्ते— “स मिमीतेऽभित्यं देव मिति[1] । मन्त्रस्याय मर्थः । ‘त्यं’ तं ‘सवितारं’ ‘देवम्’ ‘अभ्यर्चामि’ इति सम्बन्धः । कीदृशम् ? ‘ओण्योः’ अवित्र्योः, द्यावापृथिव्योर्मध्ये वर्त्तमान मित्यर्थः । ‘कविक्रतुं’ क्रान्तकर्माणम्, ‘सत्यसवं’ सत्यानु-ज्ञम्, ‘रत्नधां’ रमणीयानां फलानां धारकम्, ‘अभि’ अभितः ‘प्रियम्’, ‘मतिं’ मननवन्तम्, ‘कविं’ क्रान्तप्रज्ञम् । ‘यस्य’ सवितुः ‘अमतिः’ अन्येषा मविषया मतिः, ‘भाः’ च; अथवा अमतिविशे-षणम्, भासमाना सा ‘ऊर्द्धा’ ‘अदिद्युतत्’ द्योतते । किमर्थम् ? ‘सवीमनि’ प्रसवे निमित्तभूते सति, अनुज्ञार्थ मित्यर्थः । स तादृशः ‘स्वरणः’ शोभनगमन आदित्यः ‘कृपा’ कृपया ‘हिरण्य-पाणिः’ सन् ‘अमिमीत’ मिमीते, सोमोन्मानं करोति, करोति-त्यर्थः[2] ॥ १२ ॥

दशकृत्व उन्मानेऽप्यय मेव मन्त्र इत्यादिशन्मानप्रकारं दर्शयति—

---

१— वा० सं० ४. २५. १ । २— निरु० ६. ३. ३ द्रष्टव्यम् ।

"एतया सर्वाभिरिति"[1] । 'एतया' "अभि त्यं देवम्"— इत्यनयैव 'सर्वाभिः' अङ्गुलीभिः पञ्चभिः मिमीते । 'एतया' एव 'चतसृभिः' अप्यङ्गुलीभिः मिमीते। एव मवरोहक्रमेणैकैकाङ्गुल्युत्सर्गेण पञ्चवारं मीत्वा पुनरारोहणक्रमेणैकैकाङ्गुलिसंयोजनेन पुनरेतयैवर्चा पञ्चवारं मिमीते । एवं दशवार मुन्माय, अनन्तरं पाणिद्वयं 'समस्य' अञ्जलिं कृत्वा, तेनैकवार मभिमितस्य सोमस्योपरि 'आवपति' । शिष्टं सर्वं प्रक्षिपेत् । अत्र सूत्रम्— "सर्वाभिः प्रथम मङ्गुष्ठप्रभृति चैकोत्सर्गं द्विः कनिष्ठिकयैकोपचयस्त्वाञ्जलिना दशम मन्यद्वाध्या-वपश्रुतेः"-इति[2] । मानस्य दशसङ्ख्यया स्तूयमानत्वादाधिक्ये सति दशसङ्ख्याविरोधात् सूत्रकारेणाञ्जलिना दशम मन्यद्वेति विकल्पि-तम् ॥ १३ ॥

अङ्गुलीनां क्रमेणोत्सर्गे संयोजने च कृते योऽर्थसिद्धो मान-विषयः समञ्चनप्रसारणभावः, त मनूद्य बहुधा प्रशंसति— "स वा उदाचं न्याच मित्यादिना। 'उदाचं न्याचम्' अङ्गुलीः समच्य प्रसार्य चेत्यर्थः । 'तत्' तेनोक्तप्रकारमानेन 'अङ्गुलीः' 'नानाजानाः' पृथक्-पृथक्-जन्मवत्यः 'करोति'; कर्मफलभोगार्थत्वात् सृष्टेः । व्यतिरेके दोष माह— "अथ यत् सहेति । 'सर्वाभिः' संहताभि-रङ्गुलीभिः दशवार मपि मानं यदि कुर्यात्, तथा सति 'संश्लिष्टाः' परस्परसंहता एवाङ्गुलयो 'जायेरन्' ॥ १४ ॥

"यद्वेवोदाच मिति । उक्तरीत्या मानेन तु 'नानावीर्याः' पृथक्-पृथक्-कार्यसमर्थाः 'करोति' ॥ १५ ॥

---

१— का० श्रौ० सू० ७. ७. १४ । २—का० श्रौ० सू० ७. ७. १४-१९ ।

"यद्वेवेति। "विराज मेवैतदर्वाचीं च पराचीं च युनक्तीति। 'एतत्' एतेन अर्वाक्-पराग्-गतेन विराट्छन्दोदेवता मेव सङ्ख्याद्वारा अर्वाक् च पराक् च सोमे योजितवान् भवत्यध्वर्युः। सा सोमयुक्ता विराट्। "पराच्यहेति। 'अह'-इति विनिग्रहार्थो निपातः[1]। 'पराची' पराग्भूता ऊर्द्ध्वमुखी सती, उदञ्चनसामर्थ्येन 'यज्ञं' सोमरसं 'देवेभ्यः' 'वहति'; तथैव 'अर्वाची' अवाङ्मुखी सती, समञ्चनसामर्थ्येन 'मनुष्यान्' ऋत्विगादीन् 'अवति' ॥ १६ ॥

मानगतसङ्ख्यां प्रशंसति— "अथ यद् दशकृत्व इति। विराजो दशाचरत्वं प्रसिद्धम्। सोमोऽपि दशसङ्ख्याकैर्द्रव्यैः क्रीयमाणत्वेन सङ्ख्याद्वारा विराट्सम्बन्धाद् 'वैराजः' ॥ १७ ॥

"अथ सोमोपनहनस्येत्यादि। 'अन्तान् समुत्पार्य' अधःप्रसारितस्य वस्त्रस्य पर्यन्तप्रदेशान् एकत्र ( उच्चं[2] ) सङ्गृह्य 'उष्णीषेण' ग्रन्थिं कुर्यात्[3]। तत्र मन्त्रः— "प्रजाभ्यस्त्वेति[4]। 'प्रजाभ्यः' सदस्येभ्य ऋत्विग्भ्यः। उष्णीषेण ग्रथनं प्रशंसति— "स यद्वेद मिति। शिरस अंसयोश्चान्तरालप्रदेशो यथा विलग्न इव वर्त्तते, एवं ग्रन्थिकरणेन[5] कृतवान् भवति ॥ १८ ॥

ग्रन्थिमध्ये सुषिरं समन्त्रकं विधत्ते— "अथ मध्येऽङ्गुल्येति। 'मध्ये' सोमग्रन्थिमध्ये। सुषिरप्रदानेन 'प्राणन्तं' 'तं' त्वां सर्वाः 'प्रजाः' अपि 'अनु प्राणन्तु' 'इति'। 'समायच्छन्' अन्तान् सङ्गृह्णन् 'तम्'

---

१— निरु० १. २. ४ द्रष्टव्यम्। २— एषोऽधिकपाठः क-पुस्तकमात्रे।
३— का० श्रौ० सू० ७. ७. २०। ४— वा० सं० ४. २५. २।
५— 'ग्रन्थीकरणेन'–इति ङ, च।

'अयतीव' ग्लापयतीव 'अप्राणं' सोमं प्राणरहितम् 'इव' करोति[1], अतएव उपद्रवसम्भवाद्धेतोः तत्परिहाराय देहमध्ये उच्छ्वासरूपं 'प्राणम्' उद्गमयति। 'तस्मात्' प्रजाभ्स्त्वेति[2] मन्त्रं पठेत्। 'तं' सोमोपनहनवस्त्रे बद्धं सोमं 'सोमविक्रयिणे प्रयच्छति'[3]। अथातः पणनस्यैव', विधिरुच्यत इति शेषः ॥ १९ ॥ ५ [ ३. २. ] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् )

स वै राजानं पणते। स यद्राजानं पणते तस्मादिद्ँ सर्वं पण्यँ स आह सोमविक्रयिन् क्रय्यस्ते सोमो राजा३इति क्रय्य इत्याह सोमविक्रयी तं वै ते क्रीणानीति क्रीणीहीत्याह सोमविक्रयी कलया ते क्रीणानीति भूयो वा ऽअतः सोमो राजार्हतीत्याह सोम-

---

१— का० श्रौ० सू० ७. ७. २१। ८— वा० सं० ४. २५. ३।

३— का० श्रौ० सू० ७. ७. २२।

विक्रयी भूय एवातः सोमो राजार्हति महांस्त्वेव गोर्महिमेत्यध्वर्युः* ॥ १ ॥

गोर्वै प्रतिधुक्† । तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्‡ ॥ २ ॥

शफेन ते क्रीणानीति । भूयो वा अतः सोमो राजार्हतीत्याह सोमविक्रयी भूय एवातः सोमो राजार्हति महांस्त्वेव गोर्महिमेत्यध्वर्युरेतान्येव दश वीर्याण्युदाख्यायाह पदा तेऽर्द्धेन ते गवा ते क्रीणानीति क्रीतः सोमो राजेत्याह सोमविक्रयी वयांसि प्रब्रूहीति ॥ ३ ॥

स आह । चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्या इति स यदर्वाक् पणन्ते परः सम्पादयन्ति तस्मादिदं सञ्चत्सर्वं पण्य मर्वाक् पणन्ते परः सम्पादयन्त्यथ यदध्वर्युरेव गोर्वीर्याण्युदाचष्टे न सोमस्य सोमविक्रयी महितो वै सोमो देवो हि सोमो ऽथैतदध्वर्युर्गां महयति तस्यै पश्यन्वीर्याणि

---

* '०ध्वर्युः'—इति ग, घ । † 'प्रतिधक्'—इति ग, घ ।

‡ 'वाजिन'—इति क, 'वाजिनं'—इति ग, घ ।

क्रीणादिति तस्मादध्वर्युरेव गोर्व्वीर्य्याण्युदाचष्टे न सोमस्य सोमविक्रयी* ॥ ४ ॥

अथ यत्पञ्चकृत्वः पणते। संवत्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात् पञ्चकृत्वः पणते ॥ ५ ॥

अथ हिरण्ये व्वाचयति। शुक्रं त्वा शुक्रेण क्रीणामीति शुक्रꣳ ह्येतच्छुक्रेण क्रीणाति यत् सोमꣳ हिरण्येन चन्द्रं चन्द्रेणेति चन्द्रꣳ ह्येतच्चन्द्रेण क्रीणाति यत् सोमꣳ हिरण्येनामृत ममृतेनेत्यमृतꣳ ह्येतदमृतेन क्रीणाति यत्सोमꣳ हिरण्येन ॥ ६ ॥

अथ सोमविक्रयिण मभिप्रकम्पयति। सग्मे ते गोरिति यजमाने ते गौरित्येवैतदाह तद्यजमान मभ्याहृत्य न्यस्यत्यस्मे ते चन्द्राणीति स आत्मन्नेव व्वीर्य्यं धत्ते शरीर मेव सोमविक्रयी हरते तत् ततः सोमविक्रय्यादत्ते ॥ ७ ॥

अथाजायां प्रतीचीनमुख्यां वाचयति। तपसस्तनूरसीति तपसो ह वा ऽएषा प्रजापतेः सम्भूता यदजा तस्मादाह तपसस्तनूरसीति प्रजापतेर्व्वर्ण इति सा यत् त्रिः संवत्सरस्य व्विजायते तेन प्रजापतेर्व्वर्णः परमेण

---

* 'सोमविक्रयी'–इति ग, घ।

पशुना क्रीयस ऽइति सा यत् त्रिः संवत्सरस्य विजायते तेन परमः पशुः सहस्रपोषं पुषेय मित्याशिष मेवैतदाशास्ते भूमा वै सहस्रं भूमानं गच्छानीत्येवैतदाह ॥ ८ ॥

स वा ऽअनेनैवाजां प्रयच्छति। अनेन राजान मादत्त ऽआजा ह वै नामैषा यदजैतया ह्येन मन्तत आजति* ता मेतत् परोक्ष मजेत्याचक्षते ॥ ९ ॥

अथ राजान मादत्ते। मित्रो न एहि सुमित्रध इति शिवो नः शान्त एहीत्येवैतदाह तं यजमानस्य दक्षिण ऽऊरौ प्रत्युह्य वासो निदधातीन्द्रस्योरु माविश दक्षिण मित्येष वा ऽअत्रेन्द्रो भवति यद्यजमानस्तस्मादाहेन्द्रस्योरु माविश दक्षिण मित्युशन्नुशन्त मिति प्रियः प्रिय मित्येवैतदाह स्योनः स्योन मिति शिवः शिव मित्येवैतदाह ॥ १० ॥

अथ सोमक्रयणाननुदिशति। स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्निति† धिष्ण्यानां वा ऽएते भाजनेनैतानि वै धिष्ण्यानां नामानि तान्येवैभ्य एतदन्वदिक्षत् ॥ ११ ॥

---

* 'आजत्'—इति सा०—सम्मतः।

† 'मा दभन्निति'—इति सा०—सम्मत इति डा० वेबरः।

अथानुपोर्णुते। गर्भो वा ऽएष भवति यो दीक्षते प्रावृता वै गर्भा उल्बेनेव जरायुणेव त मुचाजीजनत तस्मादपोर्णुत ऽएष वा ऽअद्य गर्भो भवति तस्मात् परिवृतो भवति परिवृता इव हि गर्भा उल्बेनेव जरायुणेव ॥ १२ ॥

अथ व्वाचयति। परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजेत्यासीनं वा ऽएन मेष आगच्छति स आगत ऽउत्तिष्ठति तन्मिथ्याकरोति व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह परि माग्ने दुश्चरिताद् बाधस्वा मा सुचरिते भजेति* ॥ १३ ॥

अथ राजान मादायोत्तिष्ठति। उदायुषा स्वायुषो-दस्था ममृतां२॥† ऽअन्वित्यमृतं वा ऽएषोऽनूत्तिष्ठति यः सोमं क्रीतं तस्मादाहोदायुषा स्वायुषोदस्था ममृतां२॥‡ ऽअन्वितिऽ ॥ १४ ॥

अथ राजान मादायारोहण मभिप्रैति। प्रति पन्था मपद्महि स्वस्ति गा मनेहसम्। येन व्विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति ॥ १५ ॥

---

* 'भजे॒ति'–इति ग, घ। †, ‡ 'ममृतांइ'–इति क, ख।

§ 'ऽअन्विति'–इति ग, घ।

देवा ह वै यज्ञं तन्वानाः*। तेऽसुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुस्त ऽएतद्यजुः स्वस्त्ययनं ददृशुस्त ऽएतेन यजुषा नाष्ट्रा रक्षांऽस्यपहत्यै तस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समाश्नुवत तथो ऽएवैष एतेन यजुषा नाष्ट्रा रक्षांऽस्यपहत्यै तस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समश्नुते तस्मादाह प्रति पन्था मपद्महि स्वस्ति गा मनेहसम् येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति ॥ १६ ॥

तं वा इति हरन्ति। अनसा परिवहन्ति महयन्त्येवैन मेतत् तस्माच्छीर्ष्णा बीजंऽ हरन्त्यनसोदावहन्ति ॥ १७॥

अथ यदपा मन्ते क्रीणाति। रसो वा ऽआपः सरस मेवैतत् क्रीणात्यथ यद्धिरण्यं भवति सशुक्र मेवैतत् क्रीणात्यथ यद्वासो भवति सत्वच समेवैतत् क्रीणात्यथ यदजा भवति सतपस मेवैतत् क्रीणात्यथ यद्धेनुर्भवति साशिर मेवैतत् क्रीणात्यथ यन्मिथुनौ भवतः समिथुन मेवैतत् क्रीणाति तं वै दशभिरेव क्रीणीयान्नादशभि-र्दशाक्षरा वै विराड् वैराजः सोमस्तस्माद् दशभिरेव क्रीणीयान्नादशभिः ॥ १८ ॥ ६ ॥

॥ इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् [ ३. ३. ] ॥

---

* 'तन्वानाः'–इति ।

सोमक्रयार्थं व्यवहारं विधत्ते— स वा इति[1]। 'पणते' व्यवहरेत्। 'तस्मात्' सोमस्य व्यवहारभूतत्वात् 'इदं' इदानी मपि 'सर्वं' दधिमध्वादि वस्तु 'सहृत्' 'पण्यं' लोके पणितव्यं भवति। व्यवहारप्रकारं दर्शयति— "स आहेत्यादिना[2]। 'सः' अध्वर्युः "क्रय्यस्ते सोमो राजा?" 'इति' पृच्छेत्। 'क्रय्यः' क्रयार्थं प्रसारितः। "क्रय्यस्तदर्थे"—इति[3] 'क्रय्य'-शब्दो निपातितः। प्रश्नार्थे प्लुतिः[4]। 'क्रय्यः इति सोमविक्रयी' प्रतिब्रूयात्। 'तत्' तर्हि 'ते' तव स्वभूतं सोमं 'क्रीणानि' 'इति' अध्वर्युर्ब्रूयात्। अथ तेन सोमविक्रयिणा 'क्रीणीहि' 'इति' उक्तोऽध्वर्युः 'कलया' गोरेकदेशेन 'ते' तव सम्बन्धिनं सोमं 'क्रीणानि' 'इति' ब्रूयात्। स विक्रेता 'अतः' अस्मात् कलालक्षणात् 'भूयः' प्रभूत मधिकं मूल्य मर्हतीति ब्रूयात्। अथ सोमविक्रयिणोक्तोऽध्वर्युः गोर्महत्व माविष्करोति— "महांस्त्वेवेति। यदि सोमो बहुमूल्य मर्हति, तर्हि कृत्स्ना गौर्दातव्या भवति, तथा सति 'गोर्महिमा महान्' 'इति' ब्रूयात्[5] ॥ १ ॥

कथं महत्त्व मिति तद् दर्शयति— "गोर्वा इत्यादिना[6]। 'गोः प्रतिधुक्[7]' सद्यो दुग्धम्, इद मेकं वीर्यम्। 'तस्यै' तस्याः 'शृतं' पक्वं पयः। 'शरः' पक्वक्षीरस्योपरि सारभूतम्। घनीभूत-

---

१— का० श्रौ० सू० ७. ८. १।　　२— का० श्रौ० सू० ७. ८. २।
३— पा० सू० ६. १. ८२।　　४— पा० सू० ८. १. १००।
५— का० श्रौ० सू० ७. ८. ३–७, ८क।　　६— का० श्रौ० सू० ७. ८. ८ख।
७— 'प्रतिधुक् धारोष्णं पयः'—इति या० दे०।

मन्त्रास्वादं वस्तु दधि। दधिभवं सारभूत मुदकं 'मस्तु'। 'आतञ्चनं' दधिभावकारणम्। तप्ते पयसि दध्यानयने सति यद् घनीभूतं वस्तु जायते, सा 'आमिक्षा'। द्रवात्मकं तत् वाजिनम्। एवं दशविधानि[१] गोवीर्याणि प्रख्यापयेत्॥ २॥

"शफेनेति। द्वितीयवारक्रये 'शफेन ते क्रीणानीति' ब्रूयात्[२]। 'शफः' पादाग्रस्यार्द्धभागः। 'भूयो वा अतः'—इत्याद्युक्तिप्रत्युक्तिवचनं पूर्ववद् व्याख्येयम्[३]। 'अध्वर्युः' 'एतान्येव दश वीर्याणि' इति, प्रतिधुगादिक मित्यर्थः। तृतीयवारे गोः 'पदा ते' इति ब्रूयात्। चतुर्थवारे 'अर्द्धेन ते' इति ब्रूयात्। "भूयो वा इत्यादि पूर्ववत्[४]। पञ्चमवारे 'गवा ते क्रीणानि' 'इति' ब्रूयात्[५]। एव मुक्ते 'सोमो राजा' त्वया 'क्रीतः' 'इत्याह'; उचितमूल्यस्य दत्तत्वात्। अथ 'वयांसि प्रब्रूहि' 'इति' 'सोमविक्रयी' ब्रूयात्[६]॥ ३॥

"स आहेति। 'वयः'-शब्दार्थं स्वय मेवाह— "चन्द्रं त इत्यादिना। 'हेम चन्द्रम्'—इति हिरण्यनामसु पाठात्[७] 'चन्द्रम्' आल्हाद-

---

१— घृत-नवनीतयोः परिचयो बहुत्रोक्त इतीह नोल्लिखितः; ताभ्यां सहैव दशविधत्वं गोवीर्यस्येति ज्ञेयम्।

२— का० श्रौ० सू० ७. ८. १०।

३— १७०पृ० ११प०। का० श्रौ० सू० ७. ८. ९।

४— "प्रश्नान्ते प्रश्नान्ते"—इति का० श्रौ० सू० ७. ८. १२। अत्र 'भूय एवातः सोमो राजार्हतीत्येष मन्त्र उच्यते'—इति या० दे०।

५— का० श्रौ० सू० ७. ८. ११।

६— का० श्रौ० सू० ७. ८. १३। 'वयांसि अन्यान् पशून् छागादीन्'—इति।

७— निघ० १. २. २।

कारि हिरण्यम् । "चन्द्रं ते इति सोम मालभ्य वाचयति"—इति कात्यायनः[१] । 'अन्याः तिस्रः', गा इति शेषः ॥

व्यवहारपूर्वक-क्रयं प्रशंसति— "स यदर्वागिति । 'अर्वाक्' सम्पादनात् प्राक् व्यवहारं कृत्वा, 'परः' परस्तात् 'सम्पादयन्ति' । अथ वा 'अर्वाक्' अल्प मेव व्यवहारकाले व्यवहरन्ति, सम्पादन-काले तु 'परः' देयं मूल्य मधिकं कृत्वा । 'तस्मात्' 'इदम्' इदानी मपि 'सर्वं पण्यं' वस्तु 'सकृत्' एकवारम् 'अर्वाक्' सत् 'परः' 'सम्पादयन्ति' ॥

गोवीर्याणा मुदाख्यानवत् सोमवीर्याण्युदाख्यातव्यानि, तथा-करणे कारण माह— "अथ यदध्वर्युरेव गोवीर्याणीति । 'महितः' महत्त्वोपेतः खलु सोमः । तत् कथम् ? वस्तुतो 'देवः' खलु; दिवि वर्त्तमानस्य चन्द्रस्य सोमवल्लीरूपेण परिणामात्, "दिवि वै सोम आसीत्"—इत्युक्तत्वाच्च[२] । अतो हेतोः सोमस्यानपेक्षितत्वात् 'अध्वर्युः' 'गां' 'महयति' पूजयति । तां 'पश्यन्' 'तस्यै' तस्याः 'वीर्याणि' प्रतिधुगादीनि । केनाभिप्रायेण ? सोम मनया क्रीणा-नीत्यभिप्रायेण । तस्मादित्युपसंहारः ॥ ४ ॥

कलाशफादिरूपं पञ्चवारपणनं प्रशंसति— "अथ यत् पञ्चकृत्व इति । स्पष्ट मेतत् ॥ ५ ॥

"अथ हिरण्ये इति । एकहायन्या सह देयेषु हिरण्य-वस्त्रादिदशसु द्रव्येषु मध्ये 'हिरण्ये' दीयमाने सति यजमानं

---

१— का० श्रौ० ७. ८. १४, १५ सूत्रयोः फलितार्थकथन मिदम् ।
२— पुरस्ताद् द्रष्टव्यम् ( ११९ पृ० ) ।

'वाचयति' "शुक्रं त्वा"—इति मन्त्रम्[1]। मन्त्रस्याय मर्थः। 'शुक्रं' 'दीप्यमानं' 'त्वा' त्वां 'शुक्रेण' दीप्तेन 'हिरण्येन' 'क्रीणामि'। तथा 'चन्द्रं' त्वां 'चन्द्रेण' आह्लादकेन 'हिरण्येन'। 'अमृतम्' अमरणधर्माणं त्वाम् 'अमृतेन 'हिरण्येन' क्रीणामीत्यर्थः। मन्त्रगतानि शुक्रचन्द्रामृतपदानि तृतीयान्तानि हिरण्यनामानि, द्वितीयान्तानि सोमस्येति व्याचष्टे— "शुक्रं त्वा शुक्रेणेत्यादिना। स्पष्टोऽर्थः। अत्र सूत्रम्— "स आह चन्द्रं ते वस्त्रं ते छागास्ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्याः शुक्रन्त्वेति हिरण्य मालभ्य वाचयति"—इति[2] ॥ ६ ॥

अथ समन्त्रकं सोमविक्रयिणो हिरण्येनाभिप्रकम्पनं विधत्ते— "अथ सोमविक्रयिण मिति। 'अभिप्रकम्पयति' हिरण्येन प्रलोभयति। मन्त्रगतं[3] 'सग्म'-पदं व्याचष्टे— "यजमाने ते गौरिति। ऋत्विग्भिः सह गच्छन्ति तत्तत्कर्मस्विति 'सग्मः' यजमानः, तस्मिन्। "सग्मे त इति सोमविक्रयिणं हिरण्येनाभिकम्पयति"—इति सूत्रम्[4]।

"तद्यजमान मित्यादि[5]। 'तत्' अभिप्रकम्पनसाधनं हिरण्यं यजमानं प्रत्यानीय "अस्मे ते"-इति[6] मन्त्रेण स्थापयेत्। 'अस्मे' अस्मदीये यजमान इत्यर्थः। हिरण्यस्य वीर्यरूपत्वात् तत्स्वीकारे-

---

१— वा० सं० ४. २६. १। २— का० श्रौ० सू० ७. ८. १४, १५।
३— वा० सं० ४. २६. २। ४— का० श्रौ० सू० ७. ८. १६।
५— का० श्रौ० सू० ७. ८. १७। ६— वा० सं० ४. २६. ३।

णात्मनि वीर्यधारणं सोमविक्रयी स्वीकुर्यात् । "सोमविक्रय्ये-तदादत्ते"—इति[1] सूत्रम् ॥ ७ ॥

"अथाजाया मिति । क्रयाय दत्ता मजां प्रतीचीनमुखीं कृत्वा अध्वर्युस्ता मालभ्य स्थितं यजमानं "तपसः सूनुरसि"—इत्यादि[2] मन्त्रं वाचयेत् । तथा च सूत्रम्— "अजां प्रत्यङ्मुखी मालभ्य वाचयति तपसस्तनूरसीति"-इति[3] । मन्त्रस्याय मर्थः । हे अजे ! त्वं 'प्रजापतेस्तपसः' 'तनूः' शरीर मसि ; तत्परिणामरूपत्वात् । 'प्रजापतेः वर्णोऽसि' ; "संवत्सरो वै प्रजापतिः"—इति श्रुतेः[4] । संवत्सरस्य सम्बन्धिनि काले जायमानत्वेन संवत्सरद्वारा संवत्सररूप-प्रजापतिशरीरसारूप्यात् प्रजापतिवर्णात्मकत्वम् । संवत्सरे त्रिर्जाय-मानादेवेतरपशोरप्युत्कर्षात् अजा 'परमः पशुः', तेन क्रीयसे । हे सोम ! अतोऽहं तवानुग्रहात् 'सहस्रपोषं' पुत्रपौत्रादिरूपेण बहुविधपुष्टिं प्राप्नुवानीति ॥

त मिमं मन्त्रं विभज्य व्याचष्टे— "तपसस्तनूरसीति । मन्त्र-चतुर्थभागस्याशीःपरता माह— "आशिष मेवैतदिति । आशासन-प्रकार मेव दर्शयति— "भूमा वै सहस्र मिति ॥ ८ ॥

वाम-दक्षिण-बाहु क्रमेण अजाप्रदान-सोमदाने च निर्दिशति— "स वा अनेनेति । "अनेन राजान मादत्त इति । यद्यप्यत्र विशेषो न श्रूयते, तथापि सूत्रकारेण विशेषितम्— "सव्येनाजां प्रयच्छन्,

---

१— का० श्रौ० सू० ७. ८. १८ ।

२— वा० सं० ४. २६. ४ । ३— का० श्रौ० सू० ७. ८. १९ ।

४— ऐ० ब्रा० १. ३. २, ५ ; ५, २ इत्यादिषु द्रष्टव्यम् ।

'मित्रो न'—इति दक्षिणेन सोम मादत्ते"—इति[१]। अजाप्रदानेन सोमादानं तन्निर्वचनद्वारेण प्रशंसति— "आजा ह वा इति। यस्मात् 'एतया' अजया 'एनम्' सोमम् 'अन्ततः' 'आजत्' आभिमुख्येनागच्छति। आजनसाधनत्वात् 'आजा' वस्तुतः; 'तां' परोक्षेण 'अजेत्याचक्षते' ॥ ९ ॥

"अथ राजान मादत्ते मित्रो न एहीति[२]। हे सोम! त्वं 'सुमित्रधः' शोभनयजमानधारकः, त्वं 'मित्रः' मित्रभूतः, प्रियभूतः सन् आगच्छेत्यर्थः। अस्मिन् मन्त्रे मित्रशब्दार्थ माह— "शिवो नः शान्त इति। शिवशब्दस्य व्याख्यानं 'शान्तः'—इति[३]। "तं यजमानस्येति। 'दक्षिणे' 'ऊरौ' ऊरुप्रदेशे तत्रान्तर्धायकं 'वासः' 'प्रत्युह्य' प्रसार्य, तत्र सोमं निदध्यात् ॥

निधाने मन्त्रं विधाय प्रशंसति— "इन्द्रस्योरु मिति[४]। 'अत्र' अस्मिन् सोमक्रयकर्मणि यस्मात् 'यजमानः' एव 'इन्द्रो भवति' स्वतन्त्रत्वात्, 'तस्मात्' "इन्द्रस्योरु मिति मन्त्रं ब्रूते। द्वितीयभागतात्पर्य माह— "उशन्नुशन्त मितीति। "वश कान्तौ"[५]। कामयमानस्त्वं कामयमान मूरु माविशेति मन्त्रभागस्यार्थः। यः कामनाविषयः, स प्रियो भवतीति प्रसिद्धम्, अतः 'उशन्नुशन्तम्'—इत्यनेन 'प्रियः प्रियम्'—'इति' 'आह' मन्त्रः। एवं

---

१— का० श्रौ० सू० ७. ८. २०।    २— वा सं० ४. २७. १।

३— "आदायागते ( अध्वर्यौ ) उत्तिष्ठति वा ( यजमानः )"–इतिचेह विहितं कात्यायनेन ( श्रौ० सू० ७. ८. २१. )।

४— वा० सं० ४. २७. १।    ५— अदा० प० ७० धा०।

"स्योनः स्योन मिति। स्योन मिति सुखनाम[1]; सुखस्य शिवात्मकत्वात् 'शिवः शिवम्' इति व्याख्यातम् ॥ १० ॥

"अथ सोमक्रयणाननुदिशतीति[2]। हे स्वानभ्राजादयः! 'वः' युष्माकम् 'एते' 'सोमक्रयणाः'। यतः तैर्गवादिभिः सोमः क्रीयते, अतः 'तान्' क्रयसाधनपदार्थान् 'रक्षध्वम्'। रक्षःसम्बन्धिनः तान् 'मा दभन्' मा हिंसिष्ठाः ॥

अनुदेशनं प्रशंसति— "धिष्ण्यानां वा एते भाजनेनेति। भाजयतीति भाजनं स्थानम्, तेन तत्स्थानेनोपाधिना 'एते' स्वानादयो 'धिष्ण्यानां' सम्बन्धिनः खलु। कथं तेषां धिष्ण्यसम्बन्ध इति तत्राह— "एतानि वै धिष्ण्यानां नामानीति। स्वानादयो धिष्ण्यानां नामान्येव[3], परं न तदतिरिक्ताः। अथ वा अनुदेशनार्थाः 'एते' गवादिपदार्थाः 'धिष्ण्यानाम्' एव, न तु स्वानादयः सोमरक्षकाः; अतस्तेषा मेव 'एते', न 'धिष्ण्यानाम्' इति तत्राह— "एतानि वा इति। तथा चोत्तरत्र वक्ष्यति— "त मेते गन्धर्वाः

---

१— निघ० ३. ६. १५। २— का० श्रौ० सू० ७. ८. २३।

३— अग्नीना माश्रयभूता मृदा निर्मिताः सप्त स्वल्पवेदिका धिष्ण्यान्युच्यन्ते। तानि चैवं कात्यायनेन विहितानि— "आग्नीध्रीयं पूर्वम्, सिकतास्वोपरि रौद्रेणेति (वा० सं० ५. ३४.) सर्वत्र, षट् सदसि, प्रत्यङ्मुखो द्वार मपरेण होतुः, दक्षिणपूर्वेणौदुम्बरी मैत्रावरुणस्य, होतृधिष्ण्य मुत्तरेण चतुरः समान्तरान् ब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकानाम्"–इति ८. ६. १६–२१। धिष्ण्यनिर्वचनादिकं तु निरु० ८. १. ४ द्रष्टव्यम्।

सोमरक्षा जुगुपुरिमे धिष्ण्याः"—इति[1]। 'तान्येव' दश क्रयद्रव्याणि 'एतत्' एतेन 'एते वः सोमक्रयणाः'—इति पाठेन 'एभ्यः' धिष्ण्य-भूतेभ्यः स्वानादिभ्यः 'अन्वदिक्षत्' अनुदिष्टवान् भवति। दिशतेः[2] "शल इगुपधाद्"—इति[3] क्सः। अत्र सूत्रम्— "स्वानभ्राजेति जपति"—इति[4] ॥ ११ ॥

"अथात्रापोर्णुत इति[5]। "उल्बेनेव जरायुणेवेति। छतस्य शिरःप्रावरणस्यापवारणं विधाय प्रशंसति। उभयत्रेवशब्दो वाक्या-लङ्कारार्थः। 'उल्बं' गर्भस्यान्तर मावरणम्, 'जरायु' बाह्य माव-रणम्। तथाच प्रागाम्नातम्— "अन्तरं वा उल्बं जरायुणो भवति"—इति[6]। स्पष्ट मन्यत्। 'तं' गर्भभूतं यजमानम् 'अत्र' अस्मिन् सोमविक्रयसमनन्तरकाले 'अजीजनत' प्रादुरभावयत् अध्वर्युः। उत्पन्नस्यावरणयोगात् अपवरणं युक्त मित्यर्थः। पूर्वं सति प्रावरणे पश्चादपवरणं युज्यते। तदेव कुत इत्यत आह— "एष वा अत्र गर्भ इत्यादिना ॥ १२ ॥

"अथ वाचयतीति[7]। अध्वर्युः "परि माग्ने दुश्चरितात्"—इति अमुं मन्त्रं यजमानं वाचयेत्। अथ मर्थः। 'मा' मां दुश्चरितात् सकाशात् 'परिबाधस्व' त्रायस्वेत्यर्थः। 'मा' मां 'सुचरिते' सदा-चारे 'आभज' आभाजय। अथ वा सुचरिते वर्त्तमानं माम्

---

१—इहैव काण्डे ६प्र० २ब्रा० ६कण्डी द्रष्टव्या।

२— तु० उभ० ३ धा०। ३— पा० सू० ३. १. ४५।

४— का० श्रौ० सू० ७. ८. २३। ५— का० श्रौ० सू० ७. ८. २४।

६— २. १. ११ (६० पृ०) द्रष्टव्यम्। ७— का० श्रौ० सू० ७. ६. १।

'आभज' अनुगृहाण[1]। मन्त्रतात्पर्य माह— "आमीनं वा एन मिति। 'एनं' यजमानम्, 'एषः' सोमो राजा। श्रेष्ठस्यागमनात् प्रागेवोत्थानेन भवितव्यम्, अत्र तद्वैपरीत्यान्मिथ्याकरणम्; तच्च 'व्रतं' कर्म 'प्रमीणाति' प्रहिनस्ति; तदनेन मन्त्रवाचनेन समाधीयत इति ॥ १३ ॥

"अथ राजान मादायेति[2]। उत्थानमन्त्रस्यार्थः[3]। 'आयुषा स्वायुषा' च सह तत्साधनेन वा आयुष्करणेन सोमेन सह 'उदस्थाम्'। 'आयुषा' निमित्तेनेति वा। 'अमृतान्' अवयवापेक्षया बहुवचनम्। सोमांशून् 'अनु'-सृत्य 'उदस्थाम्'। अमृतशब्दस्य तात्पर्य माह— "अमृतं वा एषोऽनूत्तिष्ठति यः सोमं क्रीत मिति ॥ १४ ॥

"अथ राजान मादायारोहण मभिप्रैतीति[4]। आरोहन्त्यत्रेति 'आरोहणं' शकटम्। अभिगमनमन्त्रस्याय मर्थः। वयं 'पन्थां' पन्थानं 'प्रत्यपद्महि' प्रतिपद्येमहि। कीदृशम्? 'स्वस्तिगां' शोभनगमनम्, 'अनेहसम्' अपापम्, 'येन' पथा गच्छन् पुरुषो 'विश्वाः' 'द्विषः' द्वेष्टॄन् 'परिवृणक्ति' परिवर्जयति, 'वसु' धनं च 'विन्दते' लभते, तं प्रतिपद्येमहीति[5] ॥ १५ ॥

---

१— वा० सं० ४. २८. १। २— का० श्रौ० सू० ७. ९. ३।

३— स चैष मन्त्रः वा० सं० ४. २८. २।

४— "उत्थान मनःप्रतिगमनं च गृहीतसोम एव यजमानः करोति"— इति "उत्तरे च (७. ९. २)"—इति सूत्रव्याख्याने या० दे०।

५— स चैष मन्त्रः वा० सं० ४. २९. १।

अमुं मन्त्र माख्यायिकया प्रशंसति— "देवा ह वा इति । पुरा किल 'देवाः' देवत्वप्राप्तये 'यज्ञं तन्वानाः' असुराद्याशङ्केन भीताः, तत्परिहारोपायत्वेन क्षेमप्रापकम् 'एतत्' 'यजुः' इमं मन्त्रं दृष्ट्वा, प्रयुज्य, 'नाष्ट्रा रक्षांसि' नाशकारिणो राक्षसान् घातयित्वा, एतन्मन्त्रसम्बन्धिनि भयरहिते, नाशरहिते, वातरहिते, स्थाने अविनाशलक्षणं क्षेमं प्राप्ताः । तस्मात् इदानीन्तनोऽपि तद्यजुः-प्रयोगेणोक्तलक्षणं क्षेमं प्राप्नोति । यस्मादस्य मन्त्रस्य सामर्थ्य मेवंविधम्, तस्माच्छकटसमीपं गच्छन् "प्रतिपन्थाम्"—इति[१] मन्त्रं ब्रूयादित्यर्थः । ब्राह्मणोक्तस्य कृत्स्नस्यार्थस्य मन्त्रे दर्शना-दित्यभिप्रायः ॥ १६ ॥

"तं वा इतीति । हरणप्रकारोऽभिनीयते— 'इति' अनेन प्रकारेण, शिरसा धृत्वेत्यर्थः । 'हरन्ति' प्रथमं क्रयात् प्राकु पर्वतात्, पश्चात्तु 'अनसा परिवहन्ति' ; अनेन सोमं 'महयन्ति' सत्कुर्वन्ति । यस्मात् पूर्व मेवं कृतम्, 'तस्मात्' इदानी मपि आवापसमये कृष्टक्षेत्रं प्रति 'बीजं शीर्ष्णा हरन्ति', पश्चात् फलिताना मानयनसमये 'अनसा' 'उदावहन्ति' उदानयन्ति । अत्र सूत्रम्— "शीर्ष्णि सोमं कृत्वा पाणि मन्तर्द्धाय प्रतिपन्था मित्यनोऽभ्येति, दक्षिणतस्तिष्ठच्छन्नं समङ्क्ति धौतम्, प्रउगाच्चोद्धृते फलके, कृष्णाजिन मस्मिन्नास्तृणात्यदित्यास्त्वगिति[२], तस्मिन्त्सोमं निदधात्यदित्यै सद इति[३]"—इति[४] ॥ १७ ॥

---

१— वा० सं० ४. २९. १ । २— वा० सं० ४. ३०. १ ।
३— वा० सं० ४. ३०. २ । ४— का० श्रौ० सू० ७. ९. ४–७ ।

उदकुम्भसमीपे क्रयं प्रशंसति— "अथ यदपा मिति। स्पष्टोऽर्थः। हिरण्यादि दशक्रयद्रव्यं क्रमेणानूद्य प्रशंसति— "अथ यद्धिरण्यं भवतीत्यादिना। क्रयाय 'हिरण्यं भवति' इति 'यत्', 'एतत्' एतेन सोमं 'सशुक्रं' शुक्रेण दीप्त्या सहितं सन्तं क्रीतवान् भवति; हिरण्यस्य तेजोरूपत्वात्। वाससः आच्छादनसाधनत्वात् तेन क्रये सति सोमं 'सत्वचसं' क्रीतवान् भवति। ब्रह्मणस्तपसा सम्भूतत्वात् 'अजया' क्रये सति तपसा सहितः क्रयो भवति। धेन्वा माशिरस्य क्षीरादेः सम्भवात्, तया क्रये सति सोमः साशिरो भवति। 'अथ यन्मिथुनौ भवतः'—इति स्पष्टम्। क्रयणद्रव्यगतां दशसङ्ख्या मनूद्य प्रशंसति— "तं वै दशभिरेव क्रीणीयात्, नादशभिः"— इति। स्पष्टोऽर्थः[1] ॥ १८ ॥ ६ [३. ३.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे तृतीयाध्याये तृतीयं ब्राह्मणम् ॥

## ॥ इति तृतीयकाण्डे द्वितीयः प्रपाठकः समाप्तः ॥

---

१— अत्र "हिरण्यं सहसाच्छिद्य पृषता वरत्राकाण्डेनाहन्ति वा"—इत्याह कात्यायनः (७. ८. २७.)। "प्रदक्षिणं सोमक्रयणीं मावृत्यान्यया गवा निष्क्रीय यजमानस्य गोष्ठेऽपिसृजति, यदि सोमविक्रयी प्रतिविवदेत पृषतैनं वरत्राकाण्डेनावद्यायं नाशयेयुः, लकुटैर्घ्नन्तीत्येके, नित्यवदेके वधं समामनन्ति"—इत्याह आपस्तम्बः (१०. २७. ५–८.)। "सोमविक्रयिणे किञ्चिद् दद्यात्"—इत्येवास्ति मानवे सूत्रे।

## अथ

### तृतीयप्रपाठके प्रथमं ब्राह्मणम्,

### अपि वा

### तृतीयाध्याये चतुर्थं ब्राह्मणम् ।

॥ हरिः ॐ ॥

नीडे कृष्णाजिन मास्तृणाति। अदित्यास्त्वगसीति सोऽसावेव बन्धुरथैन मासादयत्यदित्यै सद आसीदे-तीयं वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्या मेवैन मेतत् प्रतिष्ठायां प्रतिष्ठापयति तस्मादाहादित्यै सद आसीदेति* ॥ १ ॥

अथैव† मभिपद्य व्याचयति। अस्तभ्नाद् द्यां वृषभो ऽन्तरिक्ष मिति देवा ह वै यज्ञं तन्वानास्ते ऽसुर-रक्षसेभ्य ऽआसङ्गाद् बिभयाञ्चक्रुस्त ऽएन मेतज्ज्या-

---

* 'आसीदेति'-इति ग, घ।

† 'अथैन'-इति सायणसम्मतः पाठः।

याꣳस मेव व्वधाञ्चक्रुर्य्यदाहास्तभ्नाद् द्यां वृषभो ऽअन्तरिक्ष मितिति* ॥ २ ॥

अमिमीत व्वरिमाणं पृथिव्या इति। तदेनेनेमाँल्लोका†नास्पृणोति तस्य हि न हन्तास्ति न बधो येनेमे लोका आस्पृतास्तस्मादाहामिमीत व्वरिमाणं पृथिव्या इति‡ ॥ ३ ॥

आसीदद्विश्वा भुवनानि सम्राडितिति§। तदेनेनेदꣳ सर्व्वं मास्पृणोति तस्य हि न हन्तास्ति न बधो येनेदꣳ सर्व्वं मास्पृतं तस्मादाहासीदद्विश्वा भुवनानि सम्राडितिति‖ ॥ ४ ॥

विश्वेत्तानि व्वरुणस्य व्रतानीति। तदस्मा ऽइदꣳ सर्वं मनुवर्त्म करोति यदिदं किञ्च न कश्चन प्रत्यूद्यामिनं तस्मादाह विश्वेत्तानि व्वरुणस्य व्रतानीति¶ ॥ ५ ॥

अथ सोमपर्य्याणहनेन पर्य्याणह्यति। नेदेनं नाष्ट्रा रक्षाꣳसि प्रमृशानिति गर्भो वा ऽएष भवति तिर इव

---

* 'मिति'–इति ग, घ। † 'नेमांलोका'–इति ग, घ।

‡ 'इति'–इति ग, घ। § 'संम्राडिति'–इति क।

‖ 'संम्राडिति'–इति क, 'सम्राडिति'–इति ग, घ।

¶ 'व्रतानीति'–इति ग, घ।

वै गर्भास्तिर इवैतद्युत्पर्य्याणद्धं* तिर इव वै देवा मनुष्येभ्यस्तिर इवैतद्युत्पर्य्याणद्धं तस्माद्वै पर्य्याणह्यति ॥ ६ ॥

स पर्य्याणह्यति। वनेषु व्यन्तरिक्षं ततानेति वनेषु हीद मन्तरिक्षं विततं वृक्षाग्रेषु वाज मर्वत्सु पय उस्रियास्विति वीर्य्यं वै वाजाः पुमांसोऽर्वन्तः पुंस्वेवैतद्वीर्य्यं दधाति पय उस्रियास्विति पयो हीद मुस्रियासु हितं हृत्सु क्रतुं वरुणो विक्ष्वग्नि मिति हृत्सु ह्ययं क्रतुर्म्मनोजवः प्रविष्टो विक्ष्वग्नि मिति विक्षु ह्ययं प्रजास्वग्निर्दिवि सूर्य्य मदधात्सोम मद्राविति दिवि ह्यसौ सूर्यो हितः सोम मद्राविति गिरिषु हि सोमस्तस्मादाह दिवि सूर्य्य मदधात् सोम मद्राविति† ॥ ७ ॥

अथ यदि द्वे कृष्णाजिने भवतः। तयोरन्यतरत् प्रत्यानह्यति प्रतीनाहभाजनं‡ यद्यु एकं भवति कृष्णाजिनग्रीवा एवावकृत्य प्रत्यानह्यति प्रतीनाहभाजनं§ सूर्य्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम्। यत्रैतशेभिरीयसे भ्राजमानो विपश्चितेति सूर्य्य मेवैतत् पुरस्तात् करोति सूर्य्यः पुरस्तान्नाष्ट्रा रक्षांस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण परिवहन्ति ॥ ८ ॥

---

* 'इवैतत्पर्य्याणद्धं'—इति ग। † 'मद्राविति'—इति ग, घ।

‡, § 'प्रतिनाहभाजनं'—इति सायणसम्मत इति डा० वेबरः।

उन्नते प्रउगये फलके भवतः। तदन्तरेण तिष्ठन्त्सुब्रह्मण्यः* प्राजति श्रेयान्वा ऽएषोऽभ्यारोढाह्नवति को ह्येत महँत्यभ्यारोढुं तस्मादन्तरेण तिष्ठन् प्राजति ॥ ९ ॥

पलाशशाखया प्राजति। यत्र वै गायत्री सोम मच्छापतत् तदस्या ऽआहरन्त्या ऽअपादस्ताभ्यायत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णो ऽभवत्तस्मात्पर्णो नाम तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति तस्मात् पलाशशाखया प्राजति ॥ १० ॥

अथानड्वाहावाजन्ति। तौ यदि कृष्णौ स्याता मन्यतरो वा कृष्णस्तत्र विद्याद्वर्षिष्यत्यैषमः पर्जन्यो वृष्टिमान् भविष्यतीत्येतदु विज्ञानम् ॥ ११ ॥

अथ युनक्ति। उस्रावेतं धूर्षाहावित्युस्रौ हि भवतो धूर्षाहाविति धूर्वाहौ हि भवतो युज्येथा मनस्रू ऽइति युज्येते ह्यनस्रू ऽइत्यनार्त्ताविति तदवीरहणावित्युपापकृताविति तद् ब्रह्मचोदनाविति ब्रह्मचोदनौ हि भवतः स्वस्ति यजमानस्य गृहान् गच्छत मिति यथैनावन्तरा नाष्ट्रा रक्षांꣳसि न हिꣳस्युरेव मेतदाह ॥ १२ ॥

---

* 'ब्रह्मण्या'–इति क, डा०–वेबरेणान्यत्र दृष्टश्च ; श्रूयते चोत्तरत्र (४. ३. ४. २२.) 'सुब्रह्मण्यायै'–इति।

अथ पश्चात्परिक्रम्य। अपालम्ब* मभिपद्याह सोमाय क्रीतायानुब्रूहीति† सोमाय पर्यूह्यमाणायेति वातो यतरथा कामयेत ॥ १३ ॥

अथ वाचयति। भद्रो मेऽसि प्रच्यवस्व भुवस्पत ऽइति भद्रो ह्यस्यैष भवति तस्मान्नान्य माद्रियतेऽप्यस्य राजानः सभागा आगच्छन्ति पूर्वो राज्ञो ऽभिवदति भद्रो हि भवति तस्मादाह भद्रो मेऽसीति प्रच्यवस्व भुवस्पत ऽइति भुवनानाꣳ ह्येष पतिर्विश्वान्यभि-धामानीत्यङ्गानि वै विश्वानि धामान्यङ्गान्येवैतदभ्याह मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन्निति यथैन मन्तरा नाष्ट्रा रक्षाꣳसि न विन्देयुरेव मेतदाह ॥ १४ ॥

श्येनो भूत्वा परापतेति। वय ऽएवैन मेतद् भूतं प्रपातयति‡ यद्वा ऽउग्रं तन्नाष्ट्रा रक्षाꣳसि नान्ववयन्त्ये-तद्वै वयसा मोजिष्ठं बलिष्ठं यच्छ्येनस्त मेवैतद् भूतं प्रपातयति यद्वाह श्येनो भूत्वा परापतेति ॥ १५ ॥

---

* 'अपालबु'—इति पाठोऽपि डा०-वेबरेण दृष्टः।

† 'ह्रतायानुब्रूहीति'—इति ग।

‡ 'प्रपादयति'—इति, 'प्रपायतयति'—इति च दृष्टौ डा०-वेबरेण।

अथ शरीर मेवान्ववहन्ति। यजमानस्य गृहान् गच्छ तन्नौ सꣳस्कृत* मिति नात्र तिरोहित मिवास्ति॥१६॥

अथ सुब्रह्मण्या माह्वयति। यथा येभ्यः पक्ष्यन्त्स्यात् तान् ब्रूयादित्यहे वः पक्तास्मीत्येव मेवैतद् देवेभ्यो यज्ञं निवेदयति सुब्रह्मण्यो३ꣳ सुब्रह्मण्यो३ मिति ब्रह्म हि देवान् प्रच्यावयति चिष्कृत्व आह त्रिवृद्धि यज्ञः† ॥१७॥

इन्द्रागच्छेति। इन्द्रो वै यज्ञस्य देवता तस्मा- दाहेन्द्रागच्छेति हरिव आगच्छ मेधातिथेर्म्मेष वृषण- श्वस्य मेने। गौरावस्कन्दिन्नहल्यायै जारेति तद्या- न्येवास्य चरणानि तैरेवैन मेतत्प्रमुमोदयिषति ॥ १८ ॥

कौशिक ब्राह्मण गौतम ब्रुवाणेति। शश्वद्धैतदा- रुणिनाधुनोपज्ञातं‡ यद्गौतम ब्रुवाणेति स यदि काम- येत ब्रूयादेतद्यद्यु कामयेतापि नाद्रियेतेत्यहे§ सुत्या मिति यावदहे सुत्या भवति॥ १९ ॥

देवा ब्रह्माण आगच्छतेति। तद्देवांश्च ब्राह्मणांश्चा- हैतैर्ह्युभयैरर्थो भवति यद्देवैश्च ब्राह्मणैश्च‖ ॥ २० ॥

---

* 'संस्कृत'–इति क, डा०-वेबरेणान्यत्र दृष्टश्च।

† 'यज्ञः'–इति ग, घ।

‡ '०नोपज्ञातं'–इति ग, घ।

§ '०त्यहे'–इति क।

‖ 'ब्राह्मणैश्च'–इति ग, घ।

अथ प्रतिप्रस्थाता*। अग्रेण शाला मग्नीषोमीयेण पशुना प्रत्युपतिष्ठते ऽग्नीषोमौ वा ऽएत मन्तर्ज्जम्भ ऽआदधाते यो दीक्षत ऽआग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्भवति यो वै विष्णुः सोमः स हविर्वा ऽएष देवानां† भवति यो दीक्षते तदेन मन्तर्ज्जम्भ ऽआदधाते तत्पशुनात्मानं निष्क्रीणीते ॥ २१ ॥

तद्वैके। आहवनीयादुल्मुक माहरन्त्यय मग्निरयꣳ सोमस्ताभ्याꣳ सह सह्यां निष्क्रेष्यामह ऽइति वदन्तस्तदु तथा न कुर्याद्यच वा ऽएतौ क्व च तत् सहैव‡ ॥ २२ ॥

स वै द्विरूपो भवति। द्विदेवत्यो हि भवति देवतयोरसमदे कृष्णसारङ्गः§ स्यादित्याहुरेतद्ध्येनयो रूपतम मिवेति यदि कृष्णसारङ्गं न विन्देद्दथो ऽअपि लोहितसारङ्गः‖ स्यात् ॥ २३ ॥

तस्मिन् वाचयति। नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्य्यत। दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसतेति नम एवास्मा ऽएतत् करोति मित्रधेय मेवैनेनैतत्कुरुते ॥ २४ ॥

---

* 'प्रतिप्रस्थाता'—इति ग, घ। † नास्त्येतत् पदं ग-घ-पुस्तकयोः।

‡ 'सहैव'—इति ग, घ। § 'कृष्णसारङ्ग'—इति ख, ग, घ।

‖ 'लोहितसारङ्ग'—इति ख, ग, घ।

अथाध्वर्युरारोहणं विमुञ्चति। वरुणस्योत्तम्भन मसीत्युपस्तम्भनेनोपस्तभ्नाति वरुणस्य स्कम्भसर्ज्जनी स्थ इति शम्ये ऽउद्वहति स यदाह वरुणस्य स्कम्भसर्ज्जनी स्थ इति वरुण्यो ह्येष एतर्हि भवति यत् सोमः क्रीतः* ॥ २५ ॥

अथ चत्वारो राजासन्दी मादत्ते। द्वौ वा ऽअस्मै मानुषाय राज्ञ ऽआददाते ऽअथैतां चत्वारो योऽस्य सर्वस्येष्टे ॥ २६ ॥

औदुम्बरी भवति। अन्नं वा ऽऊर्गुदुम्बर ऽऊर्ज्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरी भवति ॥ २७ ॥

नाभिदघ्ना भवति। अत्र वा ऽअन्नं प्रतितिष्ठत्यन्नं सोमस्तस्मान्नाभिदघ्ना भवत्युचो ऽएव रेतस आशयो रेतः सोमस्तस्मादचदघ्ना भवति ॥ २८ ॥

ता मभिमृशति। वरुणस्य ऽऋतसदन्यसीत्यथ कृष्णाजिन मास्तृणाति वरुणस्य ऽऋतसदन मसीत्यथैन मासादयति वरुणस्य ऽऋतसदन मासीदेति स यदाह वरुणस्य ऽऋतसदन मासीदेति वरुण्यो ह्येष एतर्हि भवति ॥ २९ ॥

---

* 'क्रीतः'—इति ग, घ।

अथैनᳪं शालां प्रपादयति । स प्रपादयन् वाचयति या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्य्यानिति गृहा वै दुर्य्या गृहान्नः शिवः शान्तोऽपापकृत् प्रचरेत्येवैतदाह ॥ ३० ॥

अथ हैके । उदपात्र मुपनिनयन्ति यथा राज्ञ आगतायोदक माहरेदेव मेतदिति वदन्तस्तदु तथा न कुर्यान् मानुषᳪं ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन् मानुषं नेद् व्यृद्धं यज्ञे करवाणीति तस्मान्नोपनिनयेत् ॥ ३१ ॥ १ ॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् [ ३. ४. ] ॥

शकटमध्ये सोमस्थापनाय कृष्णाजिनास्तरणं समन्त्रकं विधत्ते—"नीडे कृष्णाजिन मिति[१] । "उद्धृते प्रउगये फलके भवतः"—इति वक्ष्यति[२] । तदुद्धृतप्रयुगफलकद्वयोपेतस्थानस्यो 'नीडे' । परितः प्रावृतः शकटमध्यदेशो नीडम्, अस्मिन्[३] 'कृष्णाजिनम्' प्रसारयेत् । हे कृष्णाजिन ! त्वम् 'अदित्याः' भूम्याः त्वग्रूपम् 'असि'[४] ।

---

१— का० श्रौ० सू० ७. ९. ६ ।

२— नवमकण्डिकायाम् (१८४ पृ०) । कात्यायनोऽप्याहैव मेव (७. ८. ५.) ।

३— 'तस्मिन्'—इति क ।

४— वा० सं० ४. ३०. १ ।

यद्यत् भूम्या उपरि स्तृतम्, तत् सर्वं तस्यास्त्वक्स्थानीय मित्यर्थः। दर्शपूर्णमासगतं कृष्णाजिनास्तरणमन्त्रब्राह्मणम्[1] अत्रातिदिशति— "सोऽसावेव बन्धुरिति। योऽसौ अवहननप्रस्तावगतः— "इयं वै पृथिव्यदितिस्तस्या ऽअस्यै त्वग् यदिद मस्या मधि किञ्च तस्मादाहा-दित्यास्त्वगसीति"—इत्युक्तो यो ब्राह्मणभागः[२], 'सः' एवास्य 'बन्धुः' समानार्थकः, ब्राह्मण मित्यर्थः। "अथैन मिति[३]। 'एनं' सोमम् 'आसादयति'— "अदित्यै सद इति[४]। अनेन मन्त्रेण 'अदित्यै' अदित्याः सम्बन्धि 'सदः' सदनं स्थानम्। पृथिव्याः सर्वास्पदत्वेन प्रतिष्ठात्वम्, 'तस्मात्' प्रतिष्ठात्मकत्वात्; इति भावनया कृष्णाजिने आसादितोऽपि सोमोऽदित्यां प्रतिष्ठापितो भवति यतः, अतोऽमुं मन्त्रं पठेत् ॥ १ ॥

"अथैन मिति। 'एनं' सोमम् 'अभिपद्य' आलभ्य 'वाचयति' अध्वर्युः। "अस्तभ्नाद् द्या मिति सोम मालभ्य वाचयति"— इति[५] सूत्रम्। मन्त्रस्याय मर्थः[६]। 'वृषभः' अपां वर्षिता सोमः। अथवा वृषभशब्दः श्रेष्ठवाची, सर्वदेवश्रेष्ठः सोमः। 'उपरि' 'द्यां' दिवम् 'अस्तभ्नात्' सर्वप्राणिरक्षणाय स्तम्भितवान्। तथा 'अन्तरिक्षम्' अस्तभ्नात्। किञ्च 'पृथिव्याः' 'वरिमाणं' परिमाणमहत्त्व मपि 'अमिमीत' इयती पृथिवीति मानं कृतवान्। स तादृशः 'सम्राट्'

---

१, २— प्रथमकाण्डे १. ४. ५ (७२ पृ०) द्रष्टव्यम्।
३— का० श्रौ० सू० ७. ९. ७।  ४— वा० सं० ४. ३०. २।
५— का० श्रौ० सू० ७. ९. ८।
६— सोऽयं मन्त्रः वा० सं० ४. ३०. ३।

सम्यग्राजमानः सोमो 'विश्वा' विश्वानि 'भुवनानि' भूतजातानि 'आसीदद्' अधिपतित्वेनाधिष्ठितवान्। 'तानि' इमानि 'विश्वा' विश्वानि सर्वाणि 'इत्' अपि 'व्रतानि' आयुस्तम्भनादिकर्माणि 'वरुणस्य' पापनिवारकस्य सोमदेवस्य सम्बन्धीनि, सर्वे देवादयोऽनुसरन्तीत्यर्थः ॥

अमुं मन्त्रं चतुर्द्धा विभज्य[1] व्याचष्टे— "देवा ह वै यज्ञ मित्यादिना। पुरा 'देवाः' 'एनम्' 'एव' सोमम् 'एतत्' एतस्मिन् प्रस्तुते कर्म्मणि 'वधात्' असुररक्षःकृतोद्वेगात्, तत्परिहाराय 'ज्यायसं' प्रशस्यतरं श्रेष्ठं 'चक्रुः'। 'यदाह' मन्त्रः— 'अस्तभ्नाद् द्यां वृषभोऽन्तरिक्ष मिति', स पूर्वम् एतद्ब्राह्मणोक्तप्रकारेण देवैः कृतत्वादाहेत्यर्थः ; तस्मिन् मन्त्रभागे श्रेष्ठवाचकवृषभशब्दस्य श्रवणात् ॥ २ ॥

"अमिमीतेति। 'तत्' तस्मात्, सोमेन पृथिव्या मितत्वात्, 'एनेन' बलप्रकाशकमन्त्रपाठेन, अथवा 'एनेन' पृथिवीमानकर्त्रा सोमेन 'इमान्' त्रीनपि 'लोकान्' 'आस्तृणोति' सर्वतो बलिनः कारयति। सोमस्य बलवत्त्व मर्थापत्त्या दृढयति— "तस्य हौति। हन्तुर्हननस्य च लोकत्रयान्तःपातित्वात् तस्य चैतदार्थपत्य मित्यर्थः। 'आस्तृताः' बलिनः कृताः। यस्मादेवं 'तस्मात्' 'अमिमीत वरिमाणं पृथिव्या इति' मन्त्रभागस्त मर्थम् 'आह'। अथवा 'तस्मात्' तं मन्त्रभागं ब्रूयादित्यर्थः ॥ ३ ॥

---

१— इदमादिचतुःकण्डिकास्विति बोध्यम्।

"आसीददिति। तृतीयपादस्यापि बलप्रकाशनरूपार्थत्वात् द्वितीयपादब्राह्मण मेवात्र पुनः पठितम्; "तदेनेनेमांल्लोकान्"— इत्यस्य स्थाने "तदेनेनेदꣳ सर्वम्"— इति विशेषः ॥ ४ ॥

"विश्वेत्तानीति। चतुर्थभागपाठस्य तात्पर्य माह— "तदस्मा इदं सर्व मनुवर्त्मन् करोतीति। 'इदं सर्वं' भूतजातम् 'अनुवर्त्म' तदधीनस्थितिकं कृतवान् भवति। प्रत्युद्यामः प्रतिकूलोद्योगः, तत्कर्त्तारं 'प्रत्युद्यामिनं' 'न करोति' इति सम्बन्धः ॥ ५ ॥

"अथ सोमपर्याणहनेनेति। शकटेन सार्द्धं सोमस्य वेष्टन-साधनं वासः 'पर्याणहनम्'। पर्याणहनप्रयोजनकथनम्— "नेदेनं नाष्ट्रा रक्षांसीति। 'नेत्'-इति परिभये। तथाच यास्कः— "नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये"—इति[1]। यदि पर्याणहनं न कुर्यात्, तदा 'नाष्ट्रा' नाशकराणि रक्षांसि 'एनं' 'प्रमृशान्' प्रमृशेयुः, एतत्तु भयकरम्। तस्मात् तत्परिहाराय पर्याणहन मित्यर्थः। पर्याणहनं प्रकारान्तरेण प्रशंसति— "गर्भो वा एष भवतीति। 'तिर इव वै गर्भाः' अन्तर्हिता वर्त्तन्त इत्यर्थः। यस्माद् गर्भाणां तिरोधान मपेक्षितम्, यस्माच्च मनुष्येभ्यः सकाशात् देवस्य सोमस्य, तस्मात् पर्याणहनं युक्त मित्यर्थः ॥ ६ ॥

तत्र मन्त्रं विधाय प्रशंसति— "स पर्याणह्यति[2] वनेषु व्यन्तरिक्ष मिति[3]। 'वनेषु' वृक्षसमूहेषु 'अन्तरिक्षं' 'विततान' सोमो विस्तारितवान्। तद् यद् 'वाजं' वेगं बलं वा 'अर्वत्सु' अरणवत्सु

---

१— निरु० १. ३. ६। २— का० श्रौ० सू० ७. ९. ९।
३— वा० सं० ४. ३१. १।

पुरुषेषु योग्यम्। 'व्यदधात्'—इति सर्वत्र सम्बध्यते। 'उस्रिया'—इति गोनाम[1]। तासु 'पयः'। 'हृत्सु'—इति प्राणिबहुत्वापेक्षया बहुवचनम्। तत्र 'हृत्सु' 'क्रतुं' सङ्कल्पम्। 'विक्षु' प्रजासु 'अग्निम्' भुक्तस्यान्नपानस्य पाकसाधन मग्निम्। 'दिवि सूर्यम्'। 'अद्रौ' जातावेकवचनम्[2]; पर्वतेषु 'सोमम्'। 'वरुणः' पापनिवारकः, सोमो देवः 'अदधात्' स्थापितवानिति मन्त्रार्थः॥

'वन'-शब्दस्यार्थान्तरभ्रमं व्युदस्यन् वनेष्वन्तरिक्षविस्तरणं लोकसिद्ध मित्याह— "वनेषु हीदं वितत मन्तरिक्षं वृक्षाग्रेष्विति। यद्यपि सर्वत्रान्तरिक्षं विततम्, तथापि पामरदृष्ट्या सान्द्रवृक्षाग्रेषु पटास्तरणवत् प्रतिभासादेव मुक्तम्। अर्वत्सु पुंस्त्वसम्भवात् वाजस्य वीर्यत्वात् 'एतत्' एतेन "वाज मर्वत्सु"—इतिपाठेन पुंस्त्वेव वीर्यं स्थापितवान् भवति। उस्रियाहृदादिषु पयःक्रत्वादिस्थितेर्लोकप्रसिद्धिः 'पयो हीदम्'—'हृत्सु ह्ययं क्रतुः'—इत्यादि 'हि'-कारेण द्योत्यते॥ ७॥

"अथ यदि द्वे इति। दीक्षायां 'यदि' 'द्वे कृष्णाजिने' स्वीक्रते, 'तयोः' एकं 'कृष्णाजिनं' 'प्रतिनाहभाजनम्' भवति। नद्धस्य पुरोदेशप्रसारितो ध्वजः प्रतिनाहः[3]; तद्भाजनम्, तत्स्थानीयं भवतीत्यर्थः। द्वितीयालाभे उपाय माह— "यद्यु एकं भवति, कृष्णाजिनग्रीवा एवावकृत्येति॥

---

१— निघ० २. ११. ३।  २— पा० सू० १. २. ५८।

३— 'युगसमीपे उच्छ्रिते दण्डे अवलगयति ध्वजस्थानीयम्। अत्रानसो वाससा वेष्टन मिति केचित्'—इति या० दे०।

प्रतिनाहमन्त्रः—"सूर्यस्य चक्षुरिति[1]। तथाच सूत्रम्— "कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरित्यासनयोरन्यतरत्, एकस्येद् ग्रीवा अवहृत्य"—इति[2]। मन्त्रस्याय मर्थः। हे कृष्णाजिन! त्वं 'सूर्यस्य' 'चक्षुः' चक्षुःस्थानीयम्, प्रकाशनस्थान मित्यर्थः। उपरि हि सूर्यः प्रकाशते, अतस्त्व मनसि ऊर्द्ध्वं दिश मारोहेत्यर्थः। तथा 'अग्नेः' देवस्य सम्बन्धि 'कनीनकम्'; अक्षिमध्यगतः कृष्णप्रदेशः कनीनिका, ताम् 'आरोह'। 'अग्नेरक्ष्णः' कनीनिकास्थान मन्तरिक्षम्; नीलं नभ इति प्रसिद्धेः। अनस उपर्यारोहे सति एतदुभयारोहणं सम्पद्यते। 'यत्र' यस्मिन्नारोहे सति 'एतशेभिः' अश्वैः 'ईयसे' गच्छसि 'विपश्चिता' मेधाविना सोमेन सह 'भ्राजमानः' दीप्यमानः॥

एतन्मन्त्रपाठं प्रशंसति— "सूर्य मेवैतत् पुरस्तादिति। मन्त्रे 'सूर्यस्य चक्षुः'—इत्यभिधानेन 'सूर्य मेव' सोमस्य 'पुरस्तात्' कृतवान् भवति। ततश्च किं मित्याह— "सूर्यः पुरस्तान्नाष्ट्रेति। 'नाष्ट्रा' नाष्ट्राणि, यज्ञनाशकानि 'रक्षांसि' हिंसन् पुरोगच्छति, तस्मिन् सति 'अभयेन' नाशकरहितेन मार्गेण सोमं 'परिवहन्ति'॥ ८॥

"उद्धते प्रउगे फलके भवत इति। 'प्रउगे फलके' प्रयुगसम्बन्धिफलके 'उद्धते' प्रयुगादप्युन्नते, चुबुकप्रमाणे[3] 'भवतः'। अतएव सूत्रकारः तस्मिन्नेव प्रदेशे फलकयोरौद्धत्यं सूचयामास—

---

१— वा० सं० ४. ३२. १। २— का० श्रौ० सू० ७. ९. ९, १०।

३— अन्तस्थ'व'मध्यपाठश्चपुस्तके। स्यात्तु 'चिबुकप्रमाणे'–इत्येव; "अधस्ताच्चिबुकम्"–इति ह्यमरः।

"प्रयुगात्प्रोद्धूते फलके भवतः"— इति[१]। "तदन्तरेणेति। 'तत्' तयोः फलकयोः 'अन्तरेण' मध्ये 'सुब्रह्मण्यः' (भूयिष्ठ एव सन्[२]) 'प्राजति' प्रेरयति अनड्वाहौ[३]। अधःस्थितिं प्रशंसति— "श्रेयान्वेति। करितुरगाद्यारूढस्य प्रशस्तत्वं लोकसिद्धम्, अतस्तदभ्यारोहात् सोमः 'श्रेयान् भवति'; अतस्तदधिष्ठितं शकटम् 'आरोढुं कः अर्हति'? न कोऽपीति ॥ ९ ॥

"पलाशशाखया प्राजतीति। भूयिष्ठास्वेव प्राजनयोग्यासु सतीष्वप्यन्यशाखासु पलाशशाखायाः कोऽतिशय इति जिज्ञासायां तस्याः सोमस्य सम्बन्धं दर्शयति— "यत्र वै गायत्रीति। व्याख्यात मिदम्[४]। 'यदेव' 'सोमस्य' अङ्गं 'न्यक्तम्' अवाक् निपतित मासीत्, 'तत्' अङ्गम् 'इहापि' अस्मिन् सोमे एव 'असद्' भवेदिति पलाशशाखया[५] प्राजनस्याभिप्रायः ॥ १० ॥

अनडुहोर्वर्णविशेष मभिधातुं पुनरनुवदति— "अथानड्वाहाविति। 'प्राजति' युगवहनाय प्रेरयति। उभयोरन्यतरस्य वा यदि कृष्णत्वं लभ्येत, 'तत्र' पर्जन्यवर्णसाम्यात् अनडुत्कृष्णत्वेन निमित्तेन

---

१— का० श्रौ० सू० ७. ९. ५। तत्रापि 'प्रउगात्'—इति स्वरमध्यपाठ एव, न त्वन्तस्थमध्यः 'प्रयुगात्'—इति।

२— क-पुस्तकमात्रे एषोऽधिकः पाठः।

३— का० श्रौ० सू० ७. ९. १४।

४— पुरस्तात् १. ७. १. १ ( ? भा० ४६० पृ० ) द्रष्टव्यम्।

५— प्रतोदस्थानीययेति भावः। 'अनड्वाहौ बलीवर्दौ'—इति या० दे०।

ऐषमः' अस्मिन् संवत्सरे 'पर्जन्यः' बहुवृष्टिप्रदो भवति। '—इति एतत् उ विज्ञानम्' वृष्टेः परिज्ञानम्, तदुपाय इत्यर्थः ॥ ११ ॥

इदानीं समन्त्रक मश्वयोजनं विधत्ते— "अथ युनक्त्युस्रावेत मिति[1]। मन्त्रस्याय मर्थः[2]। हे 'उस्रौ' अनड्वाहौ! युवां वहनाय 'एतम्' प्रत्यागच्छतम्। कीदृशौ युवाम्? 'धूर्षाहौ' धुरं सोढुं समर्थौ। तादृशौ युवां 'युज्येथाम्' स्वय मेव युक्तौ भवतम्। तौ विशिष्येते— 'अनश्रू' अश्रुरहितौ, अव्यथावित्यर्थः, 'अवीरहणौ' शृङ्गाग्रेण वीराणां पुत्रादीना महन्तारौ, 'ब्रह्मचोदनौ' ब्रह्मणा मन्त्रेण प्रेरितावित्यर्थः। एव मनड्वाहौ प्रशस्येदानीं प्रयोजन माह— "स्वस्ति यजमानस्येति। 'स्वस्ति' अविनाशेन 'यजमानस्य गृहान् गच्छतम्' ॥

अथ मन्त्रं विभज्य व्याचष्टे— "उस्रौ हि भवतावित्यादिना। उत्स्राविणावनयोर्भोगावित्युस्रौ। एषा प्रसिद्धिः 'हि'-शब्देन द्योत्यते। धूर्षाहावित्यस्य तात्पर्यं "धूर्वाहाविति। आर्त्तस्याश्रुपातस्य दृष्टत्वात् 'अनश्रू'-इत्यस्यानार्त्ताविति व्याख्यानम्। वीरहत्यायाः पापसाधनत्वात् 'अपापकृतौ'-इति तात्पर्याभिधानम्। 'ब्रह्मणा' "उस्रावेतम्"—इतिमन्त्रेण इदानीं चोद्यमानत्वात् ब्रह्मचोदना-प्रसिद्धिरित्यभिप्रेत्य "ब्रह्मचोदनौ हि भवत इत्युक्तम्। "स्वस्ति यजमानस्य"-इत्यत्र स्वस्तिशब्दाभिप्राय माह— "यथैनावन्तरेति। 'यथा' 'एनौ' अनड्वाहौ 'अन्तरा' मध्ये मार्गे 'नाष्ट्राः' हिंस्राः 'न हिंस्युः', तथा भवेदिति स्वस्तिवाचनमन्त्रं कृतवानित्यर्थः ॥ १२ ॥

---

१— का० श्रौ० सू० ७. ९. ११। २— वा० सं० ४. ३३. १।

"अथ पश्चात् परिक्रम्येति। शकटस्य पश्चाद्भागं गत्वा। अपकृष्य आलम्ब्यत इति 'अपालम्ब्यः' शकटस्य पश्चाद्भागः। त मालम्ब्य ब्रूयात्— "सोमाय क्रीताय", "सोमाय पर्युह्यमाणाय"—'इति वा'। अनुवचनविकल्पस्याय मभिप्रायः— सोमे क्रीते सति अनन्तरं यत् कर्त्तव्यम्, तत् परिवहण मेव; तच्च क्रयानन्तरभावीत्यन्यतरोपादानेऽन्यतरस्यार्थात् सिद्धिरिति। ऐतरेयके तु समुच्चयोपदेश उक्तः— "सोमाय क्रीताय प्रोह्यमाणायानुब्रूहीत्याहाध्वर्युरिति[१]। अयं विकल्पो न व्यवस्थितः, किन्तु ऐच्छिक इत्याह— "अतो यतरथा कामयेतेति। 'अतः' अनयोः पक्षयोर्मध्ये। अत्र कात्यायनः— "पश्चात् परीत्यापालम्बं गृहीत्वा सोमाय क्रीतायामुं वाचयति, पर्युह्यमाणायेति वा" इति[२] ॥ १२ ॥

"अथ वाचयतीति। अध्वर्युर्यजमानम् "भद्रो मेऽसि"-इत्यादिक मित्यर्थः[३]। मन्त्रस्याय मर्थः— हे सोम! त्वं 'भद्रोऽसि' कल्याणकरोऽसि, स्तुत्यो वा। हे 'भुवस्पते' भुवनानां पालक! त्वं 'प्रच्यवस्व' प्रगच्छ। 'विश्वानि' 'अभि' 'धामानि' स्थानान्यभिलक्ष्य। 'त्वा' त्वां 'परिपरिणो मा विदन्' उपर्यवस्थातारो मा विदन्। तथा त्वां 'परिपन्थिनः' प्रतिकूलाः शत्रवः 'मा विदन्'। "छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि"—इति[४] 'इनि'-प्रत्ययान्तौ निपातितः। तथा 'अघायवः' अघ मिच्छन्तो 'वृकाः' विकर्त्तनशीलाः 'मा विदन्' मा जानन्। किञ्च 'श्येनः' शंसनीयगमनः पक्षी, स

---

१— ऐ० ब्रा० १. ३. २।  २— का० श्रौ० सू० ७. ९. १५, १६।
३— वा० सं० ४. ३४. १।  ४— पा० सू० ५. २. ८४।

'भूत्वा' स इव बलिष्ठोत्पतनशीलः सन् 'परापत' उद्गच्छत, यजमानस्य गृहान् गच्छत। 'तत्' तत्र 'नौ' आवयोः, तव च मम च 'संस्कृतं' सर्वोपस्करणसंयुक्तं स्थानं विद्यते, तद् गच्छेति ॥

"भद्रो मेऽसि"—इत्यत्र भद्रशब्दस्य तात्पर्य माह— "भद्रो ह्यस्यैष भवतीत्यादिना। 'अस्य' यजमानस्य 'एषः' सोमः, यस्माद् 'भद्रो भवति', तस्माद् मन्त्रभाग एव माह। यतोऽसावेव यजमानस्य भद्रकारी, 'तस्मात्' 'अन्यं' सोमव्यतिरिक्तम् 'अयं' यजमानः 'न आद्रियते' आदरं न करोति। अन्यशब्दार्थं विशिनष्टि— "अप्यस्य राजान इति। 'सभागाः'-इत्यनेन राज्ञा मनतिक्रमणीयत्व मुक्तं भवति। अपिः सम्भावनायाम्। "मधुपर्क माहरेद्राज्ञे चाचार्यर्त्विक्-स्नातकप्रियातिथिश्वशुरमातुलानाञ्च"-इति[1] सम्भावनीयानां मध्ये राज्ञां प्रथमतो निर्द्देशेन श्रैष्ठ्यावगमादितरपूज्योपलक्षकत्वेन 'अप्यस्य राजानः'—इति निर्द्देश इति मन्तव्यम्। राज्ञ आगमनात् स्वयं मप्रक्ष एव सन् 'पूर्वः' तेभ्यः प्रागेव 'अभिवदति' वाग्व्यवहारं करोति। किं मिति— "भद्रो हि भवतीति। 'तस्माद् भद्रो मेऽसीति' युक्तम्। भुवस्पत इत्यत्र 'भू'-शब्देन सर्वाण्यपि भुवना-न्युपलक्षितानीति व्याचष्टे— "भुवनानां ह्येष पतिरिति। धामशब्द-तात्पर्य माह— "अङ्गानि वै विश्वानि धामानीति। अत्राङ्गानि ग्रहचमसादीनि; क्रयप्रदेशादागमनस्य तदर्थत्वात्। परिपरि-परि-पन्थि-वृकशब्दाना मवयवार्थभेदे सत्यपि पर्यवसितार्थ एष एवे-त्याह— "यथैन मन्तरा नाष्ट्रा रक्षांसि न विन्देयुरिति ॥ १४ ॥

---

१— इत उत्तरस्मिन्नेवाम्नास्यते— "यथा राज्ञे वा ब्राह्मणाय वा"—इत्यादि।

"श्येनो भूत्वेति। मन्त्रभागपाठस्य तात्पर्य माह— "वय एवैन मेतद् भूतं प्रपादयतीति। एतेन पाठेन पक्षिरूप मेव सन्तं प्रापितवान् भवति। 'रक्षांसि' 'नान्ववयन्ति' हन्तुं नानुगच्छन्ति। स्पष्ट मन्यत् ॥ १५ ॥

"अथ शरीर मेवान्ववहन्तीति। यदि प्रमादात् सोमं रक्ष-श्रादिर्हन्यात्, तदानीं श्येनो भूत्वेति मन्त्रसामर्थ्येन श्येनीभावादुपादेयस्य सारांशस्यावध्यभावात् (हन्ता[1]) श्येनशरीर मेवानुगत्य हन्ति, नात्मान मित्यर्थः। "यजमानस्य गृहान् गच्छ तन्नौ संस्कृत मिति मन्त्रभागस्यार्थः स्पष्ट इत्याह— "नात्र तिरोहित मिवास्तीति॥१६॥

"अथ सुब्रह्मण्या मित्यादि[2]। 'ब्रह्म' देवाना माह्वानसाधनो मन्त्रः; शोभनं ब्रह्म 'सुब्रह्म', तदर्हतीति 'सुब्रह्मण्या' काचन देवता; तां "सुब्रह्मण्योम्"-इत्यादिनिगदेनाह्वयेत्। तत्प्रकारः सूत्रे दर्शितः— "सुब्रह्मण्यो३ मिति त्रिरुक्त्वा सकृन्निगदम्"— इति[3]। निगदपदानां ब्राह्मणेनैव व्याख्यानात् नास्माभिर्व्याख्यायते॥

---

१— नेदं पदं क-पुस्तकादन्यत्र।

२— सुब्रह्मण्य एवर्त्त्विक् सुब्रह्मण्या माह्वयतीति सिद्धान्तितं हरिस्वामिना। अग्निष्टुदादिषु स्वय मेवेति वक्ष्यतीहैव (२२. ५. २.)।

३— "सुब्रह्मण्यां चाह्वयति सुब्रह्मण्यो३ऽ सुब्रह्मण्यो३मिति त्रिरुक्त्वा सकृन्निगदं यावदहे सुत्या भवति तथाह"—इति का० श्रौ० ७. ९. २०। " 'यावदहे' अतीते 'सुत्या भवति' अस्मात् क्रयणदिवसादारभ्य यावत्सु दिनेषु अतिक्रान्तेषु सुत्या भवति, तथा आह। तद्यथा— त्र्युपसत्के 'त्र्यहे सुत्याम्'—इति, षडुपसत्के 'षडहे सुत्याम्'—इति, द्वादशोपसत्के 'द्वादशाहे सुत्याम्'—इति"—इतीह या० दे०।

आह्वानं प्रशंसति— "यथा येभ्य इति। 'यथा' लोके 'येभ्यः' अर्थाय 'पक्ष्यन्' पाकं कर्त्तु मिच्छन् भवति, 'तान्' भोक्तॄन् 'ब्रूयात्'— 'इत्यहे वः पक्तास्मीति'। इत्यह इति पाकदिवसो निर्द्दिश्यते; इतो द्वितीयेऽहनि तृतीयेऽहनीतिरूपेणेत्यर्थः॥

ननु मन्त्रेणाह्वानेऽपि कथ मिन्द्र आगच्छतीत्याह— "ब्रह्म हि देवान् प्रच्यावयतीति। 'हि'-शब्दो "वायवाहि दर्शत[1]"—इत्येव-मादिमन्त्रगतां देवताप्रच्यावनप्रसिद्धिं द्योतते। सुब्रह्मण्यपदस्य पाठसिद्धां त्रिरावृत्तिं प्रशंसति— "त्रिःकृत्व आहेत्यादि। यज्ञस्य आवृत्तिरूपत्वं सवनत्रयापेक्षयेति द्रष्टव्यम्[2] ॥ १७॥

"इन्द्रागच्छेतीति। "इन्द्रो यज्ञस्य देवतेत्यादि। स्पष्टम्। "हरिव आगच्छ"—इत्यादि- "अहल्यायै जारः"—इत्यन्तानां पञ्चानां वाक्यानां पृथक्-पृथगर्थे सम्भवत्यपि तात्पर्यस्यैकत्व मभिप्रेत्य, सङ्गृह्य तात्पर्य माह— "हरिव आगच्छ मेधातिथेर्मेषेत्यादिना। "तद् यान्येवास्य चरणानि तैरेवैन मेतत् प्रमुमोदयिषतीति। 'तत्' तथा सति 'अस्य' इन्द्रस्य 'यान्येव' चरणानि चारित्राणि, पूर्वपक्षापरपक्ष-लक्षणाभ्या मभिमतस्य वस्तुनो हरणं, मेधातिथेः काण्वायनेर्मेषो भूत्वा हरणम्, —इत्येवमादीनि; 'तैरेव' 'एनं' प्रमोदयितु मिच्छति[3]॥

---

१— ऋ० सं० १. २. १। २— ऐ० ब्रा० ६. १. ३ द्रष्टव्यम्।

३— मीमांसादर्शने त्वेतत्कथाया कविकल्पनामूलत्व मेव सिद्धान्तितम्। तत्रापि तन्त्रवार्त्तिके विशेष उक्तः (जै० सू० ९.१. ४२–४४; अधि० १५.)। "सवितैवाहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वात् जीर्यत्यस्मादनेन वोदितेन वेत्यहल्याजार उच्यते, न परस्त्रीव्यवहारात्"–इत्यादि च द्रष्टव्यम्।

हरिवआदीनि पदानि सामब्राह्मणे व्याख्यातानि[1] ॥१८,१९॥

"देवा ब्रह्माण इति। अनयोस्तात्पर्य्यमाह— "तद्देवांश्च ब्राह्मणांश्चाहेति। 'अत्र' अस्मिन् यज्ञे 'उभयैः' द्विविधैः 'देवैः ब्राह्मणैश्च' यष्टव्यत्वेन याजकत्वेन च 'अर्थः' प्रयोजनं यज्ञसिद्धिः यजमानस्य 'भवति', तानेवैतान् 'देवाः ब्राह्मणाः'—इति पदद्वयमाह नेतरानित्यर्थः ॥ २०॥

"अथ प्रतिप्रस्थातेति[2]। 'अग्नीषोमीयेण पशुना प्रत्युपतिष्ठते प्रतिप्रस्थाता' शालायाः पुरोदेशे अग्नीषोमीयं पशुमादाय गच्छतः सोमस्याभिमुखं स्थापयेदित्यर्थः। अग्नीषोमीयस्यावस्थितिं यजमानस्य आत्मनिष्क्रयरूपेण प्रशंसति— "आग्नीषोमौ वा एतमिति। 'एतं' दीक्षितम् 'अन्तर्जम्भे' अन्नखादनस्थानं जम्भः, दन्तपङ्क्तोरन्तराल इत्यर्थः। एतदेवोपपादयति— "आग्नावैष्णवं ह्यद इति। यस्मादस्य यजमानस्य 'अदः' विप्रकृष्टे काले दीक्षणीयेष्टौ 'हविः' अभूत्। अस्तु किं तत इत्याह— "यो वै विष्णुरिति। तत्र विष्णुरिति योऽस्ति, 'स सोमः'; सोमस्य यागनिर्वर्त्तकत्वेन यज्ञत्वात्; "यज्ञो

---

१— तानि हि सा० ष० ब्रा० १. १. २ द्रष्टव्यानि। तत्रैव निगदः समग्रः पठितश्च। तथा सामसूत्रे लाट्यायनेऽपि (१. ३.)। एष निगदः सुब्रह्मण्यनामसामवेदीयर्त्विजा गीयतेऽतः सुब्रह्मण्यसामेत्यप्युच्यते। वस्तुतो निगदो नाम यजुर्विशेष एवेति सिद्धान्तितो मीमांसायाम्; जै० द० २. १ ३८–४५ सूत्राणि द्रष्टव्यानि। तैत्तिरीयारण्यकेऽप्ययं मन्त्रो ब्रवाण इत्यन्त आम्नातः (१. १२. ३, ४)।

२— का० श्रौ० सू० ७. ९. २१।

वै विष्णुः"—इतिश्रुतेः[१]। यज्ञद्वारा विष्णोः सोमत्वम्। 'दीक्षा' संस्कारः; दीक्षणीयेष्ट्या संस्कृतत्वादेव दीक्षणीयेष्टिदेवतयोर्हविश्च 'एनं' जम्भे स्थितम्। अतो जम्भाद् विमोक्षाय अग्नीषोमीयं दत्त्वा आत्मनिष्क्रयणं कृतवान् भवतीत्यर्थः ॥ २१ ॥

"तद्धैक इति[२]। 'अयम्' उल्मुकरूपः 'अग्निः', 'अयं सोमः'; 'ताभ्यां' सकाशात् आत्मानं 'निष्क्रीणामहे' इत्युल्मुकस्याहर्त्तुरभिप्रायः। अमुं पक्षं निराकरोति— "तदु तथा नेति। तर्हि कथं सहभाव उपपद्यत इति, तत्राह— "यत्र वा एतौ क्व च तत् सहैवेति। 'एतौ' अग्नीषोमौ 'यत्र क्व च' स्थाने 'सह' वर्त्तेते, 'तत्' तादृग्रूपा स्थितिरेवात्र सहभाव एवेत्यर्थः। एवकारेण संयोजनपक्षो व्युदस्यते ॥ २२ ॥

"स वै द्विरूपो भवतीति। 'सः' अग्नीषोमीयः पशुः। द्वैरूप्ये कारणाभिधानम्— "द्विदेवत्यो हीति। द्वैरूप्यसिद्धयेऽपेक्षितौ वर्णावाह— "कृष्णसारङ्गः स्यादित्याहुरिति। 'सारङ्गः' शबलवर्णः[३]। 'एतत्' कृष्णत्वं शबलत्वं च 'एनयोः' अग्नीषोमयोः 'रूपतम मिव'

---

१— पुरस्ताचात्र (१. १. २. १३.) द्रष्टव्यम्।

२— का० श्रौ० सू० ७. ६. २४।

३— सारङ्गः कर्बुरः, वर्णान्तरानुविद्धः शुक्लः सारङ्ग इत्युच्यते, कृष्णेन वर्णेन सहितः सारङ्गः; अथवा कृष्णश्चासौ सारङ्गश्चेति कृष्णसारङ्गः। एवं लोहितसारङ्गः इति व्याख्यातं याज्ञिकदेवेन। 'वर्णान्तरोपेतः कृष्णवर्णः कृष्णसारङ्गः, एवं लोहितसारङ्गोऽपि'—इत्येव माह पितृभूतिराचार्यः, टीकाकृत् कर्कश्च।

अत्यन्त मभिमतं रूप मित्यर्थः। "आग्नेयः कृष्णग्रीवः"—इत्यादौ[1] अग्नेः कार्ष्ण्यसम्बन्धश्रवणात् तदेव तदुचितं रूपम्, सारङ्गवर्णस्य सोमयोग्यत्व मपि आह्लावल्यां द्रष्टव्यम्। तदलाभेऽपि वा 'लोहित-सारङ्गः स्यात्' लोहितस्याग्निवर्णसाम्यं प्रसिद्धम् ॥ २३ ॥

"तस्मिन् वाचयतीति। 'तस्मिन्' अजे, आगते इति शेषः। "नमो मित्रस्येतीति[2]। नमो मित्रस्येन मालभ्य वाचयतीति[3] कात्यायनः ॥

मन्त्रस्याय मर्थः। 'मित्रस्य' मितेस्त्राता मित्रः सूर्यः, वरुणस्तमो-निवारकः सूर्यः, तस्य, तस्मै इत्यर्थः। 'नमः' नमस्कारः प्रह्वीभावः, अस्तु। अथवा "मैत्रं वा अहर्वारुणी रात्रिः"—इति श्रुत्यन्तरादह-रभिमानिदेवाय, रात्र्यभिमानिदेवाय, सूर्याय नम इत्यर्थः। 'चक्षसे' सर्वस्य द्रष्ट्रे नमः। 'महोदेवाय' महते देवाय च नमः। हे प्राणिनो यूयम् 'तत्' प्रसिद्धम्, 'ऋतं' सत्यभूतम्, आदित्याख्यं वस्तु 'सपर्यत' अर्चयत। 'दूरे दृशे' दूरे दर्शनीयम् ॥ २४ ॥

"अथाध्वर्युरिति। "उपस्तम्भेनोपस्तभ्नातीति[4]। उपस्तभ्यते प्रतिबध्यते इति 'उपस्तम्भः[5]' शकटाग्रधारणं काष्ठम्, तेन 'उपस्त-भ्नाति' शकटाग्रम्। हे काष्ठ! त्वं 'वरुणस्य' उपनह्य स्थापितस्य

---

१— वा० सं० २४. १, ४, ६, ९. १४; २९. ५८। तद्विधायकं ब्राह्मणं तूपरिष्टादाम्नास्यतेऽत्रैव— १३. २. २. ३।

२— वा० सं० ४. ३५. १।  ३— का० श्रौ० सू० ७. ९. २४ ख।

४— का० श्रौ० सू० ७. ९. २५।  ५— 'उपस्तम्भनं'—इति क।

सोमस्य 'उत्तम्भन मसि'[१]। शकटस्योत्तम्भकत्वाद्, तद्द्वारा वरुण-स्याप्युत्तम्भकत्वम्। "उदः स्थास्तम्भोः पूर्वस्य"-इति[२] सकारलोपः॥

समन्त्रक मुद्धरणं विधत्ते— "वरुणस्य स्कम्भसर्जनी स्थ इति[३]। 'वरुणस्य' सोमस्य, तदाधारभूतस्यानसोऽङ्गस्य यत् स्कम्भनम्, तस्य सर्जन्यौ 'स्थः', तादृश्यौ युवा मुद्गृह्णामीत्यर्थः॥

अमुं मन्त्रं व्याचष्टे— "वरुण्यो ह्येष एतर्हीति। 'एतर्हि' एतस्मिन् क्रीतावसरे सोमो 'वरुण्यः' भवति। "तयोर्दाहिलौ च छन्दसि"-इति[४] एतच्छब्दस्य हिल्॥ २५॥

"अथ चत्वारो राजासन्दी माददत इति[५]। चत्वारोऽत्राध्वर्यु-प्रतिप्रस्थात्रादयोऽध्वर्युवर्ग्या एव। तथा चापस्तम्बः— "तां सर्वेऽध्वर्य-वोऽग्रेण प्राग्वंशं राजन्योह्यमान उद्गृह्णन्तीति[६]। व्यतिरेकप्रदर्शन-मुखेन ऋत्विक्चतुष्ट्वं प्रशंसति— "द्वौ वा अस्मै मानुषाय राज्ञे आददात इति। दोलिका[७] मित्यर्थः। 'यः' 'अस्य' प्रतीयमानस्य 'सर्वस्य' अपि जगतः 'सकृत्' उपायेनैव 'ईष्टे' ईश्वरो भवति, 'अथ' 'एताम्' एतदीया मासन्दीं 'चत्वारः', 'आददते'-इति पूर्वत्रान्वयः॥ २६॥

आसन्द्या औदुम्बरीत्वं विधाय प्रशंसति— "औदुम्बरी भवत्यन्नं

---

१— वा० सं० ४, ३६. १। २— पा० सू० ८. ४. ६१।
३— वा० सं० ४. ३६. २। ४— पा० सू० ५. ३. २०।
५— का० श्रौ० सू० ७, ६. २७। ६— आ० श्रौ० सू० १०. २६. ७।
७— 'आन्दोलिका'-इति ङ, च।

वा ऊर्गुदुम्बर इति। "देवा इष मूर्जं व्यभजन्त, तत उदुम्बरः समभवत्"—इति[1] श्रुत्यन्तरप्रसिद्धिर्वैशब्देन द्योत्यते ॥

ननु इदम् "ऊर्जोऽन्नाद्यस्यावरुद्धै"-इति उदुम्बरस्य फल-विधानम्; कुतः? 'अवरुद्धै'-इति चतुर्थ्या फलत्वप्रतिभानात्। अत ऊर्जोऽवरोधलक्षणाय फलायौदुम्बरी कर्त्तव्येत्यर्थः। नैतदेवम्। नात्रौदुम्बरी भवतीति विधिरुपलभ्यते, वर्त्तमानव्यपदेशात्; अर्थवादेनैव स विधिरुन्नेयः; अतोऽत्र तस्यौदुम्बरत्वस्य विधातु मशक्यत्वात् कस्येदं फलं स्यात्। न तु स्तुतिञ्च करोतु, फल मपि विदधात्विति मन्तव्यम्; तथा द्वैविध्ये वाक्यभेदापत्तेः। अत इदं केवलं स्तावक मिति सिद्धम् ॥ २७ ॥

"नाभिदघ्ना भवतीति। नाभिप्रमाणा भवेत्। "प्रमाणे द्वयसज्-दघ्नञ्-मात्रचः"-इति दघ्नच् प्रत्ययः[2]। "अत्र वा अन्न मिति। 'अत्र'—इति नाभिप्रदेशस्याभिनयः। अन्नस्य नाभिप्रति-ष्ठितत्वे सोमस्य कि मायात मित्यत आह— "अन्नं सोम इति। प्रकारान्तरेण नाभिदघ्नत्वं प्रशंसति— "अक्षो एव रेतस आश्रय इति। 'अक्षो एव' अक्षैव च। 'अक्षदघ्ना' नाभिदघ्नेत्यर्थः। अत्र कात्यायनः— "औदुम्बरी मासन्दीं नाभिदघ्ना मरत्निमात्राङ्गी मूता माहरन्ति चत्वार इति[3] ॥ २८ ॥

"ता मभिमृशतीति[4]। 'ताम्' आसन्दी मित्यर्थः। "वरुणस्य

---

१— ऐ० ब्रा० ५. ४. ५।　　२— पा० सू० ५. २. ३७।
३— का० श्रौ० सू० ७. ६. २७।　　४—का० श्रौ० सू० ७. ६. २८।

ऋतसदन्यसीति[1]। हे आसन्दि[2]! त्वं 'वरुणस्य' सोमस्य 'ऋतसदनम्'। ऋत मिति यज्ञनाम; "सत्यं वा यज्ञं वा"—इति यास्कः[3]। यज्ञार्हं स्थान मसीत्यर्थः॥

आसन्दीवत् कृष्णाजिनस्यापि सोमासादनार्हत्वादासन्दीस्पर्शन-मन्त्र एव कृष्णाजिनास्तरणेऽपि विनियुक्तः। सोमासादनमन्त्रे त्वासीदेति विशेषः[4]। अतो न मन्त्राः पृथग्-व्याख्यानार्हाः। "स यदाह वरुणस्येत्यादिः। स्पष्टम्[5]॥ २९॥

"अथैनं शाला मित्यादि। प्राग्वंशस्य पुरोदेशे आसन्द्यां स्थापितं सोम मासन्द्या सह प्राचीनवंशं गमयेदित्यर्थः। प्रपादन-समये "याते धामानि"—इति[6] मन्त्रं यजमानं वाचयेत्। अध्वर्योः प्राधान्यात् तदपेक्षया 'प्रपादयति'—इत्येकवचनम्; वस्तुतस्तु चत्वारः प्रपादयन्ति। तथाच सूत्रकारः— "शालां प्रवेशयन्ति दीक्षितसञ्चरेण, यात इति वाचयति, आहवनीयं दक्षिणेन स्थापयन्ति"-इति[7]॥

---

१— वा० सं० ४. ३६. ३।

२— उदुम्बरकाष्ठनिर्मिता, नाभिप्रमाणपादयुक्ता, अरत्निमात्राणि अङ्गानि इषोपलक्ष्याणि यस्याः सा, ऊता=मुञ्जरज्ज्वा व्यूता, आसन्दी=मञ्चिका भवति। सौत्रमण्यां हि श्रूयते— "मुञ्जविवयना भवति"—इति (१२. ८. ३. ६.)। तत्र चाचार्येणोक्तम्— "सोमासन्दीवदिति (१९. ४.७.)।

३— निरु० ४. ३. ३।

४— वा० सं० ४. ३६. ४, ५।

५— का० श्रौ० सू० ७. ६. २९, ३०।

६— वा० सं० ४. ३७. १।

७— का० श्रौ० सू० ७. ९. ३१, ३२, ३३।

मन्त्रस्याय मर्थः। हे 'सोम!' 'ते' 'या' यानि 'धामानि' स्थानानि नामानि जन्मानि च त्रीण्यपि 'धाम'-शब्दवाच्यानि[1] 'हविषा' यजन्ति', 'ते' तव सम्बन्धीनि 'ता' तानि 'विश्वानि' सर्वाण्यपि। 'यज्ञम्'—इति विभक्तिव्यत्ययः, अयं यज्ञः 'परिभूः' परितो भावयिता 'अस्तु'। त्वञ्च 'गयस्फानः' पशुपुत्रादिना गृहस्य वर्द्धयिता, 'प्रतरणः' आपद्भ्यः प्रकर्षेण तारयिता, 'सुवीरः' शोभन-वीरोपेतः, तत्प्रद इत्यर्थः, 'अवीरहा' पुत्रादेरहन्ता च सन्, 'दुर्यान्' गृहान् 'प्रचर' प्रकरोषि। चतुर्थपाद-गत-'दुर्य'-शब्दार्थं ब्रूवन् कृत्स्नमन्त्रतात्पर्य माह— "गृहा वै दुर्या इत्यादिना ॥ २०॥

"अत्र हैक उदपात्र मुपनिनयन्तीति[2]। मनुष्योपचारवत् देवस्य सोमस्योदपात्रनिनयनलक्षणोपचारे सति तदुपचरणं मानुषं भवति, एतत् 'यज्ञे व्यृद्धम्'; अतो मानुषत्वपरिहाराय उदपात्रं नोपनिनयेत् ॥ २१ ॥ १ [ ३. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ३ ॥

---

१— निरु० ९. ३. ७ द्रष्टव्यम् ।

२— का० श्रौ० सू० ७. ९. ३४ ।

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गनार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पांत्रसात्सिङ्गनार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

[ अथ चतुर्थाध्याये प्रथमं ब्राह्मणम् ]

शिरो वै यज्ञस्यातिथ्यं बाहू प्रायणीयोदयनीयौ। अभितो वै शिरो बाहू भवतस्तस्मादभित आतिथ्यमेते* हविषी भवतः प्रायणीयश्चोदयनीयश्च ॥ १ ॥

अथ यस्मादातिथ्यं नाम†। अतिथिर्व्वा ऽएष एतस्यागच्छति यत् सोमः क्रीतस्तस्मा ऽएतद्यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्तदह मानुषꣳ हविर्द्देवाना मेव मस्मा ऽएतदातिथ्यं करोति ॥ २ ॥

तदाहुः। पूर्व्वोऽतीत्य गृह्णीयादिति यत्र वा ऽअर्हन्तमागतं नापचायन्ति‡ क्रुध्यति वै स तत्र तथा ह्यापचितो भवति ॥ ३ ॥

तद्वा ऽअन्यतर एव व्विमुक्तः स्यात्। अन्यतरोऽविमुक्तोऽथ गृह्णीयात् स यदन्यतरो व्विमुक्तस्तेनागतो यदन्यतरोऽव्विमुक्तस्तेनापचितः ॥ ४ ॥

---

* 'मेने'-इति ग, घ।

† 'नाम'-इति ग, ख।

‡ 'नापचातन्ति'-इति क, ख।

तदु तथा न कुर्यात्। व्विमुच्यैव प्रपाद्य गृह्णीयाद् यथा वै देवानां चरणं तद्वा ऽअनु मनुष्याणां तस्मान् मानुषे यावन्न विमुञ्चते नैवास्मै तावदुदकꣳ हरन्ति नापचितिं कुर्व्वन्त्यनागतो हि स तावद्भवत्यथ यदैव व्विमुञ्चतेऽथास्मा ऽउदकꣳ हरन्त्यथापचितिं कुर्व्वन्ति तर्हि हि स ऽआगतो भवति तस्माद्विमुच्यैव प्रपाद्य गृह्णीयात् ॥ ५ ॥

स वै सन्त्वरमाण इव गृह्णीयात्। तथा ह्यापचितो भवति तत्पत्न्यन्वारभते पर्य्युह्यमाणं वै यजमानोऽन्वारभतेऽथात्र पत्न्युभयत एवैतन्मिथुनेनान्वारभेते यत्र वा ऽअर्हन्नागच्छति सर्व्वगृह्या इव वै तत्र चेष्टन्ति तथा ह्यापचितो भवति ॥ ६ ॥

स वा ऽअन्येनैव ततो यजुषा गृह्णीयाद्। येनो चान्यानि हवीꣳष्येकं वा ऽएष भागं क्रीयमाणोऽभिक्रीयते छन्दसा मेव राज्याय छन्दसाꣳ साम्राज्याय तस्य छन्दाꣳस्यभितः साचयानि यथा राज्ञोऽराजानो राजकृतः सूतग्रामण्य एव मस्य छन्दाꣳस्यभितः साचयानि ॥ ७ ॥

न वै तदवकल्पते। यच्छन्दोभ्य इति केवलं गृह्णीयाद्यत्र वा ऽअर्हते पचन्ति तदभितः साचयोऽन्वाभक्ता

भवन्त्यराजानो राजकृतः सूतग्रामण्यस्तस्माद्यचैवैतस्यै गृह्णीयात्तदेव छन्दांस्यन्वाभजेत् ॥ ८ ॥

स गृह्णाति। अग्नेस्तनूरसि विष्णवे त्वेत्यग्निर्वै गायत्री तद्गायत्री मन्वाभजति ॥ ९ ॥

सोमस्य तनूरसि विष्णवे त्वेति। क्षत्रं वै सोमः क्षत्रं त्रिष्टुप् तत् त्रिष्टुभ मन्वाभजति ॥ १० ॥

अतिथेरातिथ्य मसि विष्णवे त्वेति*। सोऽस्योद्धारो यथा† श्रेष्ठस्योद्धार एव मस्यैष ऋते छन्दोभ्यः ॥ ११ ॥

श्येनाय त्वा सोमभृते विष्णवे त्वेति। तद्गायत्री मन्वाभजति सा यद्गायत्री श्येनो भूत्वा दिवः सोम माहरत् तेन सा श्येनः सोमभृत् तेनैवैना मेतद्वीर्येण द्वितीय मन्वाभजति ॥ १२ ॥

अग्नये त्वा रायस्पोषदे विष्णवे त्वेति। पशवो वै रायस्पोषः पशवो जगती तज्जगती मन्वाभजति ॥ १३ ॥

अथ यत्पञ्च कृत्वो गृह्णाति। संवत्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्चकृत्वो गृह्णात्यथ यद्विष्णवे त्वा विष्णवे त्वेति गृह्णाति विष्णवे हि गृह्णाति यो यज्ञाय गृह्णाति ॥ १४ ॥

---

* 'त्वेति'–इति ग, घ। † 'अथा'–इति ख।

नवकपालः पुरोडाशो भवति। शिरो वै यज्ञस्यातिथ्यं नवाक्षरा वै गायत्र्यष्टौ तानि यान्यन्वाह प्रणवो नवमः पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्धं ऽएष यज्ञस्य तस्मान्नवकपालः पुरोडाशो भवति ॥ १५ ॥

कार्ष्मर्य्यमयाः परिधयः। देवा ह वा ऽएतं वनस्पतिषु राक्षोघ्नं ददृशुर्य्यत्कार्ष्मर्य्यꣳ शिरो वै यज्ञस्यातिथ्यं नेच्छिरो यज्ञस्य नाष्ट्रा रक्षाꣳसि हिनसन्निति तस्मात् कार्ष्मर्य्यमयाः परिधयो भवन्ति ॥ १६ ॥

आश्ववालः प्रस्तरः। यज्ञो ह देवेभ्योऽपचक्राम सोऽश्वो भूत्वा पराङावर्वर्त्त तस्य देवा अनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य सार्द्धꣳ सन्न्यासुस्तत एता ओषधयः समभवन् यदश्ववालाः शिरो वै यज्ञस्यातिथ्यं जघनार्द्धो वाला ऽउभयत एवैतद्यज्ञं परिगृह्णाति यदाश्ववालः प्रस्तरो भवति* ॥ १७ ॥

ऐक्षव्यौ विधृती। नेद्बर्हिश्च प्रस्तरश्च संलुभ्यात† ऽइत्यथोत्पूयाज्यꣳ सर्व्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्रानुयाजा भवन्ति ॥ १८ ॥

---

* 'भवति'—इति ग, घ।

† 'संल्लुभ्यते'—इति ख, डा०-वेबरदृष्टश्च। 'संलुभ्यात'—इति सायणसम्मत'—इति डा०—वेबरः।

आसाद्य हवीꣳष्यग्निं मन्थति। शिरो वै यज्ञस्यातिथ्यं जनयन्ति वा ऽएन मेतद्यन्मन्थन्ति शीर्षतो वा ऽअग्रे जायमानो जायते शीर्षत एवैतदग्रे यज्ञं जनयत्यग्निर्वै सर्व्वा देवता अग्नौ हि सर्व्वाभ्यो देवताभ्यो जुह्वति शिरो वै यज्ञस्यातिथ्यꣳ शीर्षत एवैतद्यज्ञꣳ सर्व्वाभिर्देवताभिः समर्द्धयति तस्मादग्निं मन्थति* ॥ १९ ॥

सोऽधिमन्थनꣳ शकल मादत्ते। अग्नेर्ज्जनित्र मसीत्यत्र ह्यग्निर्ज्जायते तस्मादाहाग्नेर्ज्जनित्र मसीति† ॥ २० ॥

अथ दर्भतरुणके निदधाति। वृषणौ स्थ ऽइति तद्यावेवेमौ स्त्रियै साकञ्जावेतावेवैतौ ॥ २१ ॥

अथाधरारणिं निदधाति। उर्व्वश्यसीत्यथोत्तरारण्याज्यविलापनी मुपस्पृशत्यायुरसीति ता मभिनिदधाति पुरूरवा ऽअसीत्युर्व्वशी वा ऽअप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरेव मेवैष एतस्मान्मिथुनाद् यज्ञं जनयत्यथाहाग्नये मथ्यमानायानुब्रूहीति ॥ २२ ॥

स मन्थति। गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा छन्दसा मन्थामि जागतेन त्वा छन्दसा मन्थामीति तं वै छन्दोभिरेव मन्थति छन्दाꣳसि मथ्यमानायान्वाह

---

* 'मन्थति'–इति ग, घ। † 'मसीति'–इति ग, घ।

छन्दाꣳस्येवैतद्यज्ञ मन्वायातयति यथामु मादित्युꣳ रश्मयो जातायानुब्रूहीत्याह यदा जायते प्रह्रियमाणायेत्यनुप्रहरन्* ॥ २३ ॥

सोऽनुप्रहरति। भवतन्नः समनसौ सचेतसावरेपसौ। मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवत मद्य न ऽइति शान्ति मेवाभ्या मेतद्वदति यथा नान्योऽन्यꣳ हिꣳस्याताम् ॥ २४ ॥

अथ स्रुवेणोपहत्याज्यम्। अग्नि मभिजुहोत्यग्नावग्निश्चरति प्रविष्ट ऽऋषीणां पुत्रोऽभिशस्तिपावा। स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सद मप्रयुच्छन्त्स्वाहेत्याहुत्यै वा ऽएत मजीजनत त मेतयाहुत्याप्रैषीत्तस्मादेव मभि जुहोति ॥ २५ ॥

तदिडान्तं भवति†। नानुयाजान्यजन्ति शिरो वै यज्ञस्यातिथ्यं पूर्व्वार्द्धो वै शिरः पूर्व्वार्द्ध मेवैतद्यज्ञस्याभिसꣳस्करोति‡ स यद्धानुयाजान्यजेद्यथा शीर्षतः पर्य्याहृत्य पादौ प्रतिदध्यादेवं तत् तस्मादिडान्तं भवति नानुयाजान्यजन्ति ॥ २६ ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [ ४. १. ] ॥

---

* 'प्रहरन्'–इति ग, घ।   † 'भवति'–इति ग, घ।

‡ 'संस्करोति'–इति क, ख, डा०-वेबरदृष्टश्च।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

आतिथ्यस्य प्रायणीयानन्तर्यं विधत्ते— "शिरो वै यज्ञस्यातिथ्य मिति[1] । व्याख्यात मिदम् ॥ १ ॥

यत्सम्बन्धादिदं हविरातिथ्यम्, तस्य सोमस्य कथ मतिथित्व मिति निर्वचनप्रदर्शनद्वारेण तद्दर्शयति— "अथ यस्मादातिथ्यं नामेति । यस्मान्निमित्तादातिथ्य मिति हविषो नाम, अत उच्यत इति शेषः । 'एतस्य' यजमानस्य वसतिं यः 'अतिथिः' सन् यस्मात् 'आगच्छति'; न विद्यते प्रतिनियता तिथिर्यस्य, सोऽतिथि-रित्यर्थः । तस्मात् अतिथये सोमाय 'एतद्' हविः निरुप्यत इत्यातिथ्यं नाम सम्पन्नम् । अतिथित्व मुपजीव्यातिथ्य मवश्यं कर्त्तव्य मित्याह— "यथा राज्ञ इति । "राज्ञे वा ब्राह्मणाय वेति । राज्ञः "गौर्मधुपर्कः स्यात् स्नातकायोपस्थिताय राज्ञे वा"-इति-स्मृतेः[2] सिद्धः । ब्राह्मणः श्रोत्रियोऽभिमतः । "महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्"-इति-स्मृतेः[3] । 'तदह मानुषम्' आतिथ्य मिति शेषः । "हविर्देवाना मिति । देवानां हविरेवातिथ्य मित्यर्थः । "एव मस्मा एतदिति । दार्ष्टान्तिकम् ॥ २ ॥

---

१— का० श्रौ० सू० ८. १. १ ।

२— आप० ध० सू० २. ८. ८ द्रष्टव्यम् ।

३— याज्ञ० सं० १. १०९क ।

"तदाहुः पूर्वोऽतीत्य गृह्णीयादित्यादि। सोमम् 'अतीत्य' पृष्ठतः कृत्वा, स्वयं ततः 'पूर्वः' सन् पूर्व मागत्य हविः 'गृह्णीयात्'। विपक्षबाधपुरस्सरं हविर्ग्रहणं प्रशंसति— "यत्र वा अर्हन्त मागतं नापचायन्तीति। 'अर्हन्तं' पूज्यं गृहम् 'आगतम्' आगतमात्रं 'न अपचायन्ति'। चायतेर्लिट्यडभावश्छान्दसः[१]। पूजां न कुर्युः, 'सः' 'तत्र' तस्मिन्नपचितिविषये 'क्रुध्यति'। 'तथा ह' तथा सति सोमप्रवेशात् प्रागेव हविर्ग्रहणे सति 'अपचितो भवति' ॥ ३ ॥

अपचितिश्च द्वेधा सम्भवति,— अन्यतरानडुद्विमोकानन्तरम्, उभयविमोकानन्तरञ्च; तत्रान्यतरविमोकानन्तरपक्ष मुपन्यस्यति— "तद्वा अन्यतर एवेति[२]। एतदेवोपपादयति— "स यदन्यतरो विमुक्तस्तेनागत इति। तथा हि लोके यानाद्यविमोके सति आगमननिश्चयो न भवेत्; इह त्वन्यतरानडुद्विमोकेन तन्निश्चयो भवति, अन्यतरस्याविमोके तदागमनात् प्रागेव सा कृता स्यात् ॥ ४ ॥

"तदु तथा न कुर्यादिति। इदानीं स्वाभिमतं पक्ष माह— विमुच्यैव प्रपाद्य गृह्णीयादिति। 'विमुच्यैव' उभावपीत्यर्थः। एकतरं विमोच्यापि अन्यतरस्याविमोकादनागमनं सम्भाव्येत। 'प्रपाद्य' सोमं शालां प्रवेश्य। लौकिकातिथ्यदृष्टान्तबलेन श्रौतस्यातिथ्यस्य निर्वापकालं प्रतिपिपादयिषुरुभयविमोकपक्षं समर्थयते— "यथा

---

१— 'चायृ' भ्वा० उभ० ८८० धा०। पा० ३. ४. ९४सूत्रेण प्राप्तोऽट्।
२— का० श्रौ० सू० ८. १. ३।

वै देवानां चरण मिति। 'यावत् न विमुञ्चते' प्रयाणसाधनं यानादिकं न परित्यजति। स्पष्ट मन्यत् ॥ ५ ॥

"स वै सत्वरमाण इति[1]। सत्वराया अभावे अनादरः प्रतिभाति, अतस्त्वरया गृह्णीयात्। निर्वापे पत्न्यन्वारम्भं विधाय प्रशंसति— "तत् पत्न्यन्वारभते पर्युह्यमाणं वै यजमान इति। 'तत्' तेन आदौ परिवहनकाले यजमानान्वारम्भणेन, 'अत्र' सोमार्थहविर्निर्वापकाले 'उभयतः' उभयोः पार्श्वयोरपि 'मिथुनेनान्वारभेते'। जायापतीमिथुनमध्ये एकस्यारम्भे अपरस्य तदविनाभूतस्यापि सिद्धत्वादित्यभिप्रायः। "यत्र वा अर्हन्नित्यादि। 'सर्वगृह्या इव' गृहे स्थिताः, सर्वे पदार्था अत्यर्थ मनिर्ग्राह्याः, ते सर्वगृह्याः; 'तत्र' तस्मिन् आगमने निमित्ते सति, तादृशास्तिष्ठन्ति ॥ ६ ॥

"स वा अन्येनेत्यादि। 'ततः' तस्मात्, प्राकृतान्निर्वापमन्त्रात् 'अन्येन यजुषा' "अग्नेस्तनूरसि"—इत्यादिना[2]। तत इत्यस्यार्थ माह— "येनो चेति। मन्त्रान्यत्वे कारण माह— "एकं वा एष भाग मिति। 'एषः क्रीयमाणः' आतिथ्येन प्यायमानः सोमः 'एकं' समानं 'भागम्' 'अभि'लक्ष्य 'क्रीयते', 'छन्दसां' राज्यं साम्राज्यं च प्राप्नोति, तथा सम्पादनायेत्यर्थः। कथं छन्दस्सम्बन्ध इति, तत्राह— "तस्य छन्दांसीति। 'अभितः साचयानि' पुरः पश्चाच्च सहागन्तारः प्रधानपुरुषा इत्यर्थः। "यथा राज्ञोऽराजानः"—इत्यत्र अराजान

---

[1]— का० श्रौ० सू० ८. १. २ ख।

[2]— वा० सं० ५. १. १।

इत्यकारप्रश्लेषः । ते के ? 'राजकृतः' राजत्वसम्पादकाः पट्टाभिषेकस्य[1] कर्त्तारः, 'सूतग्रामण्यः' सूतश्रेष्ठाः ॥ ७ ॥

निर्वापे समप्राधान्यपक्षं दूषयित्वा असमस्यैव निर्वाप माह— "न वै तदवकल्पत इत्यादिना । अय मर्थः । यदि प्रधानस्योपसर्जनानाञ्च सदृशीं प्रतिपत्तिं कुर्यात्, तदा प्रधानस्य प्रतिपत्तिर्न कृता स्यात्, अतो यथा प्रधानस्यामन्त्रणे सति अप्रधाना अप्यनाहूता एव त मनुगच्छन्ति, एवं सोमार्थनिर्वापेण छन्दसा मपि प्रसङ्गसिद्धेरन्वाभजनं सिद्ध मिति सोमस्यैव निर्वापं कुर्यादित्यर्थः ॥८॥

हविर्ग्रहणे मन्त्रं विधत्ते— "स गृह्णात्यग्नेस्तनूरसीति[2] । हे निरूप्यमाणव्रीहिपदार्थ ! त्वम् 'अग्नेः' 'तनूरसि' त्वं शरीरं भवसि । शरीरोपचयहेतुत्वाद्वा तनूवदाच्छादकत्वाद्वा तनूत्वम् । "यो वै विष्णुः सोमः स इति श्रुतेः[3], सवनत्रयव्यापित्वाद्वा सोमो विष्णुः[4], अतो 'विष्णवे त्वा' इति सोमस्य विष्णुत्वेन निर्देश उपपद्यते । अथवा "विष्णवे हि गृह्णाति यो यज्ञाय गृह्णाति"— इति श्रुतेः[5] त्वां यज्ञाय गृह्णामीत्यर्थः । मन्त्रगत मग्निपदं गायत्र्यन्वाभक्तिसाधनत्वेन प्रशंसति— "अग्निर्वै गायत्रीत्यादिना । अग्नेर्गायत्रीरूपत्वं प्रजापतिमुखात् सहोत्पन्नत्वात् द्रष्टव्यम् । "त

---

१— 'पटभिषेकस्य'—इति ङ, च । २— वा० सं० ५. १. १ ।

३— इहैव पुरस्तात् ( ३ अ० ४ ब्रा० २१ क० ) १८७ पृ० द्रष्टव्यम् ।

४— "अथेमं विष्णुं त्रेधा व्यभजन्त"—इत्यादि ब्राह्मण मुपरिष्टाद् ( शत० १४. १. १. १५—२० ) द्रष्टव्यम् ।

५— इहैवोपरिष्टात् ( २११ पृ० १४ कण्डी द्रष्टव्या ।

मग्निर्देवतान्वसृज्यत गायत्रीच्छन्दः”—इति[1] हि श्रूयते। एव मुत्तरमन्त्रवाक्यान्यपि व्याख्येयानि ॥ ९ ॥

“सोमस्य तनूरसीत्यादि[2]। सोमस्यान्नत्वेन साक्षाच्छरीरोपचय-हेतुत्वात् तनूत्वम्। सोमस्य राज्ञः क्षत्रत्व मसकृदुक्तम्। प्रजापते-रसो बाहुभ्याञ्च राजन्येन सह त्रिष्टुभोऽप्युत्पत्तेः[3] क्षत्रत्वम् ॥१०॥

“अतिथेरातिथ्य मसीति[4]। अत्रातिथिशब्दस्य तात्पर्य माह— “सोऽस्योद्धारो यथा श्रेष्ठस्येति। उद्ध्रियते असाधारण्येन विभज्यत इत्युद्धारः प्रतिनियतभागः ॥ ११ ॥

पुनरपि गायत्र्या अन्वाभजनरूपतया श्येनशब्दं प्रशंसति— “श्येनाय त्वेति[5]। श्येनरूप मास्थाय सोमाहरणाद् गायत्री सोम-भृत् श्येनः। एतदेव दर्शयति— “सा यद् गायत्री श्येनो भूत्वेति। ‘तेनैव वीर्येण’ हेतुना ‘एनां’ गायत्रीं ‘द्वितीयं’ भागं प्रति ‘अन्वाभजति’ अध्वर्युः, एतद्भागपाठेनेत्यर्थः ॥ १२ ॥

“अग्नये त्वेति[6]। ‘अग्नये’ अङ्गनादिगुणविशिष्टाय, ‘रायस्पोषदे’ धनपोषप्रदात्रे, ‘विष्णवे’ सोमाय, हे हविः! ‘त्वा’ त्वां गृह्णा-मीत्यर्थः। जगत्यन्वाभजनरूपतया मन्त्रभागं प्रशंसति— “पशवो वै रायस्पोष इति। वर्द्धमानधनरूपत्वं पशूना मेवेति ‘पशवो वै रायस्पोषः’ इत्युक्तम्। पशूनां जगतीत्वं जगत्या सोमाहरणसमये

---

१— तै० सं० ७. १. १. ६।
२— वा० सं० ५. १. २।
३— तै० सं० ७. १. १. ७।
४— वा० सं० ५. १. ३।
५— वा० सं० ५. १. ४।
६— वा० सं० ५. १. ५।

आहृतत्वाद् द्रष्टव्यम्। तथा च तैत्तिरीयकम्— "सा पशुभिश्च दीक्षया चागच्छदिति[1] ॥ १३ ॥

प्रकृतौ चतुःकृत्वो ग्रहणाद्यापि चोदकतस्तत्प्राप्तै पञ्चसङ्ख्यां विधाय प्रशंसति— "अथ यत् पञ्चकृत्व इति[2]। यज्ञस्य संवत्सर-सम्मितत्वं गवामयनादिसत्ररूपस्य यज्ञस्य संवत्सरसाध्यत्वाद्वा[3], संवत्सरात्मकप्रजापतिसम्मितत्वाद्वा[4], "द्वादशाग्निष्टोमस्य स्तोत्राणि"— इति[5]श्रुतेस्तद्गतसङ्ख्यया संवत्सरसाम्याद्वा[6] द्रष्टव्यम्। ग्रहणमन्त्रेषु[7] सर्वत्र विष्णुशब्दोपादानं प्रशंसति— "अथ यद् विष्णवे त्वा विष्णवे त्वेति। यत्र यत्र हविर्गृह्यते, तत्र तत्र यज्ञार्थत्वनियमात् सोमस्य हविष्ट्वेन यज्ञार्थत्वात् सर्वत्र 'विष्णवे-विष्णवे' इति ग्रहणं युक्त मित्यर्थः ॥ १४ ॥

"नवकपालः पुरोडाश इति[8]। नवसु कपालेषु संस्कृतो नव-कपालः। नवकपालस्यातिथ्यार्हत्व माह— "शिरो वा इति। "यान्यन्वाहेति। 'यानि' अक्षराणि अनुक्रमेण उच्चारणकाले ब्रूते, तान्यष्टौ भवन्ति, प्रयोगकाले "प्रणवष्टेः"—इति[9] प्रयुज्यमानः

---

१— तै० सं० ६. १. ६. ४। २— का० श्री० सू० ८. १. ४ द्रष्टव्यम्।
३— ऐ० ब्रा० ४. ३. ३। तै० सं० ७. ४. ७; ५. १। ता० ब्रा० ४. १।
४— ऐ० ब्रा० २. २. ७। ५— ऐ० ब्रा० ३. ४. १।
६— बहिष्पवमानः, माध्यन्दिनपवमानः, आर्भवपवमानः, चत्वारि आज्य-स्तोत्राणि, चत्वारि पृष्ठस्तोत्राणि, एकं यज्ञायज्ञीयं स्तोत्र मिति।
७— वा० सं० ५. १. १—५। ८— का० श्री० सू० ८. १. २।
९— पा० सू० ८. २. ८९।

'प्रणवः' एव 'नवमः'; "गायत्रं प्रातस्सवनम्"—इतिश्रुतेः 'यज्ञस्य पूर्वार्द्धो गायत्री'; 'तस्माद्' गायत्र्यानुगुण्याय 'नवकपालः' कर्त्तव्यः ॥ १५ ॥

"कार्श्मर्यमयाः परिधय इति[1]। 'कार्श्मर्यः' भद्रपर्णी, तन्मया एव 'परिधयः' कर्त्तव्याः। प्रकृतौ पलाशवैकङ्कतादीना मैच्छिकत्वादत्र नियमविधिः। "देवा ह वा इत्यादि कार्श्मर्यमयत्वस्योपपादनम् ॥ १६ ॥

"आश्ववालः प्रस्तर इति[2]। आश्ववालत्वं तन्नामनिर्वचनद्वारेण प्रशंसति— "यज्ञो ह देवेभ्य इति। 'तान्' आश्ववालान् 'आलुलुपुः' "लुप्लृ छेदने"[3] चिच्छिदुः। 'साद्धं सन्न्यासुः' एकीकृत्य सम्यग् भूमौ प्रचिक्षिपुः। तेभ्यः ताः 'एताः' अश्ववालाख्याः 'ओषधयः' सञ्जाताः। आश्ववालाना मातिथ्येष्टियोग्यत्व माह— "शिरो वै यज्ञस्यातिथ्यं जघनार्द्धो वाला इति। आतिथ्यस्य सोमात् प्रथम मनुष्ठेयत्वेन शिरस्त्वात् तस्यादावनुष्ठितत्वात् जघनार्द्धावस्थितवालपरिणामरूपस्याश्ववालस्य तत्र प्रयोगे सति अपगतस्य यज्ञस्य 'उभयतः' परिग्रहः कृतो भवति ॥ १७ ॥

"ऐक्षव्यौ विधृती इति[4]। बर्हिःप्रस्तरयोरन्तराले तिर्यक् प्रसार्यमाणौ दर्भौ 'विधृती', ते अत्र इक्षुपत्ररूपे स्याताम्। 'संलुभ्याते' पञ्चमलकारः। संलोभन माकुलीभावो मिश्रणम्, तद्भयाद्

---

१— का० श्रौ० सू० ८. १. १२। २— का० श्रौ० सू० ८. १. १३।
३— तु० उ० १५१ धा०। ४— का० श्रौ० सू० ८. १. १४।

'ऐच्चव्यौ' कर्त्तव्ये इत्यर्थः[१]। "अथोत्पूयाज्य मित्यादि। उत्पवनं प्रकृतिवत् कर्त्तव्यम्। 'सर्वाण्येव' जुहूपभृद्ध्रुवाख्येषु पात्रेषु गृह्यमाणानि 'आज्यानि', 'चतुर्गृहीतानि' एव कुर्यात्। प्रकृतिवदेवेतरयोश्चतुर्गृहीतत्वं सिद्धम्। अत उपभृति अष्टगृहीतत्वनिवृत्त्यर्थ मेवाभिधानम्। तत्र चतुर्गृहीतत्वे उपपत्तिं श्रुतिरेवाह— "न ह्यत्रानुयाजा भवन्तीति॥ १८॥

"आसाद्य हवींष्यग्निं मन्थतीति[२]। आतिथ्याया मेवाग्निमन्थने को विशेष इत्यत आह— "शिरो वै यज्ञस्येति। "जनयन्ति वा एन मेतद् यन्मन्थन्तीति। 'एतत्' एतेन मन्थनजातेनाग्निना यज्ञनिष्पत्तिदर्शनादग्न्युत्पादन मेव यज्ञोत्पादनम्। प्रकारान्तरेणातिथ्याया मग्निमन्थनं प्रशंसति— "अग्निर्वै सर्वा देवता इति। सोमयागस्य शिरोभूताया मातिथ्यायां सर्वदेवतामयस्याग्नेरुत्पादनेन सर्वासा मपि देवताना मुत्पत्तेर्यज्ञप्रारम्भ एव, सर्वैर्देवैर्यज्ञं समृद्धं कारितवान् भवति॥ १९॥

"सोऽधिमन्थनं शकल मिति[३]। यूपतक्षणोत्पन्नोऽधरारण्या अधःस्थाप्यमानः शकलः 'अधिमन्थनशकलः', यस्योपरि मथ्यते; त मादत्ते। तत्र मन्त्रः— "अग्नेर्जनित्र मसीति[४]। हे शकल! त्वम् 'अग्नेः' 'जनित्रम्' उत्पादकम् 'असि'। कथ मस्य जनित्रत्व मिति,

---

१— तै० सं० ६. २. १ अनुवाकः सर्वोऽप्यत्र द्रष्टव्यः।

२— का० श्रौ० सू० ८. १. १७, एतत्पूर्व मप्येवम् ५. १. २७।

३— का० श्रौ० सू० ५. १. २८।

४— वा० सं० ५. २. १।

तत्राह— "अत्र ह्यग्निरिति। 'अत्र' अधरारणिव्यवहिते प्रकृते इत्यर्थः ॥ २० ॥

"अथ दर्भतरुणके इति[1]। 'दर्भतरुणके' कोमलौ परस्परसदृशौ दर्भौ, तौ अधो निदध्यात्। "वृषणौ स्थः"—इति[2] तत्र मन्त्रः। हे दर्भौ! युवां 'वृषणौ' अभिमतफलवर्षकौ भवथ इति तस्यार्थः। तौ प्रशंसति— "तद्यावेवेमौ स्त्रियै साकञ्जावेतावेवैताविति। 'स्त्रियै' स्त्रियाः सकाशात् 'साकञ्जौ' सहोत्पन्नौ 'याविमौ' परस्परसदृशौ पुत्रौ 'एतौ' दर्भौ, 'एतावेव युगलौ पुत्रावेव। रूपकोपन्यासेना-त्यन्तसादृश्य मभिमत मिति द्रष्टव्यम् ॥ २१ ॥

"अथाधरारणि मिति[3]। तत्राधरारणिनिधाने मन्त्रः— "उर्वश्य-सीति[4]। हे अधरारणे! त्वम् 'उर्वशी' भवसि। आज्यं विलाप्यते यस्यां सा आज्यविलापनी स्थाली, ताम् उत्तरारण्या संस्पृशं कुर्यात् 'आयुरसीति' मन्त्रेण[5]। ता मुत्तरारणिं 'पुरूरवा असीति'[6] तस्या उपरि निदध्यात् ॥

अरण्योराज्यविलापन्याश्च यदुर्वश्याद्यात्मकत्वम्, तत् त्रयं प्रशंसितुं पुरावृत्तदृष्टान्त माह— "उर्वशी वा अप्सरा इत्यादि। 'उर्वशी अप्सराः' पत्नी अभवत्, 'पुरूरवाः' 'पतिः' अभवत्, तस्मात् मिथुनात्' 'आयुः' नाम पुत्रः 'अजायत'। एतत् सर्वं मग्ने समा-

---

१— का० औ० सू० ५. १. २९।
२— वा० सं० ५. २. २।
३— का० औ० सू० ५. १. ३०, ३१।
४— वा० सं० ५. २. ३।
५— वा० सं० ५. २. ४।
६— वा० सं० ५. २. ५।

म्नायते— "उर्वशी ह्यप्सराः पुरूरवस मैलं चकम इति[१]। "एव मेवैषः"–इति दार्ष्टान्तिकाभिधानम्। 'यज्ञं जनयति' यज्ञसाधनत्वाद् यज्ञ मित्युच्यते। 'अथ' अरण्योरासादनानन्तरम् "अग्नये मथ्यमानायानुब्रूहि[२]" 'इति' होतारम् 'आह' ॥ २२ ॥

समन्त्रकं मन्थनं विधत्ते— "स मन्थतीति[३]। "गायत्रेण त्वा छन्दसेत्यादि[४]। "तं वै छन्दोभिरेवेति। यद्यपि अन्यैः साधनैः मन्थति, तथापि "गायत्रेण त्वा छन्दसा"—इत्यादिमन्त्रसामर्थ्येन छन्दोभिरेव साधनैः मन्थनं कृतवान् भवतीत्यर्थः[५]। अस्त्वेवम्, छन्दसां किम्फलं जात मित्यस्या आशङ्कायाः फलं वक्ष्यति— "छन्दांस्येवैतद्यज्ञ मन्वायातयतीति। छन्दसा मनुप्रवेशनं न केवलं छन्दोलिङ्गकैर्मन्त्रैर्मन्थनाद् भवति, अपि तु तस्मिन् काले होत्रा छन्दसा मनुवचनादपि भवतीत्याह— छन्दांसि मथ्यमानायान्वाहेति। होतेति शेषः। नियमेनानुप्रवेशे दृष्टान्तः— "यथामु मादित्य मिति। 'रश्मयः' अन्वायत्ता इति शेषः। प्रह्रियमाणायेत्यनुप्रहरन्निति[६]। 'प्रह्रियमाणाय' आहवनीये प्रक्षिप्यमाणाय, अनुब्रूहीत्यनुषज्यते ॥ २३ ॥

समन्त्रक मनुप्रहरणं विधत्ते— "सोऽनुप्रहरतीति[७]। "भवतं

---

१— उपरिष्टात् ११. ५. १. १—१७।
२— का० श्रौ० सू० ५. २. १। ३— का० श्रौ० सू० ५. २. २।
४— वा० सं० ५. २. ५, ६, ७।
५— "जाते जातायेति"–इति का० श्रौ० सू० ५. २. ३।
६— का० श्रौ० सू० ५. २. ४। ७— का० श्रौ० सू० ५. २. ५।

नः”—इत्यादिमन्त्रस्याय मर्थः[1]। हे आहवनीयनिर्मन्थ्यौ, उभावग्नी ! ‘नः’ अस्माकं ‘समनसौ’ अस्मदभिमतप्रदानविषये समानमनस्कौ ‘भवतम्’। अथवा परस्परं कलह मकृत्वा समनसौ भवतम्। ‘समौकसौ’ समानस्थानौ, ‘अरेपसौ’ अपापौ। एवम्भूतौ युवां ‘यज्ञं’ मदीयं ‘मा हिंसिष्टम्’। तथा ‘यज्ञपतिं’ यजमानं च ‘मा हिंसिष्टम्’। हे ‘जातवेदसौ’ जातप्रज्ञौ ! युवाम् ‘अद्य’ ‘नः’ अस्माकं ‘शिवः’ सुखकरौ ‘भवतम्’। मन्त्रस्य तात्पर्य माह—“शान्ति मेवाभ्या मेतद् वदतीति। ‘एतत्’ मन्त्रवचनम् ‘आभ्याम्’ अपेक्षितां ‘शान्ति मेव’ ‘वदति’, नान्य मर्थ मित्यर्थः। अत्र शान्तेः कः प्रसङ्ग इति, तत्राह— “यथा नान्योऽन्य मिति ॥ २४ ॥

अनुप्रहृतेऽग्नौ समन्त्रकं होमं विधत्ते— “अथ स्रुवेणेति[2]। ‘उपहत्य’ अवदाय ‘अग्नि मभि’ प्रहृत्य अग्नेरुपरि जुहुयात्। मन्त्रस्याय मर्थः[3]। ‘अग्नौ’ आहनीये ‘अग्निः’ निर्मथितः प्रविष्टः सन् ‘चरति’ इतस्ततो ज्वालाभिः सञ्चरति। कीदृशः ? ‘ऋषीणां पुत्रः’ मन्त्रेणोत्पद्यमानत्वात्। ‘अभिशस्तिपावा’ अभिशस्तेर्निन्दातः सकाशात् पाता। “आतो मनिन्”—इति[4] वनिप्। ‘सः’ तादृशः त्वं ‘नः’ अस्मदर्थम् इह ‘हव्यं’ हविः ‘सुयज’ शोभनेन यागेन यज, सङ्गमयेत्यर्थः। केभ्यः ? ‘देवेभ्यः’। कदा ? ‘सदं’ सदा, सर्वदा। ‘अप्रयुच्छन्’ अप्रमाद्यन्, उद्दिष्टेषु क मप्यपरित्यज्येत्यर्थः। ‘स्वाहा’

---

१— वा० सं० ५. ३. १।
२— का० औ० सू० ५. २. ६।
३— वा० सं० ५. ४. १।
४— पा० सू० ३. २. ७४।

इदं द्रव्यं स्वाकृत मस्तु । "आकूत्यै वा एत मिति । 'अजीजनत' उदपात्, अध्वर्युः; 'अप्रैषीत्' तर्पितवान्, भवति ॥ २५ ॥

प्रकृतदर्शपूर्णमासेष्टिवत् समापनप्रसक्तावाह— "तदिडान्तं भवतीति[1] । अर्थसिद्धेऽप्युत्तराङ्गनिषेधे पुनर्नित्यानुवादतया दार्ढ्यायानुवदति— "नानुयाजानिति । इडान्तत्वं प्रशंसति— "शिरो वै यज्ञस्यातिथ्य मिति । उत्तराङ्गजातस्यानुष्ठानं दोषोपन्यासेन समर्थयते— "स यद्धानुयाजान् यजन्तीति । 'यथा' कश्चित् 'शीर्षतः' शीर्ष्णि, सार्वविभक्तिकस्तसिः[2] । 'पादौ' पर्याहृत्य 'प्रतिदध्यात्', 'एवं' 'तत्' अनुयाजाद्यङ्गजात मनुष्ठितं सद् भवति, आतिथ्यस्य शिरस्त्वात् । तस्मादित्युपसंहारः ॥ २६ ॥ २ [ ४. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयब्राह्मणम् )

आतिथ्येन वै देवा इष्ट्वा* तान्त्समुदविन्दत् ते चतुर्द्धा व्यद्रवन्नन्योन्यस्य श्रिया ऽअतिष्ठमाना अग्निर्व्वसुभिः सोमो रुद्रैर्व्वरुण आदित्यैरिन्द्रो मरुद्भिर्बृहस्पतिर्व्विश्वै-

---

१— का० श्रौ० सू० ८. १. १८ । २— पा० सू० ५. ३. १४ ।

* 'इष्ट्वा'–इति ग, घ ।

दैं वैरित्यु हैक ऽआहुरेते हु त्वेव ते व्विश्वे देवा ये ते चतुर्द्धा व्यद्रवंस्तान्विद्रुतानसुररक्षसान्यनुव्युवेयुः* ॥ १ ॥

तेऽविदुः । पापीयाᳬंसो वै भवामोऽसुररक्षसानि वै नोऽनुव्युवागुर्द्विषद्भ्यो वै रध्यामो हन्त सञ्ज्ञानामहा ऽएकस्य श्रियै तिष्ठामहा ऽइति त ऽइन्द्रस्य श्रिया ऽअतिष्ठन्त तस्मादाहुरिन्द्रः सर्वा देवता इन्द्रश्रेष्ठा देवा ऽइति ॥ २ ॥

तस्मादु ह न स्वा र्त्तीयेरन् । य एषां परस्तरा मिव भवति स एनाननुव्युवैति ते प्रियं द्विषतां कुर्वन्ति द्विषद्भ्यो रध्यन्ति तस्मान्नर्त्तीयेरन्त्स यो हैवं विद्वान्न-र्त्तीयते ऽप्रियं द्विषतां करोति न द्विषद्भ्यो रध्यति तस्मान्नर्त्तीयेत ॥ ३ ॥

ते होचुः । हन्तेदं तथा करवामहै यथा न इदु माप्रदिव मेवाजर्य्य मसदिति ॥ ४ ॥

ते देवाः† । जुष्टास्तनूः प्रियाणि धामानि सार्द्धᳬं समवददिरे ते होचुरेतेन नः स नानासदेतेन व्विष्वङ् यो न एतदतिक्रामादिति कस्योपद्रष्टुरिति तनूनप्तुरेव

---

* 'व्युवेयुः'—इति ग, घ ।

† 'देवाः'—इति ग, घ ।

शाक्वरस्येति सो* वा ऽअयं पवत ऽएष तनूनपाच्छाक्वरः सो यं प्रजानाऽमुपद्रष्टा प्रविष्टस्ताविमौ प्राणोदानौ† ॥ ५ ॥

तस्मादाहुः। मनो देवा मनुष्यस्याजानन्तीति मनसा सङ्कल्पयति‡ तत्प्राण मपिपद्यते प्राणो व्वातं व्वातो देवेभ्य आचष्टे यथा पुरुषस्य मनः ॥ ६ ॥

तस्मादेतदृषिणाभ्यनूक्तम्। मनसा सङ्कल्पयति तद्वा-तमपि गच्छति। व्वातो देवेभ्य आचष्टे यथा पुरुष ते मन इति ॥ ७ ॥

ते देवाः§। जुष्टास्तनूः प्रियाणि धामानि साद्धँ समवदादिरे ते होचुरेतेन नः स नानासदेतेन व्विष्वङ् यो न एतदतिक्रामादिति तद्देवा अप्येतर्हि नाति-क्रामन्ति के हि स्युर्यदतिक्रामेयुरनृतँ हि व्वदेयु-रेकँ ह वै देवा व्रतं चरन्ति सत्य मेव तस्मादेषां जित मनपजय्यं तस्माद्यश एवँ ह वा ऽअस्य जित मनप-जय्य मेवं यशो भवति य एवं व्विद्वान्त्सत्यं व्वदति तदेतत्तानूनप्त्रं निदानेन ॥ ८ ॥

ते देवाः‖। जुष्टास्तनूः प्रियाणि धामानि साद्धँ सम-

---

* 'यो'-इति ख, सायणसम्मतश्च। † 'प्राणोदानौ'-इति ग, घ।
‡ 'सङ्कल्पयति'-इति ग, घ। § 'देवा'-इति ग, घ।
‖ 'देवाः'-इति ग, घ।

वदद्दिरेऽथैत ऽआज्यान्येव गृह्णाना जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवद्यन्ते तस्माद् ह न सर्वेणेव समभ्यवेयन्नेन्नो जुष्टास्तन्वः प्रियाणि धामानि सार्द्धꣳ समभ्यवायानिति येनो ह समभ्यवेयान्नास्मै द्रुह्येदिदꣳ ह्याहुर्न सतानूनप्त्रिणे द्रोग्धव्य मिति* ॥ ९ ॥

अथातो गृह्णात्येव†। आपतये त्वा परिपतये गृह्णामीति यो वा ऽअयं पवत ऽएष आ च पतति परि च पतत्येतस्मा ऽउ हि गृह्णाति तस्मादाहापतये त्वा परिपतये गृह्णामीति ॥ १० ॥

तनूनप्त्रे शाक्वरायेति। यो वा ऽअयं पवत ऽएष तनूनप्ता शाक्वर एतस्मा ऽउ हि गृह्णाति तस्मादाह तनूनप्त्रे शाक्वरायेति ॥ ११ ॥

शक्मन ऽओजिष्ठायेति। एष वै शक्मौजिष्ठ एतस्मा ऽउ हि गृह्णाति तस्मादाह शक्मन ऽओजिष्ठायेति‡ ॥१२॥

अथातः समवमृशन्त्येव§। एतद्ध देवा भूयः समामिर ऽइत्थं नः सोऽमुथासद् यो न एतदतिक्रामादिति तथो ऽएवैत ऽएतत्सममन्त ऽइत्थं नः सोऽमुथा सद्यो न एतदतिक्रामादिति ॥ १३ ॥

---

* 'मिति'—इति ग, घ। † 'गृह्णात्येव'—इति ग, घ।
‡ 'ऽओजिष्ठायेति'—इति ग, घ। § 'मृशन्त्येव'—इति ग, घ।

ते समवमृशन्ति। अनाधृष्ट मस्यनाधृष्यं देवाना मोज इत्यनाधृष्टा हि देवा आसन्ननाधृष्याः सह सन्तः समानं व्वदन्तः समानं दधाणा देवाना मोज इति देवानां वै जुष्टास्तन्वः प्रियाणि धामान्यनभिशस्त्यभिशस्तिपा अनभिशस्तेन्य मिति सर्वांऽ हि देवा अभिशस्तिं तीर्णा अञ्जसा सत्य मुपगेष मिति सत्यं व्वदानि मेद मतिक्रमिष मित्येवैतदाह स्विते मा धा इति स्विते* हि तद्देवा आत्मान मदधत यत्समवदन् यत्सत्य मकुर्वंस्तस्मादाह स्विते मा धा इति[†] ॥ १४ ॥

अथ यास्तद्देवाः[‡]। जुष्टास्तनूः प्रियाणि धामानि साङ्घ्ऽ समवददिरे तदिन्द्रे सन्न्यदधतैष वा ऽइन्द्रो य एष तपति न ह वा ऽएषोऽग्रे तताप यथा हैवेद मन्यत् कृष्ण मेवऽ हैवास तेनैवैतद्वीर्य्येण तपति तस्माद् यदि बहवो दीक्षेरन् गृहपतय एवऽ[§] व्रत मभ्युत्सिच्य प्रयच्छेयुः स हि तेषा मिन्द्रभाजनं भवति यद्यु दक्षिणावता दीक्षेत यजमानायैव व्रत मभ्यूत्सिच्य प्रयच्छेयुरिदऽ ह्याहुरिन्द्रो यजमान इति[‖] ॥ १५ ॥

* 'स्विते'—इति क ।

† 'मा धा इति'—इति ख, 'मा धा इति'—इति ग, 'मा धा इति'—इति घ।

‡ 'यास्तद्देवाः'—इति ग, घ।

§ 'एव'—इति क ।

‖ 'इति'—इति ख, 'इति'—इति ग, घ।

अथ यास्तद्देवाः*। जुष्टास्तनूः प्रियाणि धामानि साद्धं᳘ समवदद्रिरे तत्साद्धं᳘ सञ्जग्मे तत्सामाभवत्तस्मादाहुः सत्यं᳘ साम देवजं᳘ सामेति ॥ १६ ॥ ३ ॥

॥ इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् [४. २.] ॥

अथ तानूनप्त्रं[1] विधातु माख्यायिका माह— "आतिथ्येन वै देवा इष्ट्वा तान्त्समदविन्ददित्यादिना। पुरा किल देवाः 'आतिथ्येनेष्ट्वा व्यद्रवन्' इति सम्बन्धः। विद्रवणे कः प्रसङ्ग इति तं दर्शयति— "तान्त्समदविन्ददिति। तस्मिन् समये 'तान्' देवान् 'समत्' कलहः 'अविन्दत्' प्राप्तवान्। "सङ्के समत्सु वृत्रहा"- इत्यादौ[2] समच्छब्दः सङ्ग्रामे प्रसिद्धः। 'ते' देवाः 'चतुर्द्धा' 'व्यद्रवन्' पृथग्भूताः। किमर्थम्? "अन्योऽन्यस्य श्रियै अतिष्ठमानाः"। 'श्रियै' ज्योतिष्टोमफलरूपायै[3] आत्मनोऽभिप्राय मप्रकाशयन्तः, ता असहमाना इत्यर्थः। "प्रकाशनस्थेयाख्ययोश्च"- इति[4] तिष्ठतेरात्मनेपदम्। "श्लाघन्हुङ्"—इति[5] श्रिया ज्ञापयितु मिष्टत्वाच्चतुर्थी। विद्रवणप्रकारं विभज्य दर्शयति— "अग्निर्वसुभि-

---

* 'यास्तद्देवाः'—इति ग, घ।

१— ऐ० ब्रा० १. ४. ७, तै० सं० ६. २. २. १ द्रष्टव्यम्।

२— ऋ० सं० १०. १२२. १ द्रष्टव्या।

३— ' 'अन्योऽन्यस्य श्रियै' ज्योतिष्टोमफलरूपायै, श्रियै वा—'इति क।

४— पा० सू० १. ३. २३। ५— पा० सू० १. ४. ३४।

रित्यादि। शाखान्तर प्रसिद्धं[1] पञ्चमं गण मुदाहृत्य सोपपत्तिकं पराचष्टे— "बृहस्पतिर्विश्वैर्देवैरित्यु हैक आहुरिति। तत्रोपपत्त्यभिधानम्— "एते ह त्वेव ते विश्वेदेवा ये ते चतुर्द्धा व्यद्रवन्निति। 'तान् विद्रुतान्' परस्परं विश्लिष्टान्, असुरराक्षसाश्चाय मवसर इति निश्चित्यानुप्राप्ताः॥ १॥

"तेऽविदुरिति। स्पष्टम्। 'असुररक्षसानि वै' 'नः' 'अनुव्यवागुः' अनुगताः। एतेर्लुङि गादेशः[2]। 'द्विषद्भ्यो वै' 'रध्यामः' रध्यतिर्वशगमनकर्मा,[3] वशं प्राप्ता इत्यर्थः। "हन्त सञ्जानामहा इति। शत्रुजयोपायपरिज्ञानहर्षद्योतनार्थो 'हन्त'-शब्दः। "अकर्मकाच्च"-इति[4] सम्पूर्वस्य जानातेरात्मनेपदम्। सङ्गता भवेम, ऐकमत्यं प्राप्नुवामेत्यर्थः। तत्प्रकार माह— "एकस्य श्रियै तिष्ठामहा इति। "त इन्द्रस्य श्रिया अतिष्ठन्तेत्यादि स्पष्टम्॥ २॥

"तस्माद् ह न स्वा ऋतीयेरन्निति। यस्मात् देवानां परविश्लेषात् शत्रूणा मभिभवः प्राप्तः, 'तस्माद् ह' तस्मात् खलु कारणात् 'स्वाः' ज्ञातयः परस्परं 'न ऋतीयेरन्' वैमत्येन विश्लेषं न कुर्युः। "ऋतेरीयङ्"[5]। विश्लेषे को दोष इति तत्राह— "य एषां परस्तरा मिव भवतीति। 'यः' शत्रुः 'एषां' विश्लिष्टानां 'परस्तरा मिव' अत्यन्तदूरदेशस्थो 'भवति', 'सः' 'एनान्' शत्रून् विश्लिष्टान् 'अनुव्यवैति' अनुप्रविशति। तस्मात् 'द्विषताम्' अवकाश-

---

१— तै० स० ६. २. २. १ द्रष्टव्यम्। २— पा० सू० २. ४. ४५।
३— निरु० ६. ६. ४। ४— पा० सू० १. ३. २६।
५— पा० सू० ३. १. २९।

प्रदानेन स्वय मेव 'प्रियं कुर्वन्ति', स्वयं यद् 'द्विषद्भ्यः' शत्रुभ्यो 'रध्यन्ति' वशं प्राप्नुवन्ति ; 'तस्मात्' 'न ऋतीयेरन्' भेदं न गच्छेयुः। उक्तार्थस्य कश्चित् पुरुषार्थं नियमं विधत्ते— "स यो हैवं विद्वा-निति। यः कश्चिदेवं वृत्तान्तं देवेषु मनुष्येषु च दृष्टं जानन् 'न ऋतीयते' भेदं न गच्छेत्। अथवा परैरुत्पादितो ज्ञातिभेद एवंविदि न प्रवर्त्तेत इत्यर्थः। अत एव 'द्विषताम्' अपि 'अप्रियं करोति' ; तत्प्रवेशावकाशस्यासम्भवात्। 'न द्विषद्भ्यः' 'रध्यति' वशं याति। 'तस्मात्' विद्वान् 'न ऋतीयेत' ॥ ३ ॥

"ते होचुर्हन्तेदं तथा करवामहै, यथा न इद माप्रदिव मेवाजर्यं मसदितीति। 'यथा' 'न' 'इदम्' ऐकमत्यं कर्म 'आ प्रदिवम् एव' द्युलोकावस्थित्यवसानम् 'अजर्यम्'। "अजर्यं सङ्गतम्"-इत्यनेन[1] निपात्यते, अविनाश्यम्[2] 'असत्' भवेत्, 'तथा करवा-महै' 'इति' उक्तवन्तः ॥ ४ ॥

अनन्तरम्— "ते देवा इति। 'ते देवाः' 'जुष्टाः' प्रियभूताः 'तनूः' स्वस्वमूर्त्तीः। अस्य व्याख्यानम्— "प्रियाणि धामानीति। अभिमतानि भोगायतनानि 'सार्द्धम्' एकत्र 'समवद्दिरे' विभज्य स्थापितवन्तः। तस्मिन् काले एव मब्रुवन्— 'एतेन' स्थापितेन शरीरेण 'नः' अस्माकं मध्ये 'सः' समयातिक्रमकारी 'नाना' 'असत्' विना भवेत्। एतदेव व्याचष्टे— "एतेन विष्वङ्ङिति। 'विष्वङ्' सर्वतो भवेत्, विशीर्णो भवत्वित्यर्थः। तच्छब्दार्थ माह—

१— पा० सू० ३. १. १०५।

२—'अविनाशि'-इति क।

"यो न एतदतिक्रामादिति। 'एतत्' सङ्केतकर्म 'अतिक्रामात्' अतिक्रामेत्। "कस्योपद्रष्टुरिति। 'उपद्रष्टा' साक्षी, 'कस्य'? तस्य पुरस्तादिदं भवेदिति शेषः। एवं प्रश्न मुपगम्य तैरेवेद मुत्तर मुक्तम्— "तनूनप्तुरेव शाक्वरस्येति। तन्वो देहस्य न पातयिता रक्षको देवः 'तनूनप्ता'[1]। अथवा सर्वतनूरात्मा प्रजापतिः, तस्याकाशः पुत्रः, तत्पुत्रो वायुरिति सः 'तनूनप्ता'। स च 'शाक्वरः' शक्तः सर्वं कर्त्तुम्। तस्य पुरस्तादित्यर्थः। सः क इति, तं विशिनष्टि— "यो वा अयं पवत इति। 'योऽयं' 'पवते' गच्छति, वायुरित्यर्थः[2]। वाह्यस्य वायोः पुरुषचित्तद्रष्टृत्वं कथं घटत इति, तत्राह— "सोऽयं प्रजाना मुपद्रष्टा प्रविष्ट इति। प्रविष्टस्य कथं नोपलभ्यते इति तत्राह— "ताविमौ प्राणोदानाविति। 'इमौ' प्रसिद्धौ यौ 'प्राणोदानौ' 'तौ' एव स इत्यर्थः॥ ५॥

उक्तेऽर्थे लौकिकवचनं प्रमाणयति— "तस्मादाहुर्मनो देवा मनुष्यस्याजानन्तीति। दूरस्थानां देवानां कथं मनुष्यचित्तपरिज्ञान मित्याशङ्क्य तद्द्वारदारिकयेति दर्शयति— "मनसा सङ्कल्पयति, तत् प्राण मभिपद्यत इत्यादि। प्राणप्रज्ञयोः परस्पराविनाभावात् मनसा सङ्कल्पितं प्राणं प्राप्नोति। वाह्यवायोरिव शरीरप्रवेशेन प्राणत्वात् "प्राणो वातम्"-इत्युक्तम्[3]। अभिपद्यते सङ्कल्पितार्थविशिष्टः सन्नेवेति भावः। स च 'वातः' सर्वत्राप्रतिहतगतित्वात्

---

१— ऐ० ब्रा० १. ४. ७ द्रष्टव्यम्। आप० श्रौ० सू० ११.१.१–३।
२— ऐतरेये त्वन्यथैव वर्णितं तानूनप्त्रनिर्वचनम् (१. ४. ७.)।
३— इहैव मूले (२२८ पृ०) द्रष्टव्यम्।

'देवेभ्य आचष्टे, यथा पुरुषस्य मनः' वर्त्तते। पुण्ये पापे वा वर्त्तते, त मनतिवृत्त्यैवाचष्ट इत्यर्थः ॥ ६ ॥

उक्तेऽर्थे मन्त्रं प्रमाणयति—"तस्मादेत इति। "मनसा सङ्कल्पयति, तद्वात मपि गच्छतीत्यादि[1]। स्पष्टोऽर्थः[2] ॥ ७ ॥

विशेषाभिधानाय पूर्वोक्तं तानूनप्त्र मनुवदति—"ते देवा जुष्टास्तनूरित्यादिना। "तद्देवा इति। 'तत्' "एतेन नः स नाना-सत्"-इत्युक्त मित्यर्थः[3]। 'अप्येतर्हि' इदानी मपि। अतिक्रमे बाध माह—"के हि स्युरिति। यद्यतिक्रामेयुः, तर्हि के स्युः। उपपत्ति माह—"अनृतं हि वदेयुरिति। देवत्व मतिहाय अनृतवदनात् कुत्सिता मनुष्या भवन्तीत्यर्थः। देवानां सत्यवादित्वनियमे सति[4] अनृतं हीत्ययं दोषः स्यात्। स एव तेषु कुत इत्यत आह—"एकं ह वै देवा व्रत मिति। सत्यवादफल माह—"तस्मादेषां जित मनपजय्य मिति। यत् 'अनपजय्यं' जेतु मशक्यम्,[5] तत् 'जितम्' भवति। "तस्माद् यश इति। प्राप्नुवन्तीति शेषः। अथवा यशो-रूपा एव भवन्तीत्यर्थः। "एवं ह"—इत्यादिना उक्तार्थज्ञप्रशंसा।

---

१— अस्यैष मन्त्रोऽथर्वसंहितायाम् ( १२. ४. ४. ) बहुभिन्नपाठाश्रितः।

२— अतएवोक्तं पाणिनिमुनिना स्वशिक्षायाम्—"आत्मा बुद्धा समेत्यार्थान् मनो युङ्क्ते विवक्षया। मनः कायाग्नि माहन्ति स प्रेरयति मारुतम्। मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्"—इत्यादि २. ख. १—५ श्लो०। ३— पञ्चमी कण्डी ( २२७ पृ० ) द्रष्टव्या।

४— "सत्यसंहिता वै देवाः"—इति ऐ० ब्रा० १. १. ६।

५— "क्षय्य-जय्यौ शक्यार्थे"—इति पा० सू० ६. १. ८१।

"तदेतत् तानूनप्त्रं निदानेनेति। स्वस्वशरीरसमवदानपूर्वकं शपथकर्म तानूनप्त्रम्[1]। 'तत्' इदानी मनुष्ठीयमानं 'तानूनप्त्रम्' आज्यग्रहणस्पर्शनात्मकं कथ मेतद् भवेत्? तत्राह— 'निदानेन' कारणेनेत्यर्थः ॥ ८ ॥

निदान मेव दर्शयति— "ते देवाः" इत्यादिना। 'देवा आज्यानि गृह्णाना एव स्वतनूरपि आज्येन 'सार्द्धं' 'समवदद्रिरे', अत इदानीन्तनैरपि तानूनप्त्र मेवं समवदातव्य मित्यनुमीयते ॥

प्रसङ्गात् किञ्चित् पुरुषार्थ माह— "तस्माद् ह न सर्वेणेवेति। 'सर्वेण' बहुजनेन सह 'समवगतिं' शपथपूर्वकं समयं 'न' कुर्य्यात्। तद्दोष माह— "नेन्मे जुष्टास्तन्व इति। 'मे' मम 'जुष्टाः' अत्यन्तं प्रियभूताः 'तन्वः' प्रियधामभूताः सर्वैः साकं 'नेत् समभ्यवायान्' नैव सङ्गता भवेयुरिति। 'नेत्' परिभये। अभ्यवपूर्वादेतेर्लेट्[2]। "अथापि नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये"—इति हि निरुक्तम्[3]। 'येनो ह' येनापि खलु सह अशक्यत्वात् 'अभ्यवेयात्' तस्मै द्रोहं न कुर्यात्। तथाच लौकिकाः अपि 'इदम्' 'आहुः'। किम्? इति, 'सतानूनप्त्रिणे' सम्भूय शपथकारिणे 'न द्रोग्धव्यम् इति' द्रोहो न कर्त्तव्य इति। "क्रुधद्रुहेर्य्येत्यादिना चतुर्थी[4] ॥ ९ ॥

अथ तानूनप्त्रार्थ माज्यग्रहणं समन्त्रकं विधत्ते— "अथातो गृह्णात्येवापतये त्वा परिपतय इति[5]। अत्र गृह्णामीत्यन्त एको

---

१— "परस्परसख्याय शपथरूप माज्यस्पर्शनम्" ऐ०ब्रा०१.४.७सा०भा०।

२— पा० सू० ३. ४. ७।

३— निरु० १. ३. ६।

४— पा० सू० १. ४. ३७।

५— का० श्रौ० सू० ८. १. १९।

मन्त्रः[१]। “तनूनप्त्रे शाक्वरायेति द्वितीयः[२]। शक्मन ओजिष्ठा-येति तृतीयः[३]। अस्मिन् पक्षे ‘गृह्णामि’-इत्यय मुत्तरयोरपि मन्त्रयोरनुषज्यते। तत्र स्रुवेण सर्वस्य ध्रौवाज्यस्यैकवारं ग्रहणम्, स्थाल्याः स्रुवेण द्विर्ग्रहणम्। अथवा “तनूनप्त्रे शाक्वराय”-“शक्मन ओजिष्ठाय”-इत्येतौ पूर्वमन्त्रशेषौ, तथा सत्येक एव मन्त्रः[४]॥

अत्र ब्राह्मणम्— “अथैत आज्यान्येव गृह्णाना जूष्टास्तनूरिति। प्रत्येक माज्यग्रहणस्य श्रुतत्वात् सर्वे गृह्णीयुः। तथा च कात्यायनः— “ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति, द्विश्च स्थाल्याः स्रुवेण तनूनप्त्रे शाक्वरायेति शक्मन ओजिष्ठायेति, गृह्णामीति सर्वत्र साकाङ्क्षत्वात्, पूर्वशेषौ वोत्तरौ, प्रतिपुरुषं च ग्रहण माज्यानि गृह्णाना इति श्रुतेः”-इति[५]॥

मन्त्रस्याय मर्थः— ‘आपतये’ आ अभिमुखं पतत्यागच्छतीति ‘आपतिः’, परिपततीति ‘परिपतिः’ वायुः; आज्य![६] त्वां तस्मै ‘गृह्णामि’॥ १०॥

“तनूनप्त्र इति। उक्तार्थौ तनूनप्तृशाक्वरशब्दौ[७]। ‘शक्मने’ सर्वत्र शक्ताय, ‘ओजिष्ठाय’ अतिशयेन बलवते। “यो वा अयं पवते”— इत्यादि ब्राह्मणं स्पष्टम्॥ ११, १२॥

---

१— वा० सं० ५. ५. १। २— वा० सं० ५. ५. २।
३— वा० सं० ५. ५. ३। ४— वा० सं० ५. ५ (१-२-३ =) १।
५— का० श्रौ० सू० ८. १. १९—२३।
६— एतदेव आज्यं तानूनप्त्रसञ्ज्ञं भवति (का० श्रौ० सूत्रं ८. १. २४.)।
७— पुरस्तात् (५ क० भा०, २३४ पृ०) द्रष्टव्यम्।

गृहीतस्याज्यस्य सर्वैरवमर्शनं विधत्ते— "अथातः समवमृशन्त्ये-वेति[1]। स्पर्शकाले देवैः कृत मन्यसङ्केतं दर्शयति— "एतद्ध वै देवा भूयः समामिर इति। 'एतद्' वक्ष्यमाणं 'भूयः समामिरे' पूर्वोक्तसङ्केत मन्तरेण पुनस्सङ्गता अभवन्। "अम गत्यादिषु[2]। 'यः' 'नः' अस्माकं मध्ये 'एतत्' 'अतिक्रामात्' अतिक्रामेत्, 'सः' 'इत्थं' देवभूत एव सन् 'अमुथा' अन्यथा प्रकारेण 'असत्' देव-भावाद् विनश्येदित्यर्थः। न केवलं देवाना मेवायं सङ्केतः, किन्त्विदानीन्तनानुष्ठातॄणा मित्याह— "तथो एवैत इति॥ १३॥

"ते समवमृशन्तीति। अवमर्शनमन्त्रस्याय मर्थः[3]। हे आज्य! त्वं पूर्वापरैः 'अनाधृष्टम्' आधर्ष मप्राप्तं भवसि। तथा अनाधर्ष-णीय मप्यसि। 'देवानाम्' 'ओजः' बलरूप मसि। 'अनभिशस्ति' निन्दकरहितम्। कर्त्तरि क्तिच्[4]। न केवलं तादृगेव, किन्तु 'अभिशस्तिपाः'। लिङ्गव्यत्ययः[5]। अभिशस्तेर्निन्दायाः सकाशात् पाट असि। 'अनभिशस्तेन्यम्' अहिंस्यम्। कृत्यार्थे केन्-प्रत्ययो नकारोप-जनो यस्य[6]। अथवा अनभिशस्तस्य स्वर्गादेः प्रदातृत्वेन सम्बन्ध्यसि। यत एवं महानुभावं त्वम्, 'अञ्जसा' प्रगुणेन, मुख्यया वृत्त्या 'सत्यं' यथार्थस्वरूपम् 'उपगेषम्' उपगच्छेयम्। "गाङ् गतौ"-इत्यस्य[7]

---

१— का० श्रौ० सू० ८. १. २४। २— भ्वा० प० ४६४ धा०।
३— वा० सं० ५. ५. २। ४— पा० सू० ३. ३. १७४।
५— पा० सू० ३. १. ८५। ६— पा० सू० ३. ४. १४।
७— भ्वा० आ० ९५० धा०।

"लिङर्थे लेट्[1]", "सिब्बहुलम्"-इति[2] सिप्लं च। तेन सत्येन 'क्षिते' सुष्ठु प्राप्तौ 'मा' माम् 'अधाः' धारय ॥

मन्त्रं विभज्य व्याचष्टे— "अनाधृष्टा हि देवा आसन्ननाधृष्या इति[3]। पूर्वं कैरप्यनाधृष्टा अपि देवाः परस्परापरागेणाधर्मविषया अपि सन्तः, पश्चात् सङ्केतपूर्वकेणाज्यग्रहणेन स्वशरीराण्यवमृशन्तः पुनः 'अनाधृष्याः आसन्', अतस्त्व मनाधृष्टानां पुनरनाधर्षहेतुत्वात् तद्रूप मसि। "सह सन्तः"—इत्यादि पदत्रय मनाधृष्यत्वे हेतुत्वेन निर्द्दिष्टम्। 'सह सन्तः' परस्परैकमत्येन वर्त्तमानाः; तथा 'समानं वदन्तः' यदेको ब्रूते, तदन्येऽप्यनुकुर्वन्तः; 'समानम्' एक मेव कार्यं मनसि 'दधानाः' धारयमाणाः। द्वितीयभागस्य तात्पर्य माह— "देवाना मोज इति। ओजोरूपाणां प्रियधाम्ना माज्ये स्थापनात्। अनभिशस्त्यादिपदत्रयस्यैकतात्पर्यता माह— "सर्वां हि देवा अभिशस्तिं तीर्णा इति। 'सत्य मुपगेषम्'—इत्येतस्य सत्यप्राप्तेः प्रतिज्ञारूपत्वेन वागात्मकत्वात् 'सत्यं वदानि'—इत्येवंरूपा सत्य-प्राप्तिरुक्ता। तदेव सत्यं 'मेदम्'—इत्यत्र 'इदं'-शब्देन निर्द्दिष्टम्। 'क्षिते मा धाः'—इत्यत्र 'क्षित'-शब्दार्थ माह— "क्षिते हि तद्देवा इति। सुष्ठु प्राप्तव्यं क्षितम्; तदत्र सत्य मेव वदानीति प्रतिज्ञापूर्वकं तदनुष्ठान मेवेत्यर्थः ॥ १४ ॥

तानूनप्त्र माज्यं सर्वैः स्पृष्ट मपि सत् यजमानायैव दातव्य मिति[4]

---

१— पा० सू० ३. ४. ७।    २— पा० सू० ३. १. ३४।

३— तैत्तिरीयसंहिताया मप्येष मन्त्रो व्याख्यातः ( ६. २. २. ५. )।

४—का० श्रौ० सू० ८. २. २, ३।

विधातु माह— "अथ यास्तद्देवा इति। इन्द्रशब्दस्य विवक्षित मर्थ माह— "एष वा इन्द्रो य एष तपतीति। इन्द्रेणै- तस्माग्नौ कोऽतिशयो लब्ध इति तत्राह— "न ह वा एष इति। तापकतया, न ततापेत्यर्थः; 'यथा ह एव' 'इदम्' इदानीं परि- दृश्यमानं तपनम्। तर्हि कथ मास? 'कृष्णम् एव' कृष्णरूप मेव 'आस'। तस्मात् 'तेनैव' तानूनप्त्राज्यस्वीकारजनितेनैव 'वीर्येण' दुर्द्धर्षः सन् 'तपति' इत्यर्थः। "तस्माद् यदि बह्व इत्यादि, प्रकृतपर्यवसानवाक्यं स्पष्टम्। 'अभ्युत्सिच्य' उपरि तदाज्य मासिच्य। "स हि तेषा मिन्द्रभाजनं भवतीति। 'इन्द्रभाजनम्' इन्द्रस्थानीयः। फलस्य साम्येऽपि गृहपतित्वेन वरणेन प्राधान्यादिन्द्रत्वम्। "यद्यु दक्षिणावतेति। यदि तु दक्षिणायुक्तेनैकाहादिना सोमयागेन दीक्षेतेत्यर्थः। स्पष्ट मन्यत्[1] ॥ १५ ॥

यजमानेन क्रियमाणस्य सामोपायस्य देवैः कृतं साममूल मित्याह— "अथ यास्तद्देवा इति। 'तत्' अवत्तं 'सार्द्धं' 'सञ्जघ्ने'। तदाज्येन साकं प्रक्षिप्तं शरीरकदम्बकं संहत मेक मभूत्, 'तत् सामाभवत्'। देवानां सत्येनोत्पन्नत्वात् 'सत्यं देवजं' च 'साम' ॥ १६ ॥ ३ [ ४. २. ]।

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

तृतीयकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥

---

१— तत् तानूनप्त्रम् "पल्यङ्ग्य निदधात्यपिधायाम्नन्मयेन"—इति का० श्रौ० सू० ८. २. १। 'पल्यङ्ग्य = कम्पयित्वा'—इति तद्वृत्तौ या० दे०।

( अथ तृतीयं ब्राह्मणम् )

आतिथ्येन वै देवा इष्ट्वा* । तान्त्समदविन्दत्ते तानूनप्त्रैः समशाम्यंस्त ऽएतस्य प्रायश्चित्ति मैच्छन् यदन्योऽन्यं पाप मवदन्नाह पुरावभृथात् पुनर्दीक्षा मवाकल्पयंस्त ऽएता मवान्तरां दीक्षा मपश्यन्† ॥ १ ॥

तेऽग्निनैव त्वचं व्विपल्याङ्गयन्त । तपो वा ऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षा मुपायंस्तद्यदवान्तरां दीक्षा मुपायंस्तस्मादवान्तरदीक्षा सन्तरा मङ्गुलीराञ्चन्त सन्तरां मेखलां पर्य्यस्ता मेवैना मेतत्सतीं पर्य्यास्यन्त तथो ऽएवैष एतद्यदतः प्राचीन मव्रत्यं वा करोत्यव्रत्यं वा व्वदति तस्यैवैतत्प्रायश्चित्तिं कुरुते‡ ॥ २ ॥

सोऽग्निनैव त्वचं व्विपल्यङ्गयते । तपो वा ऽअग्निस्तपो दीक्षा तदवान्तरां दीक्षा मुपैति सन्तरा मङ्गुलीरचते सन्तरां मेखलां पर्य्यस्ता मेवैना मेतत्सतीं पर्य्यस्यते प्रजा मु हैव तद्देवा उपायन्§ ॥ ३ ॥

तेऽग्निनैव त्वचं व्विपल्याङ्गयन्त । अग्निर्व्वै मिथुनस्य कर्त्ता प्रजनयिता तत्प्रजा मुपायन्त्सन्तरा मङ्गुली-

---

* "इष्ट्वा"—इति ग, घ । † "मपश्यन्"—इति ग, घ ।

‡ "कुरुते"—इति ख, "कुरुते"—इति ग, घ ।

§ "उपायन्"—इति ग, घ ।

राश्वन्त सन्तरां मेखलां तत्प्रजा मात्मन्नकुर्व्वत तथो ऽएवैष एतत्प्रजा मेवोपैति* ॥ ४ ॥

सोऽग्निनैव त्वचं व्विपल्ययङ्गयते। अग्निर्व्वै मिथुनस्य कर्त्ता प्रजनयिता तत्प्रजा मुपैति सन्तरा मङ्गुलीरुचते सन्तरां मेखलां तत्प्रजा मात्मन् कुरुते ॥ ५ ॥

देवाना मु ह स्म दीक्षितानाम्। यः समिद्धारो वा स्वाध्यायं वा व्विसृज्यते† तꣳ ह स्मेतरस्यैवेतरꣳ रूपेणे-तरस्येतर मसुररक्षसानि जिघाꣳसन्ति ते ह पापं व्वदन्त उपसमेयुरिति वै मां त्व मचिकीर्षीरिति माजिघाꣳसी-रित्यग्निर्हैव तथा नान्य मुवादाग्निं तथा नान्यः‡ ॥ ६ ॥

ते होचुः। अपीत्यन्त्वा§ मग्नेऽवादिषूइऽरिति नैवाह मन्यं न मा मन्य इति|| ॥ ७ ॥

तेऽविदुः। अयं वै नो व्विरक्षस्तमोऽस्यैव रूप मसाम तेन रक्षाꣳस्यतिमोक्ष्यामहे तेन स्वर्गं लोकꣳ समश्नु-विष्यामह ऽइति तेऽग्नेरेव रूप मभवंस्तेन रक्षाꣳस्यत्यु-मुच्यन्त तेन स्वर्गं लोकꣳ समाश्नुवत¶ तथो ऽएवैष

---

* "मेवोपैति"–इति ग, घ।

† "विसृजते"–इति ग, घ; सायणसम्मतोऽयं पाठ इति चाह डा॰वेबरः।

‡ "नान्यः"–इति ग, घ।

§ "अपीच्छ त्वा"–इति क, ख।

|| "इति"–इति ग, घ।

¶ "समाश्नवत"–इति च दृष्टो डा॰-वेबरेण।

एतदग्नेरेव रूपं भवति तेन रक्षांऽस्यतिमुच्यते तेन स्वर्गं लोकंऽ समश्नुते स वै समिध मेवाभ्यादधदवान्तर-दीक्षा मुपैति ॥ ८ ॥

स समिध मभ्यादधाति। अग्ने व्रतपास्त्वे व्रतपा इत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाग्ने व्रतपास्त्वे व्रतपा इति या तव तनूरियंऽ सा मयि यो मम तनू-रेषा सा त्वयि। सह नौ व्रतपते व्रतानीति तदग्निना त्वचं व्यिपल्यङ्गयतेऽनु मे दीक्षां दीक्षापतिर्म्मन्यता मनु तपस्तपस्पतिरिति तदवान्तरां दीक्षा मुपैति सन्तरा मङ्गुलीरचते सन्तरां मेखलां पर्य्यस्ता मेवैना मेतत्* सतीं पर्य्यस्यते ॥ ६ ॥

अथैन मतो मदन्तीभिरुपचरन्ति। तपो वा ऽअग्नि-स्तपो मदन्त्यस्तस्मादेनं मदन्तीभिरुपचरन्ति॥ १० ॥

अथ मदन्तीरुपस्पृश्य† । राजान माप्याययन्ति तद्यन्मदन्तीरुपस्पृश्य राजान माप्याययन्ति वज्रो वा ऽआज्यंऽ रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमंऽ हिनसा-मेति तस्मान्मदन्तीरुपस्पृश्य राजान माप्याययन्ति॥११॥

तदाहुः। यस्मा ऽएतदाप्यायनं क्रियत ऽआतिथ्यंऽ

* "पर्य्यस्ता मेवैतत्"–इति ग, घ।

† "मदन्तीभिरुपस्पृश्य"–इति ग, घ।

अथ प्रस्तरे निह्नुवते। उत्तरत उपचारो वै यज्ञोऽथै-तद् दक्षिणेना*न्वित्याप्याययन्त्यग्निर्व्वै यज्ञस्तद्यज्ञं पृष्ठतः कुर्व्वते† तन्मिथ्याकुर्व्वन्ति देवेभ्य आवृश्चन्ते यज्ञो वै प्रस्तरस्तद्यज्ञं पुनरारभन्ते तस्यो हैषा प्रायश्चित्तिस्तथो हैषा मेतन्न मिथ्याकृतं भवति न देवेभ्य आवृश्चन्ते तस्मात् प्रस्तरे निह्नुवते ॥ १९ ॥

तदाहुः। अक्तो निह्नुवीरा३नन्क्ता३ऽइत्यनक्तो हैव निह्नुवीन्ननुप्रहरणꣳ ह्येवाक्तस्य ॥ २० ॥

ते निह्नुवते। एष्टा रायः प्रेषे भगाय ऽऋत मृतवा-दिभ्य इति सत्यꣳ सत्यवादिभ्य इत्येवैतदाह नमो द्यावा-पृथिवीभ्या मिति तदाभ्यां द्यावापृथिवीभ्यां निह्नुवते ययोरिदꣳ सर्व्वं मधि‡ ॥ २१ ॥

अथा ह समुल्लुप्य प्रस्तरम्§। अग्नीन्मदन्त्यापा३‖ ऽइति मदन्तीत्यग्नीदाह ताभिरेहीत्युपर्य्युपर्य्यग्नि मति-हरति स यन्नानुप्रहरत्येतेन ह्युत ऊर्ध्वान्यहानि प्रचरिष्यन् भवत्यथ यदुपर्य्युपर्य्यग्नि मतिहरति तद्देवा-स्यानुप्रहृतभाजनं भवति त मग्नीधे प्रयच्छति त मग्नी-न्निदधाति ॥ २२ ॥ ४ ॥

॥ इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् [ ४. ३. ] ॥

---

* "दक्षिणेवा"—इति ग, घ। † "कुर्व्वन्ति"—इति ग, घ।
‡ "मधि"—इति ग, घ। § "प्रस्तरम्"—इति ग, घ।
‖ "दन्त्यापा३"—इति ग, घ।

अवान्तरदीक्षां विधातु माह— "आतिथ्येन वै देवा इष्ट्वा तानिति । 'ते' 'एतस्य' तानूनप्त्रस्य शपथात्मकस्य दोषपरिहाराय । तानूनप्त्रस्य निन्दितत्व माह— "यदन्योऽन्यं पाप मवदन्निति । "सत्यं वदानि[1], मेद मतिक्रमिषम्"—इत्येवं रूप मित्यर्थः । "नाह पुरेत्यनेन दोषपरिहारोपाय उक्तः । स्वीकृताया दीक्षाया अवभृथ-पर्यन्तानुवर्त्तने सति प्राग्गतस्य पापवदनस्य परिहारो भवति, सा चानुवृत्तिर्न तैः कृतेत्यर्थः; मध्ये दीक्षापरित्यागादिति भावः । यद्वा स्वीकृताया दीक्षाया इदानीं मध्यपरित्यागात् तन्मध्ये नूतनां 'दीक्षां' 'पुनः' 'न' 'अवाकल्पयन्', किन्तु प्रकृतदीक्षाया अविरोधिनीम् 'अवान्तरदीक्षाम्' 'अपश्यन्'[2] ॥ १ ॥

अवान्तरदीक्षाकल्पनप्रकार उच्यते— "तेऽग्निनैव त्वच मिति । 'विपल्याङ्गयन्त' विविधं 'परि' परितः 'आङ्गयन्त' अवेष्टयन्; अग्नि मेव त्वच मकुर्वन्नित्यर्थः । अग्नेस्त्वग्भावे कः सम्बन्ध इति, तत्रोच्यते— "तपो वा अग्निरिति । तपनसाधनत्वात् अग्निः 'तपः'; 'दीक्षा' तु क्लेशात्मकत्वादेव 'तपः' । अवान्तरदीक्षां नामनिर्वचनेन प्रशंसति— "तद्यदवान्तरा मिति । "सन्तरा मित्यादि । 'सन्तरा माङ्गन्त' अतिशयेन संश्लिष्टा अङ्गुलीरकुर्वन् । तथा 'मेखलाम्' अपि पूर्वां शिथिलबद्धां पुनः संलग्ना मकुर्वन् । तदेवाह— "पर्यस्ता मेवेति । 'पर्यस्ता मेव' परितः क्षिप्ता मेव । व्रत मर्हतीति 'व्रत्यम्', तद्विरोधि 'अव्रत्यम्' । 'तस्य' 'एतत्' अवान्तरदीक्षाख्यं कर्म 'प्रायश्चित्तम्', तस्य पापस्य निर्हरण मित्यर्थः ॥ २ ॥

---

१— 'वदामि'–इति क । २— तै० सं० ६. २. २. १० द्रष्टव्यम् ।

यदर्थ माख्यायिकामुखेनावान्तरदीक्षोक्ता, त मिदानीं विधत्ते— “सोऽग्निनैवेति। ‘सः’ यजमानः। शिष्टं पूर्ववत्। अवान्तरदीक्षां प्रजासाधनत्वेन प्रशंसति— “प्रजा सु हैवेत्यादिना ॥ ३ ॥

“तेऽग्निनैव त्वच मिति। “अग्निर्वै मिथुनस्य कर्त्तेति। वधूवरयोर्युग्मीभावस्याग्निसव्यपेक्षत्वात् मिथुनकर्त्ताग्निरुच्यते। सा प्रसिद्धिः ‘वै’-शब्देनोक्ता। अशितपीतयोः शुक्रशोणितरूपेण परिणामस्य, पुनश्च देहाकारेण परिणामस्य चाग्न्यधीनत्वात् ‘प्रजनयिता’। अथवा कथम् ‘अग्निर्मिथुनस्य कर्त्ता’? यतोऽसौ ‘मिथुनस्य प्रजनयिता’ इति व्याख्यानव्याख्येयभावो द्रष्टव्यः। देवानां प्रजार्थत्व मुक्त्वा, इदानीन्तनयजमानस्यापि तदर्थत्व माह— “तथो एवैष एतत् प्रजा मेवोपैतीति। ‘एतत्’ एतया अवान्तरदीक्षया ॥ ४ ॥ ५ ॥

अवान्तरदीक्षारूपेण समिदाधानं विधास्यते, तन्मन्त्रे “या तनूरियं सा मयि”—इत्यादि वक्ष्यते, तदुपोद्घातत्वेनाख्यायिका माह— “देवाना मु ह स्म दीक्षिताना मित्यादिना। ‘समिद्धारो वा’ समिधं हरतीति ‘समिद्धारः’। “हरतेरनुद्यमने च[१]”—इत्यत्रानुद्यमन इति पर्युदासात् तादृशोद्यमनस्य सम्भवात् सामान्येन प्राप्तः “कर्मण्यण्”—इत्यण्[२]। “स्वाध्यायं वा विसृजत इति। ‘विसृजते’ नोच्चारयति[३] कश्चित्। ‘तं ह’ समिदाहर्त्तारं वा ऋत्विजं वा मन्त्रोत्स्रष्टारम्। उपलक्षण मेतत्। ऋत्विजां मध्ये यं

---

१— पा० सू० ३. २. ९। २— पा० सू० ३. २. १।

३— ‘उच्चारयति’-इति क्व।

कश्चिन्न व्यापृतम्, तम्। 'इतरम् इतरस्य रूपेण'—'इतरम् इतरस्य रूपेण'— समिदाहर्त्तृरूपेण प्रवचनकर्त्तारम्, प्रवचनकर्त्तृरूपेण समिदाहर्त्तार मित्यर्थः। एवम् 'असुररक्षसानि' असुराश्च रक्षांसि च 'जिघांसन्ति' हन्तु मिच्छन्ति। तथा सति देवाः 'इति' खलु 'मां त्वम्' 'अचिकीर्षीः' कर्त्तु मैच्छः 'इति'। 'मा' मां 'अजिघांसीः[1]' हन्तु मैच्छः' 'इति'। 'पापं वदन्तः' 'उपसमेयुः' अन्योऽन्यं प्राप्नुवन्ति। किं मग्निरपि तादृग्विषयापन्नः? नेत्याह—"अग्निर्हैव तथा नान्य मिति। 'उवाद' उदितवान्॥ ६॥

"ते होचुरिति। 'ते' असुरैरभिभूता देवाः। 'अग्ने!' 'त्वा मपि 'इत्थम्' अनेन प्रकारेण किम् 'अवादिषूः'। प्रश्ने प्लुतिः[2]। तस्योत्तरम्— 'नैवाह मन्यम्, न मा मन्यः' वा अवादीदित्यग्निः प्रत्युवाच॥ ७॥

"तेऽविदुरिति। 'अयम्' अग्निः 'नः' अस्माकं मध्ये 'विरक्षस्तमः' विरक्षो यस्मात् स विरक्षाः, अतिशयेन विरक्षाः 'विरक्षस्तमः'। "अस्यैवरूप मसाम"—इत्यादि। स्पष्टम्। यद्यपि मेखला-कृष्णाजिन-धारणादिक मपि दीक्षाङ्गम्, तथाप्यवान्तरदीक्षायां समिदाधानस्य मुख्यत्वात् "समिध मेवाभ्यादधदवान्तरदीक्षा मुपैतीत्युक्तम्॥ ८॥

"स समिध मभ्यादधातीति[3]। "अग्ने व्रतपा इत्यादिः[4] समिदाधानमन्त्रः। हे 'व्रतपा अग्ने!' 'त्वे' त्वयि व्रतस्य पातरि

---

१— 'जिघांसीः'—इति क। २— पा० सू० ८. २. १००।
३— का० श्रौ० सू० ८. २. ४ क। ४— वा० सं० ५. ६. १।

सति, अहं 'व्रतपाः' व्रतस्य पालयिता, भूयास मित्यर्थः। सप्तम्याः शे-आदेशः[1]। अथवा 'व्रतपाः' भवति 'त्वे' त्वम्। "अग्निर्हि देवानां व्रतपतिः"—इत्यत्र 'हि'-शब्देन "त्व मग्ने व्रतपा असि देव आ मर्त्येषु"-इत्यादि[2]श्रुत्यन्तरप्रसिद्धिर्द्योत्यते। 'या तव' तेजोमयी 'तनूः' अस्ति, 'सा' 'इयं' ममापि भवतु; तथा 'या मम' इत्येतद् व्याख्येयम्। हे 'व्रतपते' अग्ने! 'नौ' आवां 'सह' 'व्रतानि', चरिष्याव इति शेषः। 'तत्' तेन तनूविनिमयेन मन्त्रगतेन। "अनु मे दीक्षाम्"-इति मन्त्रभागे[3] 'दीक्षा'-शब्दश्रवणात् तन्मन्त्रभागपाठेनावान्तरदीक्षां प्राप्तवान् भवति॥

दीक्षाकृत्यनन्तरं पुनरङ्गुल्यादिसमञ्जनस्याभिधानात् आदौ दीक्षाकृतिः कर्त्तव्या, पश्चात् समञ्जन मिति क्रमोऽवगम्यते॥ ९॥

अथ यद्यद्यजमानस्य तत्तन्मदन्तीभिः कर्त्तव्य मिति विधत्ते—"अथैन मतो मदन्तीभिरिति[4]। 'एनं' सोमं यजमानं वा। तप्ता आपो 'मदन्त्यः'। अग्नेर्मदन्तीनाञ्च सन्तापकत्वात् तपोरूपत्वम्॥ १०॥

मदन्त्युपस्पर्शनपूर्वकं राजाप्यायनं विधत्ते— "अथ मदन्तीभिरुपस्पृश्य राजान मिति[5]। "वज्रो वा आज्य मिति। "एतं वै देवा

---

१— पा० सू० ७. १. ३९.।   २— वा० सं० ४. १६।

३— वा० सं० ५. ६. २। तैत्तिरीयकल्पमते मन्त्रान्तर एषः, यजमान मिमं वाचयति। तै० सं० १. २. १० सा० भा० द्रष्टव्यम्।

४— का० श्रौ० सू० ८. २. ४ ख।   ५— का० श्रौ० सू० ८. २. ६।

वज्रं कृत्वा सोम मघ्नन्"-इति[1]श्रुतेराज्यस्य वज्रत्वम्। सोमस्य सर्वौषध्यनुप्रवेशात्, रेतसश्चौषधिजन्यत्वात्[2] रेतस्त्वं सोमस्य। अथवा "पञ्चम्या माहुतावापः पुरुषवचसो भवन्ति"-इति[3] आहुतिरूपस्य सोमस्य क्रमेण रेतोरूपेण परिणामात् रेतस्त्वम् ॥ ११ ॥

अनुष्ठेयपदार्थक्रमविषये किञ्चिद् ब्रह्मवादिनश्चोद्य मुद्भावयन्ति— तदाहुर्यस्मा एतदाप्यायनं क्रियत इति। 'यस्मै सोमाय एतत् आतिथ्यं क्रियते', 'त मेव' 'अग्रे' आप्यायनादिभिः सत्कर्त्तुं युक्तम्। सोमसम्बन्धाभिप्रायेण चोद्य उद्भाविते यागसम्बन्धेन परिहरति— "यज्ञस्य वा एवं कर्मेति। एवम्प्रकारक्रमविशिष्टं कर्मजातं यज्ञस्य खलु क्रियत इत्यर्थः। 'अत्र' खलु 'एनान्' 'समत्' कलहः 'अविन्दत्' आप्नोत्। 'ते' च देवाः 'पूर्वं संशम मेवोपायन्' कलहोपशमनरूपं तानूनप्त्रं ते कृतवन्त इत्यर्थः। "अथावान्तरदीक्षा मिति। शपथ-जनितदोषपरिहाराय अनन्तर मेव अवान्तरदीक्षा कार्या। अतः परिशेषादाप्यायनस्यान्ते निवेश इति ॥ १२ ॥

"तद्यदाप्याययन्तीति। आप्यायनं प्रशंसति— "देवो वा इति। सोमस्य देवत्वं समर्थयते— "दिवि हीति। अस्त्वेवं सोमस्य, सोमस्याप्यायने किं मायात मित्यत आह— "वृत्रो वा इत्यादि। त्वष्ट्रेन्द्रघातकोत्पत्त्यर्थं हुतस्येन्द्रपीतसोमशेषस्य वृत्रत्वेनोत्पत्तेः सोमस्य वृत्रत्वम्। 'तस्य' इन्द्रेण हतस्य वृत्रस्य 'शरीरं' 'गिरयोऽश्मानः'

---

१— तै० सं० ६. २. २. ७। इहाप्युत्तरत्र ४. ४. ६ द्रष्टव्यम्।

२— 'रेतसश्चौषधिसाररूपत्वात्'-इति ङ।

३— छा० ब्रा० ७. ६. १। इहोपरिष्टाच्चास्त्येषा कथा १४. ६. १।

चाभवन्। सोमाख्यं वस्त्वेव सोमशरीरभूतेषु गिर्यादिषु वर्त्तते, ‘तत् एषः’ अश्नाख्या[1] ‘ओषधिः’ ‘जायते’,—‘इति’ एवं ‘श्वेतकेतुः औद्दालकिः आह’ स्म। अतः ‘ता मेव’ गिरावुत्पन्ना मेव इदानीन्तना यजमानाः ‘अभिषुण्वन्ति’, न साक्षात् सोमम्। अतः ‘ताम्’ ओषधिं दीक्षादिभिः संस्कारैः साक्षात् ‘सोमं कुर्वन्ति’। “तथो एवैना मेष इत्यादि ॥ १३ ॥

ऋत्विग्यजमानकर्त्तृक माप्यायनं सारघमधुकल्पनया[2] प्रशंसति— “मधु सारघ मिति[3] वा आहुरित्यादिना ॥ १४ ॥

एतदेवाप्यायनं[4] गतसारत्वपरिहारात्मना प्रशंसति— “यज्ञेन वै देवा इमां जितिं जिग्युरित्यादिना, “यदेवात्र यज्ञस्य निर्द्धीतं यद्विदुग्धं तदेवैतत् पुनराप्याययन्तीत्यन्तेन। एतदसकृद् व्याख्यातम् ॥ १५, १६ ॥

“ते वै षड् भूत्वाप्याययन्तीति। स्पष्टम् ॥ १७ ॥

“त आप्याययन्तीति। आप्यायनमन्त्रस्य प्रथमभागं व्याचष्टे— “अंशुरंशुष्टे देवेत्यादि[5]। यद्यप्याप्यायने सोमस्य सर्वोऽंशुर्नाप्यायते, तथापि मन्त्रे ‘अंशुरंशुः’-इति वीप्साभिधानसामर्थ्यैनैव प्रत्यंशु आप्याययन्तो भवन्तीत्यर्थः। “इन्द्रायैकधनविद इति। अत्रेन्द्र-शब्दतात्पर्य माह— “इन्द्रो वै यज्ञस्येति। “एकधनानाप्यायते इश-

---

१— ‘दूषानाख्या ( ! उश्नाख्या )’–इति क।

२, ३— क-पुस्तकीयपाठाविह त्वद्धरभ्रमजन्यौ।

४— तै० सं० २. २. ८ द्रष्टव्यम्। ५— वा० सं० ५. ७. १।

दश वेति। एक एव सोमादिरूपो हविःपदार्थ एव[1] धनं येषां, ते देवा एकधनाः; तान् विन्दति, यज्ञे सोमपानाय लभत इतीन्द्रः 'एकधनवित्'। 'तस्मात्' एकैक एवांशुः शतशो दशशो वा 'एकधनान्' देवान् 'आप्यायते' वर्द्धयति, शरीरोपचयं करोति, अतः उक्तप्रकारेण सोमाख्यैकधनेन देवाना मेकधनत्वात् मन्त्रः 'इन्द्रायैकधनविदे' 'इति' 'आह' इत्यर्थः। "आ तुभ्य मिन्द्रः प्यायता मिति। हे सोम! 'तुभ्यं' त्वदर्थं, त्वां पातुं स इन्द्रः समर्थो भवत्विति। यज्ञसाधनभूतस्य सोमस्येन्द्रार्थत्वावगमादिन्द्रस्यैवाप्यायनं कृतं भवतीत्यर्थः। "आ त्व मिन्द्राय प्यायस्वेति। अत्र सोमाप्यायनस्येन्द्रार्थत्वावगतेस्तस्मिन्नेवाप्यायनं दधातीत्युक्तम्। "आप्याययास्मन्त्सखीन्त्सन्या मेधयेति। अनेन मन्त्रभागेन धन मेधां दित्सयाप्यायनायास्मत्सखिभूताना मृत्विजा माशासनं क्रियते। अत्र 'सनि-मेधा'-शब्दयोः दातव्यं धन मनुवचनीय मित्याह— "स यत् सनोति, तत्तदाह यत् सन्येतीति। 'सन्या'—'इति' एवंरूपेण शब्देन यदाहार्थजातम्, 'तद्' 'यत् सनोति' धनं यज्ञेन यजमानः, 'तदाह' इत्यर्थः। एव मुत्तरवाक्य मपि योज्यम्। पूर्वापरीभूतस्यानुवचनस्य मेधा मन्तरेणासम्भवात् मेधाशब्दस्यानुवचन मर्थ इति व्याख्यातम्। "स्वस्ति ते देव सोमेति। हे 'सोम!' तव 'स्वस्ति' विनाशाभावः क्षेमः, अस्त्विति शेषः। अहं त्वदनुग्रहात् 'सुत्यां' सोमाभिषवम् 'अशीय' प्राप्नुयाम्। सुत्याप्राप्तिप्रार्थनायास्तात्पर्य माह— "एका वा एतेषा

---

१—'एकं'-इति क।

माशीर्भवतीति। "यज्ञस्योदृच मिति। उपरिभाविनी[1] ऋक् 'उदृक्', तया समाप्तिर्लक्ष्यते ॥ १८ ॥

आप्यायन मभिधाय निह्नव माह— "अथ प्रस्तरे निह्नुवत इति[2]। प्रस्तरस्योपरि पाणी सम्पुटीकृत्य "एष्टा राये"-इति[3] मन्त्रजपो निह्नवः। निह्नवशब्दोऽपलापे प्रसिद्धो लोके[4], इह देवानां नमस्कारादिना सान्त्वनं विहितम्। निह्नवं सोमाप्यायन-काले सम्भावितस्यातिक्रमस्य परिहाररूपेण प्रशंसति— "उत्तरत उपचारो वै यज्ञ इति। उत्तर उपचार इति व्यतिरेकप्रदर्शनाय अभिधानं साध्यसाधनयोरभेदाभिप्रायेण। अग्नेर्यज्ञत्व मृत्विजां दक्षिणत उपचारेण। पश्चाद्भागस्थितस्य गार्हपत्यस्य पृष्ठतः करणं भवति, तेन 'मिथ्या' अकृतं 'कुर्वन्ति'; अग्नेः सर्वदेवात्मकत्वात् सर्वदेवेभ्योऽपि वर्जितो भवति। तर्हि प्रस्तरनिह्नवेन कथं समा-धान मिति, तत्राह— "यज्ञो वै प्रस्तर इति। हविराधारकत्वेन यज्ञनिर्वर्त्तकत्वात् प्रस्तरस्य यज्ञत्वोपचारः ॥ १९ ॥

निह्नवस्य कालं निर्द्धारयितुं ब्रह्मवादिनां विचारं दर्शयति— "तदाहुरक्ते निह्नुवीरा३ननक्ता३इतीति[5]। किम् 'अक्ते' प्रस्तरे

---

१— 'तदुपरिभाविनी'-इति क।

२— का० श्रौ० सू० ८. २. ९। ३— वा० सं० ५. ७. २०।

४— तथा चामरः— "अपलापस्तु निह्नवः"-इति ( १. ६. १७. ), पुनः "अपह्नवेऽपि निकृतावपि निह्नवः"-इति ( ३. ३. २०७. ) च। अपह्नवोऽपलापो निकृतिः शाठ्य मिति तट्टीकायाम्।

५— का० श्रौ० सू० ८. २. १०, ११।

निह्नवः कर्त्तव्यः, उतान्के? इति विचार्यमाणत्वात् श्रुतिः[१]। अन्तस्य अविलम्बेनाग्नौ[२] प्रहरणात् अन्ते एव प्रस्तरे कर्त्तव्य मित्यर्थः ॥ २० ॥

"ते निह्नुवत एष्टा रायः प्रेष इति[३]। निह्नवमन्त्रस्याय मर्थः। हे 'एष्टः'! तृजन्तस्य सम्बुद्धिः। धनं यजमानार्थ मिच्छन् अग्ने[४]! अत्र ब्राह्मणे सोमाप्यायननिह्नवातिक्रमस्योक्तत्वात् स एव प्रसाध्यः। 'रायः' धनानि, प्रयच्छन्निति शेषः। किमर्थम्? 'इषे' अन्नाय, 'भगाय' सौख्याय च। तथा 'ऋतवादिभ्यः' सत्यवादिभ्योऽस्मभ्यम् 'ऋतं प्रयच्छ' क्रियमाणं कर्म यथा न वृथा स्यात्, तथा कुर्वित्यर्थः। सर्वदेवाश्रयाभ्यां 'द्यावापृथिवीभ्यां' 'नमः' अस्तु। ऋतशब्दस्योदकयज्ञाद्यर्थेषु[५] अभिमत मर्थ माह— "सत्यवादिभ्य इतीति। द्यावापृथिवीभ्यां नमस्कार एव निह्नव इत्याह— "द्यावापृथिवीभ्या मेव निह्नुवत इति। अस्तु नमस्कारेण तयोर्निह्नवः, इतरेषां देवानां स कथं कृतः स्यादिति, तत्राह— "ययोरिदं सर्व मधीति। यस्मात् तयोरन्तः 'इदं' परिदृश्यमानं सर्वम् 'अधि' स्थित मिति

---

१— पा० सू० ८. २. ९७। २— 'विलम्बेनाग्नौ'–इति क।

३— तै० सं० ६. २. २. ९। निह्नवप्रकारस्त्वापस्तम्बेन स्फुटं दर्शितः (श्रौ० सू० ११. १. १२.)।

४— "यद्वा एष्टा इति प्रथमान्तम्"–इत्यादि च व्याख्यानम् ऐ० ब्रा० १ ४. ६ सा० भा० द्रष्टव्यम्।

५— निघ० १. १२. ६८ (उदकम्), २. १०. २८. (धनम्), ३. ११. ६ (सत्यम्), निरु० ६. ४. ७ (यज्ञः), १०, ४, ४ (वायुः)।

शेषः; तस्मादित्यर्थः। अथ वा 'अधि'-इति सप्तम्यर्थानुवादी, तयोरधीदं सर्व मिति[१] ॥ २१ ॥

अध्वर्युकर्त्तृकं प्रैषं दर्शयति— "अथाह समुल्लुप्य प्रस्तर मग्नीन्मदन्त्यापा३इतीति[२]। 'प्रस्तरं' 'समुल्लुप्य' सम्यगादृत्येत्यर्थः। हे 'अग्नीत्!' 'आपः' किं 'मदन्ती' मदन्त्यः तप्ताः, 'ताभिरेहि' इति, 'आह'-इति शेषः। तम् प्रस्तरम् 'अग्निम् उपर्युपरि' अग्नेरूर्द्धोर्द्धभावे 'अतिहरति' अनुप्रहरेत्[३]। अनुप्रहरणस्य प्रयोजन माह— "एतेन ह्यत ऊर्द्ध्वानीति। 'एतेन' आतिथ्यार्थप्रस्तरेण। उपर्युपरि प्रहरणस्य प्रयोजन माह— "तदेवास्यानुप्रहृतभाजनं भवतीति। 'तम्' अध्वर्युणा दत्तं प्रस्तरम्, 'अग्नीत्' आग्नीध्रः सुरचिते देशे 'निदधाति' स्थापयेत्[४] ॥ २२ ॥ ४ [४. ३.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥

---

१— वा० सं० ५. ७. २।

२— का० श्रौ० सू० ८. २. ११।

३— 'अति हरति, न प्रहरेत्'–इति क।

४— का० श्रौ० सू० ८. २. १२।

( अथ चतुर्थं ब्राह्मणम् )।

ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्यः। तस्माद् यदि प्रवर्ग्यवान् भवति प्रवर्ग्येण प्रचर्य्याथोपसद्भिः प्रचरन्ति तद्ग्रीवाः प्रतिदधति ॥ १ ॥

तद्याः पूर्वाह्णेऽनुवाक्या भवन्ति। ता अपराह्णे याज्या या याज्यास्ता अनुवाक्यास्तद्व्यतिषजति तस्मादिमानि ग्रीवाणां पर्व्वाणि व्यतिषक्तानीमान्यस्थीनि ॥ २ ॥

देवाश्च वा ऽअसुराश्च। उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा एषु लोकेषु पुरश्चक्रिरेऽयस्मयी मेवास्मिंल्लोके रजता मन्तरिक्षे हरिणीं दिवि* ॥ ३ ॥

तद्वै देवा अस्पृण्वत। त ऽएताभिरुपसद्भिरुपासीदं-स्तद्यदुपासीदंस्तस्मादुपसदो नाम ते पुरः प्राभिन्द-न्निमांल्लोकान्† प्राजयंस्तस्मादाहुरुपसदा पुरं जयन्तीति यद्वहोपासते तेनेमां मानुषीं पुरं जयन्ति ॥ ४ ॥

एताभिर्व्वै देवा उपसद्भिः। पुरः प्राभिन्दन्निमां-ल्लोकान् प्राजयंस्तथो ऽएवैष एतन्नाहैवास्मा ऽअस्मिं-ल्लोके कश्चन पुरः कुरुत ऽइमानेवैतल्लोकान् प्रभि-नत्तीमांल्लोकान् प्रजयति तस्मादुपसद्भिर्य्यजते ॥ ५ ॥

---

* "दिवि"–इति ग, घ।

† "न्निमांलोकान्"–इति क, ग, घ। एव मिहोत्तरत्रापि सर्वत्र।

ता वा ऽआज्यहविषो भवन्ति। व्व्रज्रो वा ऽआज्य मेतेन वै देवा व्व्रज्रेणाज्येन पुरः प्राभिन्दन्निमां-ल्लोकान् प्राजयंस्तथो ऽएवैष एतेन वज्रेणाज्येनेमां-ल्लोकान् प्रभिनत्तीमांल्लोकान् प्रजयति तस्मादाज्य-हविषो भवन्ति ॥ ६ ॥

स वा ऽअष्टौ कृत्वो जुह्वां गृह्णाति। चतुरुपभृत्यथो ऽइतरथाहुश्चतुरेव कृत्वो जुह्वां गृह्णीयादष्टौ कृत्व उपभृतीति ॥ ७ ॥

स वा अष्टावेव कृत्वो जुह्वां गृह्णाति। चतुरुपभृति तद्वज्रमभिभारं* करोति तेन व्व्रज्रेणाभिभारेणेमां-ल्लोकान् प्रभिनत्तीमांल्लोकान् प्रजयति ॥ ८ ॥

अग्नीषोमौ वै देवानाᳲ सयुजौ। ताभ्याᳲ साद्धं गृह्णाति व्विष्णव ऽएकाकिनेऽन्यतर मेवाघार माघारयति युᳲ स्रुवेण प्रतिक्रामति वा ऽउत्तर माघार माघार्याभि-जित्या ऽअभिजयानीति तस्मादन्यतर मेवाघार माघार-यति युᳲ स्रुवेण† ॥ ९ ॥

अथाश्राव्य न होतारं प्रवृणीते। सीद होतरित्येवा-

---

* 'मतिभारं'–इति सा०–सम्मत इति डा० वेबरः।

† "स्रुवेण"–इति ग, घ।

होपविशति होता होतृषदन ऽउपविश्य प्रसौति प्रसूतो ऽध्वर्युः स्रुचावादत्ते ॥ १० ॥

स आहातिक्रामन्नग्नयेऽनुब्रूहीति। आश्राव्याहाग्निं यजेति वषट्कृते जुहोति* ॥ ११ ॥

अथाह सोमायानुब्रूहीति। आश्राव्याह सोमं यजेति वषट्कृते जुहोति ॥ १२ ॥

अथ यदुपभृत्याज्यं भवति। तत् समानयमान आह विष्णवेऽनुब्रूहीत्याश्राव्याह विष्णुं यजेति वषट्कृते जुहोति ॥ १३ ॥

स यत् समानच तिष्ठन् जुहोति। न यथेदं† प्रचरन्त्सञ्चरत्यभिजित्या ऽअभिजयानीत्यथ यदेता देवता यजति वज्रमेवैतत् सꣳस्करो‡त्यग्निमनीकꣳ सोमꣳ शल्यं विष्णुं कुल्मलꣳ§ ॥ १४ ॥

संवत्सरो हि वज्रः। अग्निर्वा ऽअहः सोमो रात्रिरथ यदन्तरेण तद् विष्णुरेतद्वै परिप्लवमानꣳ संवत्सरं करोति ॥ १५ ॥

संवत्सरो वज्रः। एतेन वै देवाः संवत्सरेण वज्रेण

---

* 'जुहोति'–इति ख। एव मुत्तरत्रापि द्वयोः।

† 'यथेतं'–इति पाठः सा॰–सम्मत इति डा॰ वेबरः। 'ययेदं'–इति च।

‡ 'संस्करो'–इति क, ख। एव मिहोत्तरत्रापि सर्वत्र।

§ 'कुल्मलम्'–इति ख। अय मेव पाठः कण्डीच्छेदाद् परस्त्यः स्यात् साधुः।

पुरः प्राभिन्दन्निमांल्लोकान् प्राजयंस्तथो ऽएवैष एतेन संव्वत्सरेण व्वज्रेणेमांल्लोकान् प्रभिनत्तीमांल्लोकान् प्रजयति तस्मादेता देवता यजति ॥ १६ ॥

स वै तिस्र उपसद उपेयात्। त्रयो वा ऽऋतवः संवत्सरस्य संव्वत्सरस्यैवैतद्रूपं क्रियते संव्वत्सर मेवैतत् सुꣳस्करोति द्विरेकया प्रचरति द्विरेकया ॥ १७ ॥

ताः षट् सम्पद्यन्ते। षड् वा ऽऋतवः संवत्सरस्य संव्वत्सरस्यैवैतद्रूपं क्रियते संव्वत्सर मेवैतत् सुꣳस्करोति ॥ १८ ॥

यद्यु द्वादशोपसद उपेयात्*। द्वादश वै मासाः संव्वत्सरस्य संव्वत्सरस्यैवैतद्रूपं क्रियते संव्वत्सर मेवैतत् सुꣳस्करोति। द्विरेकया प्रचरति द्विरेकया ॥ १९ ॥

ताश्चतुर्व्विꣳशतिः सम्पद्यन्ते। चतुर्व्विꣳशतिर्व्वै संवत्सरस्यार्द्धमासाः संव्वत्सरस्यैवैतद्रूपं क्रियते संव्वत्सर मेवैतत् सुꣳस्करोति ॥ २० ॥

स यत् सायम्प्रातः प्रचरति। तथा ह्येव सम्पत् सम्पद्यते स यत् पूर्व्वाह्णे प्रचरति तज्जयत्यथ यदपराह्णे प्रचरति सुजित मसदित्यथ यज्जुहोतीदं वै पुरं युध्यन्ति तां† जित्वा स्वाꣳ सतीं प्रपद्यन्ते ॥ २१ ॥

---

* 'उपेयात्'–इति ग, घ। † नास्त्येतत् पदं ख–पुस्तके

स यत्प्रचरति। तद्युध्यत्यथ यत् सन्तिष्ठन्ते तज्जयत्यथ यज्जुहोति स्वा मेवैतत् सतीं प्रपद्यते ॥ २२ ॥

स जुहोति। यया द्विरेकस्याह्नः प्रचरिष्यन् भवति या ते ऽग्नेऽयःशया तनूर्व्वर्षिष्ठा गह्वरेष्ठा*। उग्रं व्वचो अपावधीत्त्वेषं व्वचो अपावधीत् स्वाहेत्येवꣳरूपा हि सासीदयस्मयी हि सासीत् ॥ २३ ॥

अथ जुहोति। यया द्विरेकस्याह्नः प्रचरिष्यन् भवति या ते ऽग्ने रजःशया तनूर्व्वर्षिष्ठा गह्वरेष्ठा। उग्रं व्वचो ऽअपावधीत्त्वेषं व्वचो ऽअपावधीत् स्वाहेत्येवꣳ-रूपा हि सासीद्रजता हि सासीत् ॥ २४ ॥

अथ जुहोति। यया द्विरेकस्याह्नः प्रचरिष्यन् भवति या ते ऽग्ने हरिशया तनूर्व्वर्षिष्ठा गह्वरेष्ठा। उग्रं व्वचो ऽअपावधीत्त्वेषं व्वचो अपावधीत् स्वाहेत्येवꣳरूपा हि सासीद्धरिणी हि सासीद् यद्यु द्वादशोपसद उपेयाच्चतुरह मेकया प्रचरेच्चतुरह मेकया ॥ २५ ॥

अथातो व्रतोपसदा मेव। पर उर्व्वीर्व्वा ऽअन्या उपसदः परोऽह्वीरन्याः स यासा मेकं प्रथमाहं दोग्ध्यथ द्वावथ त्रींस्ताः परउर्व्वीरथ यासां त्रीन् प्रथमाहं

* 'गह्वरेष्ठा'—इति डा०—वेबर-सम्मतः। एव मुत्तरयोश्च द्वयोः।

दोग्ध्यथ द्वावथैकं ताः पुरोऽह्नीर्या वै पुरोऽह्नीस्ताः पर उर्व्वीर्याः पर उर्व्वीस्ताः पुरोऽह्नीः ॥ २६ ॥

तपसा वै लोकं जयन्ति। तदस्यैतत् परः-पर एव व्वरीयस्तपो भवति परः-परः श्रेयाꣳसंल्लोकं जयति व्वसीयान् हैवास्मिंल्लोके भवति य एवं व्विद्वान् पुरोऽह्नीरुपसद उपैति तस्माद् पुरोऽह्नीरेवोपसद उपेयाद् यद्य द्वादशोपसद उपेयात् त्रीँश्चतुरहं दोहयेद् द्वौ चतुरह मेकं चतुरहम् ॥ २७ ॥ ५ ॥

॥ तृतीयप्रपाठके पञ्चमं ब्राह्मणम् [ ४. ४. ] ॥

इत्य मातिथ्य मभिधाय अथोपसदस्तत्कालञ्चाह— "ग्रीवा वै यज्ञस्योपसदः, शिरः प्रवर्ग्यः[१]; तस्माद् यदि प्रवर्ग्यवान् भवति, प्रवर्ग्येण प्रचर्याथोपसद्भिः प्रचरन्तीति[२]। 'तत्' तेन प्रवर्ग्यानन्तर[३] मुपसदनुष्ठानेन 'ग्रीवाः' अवयवापेक्षया बहुवचनम्, 'प्रतिदधाति' शिरसा सह योजितवान् भवति। "न प्रथमयज्ञे प्रवृञ्ज्यात्"-इति[४]

---

१— ऐतरेयब्राह्मणे आतिथ्यस्य शिरस्त्व मुपसदां ग्रीवात्वम् (१. ५. ८.)।

२— "प्रवर्ग्योपसदावतः"—इति का० श्रौ० सू० ८. २. १५।

३— प्रवर्ग्य मुपरिष्टाद् वक्ष्यति ( २६. २. १. )।

४— इहैवोपरिष्टाद्वक्ष्यति ( २६. ७. ५३. )।

निषेधसम्भवाद् "यदि प्रवर्ग्यवान्"—इत्युक्तम्[१]। आश्वलायनोऽपि प्रथमयज्ञेनैके घर्म्मम्"-इति[२] ॥ १ ॥

"तद्याः पूर्वाह्णेऽनुवाक्या भवन्ति, ता अपराह्णे याज्या इति। "अग्निर्वृत्राणि जङ्घनद्"—"य उग्र इव शर्यहाः"[३], "त्वं सोमासि सत्पतिः"—"गयस्फानो अमीवहाः"[४], "इदं विष्णुर्विचक्रमे"—"त्रीणि पदा विचक्रमे"[५],—इति त्रीणि युगलानि क्रमेणाग्नि-सोमविष्णूनां याज्यापुरोनुवाक्याः[६]। तेष्वाद्याः प्रातःकालोपसदि पुरोनुवाक्या भवन्ति, द्वितीया याज्याः; सायङ्कालीनोपसदि तु द्वितीयाः पुरोनुवाक्याः, प्रथमा याज्या इत्यर्थः[७]। ग्रीवाणा मङ्गुलिवत् प्रसिद्धपर्वाभावात् 'अस्थीनि'—इत्युक्तम् ॥ २ ॥

उपसदो लोकजयसाधनत्वेन प्रशंसति— "देवाश्च वा असुराश्चे-त्यादिना। 'अयस्मयीम्'—इत्यत्र "अयस्मयादीनि छन्दसि"-इति[८] भ-सञ्ज्ञायां पद-सञ्ज्ञाया बाधादुत्वाभावः। "हरिणीं द्विवीति। हरितवर्णां पुरीम्, सुवर्णमयी मित्यर्थः ॥ ३ ॥

"तद्वै देवा अस्पृण्वतेति। 'तत्' पुरत्रयम् 'अस्पृण्वत' "स्पृ हिंसायाम्"[९] हिंसितवन्तः, ते 'देवाः'। यस्मात् 'एताभिः'

---

१— अतएवोक्तं कात्यायनेन "उपसदेव वाप्रवर्ग्ये"—इति ८. २. १६।
२— आश्व० श्रौ० सू० ४. ८. १६। ३— ऋ० सं० ६. १६. ३४, ३६।
४— ऋ० सं० १. ९१. ५, १२। ५— ऋ० सं० १. २२. १७, १८।
६— विहितास्चैताः ऐ० ब्रा० १. ४. ८; आश्व० श्रौ० सू० ४. ८. ८।
७— ऐतरेयकेऽप्येव मेव, किञ्चिद् विशेषोऽपि तत्र द्रष्टव्यः (१. ४. ८.)।
८— पा० सू० १. ४. २०। ९— स्वा० प० १२ धा०।

त्रिभिराग्नेयादीष्टिभिः कर्मभिः सामर्थ्येनेत्यर्थः। 'उपासीदन्' असुरनिर्गमनप्रतिबन्धानि त्रीणि पुराण्यावृत्य न्यवसन्नित्यर्थः। अत उपसद्साधनत्वादासा मुपसन्नाम सम्पन्न मित्यर्थः[1]। उक्त मुपसदां जयसाधनत्वं लोकप्रसिद्ध्या दृढयति— "तस्मादाहुरुपसदा पुरं जयतीति। 'आहुः' अभिज्ञाः कथयन्ति, 'उपसदा' उपसदनदुर्गवेष्टनेन। अभिज्ञाना मभिधानं न मृषेत्याह— "यद्देति। 'उपासते' उपेत्यावृण्वन्ति ॥ ४ ॥

"एताभिर्वै देवा इति। "तथो एवैष एतदिति। एतया उपसदा 'एषः' यजमानोऽपि पुरः प्रभिनत्ति, जयति चेति शेषः। न केवलं पुरस्य जयः, अपि तु जेतव्यपुर मेव न भवेदित्याह— "नाहैवास्मा अस्मिंल्लोके कश्चन पुरः कुरुत इति[2] ॥ ५ ॥

"तथो एवैष एतत्"-इति यत् सङ्क्षेपेणोक्तम्, तदेव स्पष्टयति— "ता वा आज्यहविष इत्यादि। स्पष्टम् ॥ ६ ॥

प्रधानयागत्रयार्थ माज्यग्रहणप्रकार माह— "स वा अष्टौ कृत्वो जुह्वां गृह्णाति चतुरुपभृतीति[3]। 'अष्टौ कृत्वः' अष्टवारावृत्त्या ॥ ७ ॥

"स वा अष्टावेव कृत्वो जुह्वा मिति। अत्र 'एव'-कारेण "अथो इतरथाहुः"-इति केषाञ्चित् पक्षो निरस्यते। "तद्यज्ञ मतिभारं करोतीति। 'तत्' तेन जुह्वा मष्टौ कृत्वो ग्रहणेन, आज्यस्य

---

१— "प्रणीताद्युपसत्"-इति का० श्रौ० सू० ८. २. १७ द्रष्टव्यम्।

२— ऐतरेयब्राह्मण-तैत्तिरीयसंहितयोरप्येवम् ( १. ४. ६, ६. २. ३. )।

३— का० श्रौ० सू० ८. २. २६, २७।

वज्रत्वात्, तस्य च मुखत एवाष्टवारग्रहणात्, वज्र मेव मुखप्रदेश-भारयुक्तं कृतवान् भवति ॥ ८ ॥

प्रकारान्तरेण जुह्वा मष्टौकृत्वो ग्रहणं प्रशंसति— "अग्नीषोमौ वै देवानां सयुजौ, ताभ्यां सार्द्धं गृह्णाति; विष्णव एकाकिन इति। गृह्णातीति शेषः[१]। प्रकृतिवदाघारद्वयप्रसक्तौ स्रुच्यां द्वितीय माघारं निषेधति— "अन्यतर मेवाघार मिति। 'यं ध्रुवेणाघार-यति' त मन्यतर मित्यर्थः। अभिजयसाधनत्वेनान्यतर माघारं प्रशंसति— "प्रतिक्रामति वेति। उत्तराघारानन्तरं प्रतिक्रमण-सम्भवात् तस्य चाभिजयरूपत्वात् जेतव्याभिजयाय स्रौच मेवाघार माघारयेदिति स्तुतिः ॥ ९ ॥

"अथाश्राव्य न होतारं प्रवृणीत इति[२]। अध्वर्युराह 'आश्रा-वय' इत्युक्त्वा, "अग्निर्देवो दैव्यो होतेत्यादि "मानुष इत्यन्तं न ब्रूयादित्यर्थः; किन्तु 'सीद होतः' इत्येव ब्रूयात्। तथा चाश्व-लायनः— "ईक्षितः सीद होतरिति वोक्त उपविशेत्"-इति। "होता होतृषदन उपविश्य प्रसौतीति। वेदेरुत्तरा श्रोणिर्होतृ-षदनम्। "घृतवती मध्वर्यो स्रुच मास्यस्व"—इत्यनुजानीया-दित्यर्थः। 'स्रुचौ' जुहूपभृतौ ॥ १० ॥

"स आद्यातिक्रामन्नित्यादि[३]। 'अतिक्रामन्' आहवनीयस्य दक्षिणभागं प्रति गन्तुं वेद्यतिक्रमं कुर्वन्, "अग्नयेऽनुब्रूहि"-'इति'

---

१— तै० सं० ६. २. ३. ४-६ द्रष्टव्यम्।

२— का० श्रौ० सू० ८. २. ३०।

३— का० श्रौ० सू० ८. २. ३१।

होतारम् 'आह'। अग्नेर्यागार्थ मनुवचनं ब्रूहीत्यर्थः। पुनराश्रावण-प्रत्याश्रावणानन्तरम् "अग्निं यज"-'इति' आह। याज्यां पठेति ब्रूयादित्यर्थः। 'वषट्कृते' होत्रा "वौषट्"-इत्युक्ते[1] ॥ ११ ॥ १२ ॥

विष्णोरनुवचनकाल माह— "अथ यदुपभृत्याज्यं भवति, तत् समानयमान आह विष्णवेऽनुब्रूहीति[2]। 'समानयमानः' जुह्वां प्रक्षिपन् ॥ १३ ॥

"स यत् समानत्र तिष्ठन् जुहोतीति। 'अत्र' एतस्मिन्नेवाहव-नीयदक्षिणदेशे। "न यथेदं प्रचरन् सञ्चरतीति। दर्शपूर्णमासेष्ट्यां 'यथेतं' येन मार्गेण गतः, तेनैव पुनरपि हविरवदानाय गच्छति, तथात्र न कर्त्तव्य मित्यर्थः। तथाविधे एकत्रैव होमः 'अभिजित्यै' भवति। अतः 'अभिजयानि'-इति एकत्रैव तिष्ठन् जुहुयात्। प्रकृतिवत् प्रतियाग माक्रमणप्रत्याक्रमणे न कार्ये; अपि तु सकृ-देवातिक्रम्य त्रीन् यागान् कुर्यादिति तात्पर्यार्थः। अग्न्यादियाग-त्रयं प्रशंसति— "अथ यदेता इति। कथ मेतासां यागेन यज्ञः संस्कृतो भवतीति तद्विभज्य दर्शयति— "अग्नि मनीक मित्या-दिना। 'अनीकम्' वज्रस्य[3] मुखप्रदेशः, 'शल्यं'[4] ततः पूर्वो भागः, 'कुल्मलं' तत्पुच्छभागः[5] ॥ १४ ॥

---

१— "अर्द्धं कृत्वा सोमाय"—इति का० श्रौ० सू० ८. २. ३२।

२— का० श्रौ० सू० ८. २. ३३।

३— 'यज्ञस्य'—इति ङ, च। ४— 'कल्पं'—इति छ।

५— "अग्नि मनीकम्, सोमं शल्यम्, विष्णुं तेजनम्"—इति तै० सं० ६. २. ३. १। ऐतरेयकेऽप्येव मेव (१. ४. ८.)।

उक्तं वज्रत्वं संवत्सरतयोपपाद्य प्रशंसति— "संवत्सरो हि वज्रोऽग्निर्वा अहः सोमो रात्रिरथ यदन्तरेण तद् विष्णुरिति । अह्नो रात्रेश्च योऽन्तरालः कालः, स विष्णुरित्यर्थः; पूर्वोत्तरोभयकालव्यापित्वादिति भावः । 'एतत्' त्रयं 'परिप्लवमानं' पुनःपुनरावर्त्तमानं 'संवत्सरं' निष्पादयति ॥ १५ ॥

"संवत्सरो वज्र इति । स च 'संवत्सरः' 'वज्रः'; वज्ररूपाग्न्यादित्रयावृत्तिरूपत्वात् । "तस्मादेता देवता यजतीति उपसंहारः ॥ १६ ॥

उपसदां त्रित्वं विधाय प्रशंसति— "स वै तिस्र उपसद उपेयात्, त्रयो वा ऋतव इत्यादिना[1]। "द्विरेकया प्रचरतीति[2]। आग्नेयादियागत्रयस्य व्यापकोपसत्तया एकस्मिन्नहनि 'द्विः प्रचरति' अनुतिष्ठेत् । तथाविधानुष्ठानस्य दिनत्रयकर्त्तव्यता वीप्सयोच्यते ॥ १७ ॥

दिनत्रयेऽपि द्विर्द्विरनुष्ठानं प्रशंसति— "ताः षट् सम्पद्यन्त इत्यादिना[3] ॥ १८ ॥

त्रित्वपक्षवदुपसद्द्वादशत्वपक्ष मपि विकल्पयति— "यद्यु द्वादशोपसद इति[4]। अस्मिन्नपि पक्षे प्रतिदिन मुपसदोर्द्विर्द्विरनुष्ठानं विधत्ते— "द्विरेकया प्रचरति द्विरेकयेति । वीप्सा पूर्ववत् ॥ १९ ॥

'द्विरेकया'—इत्युक्तं द्विरनुष्ठान मनूद्य शत्रुजयसम्पत्त्यानुकूल्यात्मना प्रशंसति— "तास्चतुर्विंशतिरित्यादिना ॥ २० ॥

---

१— का० श्रौ० सू० ८. २. ३९ ।  २— का० श्रौ० सू० ८. २. ३६ ।

३— तै० सं० ६. २. ३. ९–१२ द्रष्टव्यम् ।

४— का० श्रौ० सू० ८. २. ४० ।

"स यत् सायं प्रातरिति[१]। सम्पत्तिसाम्यं विभज्य दर्शयति— "स यत् पूर्वाह्णे प्रचरतीति। पूर्वाह्णप्रचारः शत्रुजयमात्ररूपः, अपराह्णप्रचारस्तु साकल्येन जयात्मक इत्यर्थः। आग्नेयादियागत्रयवत् दर्विहोमरूपं कञ्चिदुपसद्धोमं विधत्ते— "अथ यज्जुहोतीति। अत्रापूर्वार्थत्वाद् यच्छब्दतिरस्कारेण विधिरभ्युपगन्तव्यः। विहित मुपसद्धोमं पूर्वयागैर्जितस्य स्वाधीनीकरणात्मना प्रशंसति— "इदं वै पुरो युञ्जन्ति, त्वां जित्वा स्वां सतीं प्रपद्यन्त इति। इदं हि लोके दृश्यत इति शेषः। जेतारः प्रथमं पुरं युञ्जन्ति, भिन्दन्ति, पश्चात् तां जयन्ति, सुविजितास्य पुनः स्वा मात्मीयां प्रपद्यन्त इति ॥ २१ ॥

लोकप्रकारं प्रकृतकर्मणि विभज्य दर्शयति— "स यत् प्रचरतीति। 'प्रचारः' आनुपूर्व्येण समाप्तिपर्यन्तो यागत्रयप्रयोगः, स एव युद्धस्थानीयः। कृत्स्नसमापनं, तत् जयस्थानीयम्। उपसद्धोमः, स जितस्य स्वाधीनत्वसम्पादनात्मकः ॥ २२ ॥

प्रथमदिनोपसद्धोमे मन्त्रं विधातु माह— "स जुहोति यया द्विरेकस्याह्नः प्रचरिष्यन् भवतीति[२]। उक्तानुसङ्कीर्त्तन मुपसद्यागवदुपसद्धोमोऽपि एकस्मिन्नहनि द्विः कर्त्तव्य इति ज्ञापनार्थम्। मन्त्रस्याय मर्थः[३]। हे अग्ने! 'ते' तव या 'तनूः' 'अयःशया' अयसि शेते इत्ययःशया, अयोरूपेत्यर्थः। 'वर्षिष्ठा' उत्ततरा, 'गह्वरेष्ठा'

---

१— का० श्रौ० सू० ८. २. ३७. । तै० सं० ६. २. ३. ७, ८ द्रष्टव्यम्।

२— का० श्रौ० सू० ८. २. ३५।

३— वा० सं० ५. ८. १।

गह्वरे परैरनिर्गम्ये स्थाने वर्त्तमाना अस्ति, सा तनूः मम 'उग्रं' 'त्वेषं' 'वचः' 'अपावधीत्'। उग्रस्त्वेषयोरर्थस्तैत्तिरीयके स्पष्ट माम्नातः— "अशनया पिपासे ह वा उग्रं वचः, एनश्च वैरहत्यञ्च त्वेषं वचः"—इति[1]। मन्त्रे यादृग्रूपा तनूर्निर्दिष्टा, सा न स्तुत्यर्थे-त्याह— "एवंरूपा हि सासीदिति॥ २३ ॥

एवं द्वितीयतृतीयोपसन्मन्त्रावपि व्याख्येयौ[2] ॥ २४ ॥

एव मुपसत्त्रयस्य मन्त्रान् निर्दिश्य, द्वादशोपसत्पक्षे न्यायसिद्ध मर्थं ब्राह्मणं स्वय मेव विस्पष्टं दर्शयति— "यद्यु द्वादशोपसद उपेयाच्चतुरह मेकया प्रचरेच्चतुरह मेकयेति। अयःशयेत्येतन्मन्त्र-साध्या एकोपसत्, तादृशीं चतुर्ष्वहस्सु आवर्त्तयेत्। पुनश्च द्वितीय-मन्त्रसाध्ययापि चतुर्दिन मावर्त्तयेत्। तृतीययाप्येवम्। एवं द्वादश सम्पाद्याः। कोऽर्थ उक्तो भवति? अयःशयादीनां त्रयाणां मन्त्राणां मध्ये एकैकस्य मन्त्रस्यैकैकोपसदं गत्वा चतुर्षु दिनेषु प्रथमं "या ते अग्नेऽयःशया"—इति मन्त्र मावर्त्तयेत्, पुनः पञ्चमादिषु चतुर्षु दिनेषु रजःशयेति मन्त्र मावर्त्तयेत्, ततो नवमादिषु चतुर्षु दिनेषु हरःशयेति मन्त्र मावर्त्तयेदित्यर्थः[3] ॥ २५ ॥

"अथातो व्रतोपसदा मेवेत्यादि। यासूपसत्सु यजमानो व्रतयति पयः, ताः 'व्रतोपसदः', तासां मीमांसा क्रियत इत्यर्थः। 'पर-उर्वीः' उपर्युपरि एकद्व्यादिस्तनवृद्ध्या व्रतवृद्धिर्यास्वस्ति, ताः 'पर-

---

१— तै० सं० ६. २. ११ सा० भा० द्रष्टव्यम्।
२— वा० सं० ५. ८. २, ३।
३— का० श्रौ० सू० ८. २. ३५, ३८।

उर्व्यः' उपसदः। 'ताः' केचनानुष्ठातारोऽनुतिष्ठन्तीति शेषः। उक्तवैपरीत्ययुक्ताः 'परोऽह्व्यः' उपर्युपरि ह्रसीयस्य इत्यर्थः[1]। 'ताः' केचनानुष्ठातारोऽनुतिष्ठन्तीति। तद्द्विविधाना मप्युपसदां स्वरूपतो विचार्यमाणे पर्यवसानस्यैकरूप्यान्न वस्तुतो भेदोऽस्ति ॥ २६ ॥

अथापि परोऽक्षीरेवोपेयात्; कस्माद्धेतोरिति तत्राह— "तपसा वै लोकं जयन्तीति। परोऽक्षीषु उपर्युपरि स्तनह्रासेन पयोह्रासात् तयोर्वृद्धिरुपर्युपरि भवति, तथा लोक मप्युपर्य्युपरि जयति। तथा परउर्वी-पक्षे स्तनबाहुल्यसम्भवेन शरीरक्षयाभावात् चिरकालं भूलोके 'वसीयानेव' वसुमत्तर एव 'भवति'[2]। द्वादशोपसत्पक्षो व्रतप्रकारः कथ मिति, तत्राह— "यद्यु द्वादशेति[3]। प्रथमं 'चतुरहं' प्रथमेषु चतुर्षु दिनेषु प्रतिदिनं 'त्रींस्त्रीन्' स्तनान् 'दोहयेत्' द्वितीये चतुरहे 'द्वौ-द्वौ', तृतीये च 'एकैकम्'[4] इति ॥ २७ ॥ ५ [ ४.४.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥

---

१— "त्रिस्तनं प्रथमायां दोहयति, एकापचयेनोत्तरयोः"—इति का० श्रौ० सू० ८. ३. १, २।

२— का० श्रौ० सू० ८. ३. ४। ३— का० श्रौ० सू० ८. ३. ५।

४— तै० सं० ६. २. ३. ७–१४ द्रष्टव्यम्।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥
ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गनार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गनार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे चतुर्थोध्यायः समाप्तः ॥ ४ ॥

## ॥ इति तृतीयकाण्डे तृतीयः प्रपाठकश्च समाप्तः[१] ॥

---

१— "कण्डीसङ्ख्या १२२"–इति क, ख ; "कण्डिकासङ्ख्या १२१"–इति ग, घ । तत्र १ ब्रा० ३१ क०, २ ब्रा० २६ क०, ३ ब्रा० १६ क०, ४ ब्रा० २२ क०, ५ ब्रा० २७ क० ; सङ्कलनया १२२ इति सिद्धम् ।

## अथ

### चतुर्थप्रपाठके प्रथमं ब्राह्मणम्,

### अपि वा

### पञ्चमाध्याये प्रथमं ब्राह्मणम् ।

॥ हरिः ॐ ॥

तद्यु एष पूर्व्वार्द्धो व्वर्षिष्ठ स्थूणाराजो भवति । तस्मात् प्राङ् प्रक्रामति त्रीन् व्विक्रमांस्तच्छङ्कुं निहन्ति सोऽन्तःपातः* ॥ १ ॥

तस्मान्मध्यमाच्छङ्कोः† । दक्षिणा पञ्चदश व्विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः ॥ २ ॥

तस्मान्मध्यमाच्छङ्कोः‡ । उदङ् पञ्चदश व्विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः ॥ ३ ॥

तस्मान्मध्यमाच्छङ्कोः§ । प्राङ् षड्विंशतं व्विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स पूर्वार्द्धः‖ ॥ ४ ॥

तस्मान्मध्यमाच्छङ्कोः¶ । दक्षिणा द्वादश व्विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स दक्षिणोऽꣳसः ॥ ५ ॥

---

* 'तः'—इति, †-‡-§-¶ 'ङ्कोः'—इति, ‖ 'र्द्धः'—इति च ग, घ ।

तस्मान्मध्यमाच्छङ्कोः*। उदङ् द्वादश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स उत्तरोंऽसस एषा मात्रा वेदेः ॥ ६ ॥

अथ यत् त्रिंशद्विक्रमा पश्चाद् भवति। त्रिंशदक्षरा वै विराड् विराजा वै देवा अस्मिंल्लोके† प्रत्यतिष्ठं-स्तथो ऽएवैष एतद्विराजैवास्मिंल्लोके प्रतितिष्ठति ॥ ७ ॥

अथो ऽअपि त्रयस्त्रिंशत्स्युः। त्रयस्त्रिंशदक्षरा वै विराड् विराजैवास्मिंल्लोके प्रतितिष्ठति ॥ ८ ॥

अथ यत् षट्त्रिंशद्विक्रमा प्राची भवति। षट्-त्रिंशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकं समाश्नुवत तथो एवैष ऽएतद्बृहत्यैव स्वर्गं लोकं सम-श्नुते सोऽस्य दिव्याहवनीयो भवति ॥ ९ ॥

अथ यच्चतुर्विंशतिविक्रमा पुरस्ताद्भवति। चतु-र्विंशत्यक्षरा वै गायत्री पूर्व्वार्द्धो वै यज्ञस्य गायत्री पूर्व्वार्द्ध एष यज्ञस्य तस्माच्चतुर्विंशतिविक्रमा पुरस्ताद् भवत्येषा मात्रा वेदेः ॥ १० ॥

अथ यत्पश्चाद्वरीयसी भवति। पश्चाद्वरीयसी पृथु-

---

* 'ङ्क्वोः'—इति ग, घ।

† 'अस्मिंलोके'—इति क, ग, घ। एव मुत्तरत्रापि।

श्रोणिरिति वै योषां प्रशꣳसन्ति यद्वेव पश्चाद्वरीयसी भवति पश्चादेवैतद्वरीयः प्रजननं करोति तस्मात्* पश्चाद् वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते॥ ११ ॥

नासिका ह वा ऽएषा यज्ञस्य यदुत्तरवेदिः† । अथ यदेना मुत्तरां व्वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम ॥ १२ ॥

द्वय्यो ह वा ऽइद मग्रे प्रजा आसुः । आदित्याश्चैवाङ्गिरसश्च ततोऽङ्गिरसः पूर्वे यज्ञꣳ समभरंस्ते यज्ञꣳ सम्भृत्योचुरग्नि मिमां नः श्वःसुत्या मादित्येभ्यः प्रब्रूह्यनेन नो यज्ञेन याजयतेति‡ ॥ १३ ॥

ते हादित्या ऊचुः । उपजानीत यथास्मानेवाङ्गिरसो याजयान्नु§ वय मङ्गिरस इति ॥ १४ ॥

ते होचुः । न‖ वा अन्येन यज्ञादपक्रमण मस्त्यन्तरा मेव सुत्यां ध्रियामहा¶ ऽइति ते यज्ञꣳ सञ्जह्रुस्ते यज्ञꣳ सम्भृत्योचुः श्वःसुत्यां वै त्व मस्मभ्य मग्ने प्रावोचोऽथ व्वय

---

* 'यस्मात्'–इति ग । † 'वेदिः'–इति ग, घ ।

‡ 'याजयेति'–इति सा०-सम्मत इति डा० वेबरः ।

§ 'जयान्नु'–इति ग ।

‖ नास्त्येतत् पदं ग-पुस्तके ।

¶ 'धियामहा'–इति सा०-सम्मत इति डा० वेबरः ।

मद्यसुत्या मेव तुभ्यं प्रब्रूमोऽङ्गिरोभ्यश्च तेषां नस्त्वः होतासीति* ॥ १५ ॥

तेऽन्य मेव प्रतिप्रजिघ्युः। अङ्गिरसोऽच्छ ते हाप्यङ्गिरसोऽग्नयेऽन्वागत्य चुक्रुधुरिव कथं नु नो दूतश्चरन् न प्रत्याहथा इति ॥ १६ ॥

स होवाच। अनिन्द्या वै माहषत सोऽनिन्द्यैर्वृतो नाशक मुपक्रमितु मिति तस्मादु हानिन्द्यस्य वृतो नापक्रामेत् त ऽएतेन सद्यःक्रियाङ्गिरस आदित्यानयाजयन्त्स सद्यःक्रीः† ॥ १७ ॥

तेभ्यो व्वाचं दक्षिणा मानयन्। तां न प्रत्यगृह्णन्‡ हास्यामहे यदि प्रतिग्रहीष्याम इति तदु तद्यज्ञस्य कर्म्म न व्यमुच्यत यद्दाक्षिण मासीत् ॥ १८ ॥

अथैभ्यः सूर्य्यं दक्षिणा मानयन्। तं प्रत्यगृह्णंस्तस्मादु ह स्माहुरङ्गिरसो व्वयं वा ऽआर्त्विजीनाः स्मो व्वयं दक्षिणीया ऽअपि वा ऽअस्माभिरेष प्रतिगृहीतो य एष तपतीति तस्मात् सद्यःक्रियो ऽश्वः श्वेतो दक्षिणा ॥ १९ ॥

---

* 'सीति'—इति ग, घ।

† 'क्रीः'—इति ग, घ।

‡ 'प्रत्यगृह्णाः'—इति क।

तस्य रुक्मः पुरस्ताद्भवति । तदेतस्य रूपङ्क्रियते य एष तपति यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तस्य रुक्मः पुरस्ताद्भवति तदेतस्य रूपङ्क्रियते य एष तपति ॥ २० ॥

तेभ्यो ह व्वाक् चुक्रोध । केन मदेष श्रेयान् बन्धुनाꣳ केनाꣳ यदेतं प्रत्यग्रहीष्ट न मा मिति सा हैभ्योऽपचक्राम सोभयानन्तरेण देवासुरान्त्संयत्तान्त्सिꣳही भूत्वाददाना चचार ता मुपैव देवा ऽआमन्त्रयन्तोपासुरा अग्निरेव देवानां दूत ऽआस सहुरक्षा इत्यसुररक्षस मसुराणाꣳ* ॥ २१ ॥

सा देवानुपावर्त्स्यन्त्युवाच । यद्व ऽउपावर्त्तेय किं मे ततः स्यादिति पूर्व्वा मेव त्वाग्नेराहुतिः प्राप्स्यसीत्यथ हैषा देवानुवाच यां मया काञ्चाशिष माशासिष्यध्वे सा वः सर्व्वा समर्द्धिष्यत ऽइति सैवं देवानुपाववर्त्त ॥ २२ ॥

स यद्वार्य्यमाणेऽग्नौ । उत्तरवेदिं† व्याघारयति यदेवैना मदो देवा ऽअब्रुवन् पूर्व्वां त्वाग्नेराहुतिः प्राप्स्यतीति तदेवैना मेतत् पूर्व्वा मग्नेराहुतिः प्राप्नोति

---

* 'मसुराणाम्'—इति ख ।

† 'ऽग्ना । ऽउत्तरवेदिं'—इति क ।

व्वाग्घ्येषा निदानेनाथ यदुत्तरवेदि मुपकिरति यज्ञ-स्यैव सर्व्वत्वाय व्वाग्घि यज्ञो व्वागु ह्येषा* ॥ २३ ॥

तां वै युगशम्येन व्विमिमीते। युगेन यच्च हरन्ति शम्यया यतो हरन्ति युगशम्येन वै योग्यं युञ्जन्ति सा यद्देवाद्दः सिंही भूत्वा शान्तेवाचरत्तद्देवैना मेतद्यज्ञे युनक्ति ॥ २४ ॥

तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयात्। सिंही हैनं भूत्वा क्षिणोति नो हा माकुर्व्वीत सिंही हैवैनं भूत्वा क्षिणोति नो हान्यस्मै दद्याद्यज्ञं तदन्यचात्मनः कुर्व्वीत तस्माद्योऽस्यापि पाप इव समानबन्धुः स्यात्तस्मा ऽएनां दद्यात् स यद्ददाति तदेनᳪ सिंही भूत्वा न क्षिणोति यदु समानबन्धवे ददाति तदु नान्यचात्मनः कुरुत ऽएषो निवृत्तदक्षिणायै प्रतिष्ठा† ॥ २५ ॥

अथ शम्याञ्च स्फ्यञ्चादत्ते। तद्य एष पूर्व्वार्द्ध उत्तरार्द्धः शङ्कुर्भवति तस्मात् प्रत्यङ् प्रक्रामति त्रीन्वि-क्रमांस्तच्चात्वालं परिलिखति सा चात्वालस्य मात्रा नात्र मात्रास्ति यत्रैव स्वयं मनसा मन्येताग्रेणोत्करं तच्चात्वालं परिलिखेत् ॥ २६ ॥

---

* 'ह्येषा'—इति ग, घ।

† 'प्रतिष्ठा'—इति ग, घ।

स व्वेद्यन्तात्* । उदीचीꣳ शम्यां निदधाति स परिलिखति तन्तायनी मेऽसीतीमा मेवैतदाहास्याꣳ हि तन्त एति† ॥ २७ ॥

अथ पुरस्तात् । उदीचीꣳ शम्यां निदधाति स परिलिखति व्वित्तायनी मेऽसीतीमा मेवैतदाहास्याꣳ हि व्विविदान‡ एति ॥ २८ ॥

अथानुवेद्यन्तम्§ । प्राचीꣳ शम्यां निदधाति स परिलिखत्यवतान्मा नाथितादितीमा मेवैतदाह यच नाथैतन्मावतादिति‖ ॥ २९ ॥

अथोत्तरतः¶ । प्राचीꣳ शम्यां निदधाति स परिलिखत्यवतान्मा व्यथितादितीमा मेवैतदाह यच व्यथैतन्मावतादिति** ॥ ३० ॥

अथ हरति । यच हरति तदग्नीदुपसीदति स वा ऽअग्नीना मेव नामानि गृह्णन्हरति यान् वा ऽअमून् देवा ऽअग्नेऽग्नीन् होत्राय प्रावृणत ते प्राधन्वंस्त ऽइमा एव पृथिवीरुपासर्पन्निमा मह्येव द्वे ऽअस्याः पुरे तेनैवैतन्निदानेन हरति ॥ ३१ ॥

---

* 'न्तात्'–इति ग, घ ।
†, ‡ 'एति'–इति ग, घ ।
§ 'अथानुवेद्यन्तं'–इति क, ख ।
‖ 'दिति'–इति ग, घ ।
¶ 'रतः'–इति ग, घ ।
** 'दिति'–इति ग, घ ।

स प्रहरति। व्विदेदग्निर्नभो नामाग्ने ऽअङ्गिर ऽआयुना नाम्नेहीति स यत् प्राधन्वंस्तदायुर्द्दधाति तत् समीरयति योऽस्यां पृथिव्या मसीति योऽस्यां पृथिव्या मसीति हृत्वा निदधाति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादध ऽइति यत्तेऽनाधृष्टꣳ रक्षोभिर्नाम यज्ञियं तेन त्वादध ऽइत्येवै-तदाहानु त्वा देवतीतय ऽइति चतुर्थꣳ हरति देवेभ्यस्त्वा जुष्टाꣳ हरामीत्येवैतदाह तां वै चतुःस्रक्तिमात्वालाद्ध-रति चतस्रो वै दिशः सर्वाभ्य एवैना मेतद्दिग्भ्यो हरति ॥ ३२ ॥

अथानुव्यूहति। सिꣳह्यसि सपत्नसाही देवेभ्यः कल्प-स्वेति सा यद्देवाद्दः सिꣳही भूत्वाशान्तेवाचरत्तद्देवैना मेतदाह सिꣳह्यसीति सपत्नसाहीति त्वया व्वयꣳ सपत्नान् पापीयसः क्रियास्मेत्येवैतदाह देवेभ्यः कल्प-स्वेति योषा वा ऽउत्तरवेदिस्ता मेवैतद्देवेभ्यः कल्प-यति ॥ ३३ ॥

तां वै युगमात्रीं वा सर्वतः करोति। यजमानस्य वा दश-दश पदानि दशाक्षरा वै व्विराड् वाग्वै व्विराड् वाग् यज्ञो मध्ये नाभिका मिव करोति समानत्रासीनो व्याघारयाणीति ॥ ३४ ॥

ता मद्भिरभ्युक्षति। सा यद्देवाद्दः सिꣳही भूत्वाशान्ते

वाचरच्छान्तिरापस्ता मद्भिः शमयति योषा वा ऽउत्तरवेदिस्ता मेवैतद्देवेभ्यो हिन्वति तस्मादद्भिरभ्युक्षति ॥ ३५ ॥

सोऽभ्युक्षति । सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्वेत्यथ सिकताभिरनुविकिरत्यलङ्कारो न्वेव सिकता भ्राजन्त ऽइव हि सिकता ऽअग्नेर्वा ऽएतद्वैश्वानरस्य भस्म यत्सिकता ऽअग्निं वा अस्या माधास्यन् भवति तथो हैना मग्निर्न हिनस्ति तस्मात् सिकताभिरनुविकिरति सोऽनुविकिरति सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्वेत्यथैनां छादयति सा छन्नैताꣳ रात्रिं व्वसति ॥ ३६ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् [ ५. १. ] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आतिथ्यातानूनप्त्रे च सोमाप्यायननिह्नवौ ।
उपसच्चेति पञ्चार्थास्तुर्येऽत्र निरूपिताः ॥ २ ॥

अथ पञ्चमे सौमिकवेदिकरणादिकं निरूप्यते । अथ यदुक्तं कात्यायनेन— "औपवसथ्यात् पूर्वेऽहनि पौर्वाह्निक्या प्रचर्य वेदीं

मिमीते"-इत्यादि। तदेतदाह– "तद्य एष पूर्वार्द्ध्यो वर्षिष्ठः स्थूणाराजो भवति, तस्मात् प्राङ् प्रक्रामति त्रीन् विक्रमांस्तच्छङ्कुं निहन्तीति। 'य एषः' स्थूणाराजः 'पूर्वार्द्ध्यः' पूर्वार्द्धं मर्हतीति पूर्वार्द्ध्यः[१], प्राचीनवंशस्य पूर्वभागे आहवनीयपुरोदेशे वर्त्तमानः पृथुस्तम्भोऽस्ति, 'सोऽन्तःपातः[२]' ऐष्टिकवेदेर्महावेदेश्चान्तरालसञ्चरः। 'तस्मात्' स्तम्भात् 'प्राङ् प्रक्रमान् प्रक्रामति त्रीन्'। 'तत्' तत्र तृतीयप्रक्रमावसाने 'शङ्कुं' निहन्यात्, स्थापयेत्[३] ॥ १ ॥

दक्षिणश्रोणिप्रमाण माह– "तस्माच्छङ्कोर्दक्षिणेति। मध्यमशङ्कोर्दक्षिणतः पञ्चदशविक्रमावसाने शङ्कुं स्थापयेत्। 'सा दक्षिणा श्रोणिः' मर्यादा भवति[४] ॥ २ ॥

एव मुत्तरश्रोणिवाक्य मपि– "तस्मान्मध्यमाच्छङ्कोरुदङ्ङित्यादि[५] ॥ ३ ॥

आयामस्य पश्चाद्भागावधिं प्रदर्श्य प्राचीनावधि माह– "तस्मान्मध्यमाच्छङ्कोः षड्त्रिंशतं विक्रमान् प्रक्रामतीति[६] ॥ ४ ॥

अथ दक्षिणोत्तरावंसौ दर्शयति– "तस्मान्मध्यमाच्छङ्कोरिति। 'तस्मात्' पुरोदेशस्थात् 'मध्यमाच्छङ्कोः' श्रोणितः सकाशात्

---

१— 'शालायाः पूर्वार्द्धे भवः पूर्वार्द्ध्यः'-इति या० दे०।
२— स निहतः शङ्कुः अन्तःपातसञ्ज्ञको भवतीति पितृभूतिकर्कादयः।
३— का० श्रौ० सू० ८. ३. ७।
४,५— का० श्रौ० सू० ८. ३. ६, १०।
६— का० श्रौ० सू० ८. ३. ८।

अंसयोरीषन्न्यूनत्वाद् उभयतो द्वादशप्रक्रमाभिधानम्[१]। इत्थं सर्वतो मितायां वेदिमात्रायां न्यूनाधिकत्वशङ्का माशङ्क्य स्वय मेव व्यवच्छिनत्ति— "एषा मात्रा वेदेः"—इति[२] ॥ ५, ६ ॥

अथ विहितं वेदिमानं क्रमेण प्रशंसिषुरादौ पश्चान्मानं प्रशंसति— "अथ यत् त्रिंशद्विक्रमा पश्चाद् भवतीति। त्रिंशत्पक्षे, विराजः प्रतिपादं दशाक्षरत्वात् त्रिंशदक्षराणि। स्पष्ट मन्यत् ॥ ७ ॥

पश्चान्माने पक्षान्तर माह— "अथो अपि त्रयस्त्रिंशत् स्युरिति। 'अथो'-शब्दः पक्षं व्यावर्त्तयति। "न वा एकेनाक्षरेण छन्दांसि वियन्ति"-इतिन्यायात्[३] प्रतिपाद मेकैकाधिक्येन विराजस्त्रयस्त्रिंशदक्षरत्वम् ॥ ८ ॥

अथ प्रागायामस्येयत्तां प्रशंसति— "अथ यत् षड्त्रिंशद्विक्रमा प्राची भवतीति। चतुर्विंशत्यक्षरगायत्र्यास्चतुरक्षराधिक्येनोष्णिगादि-क्रमेण बृहत्याः षड्त्रिंशदक्षराणि भवन्ति। स्पष्ट मन्यत् ॥ ९ ॥

प्राग्दिगवस्थितयोरंसयोः प्रमाणं मिलित्वा प्रशंसति— "अथ यच्चतुर्विंशतिविक्रमा पुरस्ताद् भवतीति। 'पुरस्तात्' पूर्वस्यां दिशि विस्तारेण 'चतुर्विंशतिविक्रमा भवति'। "पूर्वार्द्धो वै यज्ञस्येति। 'यज्ञस्य' यज्ञाङ्गस्य, वेदिस्वरूपस्य 'एषः पूर्वार्द्धः'। गायत्र्याः पूर्वार्द्धत्वं "गायत्रं वै प्रातस्सवनम्"-इतिश्रुतेः[४] सिद्धम् ॥ १० ॥

---

१— का० श्रौ० सू० ८. ३. ११।

२— अत्र याज्ञिकदेवक्वता पद्धतिस्वास्ति।

३— ऐ० ब्रा० १. १. ६, २. ५. ५ द्रष्टव्यम्।

४— ऐ० ब्रा० ६. १. २ द्रष्टव्यम् (निरु० ७. ३. १.)।

श्रोणिभागस्योरुत्व मंसभागस्य ह्रस्वत्वं यदस्ति, तत् प्रशंसति— "अथ यत् पश्चाद्वरीयसी भवतीति। श्रोणिभागस्य त्रिंशत्-प्रक्रमत्वोक्तेः, अंसभागस्य चतुर्विंशत्यभिधानात् पश्चाद्वरीयस्त्वम्। यस्माल्लोके 'पृथुश्रोणिः योषा' प्रशस्ता, तस्माद् वेद्याः पश्चाद्भाग-स्यापि श्रोणित्वात् पृथुत्वं युक्त मित्यर्थः। श्रोणिपृथुत्वं कुत्रोप-युज्यते? इति, तदुपयोग माह— "तस्मात् पश्चाद्वरीयस इति। प्रजायन्तेऽ‌नेति 'प्रजननं', पश्चाद्भागे उरुतरं यत् तत् 'पश्चाद्वरीयः'। तादृक्प्रजननात् प्रजायन्ते, अतः प्रजननहेतुत्वात् पश्चाद्वरीयस्त्वं प्रशस्तम् ॥ ११ ॥

सार्थवाद मुत्तरवेदिनिर्माणं विधत्ते[1]— "नासिका ह वा एषा यज्ञस्येति। नासिकाया मुखप्रदेशादपि समुच्छ्रितत्वात् उत्तरवेदे-र्मृदोच्छ्रितता कर्त्तव्या। उन्नतत्व मुत्तरवेदिनामनिर्वचनद्वारेण प्रशंसति— "अथ यदेना मुत्तरां वेदेरुपकिरतीति। यस्माद् 'वेदेः' सौमिक्याः 'उत्तराम्' अत्युन्नतम् 'उपकिरति' मृदं क्षिपति, 'तस्मात्' वेदेः प्रागवयवभूतस्य प्रदेशस्योन्नततरत्वात् 'उत्तरवेदिः' इति 'नाम' सम्पन्नम् ॥ १२ ॥

अथोत्तरवेदिव्याघारणविध्यर्थ माख्यायिका माह— "द्वय्यो ह वा इद मग्रे प्रजा आसुरिति। 'अग्रे' सृष्टेः पूर्वम्, 'द्वय्यः' द्विविधा एव 'प्रजाः' 'आसुः' अभवन्। कास्ताः? 'आदित्याश्चै-वाङ्गिरसश्च'। ते 'अङ्गिरसः' 'पूर्वे' आदित्येभ्यः पूर्वभाविनः सन्तो

---

१— विशेषतः शुल्वसूत्रेषु ( ७ अ० ) द्रष्टव्यम्।

'यज्ञं' सम्भृतवन्तः । सम्भृतयज्ञाः 'ते' 'अग्निम्' इत्थम् 'ऊचुः'— हे अग्ने ! त्वं 'नः' अस्माकम् 'इमां' 'श्वःसुत्यां' परेद्युर्क्रियमाण मभिषवम् 'आदित्येभ्यः प्रब्रूहि'; त्व मपि 'अनेन' सोमयागेन 'नः' अस्मान् 'याजयेति'। एव मुक्तोऽग्निरादित्येभ्यः पूर्वभाविनः वृत्तान्तं प्रोवाच ॥ १३ ॥

"ते हादित्या ऊचुरिति । ता इत्थं व्यचारयन् । कथम् ? 'यथा' येन प्रकारेण 'अस्मानेव' 'अङ्गिरसः' 'याजयान्' याजयेयुः, 'वयं' तु 'न' तान् याजयामः; तत्प्रकारश्चिन्त्यता मिति ॥ १४ ॥

"ते होचुरिति । विचार्येत्थ मूचुः । "न वा अन्येन यज्ञा-दपक्रमण मस्तीति। 'अन्येन' वक्ष्यमाणात् साद्यस्कानुष्ठानात् अन्येन 'यज्ञात्' अङ्गिरोभिरनुष्ठीयमानात् अस्मात् 'अपक्रमण मस्ति'; अतः 'सुत्या मन्तरा मेव' अङ्गिरसां सुत्यातः पूर्व मेवास्माकं सुत्यां 'भ्रियामहै'[1] व्यवस्थापयिष्यामः 'इति' विचारितवन्तः । 'ते' 'यज्ञं' सुत्यालक्षणं 'सम्भृत्य' अग्निम् 'ऊचुः' ! 'त्वम्' अस्मभ्यं 'श्वःसुत्याम्' 'अग्ने !' प्रावोचः । 'अथ'-शब्दस्त्वर्थे। 'वयं' तु 'तुभ्यम्' 'अङ्गिरोभ्यश्च 'अद्यसुत्यां' अद्य क्रियमाणा सुत्या अद्यसुत्या, तां 'प्रब्रूमः'। 'तेषां' तथा कुर्वता मस्माकं 'त्वं' 'होता' भव ॥ १५ ॥

"तेऽन्य मेव प्रति प्रजिघ्युरिति। एव मुक्तवन्तस्तु 'अङ्गिरसः' एतद्वृत्तान्तावबोधनाय अग्निप्रतिनिधिम् 'अन्यम्' 'प्रजिघ्युः' । "हि गतौ वृद्धौ च[2]" प्रेरयन्। 'ते अङ्गिरसः' 'अग्नयेऽन्वागत्य' 'चुक्रुधुः'।

---

१— 'धियामहै'-इति डा०-वेबर-दृष्ट-भाष्ये।

२— स्वा० प० १० धा०।

क्रुधद्रुहेर्ष्यादिना क्रुधियोगे चतुर्थी[1]। "कथं नु नो दूत इति। क्रोधप्रकार उक्तः। 'न प्रत्यादृथाः' आदरस्य प्रत्यादरं न कृतवानसि॥ १६॥

अग्नेरुत्तरम्— "स होवाचानिन्द्या वै मावृषतेत्यादि। प्रासङ्गिकं किञ्चिद्धर्मविशेषं विधत्ते— "तस्माद् ह्यनिन्द्यस्य वृतो नापक्रामेदिति। 'सः' 'सद्यःक्रीः' एकाहः सोमयागः। 'एतेन आङ्गिरसः आदित्यान् अजयन्'। दीक्षासोमक्रयादीनां सद्य एव क्रियमाणत्वात् 'सद्यःक्रीः' इति नाम॥ १७॥

"तेभ्यो वाचं दक्षिणा मिति। तेभ्यः' साद्यस्क्रयाजकेभ्यः 'वाचम्' एव दक्षिणात्वेन प्रादुरित्यर्थः। वाग्दक्षिणाया निराकरणस्याभिप्राय माह— "हास्यामहे यदि प्रतिग्रहीष्याम इति। 'यदि' स्वीकरिष्यामः, तर्हि 'हास्यामहे' त्यक्ष्यामहे, दक्षिणोत्तरकाल मपि वाचोऽपेक्षितत्वात्; तथा सति यज्ञोऽदक्षिणः स्यात्। अस्तु, को दोष इत्यत आह— "यद् दाक्षिण मासीदिति। दक्षिणासम्बन्धि 'दाक्षिणं' कर्म। 'तद्' 'यज्ञस्य' सम्बन्धि 'कर्म', 'न व्यमुच्यत' विमुक्तं न आसीत्, सम्पूर्णं नाभवदित्यर्थः॥ १८॥

"अथैभ्यः सूर्य मित्यादि। स्पष्टम्। "तस्माद् ह स्माऊरिति। 'आऊः अङ्गिरसः' स्वयं ब्रुवते— 'आर्त्विजीनाः[2] स्मः' सम्यगृत्विक्त्वयोग्याः स्मः। तथा 'दक्षिणीयाः' दक्षिणायोग्याः। आर्त्विजीनत्व-

---

१— पा० सू० १. ४. ३७।
२— "यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसङ्ख्यानम्"—इति ५. १. ७१ सू० वा०।

दक्षिणीयत्वयोरुभयोरपि हेतुरुच्यते— "अस्माभिरेष प्रतिगृहीत इति । एतच्छब्दार्थ माह— "य एष तपतीति"-इति । प्रसङ्गात् साद्यस्क्रस्य दक्षिणा माह— "तस्मात् सद्यःक्रियोऽश्वः श्वेत इति । अश्वः सूर्यप्रतिनिधित्वेन दीयते । सूर्यस्याश्वत्वेनोपासनाविधानात्[1], अध्वाशनसाम्याच्च[2] सूर्यस्याश्वस्थानीयत्वम्; सोऽपि वर्णसाम्याय श्वेतो भवेत् ॥ १९ ॥

"तस्य रुक्मः पुरस्ताद् भवतीति । तस्य पुरोदेशे 'रुक्मः' हिरण्यफलको वर्त्तुलाकारो भवेत्[3] । "यद्यश्व मित्यादि स्पष्टम् ॥ २० ॥

"तेभ्यो ह वागित्यादि । 'तेभ्यः' अङ्गिरोभ्यः 'वाक्' कुपितवत्यासीत् । "केन मदेष श्रेयान् बन्धुना३ इति । 'केन'-इति असूयार्थे प्लुतिः[4] । 'मत्' मत्तः सकाशात् 'केन' 'बन्धुना', बध्नातीति बन्धुः, विशेषगुणः; केन विशेषगुणेन 'एषः' सूर्यः 'श्रेयान्' अतिशयेन प्रशस्यः । प्रशस्यहेतुभूतानां सर्वगुणाना मभिधानाय पुनः 'केना३'-इति ग्रहणम् । "यदेतं प्रत्यग्रहीष्टेति । 'यत्' येन अतिशयेन 'एतम्' आदित्यम् 'प्रत्यग्रहीष्ट', 'न माम्' । अप्यविद्यमानः

---

१— "उषा वा अश्वस्य मेध्यस्य शिरः"—इत्यादीहैव १०. ४. ७ ।

२— "यः कश्चाध्वान मश्नुवीताश्वः स वचनीयः स्यात्"—इति, "अश्वः कस्मात्? अश्नुतेऽध्वानं महाशनो भवतीति वा"—इति च निरु० १. ४. १, २. ७. ५ ।

३— "अथ सुवर्णरजतौ रुक्मौ व्युपास्यति"—इत्यादिक मिहैवोपरिष्टाद् ( १२. ४. २. ११. ) द्रष्टव्यम् ।

४— पा० सू० ८. २. १०३ ।

कोऽतिशयस्तत्र दृष्टः? न कोऽप्यस्तीत्यर्थः। 'उभयान् संयत्तान् देवासुरान्' परस्परकलहायोपयुक्तान् देवानसुरांश्च 'अन्तरेण' मध्ये 'सा' अङ्गिरोभ्योऽपक्रान्ता वाक्। 'सिंही भूत्वा' 'आददाना' जिघत्सया[1] समीपस्थं सर्वं[2] स्वीकुर्वती 'चचार'। तदानीम् 'अग्निरेव देवानां दूतः' अभवत्; असुरार्थाह्वानाय सहरक्षोनामकोऽसुरो दूतोऽभवदित्यर्थः ॥ २१ ॥

"सा देवानिति। उभयैरप्याहूता सती पूर्वं देवान् प्रत्येव उपावर्त्तमाना। आगमनोत्कोचरूपं किञ्चित् अर्थयामास। ते च देवाः अग्नेः पूर्वभाविनी माज्याहुति मागमनोपाधिना प्राहुः। 'सा' 'देवान्' इदम् 'उवाच'। हे देवाः! 'यां कां च आशिषम्' 'आशासिष्यध्वे' इच्छथ, 'सा' सर्वाऽप्याशीः 'वः' युष्माकं 'समर्द्धिष्यते' समृद्धा भविष्यतीति। ततः सा प्रतिनिवृत्ता-सीत् ॥ २२ ॥

इदानी मुत्तरवेदीव्याघारणं विधत्ते— "स यद् धार्यमाणेऽग्ना-वुत्तरवेदिं व्याघारयतीति। अग्नौ उत्तरवेदेरुपरि धार्यमाणे सति, ता मुत्तरवेदिं व्याघारयेदित्यर्थः। "यदेवैना मित्यादि। एतद्व्या-घारणेन या आहुतिः, अपवृत्तायै वेदिरूपायै वाचे देवैः कल्पिता, सा कृता भवति; अतो व्याघारयेदित्यर्थः। उत्तरवेद्या माघार-णेन वाचः किं मायात मित्यत आह— "वाग्घ्येषा निदानेनेति।

---

१— 'जिन्वमाना (? जिन्वत्सया)'–इति छ।

२— नास्त्येतत् पदं छातिरिक्तेषु पुस्तकेषु।

अत एव वागात्मकत्वात् उत्तरवेदिप्रक्षेपस्यैवापगताया वाचो वर-धनरूपत्वात् उत्तरवेद्युपतापेन यज्ञः सफलो भवतीत्यर्थः[1] ॥ २३ ॥

उत्तरवेद्याः मानादिसाधनं द्रव्यं विधत्ते— "तां वै युगशम्येनेति। युगेन शम्यया चेत्यर्थः। युगवच्छम्याया[2] अपि साधनत्वमस्तीत्याह— "युगेन यत्र हरन्तीति। 'यत्र' यस्मिन् देशे 'युगेन हरन्ति', 'यतः' यस्मात् तत्र 'शम्यया' अपि 'हरन्ति'; अतो युगवच्छम्याया अपि हरणक्रियासम्बन्धोऽस्त्येवेत्यर्थः। तत् कुत इत्यत आह— "युगशम्येन वा इति। 'योग्यं' योजनार्हं मश्वम्। 'अदः' विप्रकृष्टकाले, देवासुरयोर्युद्धकाले 'सा' यज्ञस्य सम्बन्धिनी वाक् 'सिंही भूत्वा' 'अशान्ता' क्रूरा सती 'अचरत्'। 'तत्' तत्र युगेन शम्यया च मानेन 'एनां' वाचम् 'एतत्' इदानीं 'यज्ञे' योजितवान् भवति ॥ २४ ॥

प्रासङ्गिकं कञ्चिन्नियमं विधत्ते— "तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयादिति। अन्येन परित्यक्ता दक्षिणा। "नो ह अमा कुर्वीतेति। 'अमा' सह, स्वात्मनेत्यर्थः, 'नो ह' नैव कुर्वीत[3]।

---

१— तै० सं० ६. २. ७ सा० भा० द्रष्टव्यम्।

२— "द्वात्रिंशदङ्गुलप्रमाणां शम्यां वारणीम्"—इत्यादि का० श्रौ० ५. ३. २० सू० वृ० या० दे०। "गदया समानाकारो व्यायामार्द्धपरिमितः काष्ठविशेषः शम्या"—इत्यादि तै० सं० १. १. ६ अनु० सा० भा० ( तै० ब्रा० ३. २. ६. )। "गदया सदृशी बाहुपरिमिता शम्या। तया चतुर्दिक्षु उत्तरवेदीं परिमिमीते"—इति च तै० सं० ६. २. ७. अनु० सा० भा०।

३— 'अन्येन परित्यक्तां दक्षिणा ममा सह स्वात्मनि न कुर्वीत'—इत्येव क।

'क्षिणोति' हिनस्ति । 'क्षिणु हिंसायाम्'[1] । "नो हान्यस्मा इत्यादि । स्पष्टम् । 'अस्य' यजमानस्य । 'समानबन्धुः' एकविधि-निबन्धनः, एकविषय इत्यर्थः । तादृशोऽन्यः 'पाप इवापि स्यात्' पापी यदि भवेत्, 'तस्मै दद्यात्' । तादृग् विधाय दाने उक्त-दोषद्वयराहित्यं दर्शयति— "स यद् ददाति तदेन मित्यादिना । 'एषा उ निवृत्तदक्षिणायै प्रतिष्ठा' निवृत्तदक्षिणाया गतिरित्यर्थः । अथ वा यजमानबन्धुरेव तस्या आस्पद मित्यर्थः ॥ २५ ॥

"अथ शम्याञ्चेत्यादि । 'एषः' शङ्कुः 'पूर्वार्द्ध्यः'[2] सन्नपि 'उत्त-रार्द्ध्यः' भवति । सौमिकवेदेरुत्तरांसस्य शङ्कुरित्यर्थः । 'तस्मात्' शङ्कोः सकाशात् 'प्रत्यङ्' प्रत्यङ्मुखः 'त्रीन्' 'विक्रमान्' प्रक्रमान् 'प्रक्रामति'[3] । तत्र चात्वालार्थं परितो लेखनं कुर्यात्, 'सा चात्वा-लस्य मात्रा' । यैवोत्तरवेदेरुक्ता, सैवेत्यर्थः ; चात्वालखननोत्पन्नयैव मृदा उत्तरवेदिकरणात् । तदेवाह— "नात्र मात्रास्तीति ॥

उत्तरार्द्ध्यशङ्कोः प्रत्यक्प्रक्रमे चात्वाल इति यः पक्ष उक्तः, तेन सह विकल्पितं पक्ष माह— "यत्रैव स्वयं मनसा मन्येताग्रेणोत्कर मिति[4] ॥ २६ ॥

---

१— त० उ० ४ धा० । २— "पूर्वार्द्धे भवः पूर्वार्द्ध्यः"—इति या० दे० ।

३— 'त्रिपदः प्रक्रमः, अर्द्धचतुर्थपदो वा । पदं पञ्चदशाङ्गुलं द्वादशाङ्गुलं वा'—इत्यादि शुल्वसूत्रे ७. १५, १६ ।

४— "अत्रोत्तरवेदेर्द्वावाकारौ । महावेद्याः प्राग्भागे मृत्तिकाप्रक्षेपेण निष्पाद्यमान एक आकारः । आपस्तम्बमते तद्विषया मन्त्रा उक्ताः । मृत्तिका चात्वालगतेति तद्रूपोऽपर आकारः । तद्विषया बौधायनमते मन्त्राः"—इति तै० सं० १. २. १२ सा० भा० ।

चात्वालस्य सर्वतः परिलेखनप्रकारं तन्मन्त्रांश्च दर्शयति— "स वेद्यन्तादुदीचीं शम्या मिति[1] । दक्षिणश्रोणिरूपवेद्यन्तादित्यर्थः । 'स परिलिखति' शम्यानुगुण्येन लेखनं कुर्यात् । अनेनैव पश्चादवधिनिर्देशः कृतो भवति । तस्य मन्त्रः— "तप्तायनी मेऽसीति[2] । हे भूमे ! 'तप्तायनी असि' तप्तः पुमान् यस्या मिति तप्तायनी, तद्रूपा भवसि । मन्त्रं व्याचष्टे— "इमा मेवैतदाहेति । 'हि' यस्मात् 'तप्तः' पुरुषो दारिद्र्येण दुःखितः सन् धनादिसाधनेच्छया 'एति', तस्मादित्यर्थः ॥ २७ ॥

"अथ पुरस्तादित्यादि[3] । स्पष्टम् । "अस्यां हि विविदान एतीति । 'विविदानः' धनादिकं लब्धवान् पुरुषः पुनः 'अस्याम्' एव खलु 'एति' गच्छति । अतो 'वित्तायनी' भूम्यभिधानं युक्त मित्यर्थः[4] ॥ २८ ॥

"अथानुवेद्यन्त मिति । 'अनुवेद्यन्तं प्राचीं शम्यां निदधाति[5]' । अनेन चात्वालस्य दक्षिणसीमोच्यते । तत्र खननमन्त्रस्याय मर्थः— 'मा' मां 'नाथिताद्' याचिताद् हिरण्यादिरूपादर्थात् भूमे ! 'अवतात्' रक्ष । "यत्र नाथे तन्मावतादितीति[6] । 'यत्र' यस्मिन् विषये 'नाथे' याचे धनादिकम्[7], 'तत्' तस्मात् त्वं माम् 'अवतात्' अव, रक्षेत्यर्थः ॥ २९ ॥

---

१— का० श्रौ० सू० ५. ३. २०, २१, २५ ।

२— वा० सं० ५. ६. १ । ३— का० श्रौ० सू० ५. ३. २२, २५ ।

४— वा० सं० ५. ६. २ । ५— का० श्रौ० सू० ५. ३. २३, २५ ।

६— वा० सं० ५. ६. ३ । ७— इतः परम् '?'-इति क ।

"अथोत्तरत इति[1]। चात्वालस्योत्तरावधि परिलेखनस्य[2] "अवतान्मा व्यथितात्"-इति[3] मन्त्रः। तस्य व्याख्यानम्— "यत्र व्यथै तन्मावतादिति। 'यत्र' यस्मिन् विषये 'व्यथै' लाभोपाय मजानानो व्यथितः स्याम्, 'तत्' तस्मात् सकाशात् 'अवतात्' अव ॥ ३० ॥

खाताया मृदश्चात्वालाद् उत्तरवेदिं[4] प्रति हरणं विधत्ते— 'अथ हरतीति। 'यत्र हरति', 'तत्' तत्र, उत्तरवेदिप्रदेशे 'अग्नीत् उपसीदति' उपविशति आग्नीध्रः[5]। 'अग्नीनां' 'नामानि' वक्ष्यमाणानि[6] 'गृह्णन्' एव हरेत्। सत्सु अग्निषु चात्वालप्रदेशे तन्नामग्रहण मुपपद्यते, त एवात्र कुत इत्यत्राह— "यान्वा अमून् देवा अग्रेऽग्नीनिति। 'होत्राय' होमनिष्पादनाय, हविर्वहनाय 'प्रावृणत' प्रावृण्वन्। 'ते प्राधन्वन्'। धन्वतिर्गतिकर्मा[7]। 'इमाम्' 'अहैव'। अहेति विनिग्रहार्थीयः[8]। इमां पृथिवीं परिविद्विष्य असुरादयोऽपि 'उपासर्पन्'। 'तेनैव' 'एतत्' एतेन 'निदानेन' मूलकारणेनैव हरणं कृतवान् भवति ॥ ३१ ॥

---

१— का० श्रौ० सू० ५. ३. २४, २५।

२— 'परिलेखने'–इति क। ३— वा० सं० ५. ९. ४।

४— "उत्तरवेदिरिति चात्वालमृदा कृतस्य वक्ष्यमाणसंस्कारसंस्कृतस्य स्थण्डिलस्य नामधेयम्"–इति का० श्रौ० ५. ३. १९ सू० या० दे०।

५— वेदिपरिग्रहः पुरस्तात् १. २. ३. १ ( १ भा० १५१ पृ० ) द्रष्टव्यम्।

६— "आहवनीयः पुरस्तात्, मार्जालीयो दक्षिणतः, आग्नीध्रीय उत्तरतः" इतीहैवोपरिष्टात् ( ६. २. २१. ) द्रष्टव्यम्।

७— स्वा० प० ५९७ धा०। ८— निरु० १. २. ४।

"स प्रहरतीति[१]। 'सः' मृदो हर्त्ता अध्वर्युः, स्फ्येन 'प्रहरति' खनेत्। मन्त्रस्याय मर्थः[२]— हे 'अङ्गिरः' अङ्गिरोनामकर्षिरूप! 'अग्ने !' त्वम्। "ये अङ्गारा आसंस्तेऽङ्गिरसोऽभवन्"–इति[३] श्रुतिः। आहुत्याधारभूतः। "नभो नाम विदेत्"। न भातीति 'नभः', एतत् 'नाम' विदेदित्यर्थः। यद्वा, नभो नामाग्निरिति 'विदेः' जानीया इत्यर्थः। त्वञ्च 'आयुना' एतदात्मना 'नाम्ना' अभिधानेन युक्तः 'एहि' आगच्छ[४]। "स यदित्यादि। "आयुर्दधातीति! 'आयुः'-शब्दः सामान्येन श्रुतिः। 'तत्' अवदारितं 'समीरयति' उत्तरवेदिं प्रति सम्यक् प्रेरयति[५]। तत्र मन्त्रः— "योऽस्यां पृथिव्या मसीति[६] 'यः' त्वम् 'अस्यां' खातायां भूम्यां भवसि, तं त्वां समीरयामीत्यर्थः॥

आनीताया मृदो वेद्याकारेण स्थापनं समन्त्रकं विधत्ते— "हत्वा निदधाति यत्तेऽनाधृष्ट मिति[७]। मृदा एकीभूत! यत् ते, यद्वा हे तिरोहिताग्निविमिश्रे! मृत्! 'यत्' 'ते' 'अनाधृष्टं' रजोभिरहिंस्यम्, 'यज्ञियं' यज्ञार्हं 'नाम', 'तेन' नाम्ना 'त्वा'

---

१— का० श्रौ० सू० ५. ३. २६।

२— तत्पाठस्तु वा० सं० ५. ९. ५।

३— ऐ० ब्रा० ३. ३. ९। निरु० ३. ३. ५।

४— का० श्रौ० ५. ३. २७.— वा० सं० ५. ९. ६।

५— 'ईरयति'–इति छ।

६— का० श्रौ० सू० ५. ३. २८.— वा० सं० ५. ९. ७।

७— का० श्रौ० सू० ५. ३. २९.— वा० स० ५. ९. ८.।

त्वाम् 'आदधे' स्थापयामि । "योऽस्याम्"-इतिमन्त्रेण[1] त्रिवारं हरेत्[2] ॥

चतुर्थवारहरणमन्त्रस्याय मर्थः— "हे आह्रियमाणपदार्थ ! 'त्वा' त्वाम् 'अनु' पूर्वं हरणत्रय मनुकृत्य, आहरामीति शेषः । किमर्थम् ? 'देववीतये' देवा व्यन्ति हविर्भक्षयन्ति अत्रेति देव-वीतिर्यज्ञस्तदर्थम्[3] ॥

अर्थसिद्ध मनूद्य प्रशंसति— "तां वै चतुःस्रक्तिरिति । चतस्रः स्रक्तयो यस्य चात्वालस्य, स तथोक्तः । चतुरस्रात् साकल्येन हरतीत्यर्थः ॥ ३२ ॥

"अथानुव्यूहतीति[4] । अनुक्रमेण व्यूहनं मृत्प्रसारणं कुर्यात् । "सिंह्यसि"— इति[5] व्यूहनमन्त्रः । हे अनुव्यूह्यमाने ! वेदे ! त्वं 'सिंही असि' प्रागुक्तप्रकारेण सिंही भवसि । कीदृशी ? 'सपत्न-साही' शत्रूणा मभिभवित्री । तादृशी त्वं 'देवेभ्यः' तेषा मर्थाय 'कल्पस्व' योषारूपा सती भोगसाधनं भवेत्यर्थः ॥

सिंह्यसीति मन्त्रभागस्य तात्पर्य माह— "सा यदेवादः सिंही भूत्वेति । उक्तः सिंहीभावः । सपत्नसाहीत्यस्य तात्पर्य माह— "त्वया वयं सपत्नानिति । "देवेभ्यः कल्पस्वेत्यस्य तात्पर्याभिधानम्— "योषा वेत्यादि ॥ ३३ ॥

---

१— वा० सं० ५. ९. ७ ।  २— का० श्रौ० सू० ५. ३. ३०, ३१ ।
३— का० श्रौ० सू० ५. ३. ३२.— वा० सं० ५. ९. ९ ।
४— का० श्रौ० सू० ५. ३. ३२ ।
५— वा० सं० ५. १०. १ "कल्पस्व" ।

"तां वै युगमात्रीं वेत्यादि[1]। षडशीत्यङ्गुलपरिमिता 'युग-मात्री'। दिक्चतुष्टयापेक्षया "दश-दश"-इति वीप्सा। युगमात्रस्य पूर्व मभिहितत्वात् तत् परित्यज्य दशपदपक्षं प्रशंसति— "दशाक्षरा वै विराडिति। सर्वत्र विराजमानत्वात् वाचा उच्चार्यमाणत्वाच्च 'विराड्=वाक्'। मन्त्रादिरूपतया निष्पाद्यमानत्वाद् 'वाग्=यज्ञः'। अतो द्वारद्वारिकया यज्ञसम्बन्धाद् दशसङ्ख्या युज्यत इति स्तुतिः। "मध्ये नाभिका मिव करोतीति[2]। अल्पा नाभिर्नाभिका। तस्या निर्माणप्रयोजन माह— "समानत्रेति। एकत्र स्थित्वा सर्वत्रो-त्तरवेद्यां व्याघारणस्याशक्यत्वात् तत्सिद्धये मध्ये नाभिकरण मित्यर्थः[3] ॥ ३४ ॥

वेद्या अद्भिरभ्युक्षणं विधत्ते— "ता मद्भिरभ्युक्षतीति[4]। अभ्यु-क्षणस्य प्रयोजनद्वयम्,— सिंही भूत्वा अशान्तायाः शान्तिरेकं प्रयोजनम्, स्निग्धभावेन रमणीयत्व मपरम्; तदुभय मुच्यते— "सा यदेवाद इत्यादिना। "ता मेवैतद्देवेभ्यो हिन्वतीति। हिन्वतिः प्रीणनकर्मा[5]। तस्या अभ्युक्षणेन प्रीणनं देवेभ्योऽर्थाय भवति; योषात्वेनाभिधानात्। योषायाः अलङ्करणेन पत्युः प्रीतिर्भवतीति सुप्रसिद्धम् ॥ ३५ ॥

---

१— का० श्रौ० सू० ५. ३. ३३।
२— का० श्रौ० सू० ५. ३. ३६।
३— तैत्तिरीयभाष्ये ( सं० ६. २. ७. ) सर्व मेतत् स्पष्टं व्याख्यात मितीह सङ्क्षेपेण व्याख्यायते सायणेन।
४— का० श्रौ० सू० ५. ३. ३७। ५— स्वा० प० ५९१ धा०।

"सोऽभ्युक्षतीति[1]। अभ्युक्षणमन्त्रः— "सिंह्यसीति[2]। अयं स्पष्टार्थः। सिकतानां प्रक्षेपस्योक्त मलङ्काररूपत्वं समर्थयते— "भ्राजन्त इव हि सिकता इति। अतिधवलत्वाद् भ्राजमाना भवन्ति। वेद्यलङ्कारत्वेन प्रशस्य अग्निसंयोगकृतसन्तापनिवर्त्तकत्वेन प्रशंसति— "अग्नेर्वा एतद् वैश्वानरस्य भस्मेत्यादिना। अग्न्यवयवभूताना मेव सिकताना मुत्तरवेद्यवयवत्वसम्पादनेन भूमेः स्वाङ्गस्य स्वात्मदाहकत्वाभावात् हिंसापरिहार इत्यभिप्रायः। सिकताप्रकिरणमन्त्रार्थस्तु स्पष्ट एव[3] ॥

अथोत्तरवेदेर्यज्ञियवृक्षशाखया प्रच्छादनं विधत्ते— "अथैनां छादयतीति[4] ॥ ३६ ॥ १ [ ५. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम् )

इध्म मभ्यादधाति। उपयमनीरुपकल्पयन्त्याज्य मधिश्रयति स्रुवं च स्रुचं च सम्मार्ष्ट्यथोत्पूयाज्यं पञ्चगृहीतं गृह्णीते यदा प्रदीप्त इध्मो भवति ॥ १ ॥

---

१— का० श्रौ० सू० ५. ३. ३७।
२— वा० सं० ५. १०. २ "शुन्धस्व"।
३— वा० सं० ५. १०. ३ "शुम्भस्व"।
४— का० श्रौ० सू० ५. ४. १.।

अथोद्यच्छन्तीध्मम्*। उपयच्छन्त्युपयमनीरथाहाग्नये प्रह्रियमाणायानुब्रूह्येकस्फ्ययानूदेहीत्यनूदैति प्रतिप्रस्थातैकस्फ्ययैतस्मान्मध्यमाच्छङ्कोरयं एष व्वेदेर्ज्जघनार्द्धं भवति तद्यदेवाचान्तःपातेन गार्हपत्यस्य व्वेदेर्व्यवच्छिन्नं भवति तदेवैतदनुसन्तनोति ॥ २ ॥

तद्धैके। औत्तरवेदेरनूदायन्ति तदु तथा न कुर्य्यादेवैतस्मान्मध्यमाच्छङ्कोरनूदेयात्त ऽआयन्त्यागच्छन्त्युत्तरवेदिम्† ॥ ३ ॥

प्रोक्षणीरध्वर्य्युरादत्ते। स पुरस्तादेवाग्रे प्रोक्षत्युदङ् तिष्ठन्निन्द्रघोषस्त्वा व्वसुभिः पुरस्तात्पात्वितीन्द्रघोषस्त्वा व्वसुभिः पुरस्ताद्गोपायत्वित्येवैतदाह‡ ॥ ४ ॥

अथ पश्चात्प्रोक्षति। प्रचेतास्त्वा रुद्रैः पश्चात्पात्विति प्रचेतास्त्वा रुद्रैः पश्चाद्गोपायत्वित्येवैतदाह ॥ ५ ॥

अथ दक्षिणतः प्रोक्षति। मनोजवास्त्वा पितृभिर्द्दक्षिणतः पात्विति मनोजवास्त्वा पितृभिर्द्दक्षिणतो गोपायत्वित्येवैतदाह ॥ ६ ॥

अथोत्तरतः प्रोक्षति। व्विश्वकर्म्मा त्वादित्यैरुत्तरतः

---

* 'ध्म। मु'—इति क, 'ध्मं'—इति ख, 'ध्माम्'—इति ग, घ।

† 'वेदिम्'—इति ग, घ।

‡ 'हु'—इति ख। एव मुत्तरेष्वपि त्रिष्वपु।

पात्विति विश्वकर्म्मा त्वादित्यैरुत्तरतो गोपायत्वित्येवै-
तदाह ॥ ७ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते। तद्ये ऽएते पूर्व्वे सक्ती तयोर्या दक्षिणा ता* न्यन्तेन बहिर्व्वेदि निनयतीद महं तत्तं व्वार्बहिर्द्धा यज्ञान्निःसृजामीति सा यद्देवादः सिंही भूत्वाशान्तेवाचरत्ता मेवास्या एतच्छुचं बहिर्द्धा यज्ञान्निःसृजति यदि नाभिचरेद्यद्यु ऽअभिचरेदादिशेदिद महं तत्तं वार मु मभि निःसृजामीति त मेतया शुचा विध्यति स शोचन्नेवामुं लोक मेति† ॥ ८ ॥

स यद्वार्य्यमाणेऽग्नौ। उत्तरवेदिं व्याघारयति यद्वैवेना मदो देवा ऽअब्रुवन् पूर्व्वां त्वाग्नेराहुतिः प्राप्स्यतीति तद्वैवैना मेतत्पूर्वा मग्नेराहुतिः प्राप्नोति यद्वेषा देवानब्रवीद्यां मया काञ्चाशिष माशासिष्यध्वे सा वः सर्वा समर्द्धिष्यत ऽइति ता मेतयाचर्त्विजो यजमानायाशिष माशासते सास्मै सर्व्वा समृद्ध्यते ॥ ९ ॥

तद्वा ऽएतदेकं कुर्व्वन् द्वयं करोति। यदुत्तरवेदिं व्याघारयत्यथ यैषां‡ मध्ये नाभिकेव भवति तस्यै ये पूर्व्वे सक्ती तयोर्या दक्षिणा ॥ १० ॥

---

* 'तां'—इति च डा०-वेबरेण दृष्टः।

† 'मेति'—इति ग। ‡ 'येषा'—इति क, ख।

तस्या माघारयति। सिꣳह्यसि स्वाहेत्यथापरयोरुत्तरस्याꣳ सिꣳह्यस्यादित्यवनिः स्वाहेत्यथापरयोर्दक्षिणस्याꣳ सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहेति बह्वी वै यजुःष्वाशीस्तद् ब्रह्म च क्षत्रं चाशास्त ऽउभे व्वीर्य्ये ॥ ११ ॥

अथ पूर्व्वयोरुत्तरस्याम्*। सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहेति तत्प्रजा माशास्ते यदाह सुप्रजावनिरिति रायस्पोषवनिरिति भूमा वै रायस्पोषस्तद्भूमान माशास्ते ॥ १२ ॥

अथ मध्य ऽआघारयति। सिꣳह्यस्यावह देवान् यजमानाय स्वाहेति तद्देवान् यजमानायावाहयत्यथ स्रुच मुद्यच्छति भूतेभ्यस्त्वेति प्रजा वै भूतानि प्रजाभ्यस्त्वेत्येवैतदाह† ॥ १३ ॥

अथ परिधीन् परिदधाति। ध्रुवोऽसि पृथिवीं दृꣳहेति मध्यमं ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिण मच्युतक्षिदसि दिवं दृꣳहेत्युत्तर मग्नेः पुरीष मसीति सम्भारानुपनिवपति तद्यत्सम्भारा भवन्त्यग्नेरेव सर्व्वत्वाय ॥ १४ ॥

शरीरꣳ हैवास्या पीतुदारु। तद्यत् पैतुदारवाः‡

---

* 'स्याꣳ'–इति ख, ग, घ। † 'हु'–इति ख।

‡ 'तद्यात्पैतुदारवाः'–इति क, ख।

परिधयो भवन्ति शरीरेणैवैन मेतत् समर्द्धयति कृत्स्नं करोति ॥ १५ ॥

माꣳसꣳ हैवास्य गुल्गुलु* । तद्यद् गुल्गुलु† भवति माꣳसेनैवैन मेतत् समर्द्धयति कृत्स्नं करोति ॥ १६ ॥

गन्धो हैवास्य सुगन्धितेजनम् । तद्युत् सुगन्धितेजनं भवति गन्धेनैवैन मेतत्समर्द्धयति कृत्स्नं करोति ॥ १७ ॥

अथ यद् वृष्णे स्तुका भवति । वृष्णोहं वै विषाणे ऽअन्तरेणाग्निरेकाꣳ रात्रि मुवास तद्युदेवात्राग्नेन्यक्तं तदिहाप्यसदिति तस्माद् वृष्णे स्तुका भवति तस्माद्या शीर्ष्णो नेदिष्ठꣳ स्यात्ता माच्छिद्याहरेद् यद्यु तां नु विन्देदपि या मेव काञ्चाहरेत्तद्युत्परिधयो भवन्ति गुप्त्या ऽएव दूर ऽइव ह्येन मुत्तरे परिधय ऽआगच्छन्ति ॥ १८ ॥ २ ॥

॥ चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् [ ५. २. ] ॥

उत्तरवेदिनिर्माण मभिधाय अथोत्तरवेद्या मग्निप्रणयनप्रयोग उच्यते— "इध्म मभ्या[illegible]धतीति[1] । आहवनीयेऽग्नौ प्रणीयमानाना मङ्गाराणां सम्पादनाय काष्ठसमूहं स्थापयेयुरित्यर्थः । "उपयमनी-

*, † 'गुग्गुलु'–इति सा०-सम्मतः पाठ इति डा० वेबरः ।

१— का० श्रौ० सू० ५. ४. २ ।

रित्यादि। 'उप' अग्नेरधस्तात् यम्यन्ते इत्युपयमन्यः सिकताः[1]। व्याघारणार्थम् 'आज्यम्' अग्नौ 'अधि[2]अयति' विलापयेत्। आज्य मुत्पूतं कृत्वा स्रुवेण स्रुचि पञ्चवारं गृह्णीयात् ॥ १ ॥

"अथोद्यच्छन्तीति[3]। इध्मे प्रदीप्ते सति 'अथ' अनन्तर मेव 'इध्मन्' अङ्गारतां प्राप्त मूर्द्धं धारयेत्। इध्मपात्रस्याधः 'उपयमनीः' उपयच्छेत्। 'अग्नये प्रह्रियमाणाय' उत्तरवेदिं प्रति नीयमानाय तदनुकूलं सूक्तं पठेति होतारं ब्रूयात्। 'एकस्फ्यया' एकः स्फ्यो यस्यां रेखायां सा तयोक्ता, तया मा मनुगच्छ; स्फ्येन रेखां कुर्वन्ननुगच्छेति प्रतिप्रस्थातारं ब्रूयात्[4]। एकस्फ्यानुगमनस्यावधि माह— "आ एतस्मान्मध्यमाच्छङ्कोर्य एष वेदेर्जघनार्द्धो भवतीति। 'वेदेः' सौमिक्याः 'जघनार्द्धे' 'यः एषः' शङ्कुर्भवति। स्थूणाराजात् प्रक्रमत्रितये यः शङ्कुरन्तःपातः स्थापितः, स एव मध्यमशङ्कुः; तावत्पर्य्यन्त मित्यर्थः। "गार्हपत्यस्य वेदेरिति। 'यतः प्रणयति स गार्हपत्यः'–इतिन्यायादाहवनीयादुत्तरवेदिं प्रति प्रणयनस्योक्तत्वात् आहवनीय एव गार्हपत्य इत्युच्यते। रेखाकर्षणेनान्तःपात्यरूपो व्यवच्छेदः परिहृतो भवति[5] ॥ २ ॥

---

१—"उपयम्यते उपगृह्यतेऽग्निराभिरित्युपयमन्यः सिकताः"–इति या० दे०।
२— अधिरत्र सप्तम्यर्थानुवादी।
३— का० श्रौ० सू० ५. ४. ७।
४— "प्रतिप्रस्थाता होतारं ब्रूयात्"–इति ङ, च।
५— का० श्रौ० सू० ५. ४. ८।

रेखानुगतिविषये केषाञ्चित् पक्ष मुपन्यस्य व्यपच्छेदपरिहाराय प्रयोजनाभावाभिप्रायेण निराचष्टे— "तद्धैके श्रोत्तरवेदेरनूदायन्तीति[1] ॥ ३ ॥

"प्रोक्षणीरध्वर्युरित्यादि[2]। अध्वर्योः प्रोक्षण्यादानविधानात् अग्निप्रणेता अग्नीदेव 'अग्रे' उत्तरादिभ्यः पूर्वम्, 'पुरस्तात्' पूर्वस्यां दिशि 'प्रोक्षति', 'उदङ्' उदङ्मुखस्तिष्ठन्।

मन्त्रस्याय मर्थः[3]।— इन्द्र इति घुष्यते शब्द्यते इति 'इन्द्रघोषः' इन्द्रनामा देवः, सः 'वसुभिः' सहितः 'पातु' रक्षतु, असुरादिभ्यः सकाशात् 'गोपायतु' इत्यर्थः। 'प्रचेताः' प्रकृष्टप्रज्ञो वरुणः। 'पितरः' अग्निष्वात्ताप्रमुखाः। 'मनोजवाः' मनोवेगोपमवेगः। 'विश्वकर्मा' विश्वविषयं कर्म यस्य स एतन्नामको देवः। निनेतव्यायाः दक्षिणपूर्व्वस्रक्तेः स्पष्टप्रदर्शनाय पूर्व्वदिग्गतस्रक्तिद्वयोपन्यासः ॥ ४, ५, ६, ७ ॥

"अथ याः प्रोक्षण्य इति। "ता न्यन्तेनेति। 'ताः' प्रोक्षणीः 'न्यन्तेन' अत्यन्तान्तदेशेन। तत्रापि स्रक्त्यन्ते प्रोक्षणीये शेषनिनयनप्रसक्तावाह— "बहिर्वेदीति[4]।

निनयनमन्त्रस्याय मर्थः[5]।— 'इदं' प्रोक्षणीशेषं 'तप्तम्', 'वेद्याः' सिंहीरूपायाः क्रौर्य्यव्युत्पादनतः तस्मिन् सन्तापप्राप्तेः सम्भवात् अव-

१— का० श्रौ० सू० ५. ४. १०।

२— का० श्रौ० सू० ५. ४. ११।

३— तत्पाठो वा० सं० ५. ११. १।

४— का० श्रौ० सू० ५. ४. १२। ५— वा० सं० ५. ११. २।

शिष्ट मभ्यस्तं भवति, तथाविधं वा; 'यज्ञाद्' यज्ञसाधनाद् वेदिदेशात् 'बहिः निसृजामि'। "स यदेवाह इत्यादि निनयनार्थवादः स्पष्टः।

अथं निनयनमन्त्रोऽभिचारेच्छाराहित्यविषय इत्याह— "यदि नाभिचरेदिति। 'यदि' अभिचारं कर्त्तु मिच्छेत्, तदा 'यज्ञाद् बहिः' स्थाने 'अमू मभि निःसृजामि'-इत्यादिशेत्[1]। अमु मित्यत्र द्वेष्यस्य नाम गृह्णीयात्। 'सः' अभितप्तः 'शोचन्नेवामुं लोक मेति' दुःखेन प्राणान् जहातीत्यर्थः॥ ८॥

इदानीं प्राप्तावसरत्वात् व्याघारण माह— "स यद् धार्य्यमाणेऽग्नाविति। आग्नीध्रेण उत्तरवेदेरुपरि देशे 'अग्नौ धार्य्यमाणे' सति अध्वर्युः व्याघारयति। "यदेवैना मद इत्यादिक मुत्तरवेदेर्विध्यर्थाख्यायिकाप्रसङ्गे व्याख्यातम्[2]। यस्मादपक्रान्ताया वाचः प्रतिनिवृत्तये देवैर्व्याघारणं दत्तम्, तस्मादेवैत्य मेतत् कर्त्तव्य मित्यर्थः। यस्माच्च व्याघारणपरितुष्टया वाचा सर्व्वाशीःसमृद्धिरूपो वरो देवेभ्यो दत्तः, तस्माद् यजमानार्थं मृत्विग्भिराशास्यमानाना माशिषां समृद्धये चोत्तरवेदिव्याघारणं कर्त्तव्य मित्यर्थः॥ ९॥

"तद्वा एतदेक मिति। 'एकम्' उत्तरवेदिव्याघारणं कुर्व्वन् 'द्वयं करोति' व्याघारणं यजमानाशीराशासनञ्चेत्यर्थः। उत्तरवेदिमध्यङ्गतायाश्चतुःस्रक्तेरुत्तरनाभेरक्ष्णया व्याघारप्रकार उच्यते—

---

१— का० श्रौ० सू० ५. ४. १३।

२— ५ अ. १ ब्रा. २३ कण्डी-व्याख्या-द्रष्टव्या ( २८७ पृ० )।

"अथ येषां मध्ये नाभिकेव भवतीत्यादिना[१]। 'ये पूर्व्वे स्रक्ती' ईशानाग्नेयदिग्गते, 'तयोः' मध्ये 'दक्षिणा' स्रक्तिराग्नेयदिग्गता, 'तस्यां' "सिंह्यसि स्वाहा[२]"-'इति' 'व्याघारयति'। "अथापरयो-रुत्तरस्या मिति। नाभेः पश्चाद्दिग्गतयोर्मध्ये 'उत्तरस्यां' वायव्य-दिगवस्थितायां स्रक्त्या मित्यर्थः। आदित्यान् यजमानार्थं वनति भजत इति 'आदित्यवनिः', तादृशी 'सिंह्यसि', तुभ्यं स्वाहुत मस्तु। 'अथ' 'अपरयोः'। 'दक्षिणस्यां' नैर्ऋतकोणकोष्ठे इत्यर्थः। अत्र ब्रह्मचत्रोभयाशासनस्याभिप्राय माह— "बह्वी वै यजुःष्वाशीरिति। 'यजुःषु' आशीःपरेषु प्रायेण 'बह्वी आशीः' बहुविधान्याशास-नान्युपलभ्यन्ते। अतो युक्त मित्यर्थः। 'अथ' 'पूर्व्वयोरुत्तरस्याम्' ईशानस्रक्त्यां 'सुप्रजावनिः' शोभनपुत्रादिलक्षणप्रजासम्भक्त्री, 'राय-स्पोषवनिः' रायस्पोषो धनपुष्टिः॥ १०, ११, १२॥

"अथ मध्य आघारयतीति। मध्यव्याघारणमन्त्रः— "सिंह्यस्या-वह देवान्"-इत्यादिः[३]। स्पष्टार्थः। 'अथ' 'स्रुचम्' 'उद्यच्छति[४]' ऊर्द्धं धारयेत्। स्रुगुद्यमनमन्त्रस्थस्य[५] भूतशब्दस्य भूतकार्य्य मर्थ इत्याह— "प्रजा वै भूतानीति॥ १३॥

"अथ परिधीन् परिदधातीति[६]। तन्मन्त्रस्यार्थः[७]।— हे परिधे! त्वं यस्मात् 'ध्रुवोऽसि', अतः 'पृथिवीं' 'दृंह' दृढ़ा कुरु। अनेन

---

१— का० श्रौ० सू० ५. ४. १४। २— वा० सं० ५. १२. १-३।
३— वा० सं० ५. १२. ५। ४— का० श्रौ० सू० ५. ४. १५।
५— वा० सं० ५. १२. ६। ६— का० श्रौ० सू० ५. ४. १६।
७— वा० सं० ५. १३. १, २, ३।

मध्यमपरिधिं परिदधाति। ध्रुव मविचलं चियति निवसतीति 'ध्रुवचित्'। अच्युतं परैरच्यावितं यथा न चलति तथा चियतीति 'अच्युतचित्'। उत्तरवेदिनाभिदेशे गुग्गुलुसुगन्धितेजनादिसम्भार-प्रक्षेपं[1] समन्त्रकं विधत्ते— "अग्नेः पुरीष मसीति[2]। "सम्भारानुप-निवपतीति[3]। स च सम्भारनिवापः 'अग्नेः' 'सर्व्वत्वाय' कृत्स्नत्वाय सम्पद्यते। गुग्गुल्वादीना मग्न्यवयवत्वं स्वय मेव वक्ष्यति[4], अतस्तेषा मग्निना संयोजनेन स सर्व्वः सम्पूर्णो भवति ॥ १४ ॥

"शरीरं हैवेति। 'अस्य' अग्नेः 'पीतुदारुः' उदुम्बरविशेषः। "स यां वनस्पतिष्ववसत् तां पुतुद्रौ"-इति च तैत्तिरीयके श्रव-णात्[5] पीतुदारुणोऽग्नेः शरीरत्वम् ॥ १५ ॥

"मांसं हैवास्येति। "यन्मांस मुपभृतं तद् गुग्गुल्विति श्रुतेः[6] गुग्गुलोरग्नेर्मांसत्वम् ॥ १६ ॥

"गन्धो हैवास्येति। "या मोषधीषु तां सुगन्धितेजने"-इति श्रुतेः[7] सुगन्धितेजनादौषधिविशेषे अग्नेरेकरात्रनिवासात् अग्ने-र्गन्धः सुगन्धितेजने सङ्क्रान्तः[8]। तदुपवापेन अग्नेर्गन्धाख्यांशस्य पुनर्योजना। अतः कृत्स्नत्व मग्नेः ॥ १७ ॥

---

१— '०सम्भाराणां प्रक्षेपं'-इति। २— वा० सं० ५. १३. ४।

३— का० श्रौ० सू० ५. ४. १७।

४— अनुपद मेव १५-१६-१७-कण्डीषु।

५, ६, ७— तै० सं० ६. २. ८. ४।

८— '०विशेषे अग्नेर्गन्धः सङ्क्रान्तः'-इति क।

"अथ यद् वृष्णे स्तुका भवतीति। वृष्णिर्मेषः, तस्य स्तुका रोम[1]। स्तुकाया अन्यवयवत्त्व मुपपादयति— "वृष्णेर्ह वै विषाणे अन्तरेणेति। "यां पशुषु तां पेलस्यान्तरा शृङ्गे"-इति[2] तैत्तिरीयकम्। "या ग्रीर्ष्णो नेदिष्ठं स्यात् ता माच्छिद्याहरेदिति। वृष्णेरलाभे कथ मित्यत आह— "अपि या मेव कां चाहरेदिति। तद्वान्तरजातिसम्बद्धा मपीत्यर्थः। परिधीनां परिधानं, तद्दारुविशेषत्त्वं चोक्तम्, इदानीं तदावश्यकत्त्व माह— "तद् यत् परिधयो भवन्तीत्यादि। यस्मात् 'उत्तरे' उपरि क्रियमाणाः 'परिधयः' 'दूरे' विप्रकृष्टकाले होमकाले 'आगच्छन्ति', अतोऽग्नेर्गुप्तिस्तावत्पर्य्यन्त मपेक्षिता; तस्मादिदानी मवश्यकर्त्तव्य मित्यर्थः॥ १८॥ २ [५. २.]॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम्॥

---

( अथ तृतीयं ब्राह्मणम् )

पुरुषो वै यज्ञः*। पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुत ऽएष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः† ॥ १ ॥

---

१—"स्तुकाः शिरोरोमाणि"–इति या० दे०। २— तै०सं० ६.२.८.६।

*,† 'ज्ञ'–इति ग, घ।

शिर एवास्य हविर्द्धानम्। वैष्णवं देवतयाथ यदस्मिन्त्सोमो भवति हविर्वै देवानाᳪ सोमस्तस्माद्धविर्द्धानं नाम ॥ २ ॥

मुख मेवास्याहवनीयः। स यदाहवनीये जुहोति यथा मुख ऽआसिञ्चेदेवं तत्* ॥ ३ ॥

स्तुप ऽएवास्य यूपः। बाहू ऽएवास्याग्नीध्रीयश्च मार्जालीयश्च ॥ ४ ॥

उदर मेवास्य सदः। तस्मात् सदसि भक्षयन्ति यद्धीदं किञ्चाश्नन्त्युदर ऽएवेदᳪ सर्वं प्रतितिष्ठत्यथ यदस्मिन् विश्वे देवा ऽअसीदंस्तस्मात् सदो नाम त ऽउ एवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति ॥ ५ ॥

अथ यावेतौ जघनेनाग्नी†। पादावेवास्यैतावेष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः ॥ ६ ॥

उभयतोद्वारᳪ हविर्द्धानं भवति। उभयतोद्वारᳪ सदस्तस्मादयं पुरुष ऽआन्तᳪ सन्तृण्णः प्रणिक्ते हविर्द्धाने ऽउपतिष्ठते‡ ॥ ७ ॥

---

* 'तत्'–इति ग, घ। † 'ग्नी'–इति ग, घ।

‡ 'ऽउपतिष्ठेते'–इति क।

ते समववर्त्तयन्ति। दक्षिणेनैव दक्षिण मुत्तरेणो-त्तरं यद्वर्षीयस्तद्दक्षिणꣳ स्यात् ॥ ८ ॥

तयोः समववृत्तयोः। छदिरधि निदधति यदिच्छदिर्न विन्देयुश्छदिस्सम्मितां भित्ति[*] प्रत्यानह्यन्ति रराट्यां परिश्रयन्त्युच्छ्रायोभ्यां छदिः पश्चादधिनिदधति छदिःसम्मितां वा भित्तिम्[†] ॥ ९ ॥

अथ पुनः प्रपद्य। चतुर्गृहीत माज्यं गृहीत्वा सावित्रं प्रसवाय जुहोति सविता वै देवानां प्रसविता सवितृप्रसूताय[‡] यज्ञं तनवामहा इति तस्मात्सावित्रं जुहोति ॥ १० ॥

स जुहोति। युञ्जते मन उत युञ्जते धिय इति मनसा च वै वाचा च यज्ञं तन्वते स यदाह युञ्जते मन इति तन्मनो युनक्त्युत युञ्जते धिय इति तद्वाचं युनक्ति धियाधिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्रकामो-द्येनेव गाथाभिरिव ताभ्यां युक्ताभ्यां यज्ञं तन्वते॥ ११ ॥

विप्रा विप्रस्य बृहतो विपश्चित इति। ये वै ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते विप्रास्तानेवैतदभ्याह

---

* 'भिति'—इति ग।

† 'भितिम्'—इति ग। 'भित्तिम्'—इति घ।

‡ 'प्रसूता'—इति क।

बृहतो व्विपश्चित इति यज्ञो वै बृहन्विपश्चिद्यज्ञ मेवै-तदभ्याह व्वि होत्रा दधे वयुनाविदेक इदिति व्वि हि होत्रा दधते यज्ञं तन्वाना मही देवस्य सवितुः परिष्टुतिः स्वाहेति तत्साविनं प्रसवाय जुहोति ॥ १२ ॥

अथापरं चतुर्गृहीत माज्यं गृहीत्वा। उपनिष्क्रामति दक्षिणया द्वारा पत्नीं निष्क्रामयन्ति स दक्षिणस्य हवि-र्द्धानस्य दक्षिणायां वर्त्तन्याᳬ हिरण्यं निधाय जुहोतीदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम्*। समूढ मस्य पाᳬसुरे स्वाहेति सᳬस्रवं पत्न्यै पाणावानयति साक्षस्य सन्ताप मुपानक्ति देवश्रुतौ देवेष्वाघोषत मिति प्रयच्छति प्रति-प्रस्थात्रे स्रुचं चाज्यविलापनीं च पर्य्याणयन्ति पत्नी मुभौ जघनेनाग्नी ॥ १३ ॥

चतुर्गृहीत माज्यं गृहीत्वा। प्रतिप्रस्थातोत्तरस्य हवि-र्द्धानस्य दक्षिणायां वर्त्तन्याᳬ हिरण्यं निधाय जुहोती-रावती धेनुमती हि भूतᳬ सूयवसिनी मनवे दशस्या†। व्यस्कभ्ना रोदसी व्विष्णवेते दाधर्थ पृथिवी मभितो मयूखैः स्वाहेति सᳬस्रवं पत्न्यै पाणावानयति साक्षस्य सन्ताप मुपानक्ति देवश्रुतौ देवेष्वाघोषत मिति तद्यदेवं जुहोति ॥ १४ ॥

---

* 'पदम्'–इति ग, घ। † 'स्या'–इति ग, घ।

देवा ह वै यज्ञं तन्वानाः* । तेऽसुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुर्व्वज्रो वा ऽआज्यं तु ऽएतेन व्वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षांᳬस्यवाघ्नंस्तथैषां नियानं नान्ववायंस्तथो ऽएवैष एतेन व्वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षांᳬस्यवहन्ति तथास्य नियानं नान्ववयन्ति तद्यद्वैष्णवीभ्या मृग्भ्यां जुहोति व्वैष्णवᳬ हि हविर्द्धानम् ॥ १५ ॥

अथ यत्पुत्यक्षस्य सन्ताप मुपानक्ति। प्रजनन मेवैतत्क्रियते यदा वै स्त्रियै च पुᳬसश्च सन्तप्यतेऽथ रेतः सिच्यते तत्ततः प्रजायते पुरागुपानक्ति पुराग्घ्येव रेतः सिच्यतेऽथाह हविर्द्धानाभ्यां प्रवर्त्त्यमानाभ्या मनुब्रूहीति† ॥ १६ ॥

अथ व्वाचयति। प्राची प्रेत मध्वरं कल्पयन्ती ऽइत्यध्वरो वै यज्ञः प्राची प्रेतं यज्ञं कल्पयन्ती ऽइत्येवैतदाहोर्द्ध्वं यज्ञं नयतं मा जिह्वरत मित्यूर्द्ध्व मिमं यज्ञं देवलोकं नयत मित्येवैतदाह मा जिह्वरत मिति तदेतस्मा ऽअह्वला माशास्ते समुद्दृह्येव प्रवर्त्तयेयुर्य्यथा

---

* 'नाः'—इति ग, घ ।

† 'ब्रूहीति'—इति ग, 'ब्रूहीति'—इति घ ।

नोत्सृजेता मसुर्य्या वा ऽएषा व्वाग् याक्षे नेदिहासुर्या वाग्वदादिति यद्युत्सृजेताम् ॥ १७ ॥

एतद्वाचयेत् । स्वक्षौष्ठ मावदतं देवी दुर्य्ये ऽआयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्ट मिति तस्यो हैषा प्रायश्चित्तिः ॥ १८ ॥

तदाहुः । उत्तरवेदेः प्रत्यङ् प्रक्रामे त्त्रीन्विक्रमांस्तद्धविर्द्धाने स्थापयेत् सा हविर्द्धानयोर्मात्रेति नात्र* मात्रास्ति यत्रैव स्वयं मनसा मन्येत नात्रैव सन्नात्यन्तिके नो दूरे तत् स्थापयेत् ॥ १९ ॥

ते ऽअभिमन्त्रयते । अत्र रमेथां व्वर्ष्मन् पृथिव्या ऽइति व्वर्ष्म ह्येतत् पृथिव्यै भवति दिवि ह्यस्याहवनीयो भवति नभ्यस्थे करोति तद्धि क्षेमस्य रूपम्† ॥ २० ॥

अथोत्तरेण पर्य्येत्याध्वर्य्युः । दक्षिणꣳ हविर्द्धान मुपस्तभ्नाति व्विष्णोर्नु कं व्वीर्य्याणि प्रवोचं यः पार्थिवानि व्विममे रजाꣳसि । यो ऽअस्कभायदुत्तरꣳ सधस्थं व्विचक्रमाणस्त्रेधोरुगायो व्विष्णवे त्वेति मेथी मुपनिहन्तीतरतस्ततो यदु च मानुषे‡ ॥ २१ ॥

अथ प्रतिप्रस्थाता§ । उत्तरꣳ हविर्द्धान मुपस्तभ्नाति

---

* 'नाम'—इति ग । † 'रूपम्'—इति ग, घ ।
‡ 'षे'—इति ग, घ । § 'ता'—इति ग, घ ।

दिवो वा व्विष्ण ऽउत वा पृथिव्या महो वा व्विष्ण ऽउरोरन्तरिक्षात्। उभा हि हस्ता व्वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वेति मेथी मुपनिहन्तीतरतस्ततो यद्‌ च मानुषे तद्यद्वैष्णव्यर्य्यजुर्भिरुपचरन्ति वैष्णवꣳ हि हविर्द्धानम् ॥ २२ ॥

अथ मध्यमꣳ छदिरुपस्पृश्य व्वाचयति। प्र तद्विष्णुस्तवते व्वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः*। यस्योरुषु त्रिषु व्विक्रमणेष्वधिक्षियन्ति भुवनानि व्विश्वेतीदꣳ हैवास्यैतच्छीर्षकपालं यदिद मुपरिष्टाद्धीव ह्येतत् क्षियन्त्यन्यानि शीर्षकपालानि तस्मादाहाधिक्षियन्तीति ॥ २३ ॥

अथ रराट्या मुपस्पृश्य व्वाचयति। व्विष्णो रराट मसीति ललाटꣳ हैवास्यैतदथोच्छ्राया ऽउपस्पृश्य व्वाचयति व्विष्णोः श्नप्त्रे स्थ इति स्रक्के हैवास्यैते ऽअथ यदिदं पश्चाच्छदिर्भवतीदꣳ हैवास्यैतच्छीर्षकपालं यदिदं पश्चात्† ॥ २४ ॥

अथ लस्पूजन्या स्यूच्या प्रसीव्यति। व्विष्णोः स्यूरसीत्यथ ग्रन्थिं करोति व्विष्णोर्ध्रुवोसीति नेद् व्यव-

---

* 'ष्ठाः'—इति ग, घ। † 'पश्चात्'—इति ग, घ।

पद्याता ऽइति तं प्रक्षते कुर्मंन्विष्यति तथो हाध्वर्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठित* मभिमृशति वैष्णव मसीति वैष्णवꣳ हि हविर्द्धानम् ॥ २५ ॥ ३ ॥

॥ इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् [५. ३.] ॥

उत्तरत्र सदोहविर्द्धानादिकं विधास्यति[१], तदुपोद्घातत्वेन तेषां पुरुषाकारसन्निवेशता माह— "पुरुषो वै यज्ञ इत्यादिना। अत्र यज्ञशब्देन तदाधारभूतः सदोहविर्द्धानादिक उच्यते। प्रतिज्ञाते पुरुषत्वे हेतु माह— "पुरुषस्तेन यज्ञ इति। 'तेन' कारणेन 'यज्ञः' 'पुरुषः' इत्यर्थः। हेतुं विवृणोति—"यदेनं पुरुषस्तनुत इति। यस्मात् पुरुषेण यज्ञस्तायते, तेन यज्ञः पुरुष इत्यर्थः। तत् किं पुरुषेण जायमानः सर्वोऽपि पुरुषः? नेत्याह— "एष वै जायमानो यावानेव पुरुषः, तावान् विधीयत इति। पुरुषाकारेण जायमानत्वात् पुरुष इत्यर्थः ॥ १ ॥

"शिर एवास्येति। हविर्द्धानस्य यज्ञशिरस्त्वे कारण माह— "वैष्णवं देवतयेति। विष्णुदेवताकैर्मन्त्रैर्निर्मातव्यत्वाद् वैष्णवत्वम्। विष्णोः सर्वदेवताना मुत्तमत्वात्, शिरसोऽप्यङ्गाना मुत्तमत्वात्, युक्तं हविर्द्धानस्य शिरस्त्वम्। हविर्द्धानं नाम-निर्वचनेन प्रशंसति— "अथ यदस्मिन्निति ॥ २ ॥

---

¶ 'तं निष्ठित'–इति क, डा०-वेबर-दृष्टश्च।

१— इहैव ब्राह्मणे सप्तम्यां कण्डिकायाम् (३०६, ३१३ पृ०) द्रष्टव्यम्।

"मुख मेवास्याहवनीय इति । आहवनीयस्य मुखत्वसाम्यं दर्श-यति— "स यदाहवनीये जुहोतीति । अत्र प्रक्षेपसाम्यात् मुख मित्यर्थः ॥ ३ ॥

"स्तुप एवास्य यूप इति । 'यूप एव' 'अस्य' यज्ञस्य 'स्तुपः' केशनिचयः; दैर्घसाम्यात्[1] । हविर्द्धानस्योत्तरस्याम् 'आग्नीध्रीयः', दक्षिणस्यां 'मार्जालीयः', अत एव 'बाहू'; उभयतः समानत्वात् तौ बाहुस्थानीयौ ॥ ४ ॥

"उदर मेवास्य सद इति । सदसि भक्षणसम्भवात् भक्षण-साम्यात् 'सदः उदरम्' । 'सदः'-शब्दो यौगिक इत्याह— "अथ यदस्मिन् विश्वेदेवा असीदन्निति । सीदन्त्यत्रेति सदः । विश्वेदेवा वस्त्रादिरूपेण नानाजातीयाः । ब्राह्मणेषु कथं विश्वदेवत्व मिति, तत्राह— "ब्राह्मणा विश्वगोत्राः सीदन्तीति ॥ ५ ॥

"अथ यावेतौ जघनेनाग्नी इति । सौमिकवेदेः पश्चाद्भागे 'अग्नी' आहवनीयगार्हपत्यौ, तौ जघनदेशवर्त्तित्वात् 'पादौ' । उपपादित मर्थं गमयति— "एष वै तायमान इति ॥ ६ ॥

"उभयतो द्वार मिति[2] । हविर्द्धानं सदश्चेत्युभयम्, 'उभयतो-द्वारम्' प्राक् पश्चाच्च । यस्मात् पुरुषरूपो यज्ञ उभयतोद्वारकः, 'तस्मात्' 'पुरुषः' मनुष्यः 'आन्तम्' अन्तपर्यन्तं 'सन्तृणः' सुषिर-वान् भवति । आन्तसाम्यात् पुरुषाकारत्वं यज्ञस्य सिद्धम् । हवि-

---

१— नास्त्येतत् पदं क-पुस्तके ।

२— का० श्रौ० सू० ८. ४. २७ द्रष्टव्यम् ।

र्द्धानप्रवर्त्तनायोभयोर्निर्दिश्य स्थापनं विधत्ते— "प्रणिक्ते हविर्द्धाने उपतिष्ठेते"-इति। अत्र कात्यायनः— "श्रोपनिवपनात् कृत्वा हविर्द्धाने स्थापयति पृष्ठ्या मुभयत इति[1] ॥ ७ ॥

"ते समववर्त्तयन्तीति। 'दक्षिणेन' पृष्ठ्याख्यमध्यरज्ज्वोर्दक्षिण-देशेन[2] 'दक्षिणं' हविर्द्धानम्, तथा 'उत्तरेण उत्तरम्' 'समववर्त्त-यन्ति'। 'यद्' 'वर्षीयः' अतिशयेन वृद्धम्, 'तद्' 'दक्षिणं' हविर्द्धानं कर्त्तव्यम्[3] ॥ ८ ॥

"तयोः समववृत्तयोरिति। 'समववृत्तयोस्तयोः' 'अधि' उपरि 'छदिः' तृणमयं कटम्, उभयतः स्थापयेत्। तदभावे 'भित्तिं[4] वा' प्रत्यानह्येत्। तथा च कात्यायनः— "वर्षीयो दक्षिणम्, तयोश्छदि-रध्यस्यति, भित्तिं वाभावे"-इति[5]। 'रराट्यां' हविर्द्धानयोर्मुख-प्रदेशे 'उच्छ्रायीभ्यां' तोरणकाष्ठाभ्याम् अन्तराले परिश्रये, 'पश्चात्' पृष्ठभागेऽपि 'छदिः' 'अधि' निदधात्। तदभावे 'भित्तिः' पूर्ववत् कर्त्तव्या[6] ॥ ९ ॥

---

१— का० श्रौ० सू० ८. ३. २१।

२— "पृष्ठ्याम् = वेदिमध्ये प्राक्प्रतीच्योः शङ्क्वोर्बद्धां रज्जुम्"-इति तै० सं० (१. २. १३.-६. १. ६.) भाष्ये सायणः। "वेदीमध्ये वर्त्तमाना प्राची रेखा पृष्ठ्या"-इति या० दे० (८. ४. २७.)।

३— का० श्रौ० सू० ८. ३. २२।

४— "भित्तिं छदिषा तुल्याम्, वेणुशकलैः कृतं किञ्जल्कम्"-इति या० दे०।

५— का० श्रौ० सू० ५. ३. २२, २३, २४।

६— पुरस्तात् २. ४. १६ द्रष्टव्यम्।

हविर्द्धानप्रवर्त्तनाभ्यनुज्ञापनाय सावित्रं होमं विधत्ते— "अथ पुनः प्रपद्य चतुर्गृहीत माज्यं गृहीत्वा सावित्रं प्रसवाय जुहोतीति[1]। व्याघारणायाज्यं ग्रहीतुं पूर्व माहवनीयं प्रति गतत्वात् 'पुनः प्रपद्य'-इत्युच्यते। सत्स्वन्येषु देवेषु सवित्रे किमर्थं हूयत इत्यत आह— "सविता देवाना मिति। देवानां मध्ये सविता अनुज्ञाकर्त्ता॥१०॥

होममन्त्र माह— "स जुहोतीति। मन्त्रस्याय मर्थः[2]— 'विप्राः' मेधाविनः, अध्वर्युप्रमुखाः ऋत्विजः 'विप्रस्य' विशेषेणाभिमतफल-पूरकस्य प्रापकस्य, 'बृहतः' महतः, 'विपश्चितः' मेधाविनः, यज्ञस्य। इतरे विपश्चितोऽल्पविपश्चितः, असौ तु 'यज्ञो बृहन् विपश्चित्'; अतः पदद्वयसामर्थ्याद् यज्ञ एवाभिमतः। तं यज्ञं सवित्रा प्रसूतं 'मनः' 'धियः' बुद्धीश्च 'युञ्जते'। अन्तःकरणस्य मनसः पृथङ्-निर्द्देशात् 'धी'-शब्देन तत्पूर्विका वागुच्यते। तथा 'होत्राः' वषट्कर्त्तारः, सप्त होत्रकाश्च यज्ञविषये सवित्रानुज्ञाता एव मनो धियश्च 'विदधे' विदधते, कुर्वते। "लोपस्त आत्मनेपदेषु"-इति[3] तलोपः। कुत ईदृङ् माहात्म्यं सवितु रिति, तत्राह— यस्मात् सविता 'एक इत्' एक एव 'वयुनावित्'। वयुन मिति प्रज्ञा-नाम[4], प्रज्ञावानित्यर्थः। यद्वा वीयते गम्यत इति वयुनं यज्ञ-

---

१— "चतुर्गृहीतं शालाद्वार्ये जुहोति युञ्जत इति" का०श्रौ० ८. ३. २९।
२— पाठस्त्वस्य "युञ्जते"—इत्यादिः वा० सं० ५. १४. १।
३— पा० सू० ७. १. ४१।
४— निघ० ३. ९. १०।

मार्गः। "वयुनं वेतेः"-इति निरुक्तम्[1]। तस्य वेदिता एक एव। तस्य सवितुर्देवस्य 'परिष्टुतिः' 'मही' महती 'स्वाहा' स्तुतिरूपं द्रव्यं स्वाहुत मस्तु॥

मन्त्रं व्याचष्टे— "मनसा च वै वाचा चेत्यादिना। 'धी'-शब्दस्य विवक्षित मर्थ माह— "उत युञ्जते धिय इति। "तद्वाचं युनक्तीति। 'धिया-धिया' यदा यदा बुद्धिर्जायते, तदा-तदा खलु 'एतया' वाचा 'जुज्यूषन्ति' जीवितु मिच्छन्ति। अतः केवलबुद्धेर्जीवनसाधनत्वाभावेन वाचोपेक्षितत्वात् 'धी'-शब्देन तत्पूर्विका वागुच्यते। जीवनसाधनत्व मेव विशदयति— "अनूक्तेनेवेति। 'अनूक्तम्' अनुवचनम्, अध्ययनादिकम्। 'प्रकामः' स्वेच्छिकलौकिकभाषणम्। 'गाथाः' गद्यपद्यात्मिकाः॥ ११॥

विप्रा विप्रस्य बृहत इति। मन्त्रगतस्य प्रथमविप्रशब्दस्याभिमत मर्थ माह— "ये वै ब्राह्मणा इति। ऋत्विज इत्यर्थः। 'एतत्' 'विप्राः'-इति पदम्, 'तानेव' ब्राह्मणानेव 'अभ्याह' ब्रूते इत्यर्थः। बृहद्विपश्चिच्छब्दाभ्यां यज्ञो विवक्ष्यत इत्याह— "यज्ञो वै बृहन् विपश्चिदिति। 'होत्रा'-शब्देन यज्ञकर्त्तारोऽभिमताः। 'दधे'-इत्येतद् 'दधते'-इत्यस्य स्थाने इति व्याचष्टे— "वि हि होत्रा दधते यज्ञं तन्वाना इति। "तत् सावित्रं प्रसवाय जुहोतीति। यस्मान्मन्त्रे "सवितुर्देवस्य"-इति सविता देवः श्रूयते, 'तत्' तस्मादेव मन्त्रसाध्यं 'सावित्रं' होमं 'प्रसवाय' जुहुयात्॥ १२॥

---

१— निरु० "वयुनं वेतेः, कान्तिर्वा प्रज्ञा वा"—इति ५. ३. २।

अथापर मित्यादि[१]। दक्षिणहविर्द्धानशकटवर्त्मनि होमार्थं मन्यत् 'चतुर्गृहीत माज्यं गृहीत्वा' प्राचीनवंशादुपनिष्क्रामेत्। 'पत्नी' च अक्षधुराभ्यञ्जनाय 'दक्षिणया द्वारा' निष्क्रामेत्। 'सः' अध्वर्युः। 'दक्षिणस्य' 'हविर्द्धानस्य' शकटस्य दक्षिणचक्ररेखायां 'हिरण्यं निधाय' अध्वर्युर्जुहुयात्॥

होममन्त्रस्यायं सङ्गृहीतोऽर्थः[२]— 'इदं' विश्वं 'विष्णुः' त्रिविक्रमावतारधारी 'विचक्रमे' विक्रान्तवान्। विक्रमणप्रकार माह— 'त्रेधा' त्रिप्रकारेण, त्रिषु स्थानेषु त्रित्यादिषु 'पदं' 'निदधे' स्थापितवान्। 'अस्य' विष्णोः 'पांसुरे' रजोयुक्ते पदे लोकत्रयं 'समूढम्' गृहीतं सञ्चित मासीदित्यर्थः। 'स्वाहा' इदं सुहुत मस्तु 'संस्रवं' जुहुत्विप्नम्। 'सा' पत्नी संस्रवेणाज्येन 'अक्षस्य' 'सन्तापं' सन्तप्यते चक्रसङ्घर्षणेति सन्तापः, चक्रवलयसंस्पर्शप्रदेशः। चक्रद्वयम् 'उपानक्ति' अनुलोमाञ्जनं कुर्यात्, न प्रतिलोमम्। पुनः पाणि मावर्त्तयेत्। तथा च कात्यायनः— "पत्नी पाणिभ्यां शेषं प्रतिगृह्याक्षधुरावनक्ति पराग् देवश्रुताविति"-इति[३]॥

आञ्जनमन्त्रस्याय मर्थः[४]— हे 'देवश्रुतौ'! देवान् श्रावयत इति देवश्रुतौ, अक्षयोराधारप्रदेशौ। युवां 'देवेषु' मध्येऽस्मान् 'आघोषतम्' ते सम्यग् यजन्तीति शब्दं कुरुतम्॥

---

१— का० श्रौ० सू० ८. ३. ३१।

२— पाठस्त्वस्य— वा० सं० ५. १५. १।

३— का० श्रौ० सू० ८. ३. ३२।

४— मन्त्रस्त्वेषः— वा० सं० ५. १७. १।

"पर्य्याणयन्ती सुभौ जघनेनाग्नी"–इति। दक्षिणहविर्द्धानाञ्जनानन्तरं प्रादक्षिण्यक्रमेण उभौ 'जघनेन' आहवनीयगार्हपत्ययोः पश्चाद्भागेन पत्नीं 'पर्य्याणयन्ति' परितो गमयन्ति ॥ १ ३ ॥

"चतुर्गृहीत माज्य मिति। प्रतिप्रस्थाता उत्तरहविर्द्धानस्य दक्षिणवर्त्तन्यां 'हिरण्यं निधाय' "इरावती"–इति[1]मन्त्रेण 'चतुर्गृहीत माज्यं' जुहुयात्[2] ॥

मन्त्रस्याय मर्थः— "हे द्यावापृथिव्यौ! युवां 'मनवे' मनुष्याय यजमानाय 'इरावती' अन्नवत्यौ, 'धेनुमती' बहुधेनुयुक्ते च 'भूतम्' भवतम्। तथा 'सूयवसिनी' शोभनघासयुक्ते, 'दशस्या' दशस्यौ, अभिमतफलदात्र्यौ भवतम्। एवं महानुभावे एते रोदस्यौ हे 'विष्णो!' त्वं 'व्यस्कभ्नाः' विविधं स्कम्भितवानसि। तथा विशेषेण 'पृथिवीम्' 'अभितः' सर्वतः 'मयूखैः' मयूखवत्सन्ततैर्जोर्वैस्तेजोभिर्वा, 'दाधर्थ' धारयसि। तादृशाय तुभ्यम् इद मुत्तरहविर्द्धान-दक्षिणचक्रमार्गे हूयमान मन्नं 'स्वाहा' सुहुत मस्तु ॥

संस्रव मित्यादि पूर्ववत्। "तद्यदेव जुहोतीति। 'यद्' यदा एवं वर्त्मद्वये जुहोति, 'तत्' तदा 'संस्रवं' 'पत्न्यै' पत्न्याः 'पाणौ' इति पूर्वेण सम्बन्धः ॥ १ ४ ॥

विहितं मार्गहोमं रक्षसां मार्गानुगमनपरिहारसाधनत्वेन प्रशंसति— "देवा ह वै यज्ञं तन्वाना इत्यादिना। आज्यस्य यज्ञस्य असक्तत् नियात्यचेति नियानो मार्गः। स्पष्ट मन्यत्। मन्त्र-

---

१— वा० सं० ५. १६. १। २ — का० श्रौ० सू० ८. ३. ३५।

योर्विष्णुदेवताकत्वं हविर्द्धानयोरुचित मित्याह— "तद्यद्वैष्णवीभ्या मिति। हविर्द्धानस्य वैष्णवत्वं "शिर एवास्य हविर्द्धान मित्य-चोक्तम्[1] ॥ १५ ॥

"अथ यत् पत्न्यक्षेत्यादि। सन्ताप्यमानस्याक्षस्योपाञ्जन मेव प्रजननोत्पादनम्। यस्मात् स्त्रीपुरुषयोः सम्भोगकाले सन्तापेन रेतस उत्पादनद्वारा प्रजननसम्भवस्तस्मात् सन्तापोपाञ्जनकरणम्। उपा-ञ्जनस्य पराग्रूपतां विधाय प्रशंसति— "पराग्रुपानक्तीति ॥ १६ ॥

"अथ वाचयतीति[2]। 'अथ' प्रेषानन्तरं हविर्द्धानयोः प्रवर्त्तन-काले 'वाचयति'। मन्त्रस्याय मर्थः[3]— हे हविर्द्धाने। 'प्राची' प्रागञ्चने प्रगच्छतम् 'अध्वरं' सोमयागं 'कल्पयन्ती' फलजननसमर्थं कर्त्तुं शक्ते। 'यज्ञं' सोमयागम् 'ऊर्द्धं' स्वर्गलोकं 'नयतम्' प्राप-यतम्। 'मा जिह्वरतम्' चलनभ्रंशं मा कुरुतम् ॥

"अध्वरो वै यज्ञ इति। "ध्वरतिर्हिंसाकर्मा[4]।" हिंसा नास्ती-त्यध्वरः स 'यज्ञः'। नयत मित्युक्ते किमिति कर्मापेक्षायां तद् दर्शयति— "ऊर्द्ध मिमं यज्ञं देवलोकं नयत मिति। ह्वला चल-नम्[5], तदभावः 'अह्वला'। तयोः प्रवर्त्तनकाले 'समुद्गृह्येव' सम्यगुद्धृतं गृहीत्वेव। तस्य व्याख्यानम्— "यथा नोत्सर्जता मिति।

---

१— द्वितीयकण्डीभाष्यं द्रष्टव्यम् (३१२ पृ०)।

२— का० श्रौ० सू० ८. ४. १।

३— वा० सं० ५. १७. २।

४— निरु० १. ३. ३।

५— "ह्वल ह्मल चलने"—इति भ्वा० प० ८०५ धा०।

दुष्टध्वनिविसर्गो यथात्यन्तकर्षणे च नोत्पद्येता मित्यर्थः। अत्रध्वनेः श्रवणकटुत्वादसुर्यत्वम् ॥ १७ ॥

"एतद् वाचयेदिति[1]। प्रमादात् ध्वन्युत्पत्तौ "स्वं गोष्ठम्"-इति[2] 'एतद् वाचयेत्'। हे 'देवी' हविर्द्धाने! हे 'दुर्ये' गृहेषु साधुरूपे! युवां 'स्वं' यजमानस्य स्वभूतं 'गोष्ठं' गवां स्थानम् 'आवदत' सर्वतः शब्दयतम्, पशवः समृद्धाः स्युरिति ब्रूत मित्यर्थः। 'आयुः' अस्मदायुषं 'मा' 'निर्वाधिष्टम्'। 'प्रजां' पुत्रादिरूपां च 'मा निर्वाधिष्टम्'। 'तस्य' ध्वनेरसुर्यस्य 'एषा' मन्त्रोच्चारण-रूपा 'प्रायश्चित्तिः' ॥ १८ ॥

हविर्द्धानयोः स्थापनप्रदेशे पक्षान्तर मभिधातुं केषाञ्चित् पक्ष माह— "तदाङ्गुरिति। 'उत्तरवेदेः' पश्चात् सञ्चराय, विक्रमत्रयं परित्यज्य, यत्र देशे तयोः स्थापनं भवति, 'सा हविर्द्धानयोर्मात्रा' स्थापनप्रदेशप्रमाणम्। स्वपक्ष माह— "नात्रेति। तत्र स्थापयेदिति शेषः। "मनसा यत्र मन्येतेति विशिनष्टि— "नाहैवेति। 'सत्रा' अभिमतदेशेऽपि अतिदूर मतिसमीपञ्च विसृज्य मध्ये स्थापयेदि-त्यर्थः। तथा च कात्यायनः— "पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्या वा"-इति[3] ॥ १९ ॥

"ते अभिमन्त्रयत इति। स्थापनानन्तरं हविर्द्धाने अभिमन्त्र-येत— "अत्र रमेथा मिति[4]। 'पृथिव्ये' पृथिव्याः 'वर्ष्मणि' शरीरे, अत्र देशे हविर्द्धाने, 'रमेथाम्' रतिं कुरुतम्। "दिवि ह्यस्येति।

---

१— का० श्रौ० सू० ८. ४. ४।  २— वा० सं० ५. १७. ३।

३— का० श्रौ० सू० ८. ४. ५।  ४— वा० सं० ५. १७. ४।

एतद्धविर्द्धानस्य पृथिवीत्वे हेतुः। यस्मात् उपरिभाग उत्तरवेदि-रूपः, 'आहवनीयः' द्युलोकस्थानीयः, अतस्तदधोवर्त्तिवेदिदेशस्य पृथिवीशरीरत्वं युज्यते। 'नभ्यस्थे करोति' यथा नाभ्याधारफलके भूमिष्ठे भवतः, तथा कुर्यात्। "नाभि नभं च"-इति[१] यत्प्रत्यय-योगे नभादेशः। उत्तरत्र प्रदेशस्य भूस्पर्शे भ्रंशः कदाचित् भवेत्, अत एव 'तत्' 'क्षेमस्य रूपम्' भवति ॥ २० ॥

"अथोत्तरेण पर्य्येत्येति[२]। दक्षिणहविर्द्धानस्योत्तरतः 'परीत्य' पुरोदेशं गत्वा 'दक्षिणं हविर्द्धानम्' 'उपस्तभ्नाति'। यथाधो न पतेत्, तथा कस्मिंश्चित् काष्ठे स्थापयेत् ॥

तन्मन्त्रः— "विष्णोर्नु कम्"-इति[३] 'विष्णोः' त्रिविक्रमावतारस्य 'वीर्याणि' 'प्रवोचम्' प्रब्रवीमि। कानि तानि? तदुच्यन्ते— 'यः' विष्णुः 'पार्थिवानि' पृथिवीविकारान्, 'रजांसि' "लोका रजां-स्युच्यन्ते"-इति निरुक्तम्[४], लोकान् विविधं परिच्छिन्नवान्। 'यः' च 'उत्तरम्' उपरितनं 'सधस्थं' सहस्थानं द्युलोकम् 'अस्कभायत्' स्तम्भितवान्। किं कुर्वन्? 'त्रेधा' त्रिप्रकारेण 'विश्वं' 'विचक्रमाणः' विविधं क्रममाणः सन्, 'उरुगायः' बहुभिर्महात्मभिः, बहुविधं वा श्रुत्यादिमुखेन गीयमानः। यो विष्णुरेव मकरोत्, तस्य वीर्याणि प्रवोचम् इति ॥

---

१— पा० ५. १. २ सू० ८५ ग० सू०।
२— का० श्रौ० सू० ८. ४. ६।
३— वा० सं० ५. १८. १।
४— निरु० ४. ३. ३।

"विष्णवे त्वेति[1] मेथी मुपहन्तीति[2]। हे 'मेथी' स्तम्भ! 'विष्णवे' हविर्द्धानशकटाय 'त्वा' त्वाम् उपहन्मीत्यर्थः। कस्मिन् देशे निहन्यादिति, त माह— "इतरतस्ततो यदु च मानुषे"-इति। 'मानुषे' शकटधारणे 'यत्' स्थानम् ईषाग्रभागः, तदुत्तरत्र 'मेथीं' स्तम्भं निहन्यादित्यर्थः। तथा च सूत्रकार उभयोरपि दक्षिणतो निहननस्येदं ब्राह्मणवाक्यं प्रमाणयामास— "उभे वा दक्षिणतः, इतरतस्ततः, यदु च मानुष इति श्रुतेः"-इति[3] ॥ २१ ॥

"अथ प्रतिप्रस्थातेति[4]। दक्षिणहविर्द्धानोत्तम्भनमन्त्रस्याय मर्थः[5]— हे 'विष्णो!' 'दिवः' द्युलोकात् 'वा' अथवा 'पृथिव्याः' सकाशात् हे 'विष्णो!' 'महः' महतो गुणात्, 'उरोः' विस्तीर्णात् 'अन्तरिक्षात्' उभौ हस्तौ तावकौ 'वसुना' धनेन 'पृणस्व' पूरयत। ततो 'दक्षिणात्' हस्तात्, अपि चोत्तराच्च 'आ' सर्वतः 'प्रयच्छ' पूर्णं वसु यजमानार्थम् ॥

"विष्णवे त्वा"—इति[6] उत्तरहविर्द्धानस्य मेथीं प्रतिप्रस्थाता उपहन्यात्[7]। "इतरतस्तत इति पूर्ववत्[8] ॥ २२ ॥

---

१—वा० सं० ५. १८. २।

२— का० श्रौ० सू० ८. ४. ७।

३— का० श्रौ० सू० ८. ४. १०–१२।

४— का० श्रौ० सू० ८. ४. ८।

५— तत्पाठस्त्वेषः— वा० सं० ५. १९. १।

६— वा० सं० ५. १८. २।

७— का० श्रौ० सू० ८. ४. ९।

८— एकविंशकण्डी (३ पं० ) द्रष्टव्या।

"अथ मध्यमं छदिरित्यादि[1]। "तयोः समन्वृत्तयोश्छदिरधि-निदधातीति। छदिः प्रागुक्तम्[2]। तत् 'उपस्पृश्य' "प्र तद्विष्णुः"-इति[3] वाचयेत् ॥

तस्यार्थः— 'विष्णुः' 'वीर्येण' वीरस्य कर्म वीर्यम्, तेन निमित्तेन 'प्रस्तवते' प्रस्तूयते। वीर्येण स्तूयमाने दृष्टान्तः— "मृगो न इति। 'कुचरः' कुत्सितं हिंसन् सञ्चरन् 'भीमः' सर्वप्राणिभीतिजनकः, 'गिरिष्ठाः' गिरिस्थायी, 'मृगो न' सिंहतुल्यः। 'यस्य' विष्णोः, 'उरुषु' लोकत्रयव्यापकत्वेनातिविस्तृतेषु 'त्रिषु' 'विक्रमणेषु' 'विश्वा' सर्वाणि 'भुवनानि' लोकाः 'अधिक्षियन्ति' अधि-निवसन्ति ॥

अथवा ब्राह्मणानुसारेणायं मन्त्रोऽधियज्ञपरतया व्याख्येयः। 'विष्णुः' हविर्द्धानाख्यः, तस्य यत् उपरि वर्त्तमानं मध्यमं छदि-रस्ति, तत् स्तूयत इत्यर्थः। उत्तरवेदेः प्रत्यक् त्रिषु विक्रमेष्वतीतेषु निधीयमानस्य यस्य उपरि शीर्षकपालस्थानीयं मध्यमं छदि-रस्ति, तस्य 'अधि' उपरि सर्वतो विश्वा भुवनानि भवन्तीति। भुवनानि उपरि शीर्षकपालस्थानानि अन्यानि छदींषि क्षियन्ति निवसन्ति ॥

अधिक्षियन्तीत्येतं मन्त्रभागं व्याचष्टे— "इदं हैवास्यैतच्छीर्ष-कपाल मित्यादिना ॥ २३ ॥

---

१— का० श्रौ० सू० ८. ४. १२।

२— नवम्यां कण्डिकायां ( ३१४ पृ० ८ पं० ) द्रष्टव्यम्।

३— वा० सं० ५. १०. १।

"अथ रराट्या मुपस्पृश्येति[१] । 'रराट्यां' रराटी मित्यर्थः । 'अस्य' हविर्द्धानस्य 'एतत्' रराट्याख्य मङ्गं ललाटं खलु 'अथ' अतः 'उच्छ्राय्य', द्वारशाखे द्वारस्योभयपार्श्ववर्त्तिनी तृणादिनिर्मिते प्रावरणे, तौ 'उपस्पृश्य' 'वाचयति'— "विष्णोरिति[२] । 'विष्णोः' हविर्द्धानस्य 'श्नप्त्रे' सृक्किणी, ओष्ठसन्धी[३] 'स्थः' भवथः । श्नप्त्र-शब्दार्थ माह— "सृक्के हैवास्यैते इति । पश्चाच्छदिषः स्थानं प्रशंसति— "अथ यदिदं पश्चाच्छदिरिति । 'इदं पश्चाच्छदिः' हविर्द्धानाख्यस्य यज्ञशिरसः पश्चात्, कपालस्थानीय मित्यर्थः ॥

अत्र मध्यच्छदिष उपरिगतानि त्रीण्यपि छदींषि उदगग्राणि कर्त्तव्यानि ; त्रयाणा मपि प्रागग्रीकरणे पश्चाच्छदिरिति श्रूयमाणं पश्चादित्युक्तं न युज्यते । तथाच कात्यायनः— "उदगग्राणि छदींषि भवन्ति पश्चाच्छ्रुतेरिति[४] ॥ २४ ॥

"अथ लस्पूजन्या स्यन्द्यया प्रसीव्यतीति[५] । 'लस्पूजनी'-नाम सीवनसाधनसूच्यादिः, तत्र सम्बद्धया रज्ज्वेत्यर्थः । द्वारशाखां दर्भै-रावेष्ट्य, रज्ज्वा "विष्णोः स्यूरसि"—'इति' मन्त्रेण[६] सीव्येत् । हे द्वार्ये ! यद्वा हे रज्जो ! त्वं 'विष्णोः' हविर्द्धानस्य 'स्यूः' स्यूतप्रदेशः 'असि' । हे ग्रथ्यमानप्रदेश ! त्वं विष्णोः हविर्द्धानस्य 'ध्रुवः' अप्रच्यु-तावयवः 'असि'[७] । अतस्त्वां ग्रथ्नामीत्यर्थः[८] ॥

---

१— का० श्रौ० सू० ८. ४. १५ ।
२— वा० सं० ५. २१. १ ।
३— 'ओष्ठ सन्धी'–इति क ।
४— का० श्रौ० सू० ८. ४. १७ ।
५— का० श्रौ० सू० ८. ४. १८ ।
६— वा० सं० ५. २१. २ ।
७— वा० सं० ५. २१. ३ ।
८— का० श्रौ० सू० ८. ४. १९ ।

ग्रन्थिकरणप्रयोजन माह— "नेद् व्यवपद्याता इतीति । अवाग् विविधं नैव पतेदित्येव मर्थ मित्यर्थः । 'तं' ग्रन्थिं 'कर्मन्' कर्मणि 'प्रकृते' प्रकर्षेण कृते परिसमाप्ते 'विष्यति' विमुञ्चेत्[1] । तत ऊर्द्ध्व मपि बन्धने सति तदपराधेन 'अध्वर्यु' 'यजमानं' च 'ग्राहः' गृह्णाति, विश्लेषे सति स न भवतीत्यर्थः । "निष्ठित मभिम्लृशति वैष्णव मसीतीति[2] । 'निष्ठितं' सीवनेन सुनिष्पन्नम्[3] । स्पष्ट मन्यत् ॥ २५ ॥ ३ [५. ३.]

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम्. )

इयं वा ऽअभ्युपरवाः खायन्ते*। शिरो वै यज्ञस्य हविर्द्धानं तद् य ऽइमे शीर्षंश्चत्वारः कूपा ऽइमावह द्वाविमौ द्वौ तानेवैतत्करोति तस्मादुपरवान् खनति ॥१॥

---

१— का० श्रौ० सू० ८. ४. २० ।

२— का० श्रौ० सू० ८, ४. २१ ।

३— मन्त्रस्त्व— वा० सं० ५. २१. ४ ।

* 'ख्यायन्ते'–इति ख, ग ।

देवाश्च वा ऽअसुराश्च । उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा एषु लोकेषु कृत्यां व्वलगान्निचख्नुरुतै-वञ्चिद्देवानभिभवेमेति ॥ २ ॥

तद्वै देवा ऽअस्पृखत । त ऽएतैः कृत्यां व्वलगानुदख-नन्यदा वै कृत्या मुत्खनन्त्यथ सालसा मोघा भवति तथो ऽएवैष एतद्यद्यस्मा ऽअत्र कश्चिद् द्विषन् भ्रातृव्यः कृत्यां व्वलगान् निखनति तानेवैतदुत्किरति तस्मादु-परवान् खनति स दक्षिणस्य हविर्द्धानस्याधोऽधः प्रउगं खनति ॥ ३ ॥

सोऽभ्रि मादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्या माददे नार्य्यसीति समान एतस्य यजुषो बन्धुर्य्योषो वा ऽएषा यदभ्रिस्तस्मादाह नार्य्यसीति ॥ ४ ॥

तान् प्रादेशमात्रं व्विना परिलिखति । इदु मह॑ रक्षसां ग्रीवा ऽअपि कृन्तामीति व्वज्रो वा ऽअभ्रिर्व्वज्रेणै-वैतन्नाष्ट्राणा॑ रक्षसां ग्रीवा ऽअपि कृन्तति ॥ ५ ॥

तद्यावेतौ पूर्व्वौ । तयोर्द्दक्षिण मेवाग्रे परिलिखेदथा-परयोरुत्तर मथापरयोर्द्दक्षिण मथ पूर्व्वयोरुत्तरम् ॥ ६ ॥

अथो ऽइतरथाहुः । अपरयोरेवाग्र ऽउत्तरं परिलिखे-दथ पूर्व्वयोर्द्दक्षिण मथापरयोर्द्दक्षिण मथ पूर्व्वयोरुत्तर

मित्यथो ऽअपि समीच एव परिलिखेदेतं त्वेवोत्तमं परिलिखेद्य एष पूर्वयोरुत्तरो भवति ॥ ७ ॥

तान् यथापरिलिखित मेव यथापूर्व्वं खनति । बृहन्नसि बृहद्रवा इत्युपस्तौत्येवैनानेतन्महयत्येव यदाह बृहन्नसि बृहद्रवा इति बृहती मिन्द्राय व्वाचं व्वदेतीन्द्रो वै यज्ञस्य देवता व्वैष्णवꣳ हविर्द्धानं तत् सेन्द्रं करोति तस्मादाह बृहती मिन्द्राय व्वाचं व्वदेति ॥ ८ ॥

रक्षोहणं व्वलगहन मिति । रक्षसाꣳ ह्येते व्वलगानां व्वधाय* खायन्ते व्वैष्णवी मिति व्वैष्णवी हि हविर्द्धाने व्वाक्† ॥ ९ ॥

तान् यथाखात मेवोत्किरति । इद महं तं व्वलग मुत्किरामि यम्मे निष्ट्यो य ममात्यो निचखानेति निष्ट्यो वा वा ऽअमात्यो वा कृत्यां व्वलगान् निखनति तानेवैतदुत्किरति ॥ १० ॥

इद महं तं व्वलग मुत्किरामि । यम्मे समानो य मसमानो निचखानेति समानो वा वा ऽअसमानो वा कृत्यां व्वलगान् निखनति तानेवैतदुत्किरति ॥ ११ ॥

इद महं तं व्वलग मुत्किरामि । यम्मे सम्बन्धुर्य्यं

---

* ‘बधाय’–इति घ । † ‘व्वाक्’–इति ग, घ ।

मसम्बन्धुर्निचखानेति सबन्धुर्व्वा वा ऽसबन्धुर्व्वा कृत्यां व्वलगान् निखनति तानेवैतदुत्किरति ॥ १२ ॥

इदमहं तं व्वलग मुत्किरामि। यम्मे सजातो यमसजातो निचखानेति सजातो वा वा ऽसजातो वा कृत्यां व्वलगान् निखनति तानेवैतदुत्किरत्युत कृत्यां किरामीत्यन्तत उद्वपति तत् कृत्या मुत्किरति ॥ १३ ॥

तान् बाहुमात्रान् खनेत्। अन्तो वा ऽएषोऽन्तेनैवैतत् कृत्यां मोहयति तानक्ष्णया सन्तृन्दन्ति यद्यक्ष्णया न शक्नुयादपि समीचस्तस्मादिमे प्राणाः परः सन्तृण्णाः ॥ १४ ॥

तान् यथाखात मेवावमर्शयति। स्वराडसि सपत्नहा सत्रराडभिमातिहा जनराडसि रक्षोहा सर्व्वराडस्यमित्रहेत्याशीरेवैषैतस्य कर्मण ऽआशिष मेवैतदाशास्ते ॥ १५ ॥

अथाध्वर्युश्च यजमानश्च सम्मृशेते। पूर्व्वयोर्दक्षिणे* ऽध्वर्युर्भवत्यपरयोरुत्तरे यजमानः सोऽध्वर्युः पृच्छति यजमान किमत्रेति भद्र मित्याह तन्नौ सहेत्युपांश्वध्वर्युः† ॥ १६ ॥

---

* 'णो'–इति ख।

† 'र्युः'–इति ग, घ।

अथापरयोर्द्दक्षिणेऽध्वर्युर्भवति। पूर्व्वयोरुत्तरे यजमानः स यजमानः पृच्छत्यध्वर्यो किं मत्रेति भद्र मित्याह तन्म इति यजमानस्तद्युदेवुꣳ सम्मृशेते प्राणानेवैतत् सयुजः कुरुतस्तस्मादिमे प्राणाः परः संविद्रेऽथ यत्पृष्टो भद्र मिति प्रत्याह कल्याण मेवैतन्मानुष्यै व्वाचो व्वदति तस्मात् पृष्टो भद्र मिति प्रत्याहाथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यानेवैतत्करोति ॥ १७ ॥

स प्रोक्षति। रक्षोहणो वो व्वलगहन इति रक्षोहणो ह्येते व्वलगहनो ह्येते प्रोक्षामि व्वैष्णवानिति व्वैष्णवा ह्येते* ॥ १८ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते। ता ऽअवटेष्ववनयति तद्या ऽइमाः प्राणेष्वापस्ता एवैतद्दधाति तस्मादेषु प्राणेष्विमा ऽआपः ॥ १९ ॥

सोऽवनयति। रक्षोहणो वो व्वलगहनो ऽवनयामि व्वैष्णवानित्यथ बर्हीꣳषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति तद्यानीमानि प्राणे†षु लोमानि तान्येवैतद्दधाति तस्मादेषु प्राणे‡ष्विमानि लोमानि ॥ २०॥

---

* 'ह्येते'–इति ग, घ। †, ‡ 'प्राणे'–इति घ।

सोऽवस्तृणाति। रक्षोहणो वो व्वलगहनोऽवस्तृणामि व्वैष्णवानित्यथ बर्हीᳫंषि तनूनीवोपरिष्टात् प्रच्छादयति केशा हैवास्यैते* ॥ २१ ॥

अथाधिषवणे फलके ऽउपदधाति। रक्षोहणौ वां व्वलगहना ऽउपदधामि व्वैष्णवी ऽइति हनू हैवास्यैते ऽअथ पर्यूहति रक्षोहणौ वां व्वलगहनौ पर्यूहामि व्वैष्णवी ऽइति हᳫंहत्येवैने ऽएतदशिथिले करोति॥ २२॥

अथाधिषवणं परिकृत्तं भवति। सर्व्वरोहितं जिह्वा हैवास्यैषा तद्यत् सर्व्वरोहितं भवति लोहिनीव हीयं जिह्वा तन्निदधाति व्वैष्णवमसीति व्वैष्णवᳫं ह्येतत्† ॥ २३ ॥

अथ ग्राव्ण उपावहरति। दन्ता हैवास्य ग्रावाणस्त-द्यद् ग्रावभिरभिषुण्वन्ति यथा दद्भिः प्सायादेवं तत्तान् निदधाति व्वैष्णवा स्थेति व्वैष्णवा ह्येत ऽएतद् यज्ञस्य शिरः सᳫंस्कृतम्‡ ॥ २४ ॥ ४ ॥

॥ इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् [ ५.४. ] ॥

---

* 'ते'–इति ग, घ। † 'ह्येतत्'–इति ग, घ।

‡ 'संस्कृतम्'–इति क, ख।

सोमाभिषवायोपरवाणां[१] खननं विवक्षुः खननस्योभयार्थता माह— “द्वयं वा इति। प्रयोजनद्वय मभिलक्ष्य खायन्त इत्यर्थः। प्रथमं प्रयोजन माह— “शिरो वै यज्ञस्येति। यस्मात् शिरसि ‘चत्वारः कूपाः’ कर्णच्छिद्रे द्वे, नासिकाच्छिद्रे द्वे, इति ‘चत्वारः’ ‘कूपाः’ कूपवन्निम्नप्रदेशाः। ‘इमौ’-इति अभिनयोक्तिः। हविर्द्धानस्यापि यज्ञशिरोरूपत्वात् तत्र चतुरः ‘उपरवान्’ खनेत्[२] ॥ १ ॥

द्वितीयं प्रयोजन माह— “देवाश्च वा असुराश्चेति। द्वेष्यवधार्थं भूमौ स्थापिताः कृत्याविशेषाः ‘वलगाः’, तान् निखातवन्तः। ‘उत’ ‘एवञ्चित्’ एव मपि युद्धेनाशक्नुवन्तः। अनेनाप्युपायेन ‘देवान् अभिभवेम’-‘इति’ तेषा मभिप्रायः॥ २ ॥

“तद्वै देवा अस्पृण्वतेति। ‘तत्’ असुरैः कृतं खननाख्यम् ‘अस्पृण्वत’ देवा तदुत्खननेन हिंसितवन्तः। हिंसाप्रकार माह— “त एतैरिति। ‘एतैः’ उपरवैः। ‘अथ’ कृत्योत्खननानन्तर मेव ‘सा’ कृत्या ‘अलसा’ स्वव्यापारं हननं कर्त्तु मसहमाना, अतएव ‘मोघा’ व्यर्था भवति। यथा देवेषु, एवं मनुष्येषु अयं कृत्यापरिहारोपाय इत्याह— “तद्यो एवैष एतदिति। खननप्रदेश माह— “स दक्षिणस्य हविर्द्धानस्येति। ईषाद्वयसंयोजनप्रदेशः

---

१— “उपरवा नाम कूपकाः, तेषां चोपरि अधिषवणफलके निधीयेते, तयोरुपरि अधिषवणचर्म्म, तत्र सोमोऽभिषूयते, तस्मिन् ग्रावभिर्हन्यमाने वादित्रोदरवत् सुषिरास्ते कूपा गम्भीर मुपरवन्तीत्युपरवा इत्यभिधीयन्ते”–इति या० दे० ( का० श्रौ० ८. ४. २५. )।

२— का० श्रौ० सू० ८. ४. २५।

'प्रउगम्'[1], तस्य 'अधोऽधः' सन्निहिताधःपदे । 'अधोऽधः'-शब्द-योगात् प्रउग मिति द्वितीया[2] ॥ ३ ॥

खननायाभ्र्यादानं समन्त्रकं विधत्ते— "सोऽभ्रि मादत्त इति[3] । "देवस्य त्वा"-इति[4] । "नार्यसि"-इति[5] मन्त्रान्तरम् । नरस्यापत्यं स्त्री 'नारी' । हे अभ्रे ! त्वं नारी असि । इत्यपि स्तुतिः । यत् प्राक् "देवस्य त्वा"—इत्यस्य ब्राह्मण मुक्तम्, तदत्रातिदिशति— "समान एतस्य बन्धुरिति । 'एतस्य' यजुषः, देवस्य त्वेत्यस्य यजुर्मन्त्रस्येत्यर्थः । आदीयमानाया अभ्र्याः[6] स्त्रीत्वान्मन्त्रे नारीशब्देनाभ्रिरभिहितेत्याह— "योषा वा एषेत्यादि ॥ ४ ॥

तान् प्रादेशमात्रं विलेति[7] । मध्ये-मध्ये प्रादेशमात्रान्तरालं विहाय समचतुरस्रे खननप्रदेशे चतुरोऽवटान् प्रादेशमात्रान् परिलिखेदित्यर्थः । "इद मह मिति लेखनमन्त्रः[8] ॥ ५ ॥

अवटखनने द्वौ प्रकारौ,— अद्धया सम्यक् चेति । अद्धयापि द्विविधोपपद्यते, तत्रैकं प्रकार माह— "तद्यावेतौ पूर्वौ तयोर्दक्षिण मेवाग्र इत्येवमादिना । वायव्याग्नेयनैर्ऋतेशानक्रमेणेत्यर्थः[9] ॥ ६ ॥

---

१— "प्रउगं प्रामयुग मीषासङ्गमादपरार्द्धम्"–इति या० दे० ।

२— पा० सू० १. ३. २. वा० ३ ।

३— का० श्रौ० सू० ८. ५. १ ; ६. २. ८ ।

४— वा० सं० ५. २२. १ ।  ५— वा० सं० ५. २२. २ ।

६— "आहरन्त्यनया मृद मित्यभ्रिः खनित्रम्"–इति या० दे० ।

७— का० श्रौ० सू० ५. ८. ६ ।  ८— वा० सं० ५. २२. ३ ।

९—उपरिष्टाच्चतुर्दशी कण्डी (३३५ पृ०) द्रष्टव्या ।

स्वकीयं सम्यक् परिलेखनपक्ष माह— "अथो इतरथाङ्करिति। "अथो अपि समीच एवेति। आग्नेयादिप्रादक्षिण्यक्रमेणेत्यर्थः[1] ॥ ७ ॥

य एष पूर्वयोरुत्तरः, त मुत्तरं कुर्यादित्यभिधानात् खनन मपि परिलेखनक्रमेण कर्त्तव्य मित्याह— "तान् यथा परिलिखित मेवेति[2] । तत्र मन्त्रः— "बृहन्नसीति[3] । हे अवट ! त्वं 'बृहन्' स्वरूपतो महान् 'असि' । तथा 'बृहद्रवाः' प्रभूतध्वनिरसि । अतो 'बृहतीं' महतीं 'वाचम्' 'इन्द्राय' इन्द्रार्थम्, सोमस्येन्द्रार्थत्वात् उपरवखननस्य स्तुतिकरीं वाचं 'वद' शब्दय ॥

पुनर्वाग् विशेष्यते—'रक्षोहणम्' । हन्तेः "बहुलं छन्दसि"-इति[4] क्विप् । रक्षांसि हन्ति, तादृशीम् । 'वलगहनं' वलगान् हन्तीति वलगहा, तां वलगहनम् । 'वैष्णवीम्' विष्णुदेवत्यां वाचम् । वदेति सम्बन्धः ॥

मन्त्रं चतुर्द्धा विभज्य व्याचष्टे— "बृहन्नसि बृहद्रवा इत्युपस्तौत्येवैनानित्यादिना । प्रत्यक्षतो बृहत्त्वबृहद्रवत्वयोः प्रतीतेरुपस्तुत्यभिधान मित्यर्थः । सा च किमर्थेत्यत आह— महयत्येवेति । "इन्द्रो वा इत्यादि । "इन्द्राय"—इत्यभिधानेनान्यदेवताकस्य हविर्द्धानस्योपरवाधारभूतस्य सेन्द्रत्वं कृतवान् भवतीत्यर्थः। "रक्षोहण मित्यादि[5] । स्पष्टम् ॥ ८, ९ ॥

---

१— का० श्रौ० सू० ८. ५. २—५ ।

२— का० श्रौ० सू० ८. ५. ७ । ३— वा० सं० ५. २२. ४ ।

४— पा० सू० ३. २. ८८ ।

५— वा० सं० ५. २३. १ । पूर्वमन्त्रशेष एषः ।

खाताया मृद उद्वपनेऽपि खननक्रम एवेत्याह— "तान् यथाखात मेवेति[१]। चतुर्णां खातानां चत्वारो मन्त्राः[२]। "यं मे निष्ट्यो य ममात्यो निचखान"—'इति' प्रथमगर्त्ते। "यं मे समानो य मसमानः"—इति द्वितीये। "यं मे सबन्धुर्य मसबन्धुः"—इति तृतीये। "यं मे सजातो य मसजातः"—इति चतुर्थे। "इद महं तं वलग मुत्किरामि"—इति, "निचखान"—इति च सर्वशेषः॥

'इदं' मृदुत्करणप्रकारेणाहृतम्, निष्ट्येनामात्येन वा खातम्, वलगकृत्याविशेषम्, मृद्धाचेपेण 'उत्किरामि' ऊर्द्धं प्रक्षिपामि। 'तम्'-इत्युक्तम्, क मित्याह—"य मित्यादि। 'निष्ट्यः' अस्मत्तो नीचः। "सनाभिर्यस्य निष्ट्यः"-इत्यादिमन्त्रवर्णात्[३] नीचार्थता 'निष्ट्य'-शब्दस्य। 'अमात्यः' सहवर्त्तमानः। 'अमा'-शब्दः सहवचनो गृह-वचनो वा, तत्र भवोऽमात्यः। "अव्ययात् त्यप्[४]", एकगृहवासी-त्यर्थः। तयोरेव कलहस्य सम्भावितत्वात्। सहोत्पन्नो वा। निखा-तवान्। त मुत्किरामीति सम्बन्धः। "निष्ट्यो वेत्यादि प्रथमस्यो-त्किरणम्। निष्ट्यामात्ययोर्वलगोत्किरणरूप मित्यर्थः। समानः सदृशः बन्धुः 'सबन्धुः', समानबन्धनः। एकस्मिन्नेव विषये व्यापार-वानित्यर्थः। 'सजातः' सहोत्पन्नः। स्पष्ट मन्यत्॥ १०—१३॥

खननस्य प्रमाण माह— "तान् बाहुमात्रानिति[५]। अङ्गुलि-प्रादेशाद्यपेक्षया बाहुप्रमाणस्य अन्तत्वात्, ततोऽधिकात् प्रदेशात्

---

१— का० श्रौ० सू० ८.५.८। २— वा० सं० ५.२३.२, ३, ४, ५।
३—ऋ० सं० १०.१३३.५ (६.७५.१९)।
४— पा० सू० ४.२.१०४। ५— का० श्रौ० सू० ८.५.१०।

मृदुद्धरणस्याशक्यत्वात् बाहुमात्रस्यान्तत्वम् । छिद्राणां मन्त्रप्रदेश-सन्तर्द्दनं तत्प्रकारं च विधत्ते— "तानह्णया सन्तृन्दन्तीति"[1] । पूर्वयोर्दक्षिणस्यापरयोरुत्तरस्य चान्तरालदेशम् । अनेनावशिष्टयोरप्युक्तं भवति । "अपि समीच इति"[2] । वक्रस्याशक्यत्वे समीचेवाभिन्द्यात् । "तस्मादिति । अर्थवादः पक्षद्वयसाधारणः । यस्मादेतेऽन्तःसन्तृणाः, 'तस्मात्' 'इमे' 'प्राणाः' मुखच्छिद्राणि अन्तःसन्तृणानि ॥ १४ ॥

तान् यथाखात मेवावमर्शयतीति । 'अवमर्शयति' अन्तःप्रदेशस्य निम्नोन्नतत्वपरिहाराय सम्मृशेत् । तन्मन्त्रचतुष्टयस्यार्थः[3]— स्वय मेव राजत इति वा, स्वकीय मेव राज्य मस्येति वा 'स्वराट्' । हे उपरव ! तादृक् त्वम् 'असि' । 'सपत्नहा' भव । अस्मानपि सपत्नस्य शत्रोर्हननेन स्वराजं कुर्विति भावः । 'सत्रा' सह, एकधा एकोद्योगेन राजत इति 'सत्राराट्' । अभितो हिंसकोऽभिमातिः, तस्य हन्ता 'अभिमातिहा' । सर्वेषु राजत इति 'सर्वराट्' । मितः सकाशात् त्राता 'मित्रः', अतथाभूतः 'अमित्रः'

---

१— का० श्रौ० सू० ८. ५. ११ । "अह्णयाशब्दोऽयं कर्णवचनः" । (अह्णा) अह्णया=वक्रमार्गेण, कौटिल्येन । उपरिष्टादप्यैवैव "अथ यदह्णयावद्यति"–इत्यादि ( ३. ८. ३. २७ ) । ऋ० सं० १. १२२. ६, ८. ७. ३५ । वा० सं० ५. १२ । उणादिः ३. १७ ।

२— का० श्रौ० सू० ८. ५. १२ । "अह्णया सम्भेदनाशक्तौ ऋजुभावेनैव सम्भिन्द्यात्"–इति तत्र या० दे० ।

३— चत्वारि यजूंषि औपरवाणि । वा० सं० ५. २४. १—४ ।

अत्र कात्यायनः— "स्वराडित्यवमर्शयति यथाख्यातं प्रतिमन्त्रम्"—इति[1] ॥ १५ ॥

"अध्वर्युश्च यजमानश्च सम्मृशेते"—इति[2] । 'सम्मृशेते' परस्परं हस्तसंस्पर्शं कुर्याता मित्यर्थः[3] । तयोर्दिशं व्यवस्थापयति— "पूर्वयोर्दक्षिणेऽध्वर्युः भवति, अपरयोरुत्तरे यजमानः"—इति। सोऽध्वर्युणा किं मत्र विद्यत इति पृष्टो यजमानो भद्र मिति प्रतिब्रूयात् । "तन्नौ सह"— 'इति' 'उपांशु' वदतोऽध्वर्योरय मभिप्रायः— यज्ञसंस्पृष्टं यद् यत् फलम्, तस्य सर्वस्य यजमानस्वामिकत्वात् उच्चैरभिधान मयुक्त मिति[4] ॥ १६ ॥

"अथापरयोर्दक्षिणेऽध्वर्युरिति[5] । पूर्वस्मिन् सम्मर्शनवाक्येऽध्वर्युः पृच्छेत्, अत्र तु यजमान इति विशेषः । यजमानस्य स्वामित्वेन स्वातन्त्र्यादध्वर्युदृष्टस्यापि भद्रस्य स्वद्रव्यत्वात् "तन्मे"— 'इति' ब्रूयात् । सम्मर्शनं प्राणसंयोगहेतुत्वेन प्रशंसति— "तद्यदेव मिति । सह युञ्जते इति 'सयुजः', अन्तरेकीभूतान् कृतवन्तौ भवतः। अत इदाजीन्तना मनुष्यशिरस्थाः प्राणाः 'संविद्रे' संविद्रते, सङ्गता

---

१— का० श्रौ० सू० ८. ५. १३ ।

२— का० श्रौ० सू० ८. ५. १४ ।

३— "अवमर्शनानन्तर मध्वर्युयजमानौ उपरवयोः स्वं स्वं दक्षिणं हस्तं प्रवेश्य अच्छाया सम्भेदनमार्गेण परस्परं सम्मृशेते संस्पर्शं कुर्वाते"—इति चात्र (का० श्रौ०) या० दे० ।

४— का० श्रौ० सू० ८. ५. १५–१८ ।

५— का० श्रौ० सू० ८. ५. १९, २०, २१ ।

भवन्ति। "लोपस्त आत्मनेपदेषु"—इति[1] 'त'-लोपः, "वेत्तेर्विभाषा"—इति रुट्[2]। 'भद्रम्'—'इति' प्रतिवदनं यदस्ति, तद् 'एतत् मानुष्यै वाचः कल्याणम् वदति' हस्तसंस्पर्शनकालकृतभद्रवचनप्रतिवदन मित्यर्थः। तस्माल्लौकिकवचनेषु भद्रत्वाय अवश्यं भद्रवचनं कर्त्तव्यम् ॥

"अथ प्रोक्षतीति। प्रतिगत्तं प्रोक्षणम्। प्रोक्षणस्य मेध्यत्वलक्षणोऽर्थवादः सर्वत्रैकविध एवेत्याह— "एको वै प्रोक्षणस्य बन्धुरिति ॥ १७ ॥

समन्त्रकं प्रोक्षणं विधत्ते— "स प्रोक्षतीति। 'रक्षोहणः'—इति[3] बहुवचननिर्द्देशात् सहप्रोक्षणम्। पृथक्प्रोक्षणपक्षे मन्त्रावृत्तिः। तथाच कात्यायनः— "प्रोक्षत्येनान् रक्षोहण इति, भेदे मन्त्रावृत्तिः सान्निपातित्वात्"—इति[4]। मन्त्राणां[5] क्रियासहावर्त्तनत्वेन व्यभिचारादित्यर्थः। सहत्वपक्षे बहुवचन मौपचारिकम्। स्पष्टो मन्त्रार्थः ॥ १८ ॥

"अथ याः प्रोक्षण्य इति। अवटेषु प्रोक्षणीशेषावनयनं प्रशंसति— "तद्वा इमाः प्राणेष्वाप इति। 'प्राणेषु' कर्णनासादिविवरेषु 'याः' 'आपः' सन्ति, 'ताः एव' 'एतत्' एतेनावनयनेन यज्ञशिरस्थोपरवाख्यप्राणेषु स्थापितवान् भवति। "तस्मादित्यादि। 'एषु प्राणेषु' मनुष्यप्राणेषु ॥ १९ ॥

---

१— पा० सू० ७. १. ४१। २— पा० सू० ७. १. ७।
३— वा० सं० ५. २५. १। ४— का० श्रौ० सू० ८. ५. २२, २३।
५— ते पञ्च मन्त्राः— वा० सं० ५. २५. १–५ द्रष्टव्याः।

"सोऽवनयतीति । स्पष्टोऽवनयनमन्त्रः[१] । अवटेषु अन्तर्बर्हिःस्तरणविधितदर्थवादतन्मन्त्राः पूर्ववद् व्याख्येयाः । अवनयनावस्तरणयोर्न्यायः प्रोक्षणवत् । "अवनयनावस्तरणे चावटवत्"—इति हि सूत्रम्[२]। यूपावटवत् अवनयावस्तरणे कार्ये इत्यर्थः । अवटानामुपर्यपि सूक्ष्माणां बर्हिषा माच्छादनं विधत्ते— "अथ बर्हींषि तनूनीति[३] । "केशा हैवास्यैत इति । निर्दिश्यमानानि यद्यपि बर्हींषि, तथापि प्रतिनिर्दिश्यमानकेशापेक्षया 'एते'—इति पुंलिङ्गता ॥ २०,२१ ॥

"अथाधिषवणे फलके इति । 'अधि' उपरि सूयते सोमोऽनयोरिति[४] 'अधिषवणे' द्वे 'फलके' उपदध्यात् । "रक्षोहणौ वा वलगहनौ"—इत्युपधानमन्त्रः[५] । स च स्पष्टार्थः । 'ते' च 'अस्य' हविर्द्धानस्य शिरसः हनुस्थानीये । अत्र कात्यायनः— "अथाधिषवणे फलके द्व्यङ्गुलान्तरे प्रचालिते प्राची अरत्निमात्रे सन्तृणे वोपदधाति"-इति[६] ॥

"अथ पर्यूहतीति[७] । फलके । 'परिदृंहति' परितो मृदा दृढीकुर्यात् ॥ २२ ॥

"अथाधिषवण मिति । "सर्वरोहित मित्यादि[८] । एतच्च

---

१— वा० सं० ५. २५. २, ३ । २— का० श्रौ० सू० ८. ५. २४ ।
३— का० श्रौ० सू० ८. ५. २५ क ।
४— 'अधि' उपरि सूयन्ते सोमा ययोरिति'—इति ङ, च ।
५— वा० सं० ५. २५. ४, ५ । ६— का० श्रौ० सू० ८. ५. २५ ख ।
७— का० श्रौ० सू० ८. ५. २५ ग । ८— का० श्रौ० सू० ८. ५. २६ ।

रक्तवर्णाया जिह्वायाः स्थाने भवति। तच्च "वैष्णव मसि"—इति-मन्त्रेण[1] 'निदध्यात्' अधिषवणफलकयोरुपरि स्थापयेत् ॥ २३ ॥

"अथ ग्राव्ण इत्यादि[2]। अधिषवणचर्मणि अभिषवसाधनान् पाषाणान् पञ्च आहरन्ति। ते 'ग्रावाणः' 'अस्य' 'दन्ताः' दन्त-स्थानीयाः। तदेवोपपादयति— "तद्यद् ग्रावभिरिति। "दद्भिः प्सायात् एवं तदिति। यथा दन्तैर्भक्षयति, एवं तत्। "प्सा भक्षणे"-इति[3] धातुः। "एतदु यज्ञस्येति। "पुरुषो वै यज्ञः"—इति प्रतिज्ञाय, "शिर एवास्य हविर्धानम्"—इति यद्धविर्धानस्य शिरस्त्वं निर्दिष्टम्[4], तदिदं 'यज्ञस्य शिरः संस्कृतं' मध्यम-च्छदिरादि-सोमाभिषवग्रावान्तानां यज्ञाङ्गानां शिरोललाटादि-दन्तान्तकल्पनया हविर्धानस्य शिरस्त्वं साधित मित्यर्थः। केवलं प्रयोगजात मानुपूर्व्येणाभिधाय तत्तदवयवरूपकल्पनयाभिधीयते, तेन तत्तदङ्गजातं तत्तदवयवध्यानेनानुष्ठीयमानं सत् महते फलाय भवतीत्युक्तं भवति[5] ॥ २४ ॥ ४ ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

---

१— वा० सं० ५. २५. ६।

२— का० श्रौ० सू० ८. ५. २८। मन्त्रः— वा० सं० ५. २५. ७।

३— अदा० प० ४५ धा०।

४— तृतीय-ब्राह्मणस्य प्रथमद्वितीये कण्डिके द्रष्टव्ये।

५— एतच्च सर्वं तै० सं० ६. २. ७ द्रष्टव्यम्।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ५ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गनार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं क्रपावान् गुडकृत मजडो राजतं राजपूज्यः।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गनार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

[ अथ षष्ठाध्याये प्रथमं ब्राह्मणम् . ]



उदर मेवास्य सदः। तस्मात् सदसि भक्षयन्ति यद्धीदं किञ्चाश्नन्त्युदर ऽएवेदꣳ सर्व्वं प्रतितिष्ठत्यथ यदस्मिन् विश्वे देवा ऽअसीदंस्तस्मात्सदो नाम त ऽउ ऽएवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्त्यैन्द्रं देवतया ॥ १ ॥

तन्मध्य ऽऔदुम्बरीं मिनोति। अन्नं वा ऽऊर्गुदुम्बर उदर मेवास्य सदस्तन्मध्यतोऽन्नाद्यं दधाति तस्मान्मध्य ऽऔदुम्बरीं मिनोति ॥ २ ॥

अथ य एष मध्यमः शङ्कुर्भवति। व्वेदेर्जघनार्द्धं तस्मात् प्राङ् प्रक्रामति षड् विक्रमान् दक्षिणा सप्तम मुपक्रामति सम्पदः कामाय तदवटं परिलिखति ॥ ३ ॥

सोऽभ्रि मादत्ते। देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्या माददे नार्य्यसीति समान एतस्य यजुषो बन्धुर्योषो वा ऽएषा यदभ्रिस्तस्मादाह नार्य्यसीति* ॥ ४ ॥

---

* 'सीति'—इति ख, 'सीति'—इति ग, घ।

अथावटं परिलिखति। इदमहः रक्षसां ग्रीवा ऽअपि कृन्तामीति वज्रो वा ऽअभ्रि*र्वज्रेणैवैतन्नाष्ट्राणाः रक्षसां ग्रीवा अपि कृन्तति[†] ॥ ५ ॥

अथ खनति। प्राञ्च मुत्कर मुत्किरति। यजमानेन सम्मायौदुम्बरीं परिवासयति ता मग्रेण प्राचीं निदधात्येतावन्मात्राणि बर्हीःष्युपरिष्टादधिनिदधाति[‡] ॥ ६ ॥

अथ यवमत्यः प्रोक्षण्यो भवन्ति। आपो ह वा ऽओषधीनाः रसस्तस्मादोषधयः केवल्यः खादिता न धिन्वन्त्योषधय ऽउ हापाः रसस्तस्मादापः पीताः केवल्यो न धिन्वन्ति यदैवोभय्यः सःसृष्टा भवन्त्यथैव धिन्वन्ति तर्हि हि सरसा भवन्ति सरसाभिः प्रोक्षाणीति ॥ ७ ॥

देवाश्च वा ऽअसुराश्च। उभये प्राजापत्याः पस्पृधिरे ततो देवेभ्यः सर्व्वा एवौषधय ऽईयुर्य्यवा हैवैभ्यो नेयुः ॥ ८ ॥

तद्वै देवा ऽअस्पृण्वत। त ऽएतैः सर्व्वाः सपत्नाना मोषधीरयुवत यदयुवत तस्माद्यवा नाम ॥ ९ ॥

ते होचुः। हन्त यः सर्व्वासा मोषधीनाः रसस्तं यवेषु दधामेति स यः सर्व्वासा मोषधीनाः रस ऽआसीत्तं

* 'ऽअभ्रि'-इति घ। †, ‡ 'ति'-इति ख।

यवेष्वदधुस्तस्माद्यत्रान्या ऽओषधयो म्लायन्ति तदेते मोदमाना वर्द्धन्त ऽएवꣳ ह्येषु रस मदधुस्तथो ऽएवैष्वेतैः सर्व्वाः सपत्नाना मोषधीर्युते तस्माद्यवमत्यः प्रोक्षण्यो भवन्ति ॥ १० ॥

स यवानावपति। यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति नात्र तिरोहित मिवास्त्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्या मेवैतत्करोति ॥ ११ ॥

स प्रोक्षति। दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेतीमानेवैतल्लोकानूर्ज्जा रसेन भाजयत्येषु लोकेषूर्ज्जꣳ रसं दधाति ॥ १२ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते। ता ऽअवटेऽवनयति शुन्धन्तां लोकाः पितृषदना इति पितृदेवत्यो वै कूपः खातस्त मेवैतन्मेध्यं करोति ॥ १३ ॥

अथ बर्हीꣳषि। प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति पितृषदन मसीति पितृदेवत्यं वा ऽअस्या ऽएतद्भवति यन्निखातꣳ सा यथानिखातौषधिषु मिता स्यादेव मेतास्वोषधिषु मिता भवति ॥ १४ ॥

ता मुच्छ्रयति। उद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्या मितीमानेवैतल्लोकानूर्ज्जा रसेन भाजयत्येषु लोकेषूर्ज्जꣳ रसं दधाति ॥ १५ ॥

अथ मिनोति। द्युतानस्त्वा मारुतो मिनोत्विति यो वा ऽअयं पवत ऽएष द्युतानो मारुतस्तदेना मेतेन मिनोति मित्रावरुणौ ध्रुवेण धर्मणेति प्राणोदानौ वै मित्रावरुणौ तदेनां प्राणोदानाभ्यां मिनोति* ॥ १६ ॥

अथ पर्यूहति। ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामीति बह्वी वै यजुःष्वाशीस्तद् ब्रह्म च क्षत्रं चाशास्त ऽउभे व्वीर्यें रायस्पोषवनीति भूमा वै रायस्पोषस्तद्भूमान माशास्ते† ॥ १७ ॥

अथ पर्यूषति। ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳहेत्याशीरेवैषैतस्य कर्मण ऽआशिष मेवैतदाशास्ते सम्भूमि पर्य्यूषणं करोति गर्त्तस्य वा ऽउपरिभूम्यथैवं देवत्रा तथा ह्यागर्त्तमिद्भवति‡ ॥ १८ ॥

अथाप ऽउपनिनयति। यत्र वा ऽअस्यै खनन्तः क्रूरीकुर्व्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः सन्दधाति तस्मादप ऽउपनिनयति§ ॥ १९ ॥

अथैव मभिपद्य व्वाचयति। ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयादिति पशुभिरिति वैवं यं कामं कामयते सोऽस्मै कामः समृद्ध्यते‖ ॥ २० ॥

---

* 'ति'–इति ख। † 'स्ते'–इति ग, घ। ‡ 'ति'–इति ग, घ।
§ 'ति'–इति ख। ‖ 'ते'–इति ख।

अथ स्रुवेणोपहत्याज्यम्। व्विष्टप मभि जुहोति घृतेन द्यावापृथिवी पूर्य्येथा मिति तदिमे द्यावापृथिवी ऽऊर्ज्जा रसेन भाजयत्यनयोरूर्ज्जꣳ रसं दधाति ते रस-वत्या ऽउपजीवनीये इमाः प्रजा ऽउपजीवन्ति* ॥ २१ ॥

अथ छदिरधिनिदधाति। इन्द्रस्य छदिरसीत्यैन्द्रꣳ हि सदो व्विश्वजनस्य छायेति व्विश्वगोत्रा ह्यस्मिन् ब्राह्मणा ऽआसते तदुभयतश्छदिषी ऽउपदधात्युत्तरत-स्त्रीणि परस्त्रीणि तानि नव भवन्ति त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नव भवन्ति ॥ २२ ॥

तदुदीचीनवꣳशꣳ सदो भवति। प्राचीनवꣳशꣳ हविर्द्धान मेतद्वै देवानां निष्केवल्यं यद्धविर्द्धानं तस्मा-त्तत्र नाश्नन्ति न भक्षयन्ति निष्केवल्यꣳ ह्येतद्देवानाꣳ स यो ह तत्राश्नीयाद्वा भक्षयेद्वा मूर्द्धा हास्य व्विपतेदथैते मिश्रे यदाग्नीध्रं च सदश्च तस्मात्तयोरश्नन्ति तस्माद्भक्ष-यन्ति मिश्रे ह्येते ऽउदीची वै मनुष्याणां दिक् तस्मा-दुदीचीनवꣳशꣳ सदो भवति ॥ २३ ॥

तत्परिश्रयन्ति। परि त्वा गिर्व्वणो गिर इमा भवन्तु व्विश्वतः। व्वृद्धायु मनु वृद्धयो जुष्टा भवन्तु जुष्टय

* 'न्ति'—इति ख।

ऽइतीन्द्रो वै गिर्व्वा व्विशो गिरो व्विशैवैतत् क्षत्रं परि-बृꣳहति तदिदं क्षत्र मुभयतो व्विशा परिबृढꣳ* ॥ २४ ॥

अथ लस्पूजन्या स्यन्द्यया प्रसीव्यति। इन्द्रस्य स्यूरसीत्यथ ग्रन्थिं करोतीन्द्रस्य ध्रुवोऽसीति नेद् व्यवपद्याता ऽइति प्रकृते कर्म्मन् विष्यति तथो ह्याध्वर्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठित[†] मभिमृशत्यैन्द्र मसीत्यैद्रꣳ हि सदः[‡] ॥ २५ ॥

अथ हविर्द्धानयोः। जघनार्द्धꣳ समन्वीक्ष्योत्तरेणाग्नीध्रं मिनोति तस्यार्द्धं मन्तर्व्वेदि स्यादर्द्धं बहिर्व्वेद्यथो ऽअपि भूयोऽर्द्धादन्तर्व्वेदि स्यात् कनीयो बहिर्व्वेद्यथो ऽअपि सर्व्व मेवान्तर्व्वेदि स्यात् तन्निष्ठित§ मभिमृशति वैश्वदेव मसीति द्वयेनैतद्वैश्वदेवं यदस्मिन् पूर्व्वेद्युर्व्विश्वे देवा व्वसतीवरीषूपवसन्ति तेन व्वैश्वदेवम् ॥ २६ ॥

देवा ह वै यज्ञं तन्वानाः। ते ऽसुररक्षसेभ्य ऽआसङ्गाद् बिभयाञ्चक्रुस्तान्॥ दक्षिणतो ऽसुररक्षसान्यासेजुस्तान्त्स-

---

* 'ढम्'—इति ग, घ।

† 'तं निष्ठित'—इति क, डा०—वेबरदृष्टस्य।

‡ 'सदुः'—इति ख। 'सदः'—इति ग, घ।

§ 'तं निष्ठित'—इति च डा० वेबरेण दृष्टः।

॥ 'स्तां'—इति क, डा०—वेबरदृष्टस्य।

दसो जिग्युस्तेषा मेतान्* धिष्ण्यानुद्वापयाञ्चक्रुर्य्य ऽएतेऽन्तःसदसꣳ† ॥ २७ ॥

सर्व्वे ह स्म वा ऽएते पुरा ज्वलन्ति। यथायु माहवनीयो यथा गार्हपत्यो यथाग्नीध्रीयस्तद्युत ऽएनानुद्वापयंस्तुत ऽएवैतन्नु‡ ज्वलन्ति तानाग्नीध्र मभि सꣳरुरुधुस्तानुप्यर्द्ध माग्नीद्ध्रस्य जिग्युस्ततो व्विश्वे देवा ऽअमृतत्व मपाजयꣳ§स्तस्माद्वैश्वदेवम्|| ॥ २८ ॥

तान् देवाः प्रतिसमैन्धत। यथा प्रत्यवस्येत्तस्मादेनान्त्सवने सवन ऽएव प्रतिसमिन्धते तस्माद्यः समृद्धः स ऽआग्नीद्ध्रं कुर्य्याद्यो वै ज्ञातोऽनूचानः स समृद्धस्तस्मादग्नीधे प्रथमाय दक्षिणां नयन्त्युतो हि व्विश्वे देवा ऽअमृतत्व मपाजयंस्तस्माद्यं दीक्षितानां मबल्यं व्विन्देदाग्नीद्ध्र मेनं नयतेति ब्रूयात्तदनार्त्तं तन्नारिष्यतीति तद्यदतो व्विश्वे देवा ऽअमृतत्व मपाजयंस्तस्माद्वैश्वदेवम्¶ ॥ २९ ॥ ५ ॥

॥ इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् [ ६.१. ] ॥

---

* 'मेतां'—इति क, डा०—वेबरदृष्टश्च।

† 'सदसं'—इति ख। 'सदसꣳ'—इति ग, घ।

‡ 'तं न'—इति क, ख।

§ 'मयाजयं—इति क, डा०—वेबरदृष्टश्च। एव मुत्तरकण्डिकाया मपि।

|| 'व॒म्'—इति ग, घ। ¶ 'वुम्'—इति ग, घ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

यज्ञशिरस्त्वं हविर्द्धानस्योक्त्वा, तत् समर्थ्य, इदानीं सदसो यज्ञोदरत्वं प्रतिपादयितुं पूर्वोक्त मनुवदति— "उदर मेवास्य सदस्तस्मात् सदसि भक्षयन्तीत्यादिना । "ऐन्द्रं देवतयेति । यथा हविर्द्धानं विष्णुदेवत्यम्, एवं सद इन्द्रदेवत्य मित्यर्थः । तृतीया विधाने, "प्रकृत्यादिभ्य उपसङ्ख्यानम्"-इति[1] ॥ १ ॥

"तन्मध्य ऽऔदुम्बरी मित्यादि[2] । 'तन्मध्यतः' तस्य सदसो मध्यदेशे 'औदुम्बरीं' स्थूनां 'मिनुयात्' । औदुम्बर्या मध्यदेश-स्थापनयोग्यतां दर्शयति— "अन्नं वा ऊर्गित्यादिना । "देवा वा ऊर्जं व्यभजन्त, तत उदुम्बर उदतिष्ठत्, ऊर्ग्वा उदुम्बरः"—इति श्रुतेः[3] ऊर्ग्रूपत्व मुदुम्बरस्य । मध्ये हुतशेषस्य भक्षणात् सदस उदरत्वम्, अतः सदोमध्ये औदुम्बरीमानेन उदरमध्येऽन्नं स्थापितम् ॥ २ ॥

मध्यदेशं विशिनष्टि— "अथ य एष मध्यमशङ्कुरित्यादिना । सौमिकवेद्या जघनार्द्धस्य मध्यदेशे यः शङ्कुर्विहितः । ततः प्राक् षट् प्रक्रमान् विक्रम्य, सप्तमं दक्षिणाभिमुखं विक्रम्य, तत्र अवटं परिलिखेत् ॥ ३ ॥

---

१— पा० सू० १. ३. १८. वा० १ ।
२— का० श्रौ० सू० ८. ५. ३० ।
३— तै० ब्रा० १. १. ३. १० ।

अवटखननार्थ मभ्र्यादानं समन्त्रकं विधत्ते— "सोऽभ्रि मादत्ते[1] देवस्य त्वेति[2] । व्याख्यात मेतत् ॥ ४ ॥

"अथावटं परिलिखतीति[3] । अवटपरिलेखनमन्त्रस्याय मर्थः— 'इदम्' एतेन परिलेखनेन 'रक्षसां' 'ग्रीवाः' कण्ठावयवानपि 'कृन्तामि' छिनद्मि । वज्रवत्तीक्ष्णधारत्वात् अभ्रिर्वज्रत्वेन स्तूयते । 'नाष्ट्राणां' नाशकानाम् । स्पष्ट मन्यत्[4] ॥ ५ ॥

"अथ खनतीति[5] । 'उत्करं' "खातं मृन्निचयं 'प्राञ्चम्' अवटस्य समीपे प्राग्देशे 'उत्किरति' । 'यजमानेन सम्माय' यजमानप्रमाणं कृत्वा 'परिवासयति', अवशिष्ट मंशं छिनत्ति । 'ताम्' औदुम्बरशाखाम् 'अग्रेण' अवटस्य प्राग्देशे 'प्राचीं' प्रागग्रां स्थापयेत् । 'एतावन्मात्राणि' औदुम्बरीप्रमाणानि 'बर्हींषि' 'उपरिष्टात्' औदुम्बर्य्या उपरि 'निदधाति' आच्छादयेदित्यर्थः ॥ ६ ॥

औदुम्बरीप्रोक्षणसाधनाना मपां यवसाहित्यं विधाय प्रशंसति— "अथ यवमत्यः प्रोक्षण्यो भवन्तीति । उक्त मपां रसत्वं युक्त्या समर्थयते— "तस्मादोषधयः केवल्य इति । 'तस्मात्' गतरसत्वात् 'न धिन्वन्ति' न प्रीणयन्ति । केवलतण्डुलभक्षणे तृप्तेरदर्शनात् । "धिन्विकृण्व्यो र च"-इत्युप्रत्ययः[6] । तत्सन्नियोगेन वकारस्याकारादेशः । ओषधीनां प्रतिज्ञात मप्रसन्नत्व मुपपादयति— "तस्मा-

---

१— का० श्रौ० सू० ८. ५. ३१, ३२, ३३ ; ६. २. ८ क ।
२— वा० सं० ५. २६. १, २ ।　　३— का० श्रौ० सू० ६. २. ८ ख ।
४— वा० सं० ५. २६. ३ ।　　५— का० श्रौ० सू० ६. २. ६—१४ ।
६— पा० सू० ३. १. ८० ।

दापः पीताः केवल्य इति। यतो 'यदा' 'उभय्यः' ओषधय आपश्च 'संसृष्टाः' स्युः, 'अथ' तथा सति 'धिन्वन्ति', 'तर्हि' तथा सति 'सरसाः' 'भवन्ति' भवेयुः। केनाभिप्रायेण? इत्याह— "सरसाभिः प्रोक्षाणीति ॥ ७ ॥

अथ शब्दव्युत्पत्तिप्रदर्शनमुखेन यवान् प्रशंसति— "देवाश्च वा असुराश्चेत्यादिना। 'सर्वा एव ओषधयः इयुः' देवेभ्यः सकाशात् पलायिताः ॥ ८ ॥

"तद्वै देवा अस्पृण्वतेति। 'अस्पृण्वत' सर्वा ओषधीर्वाञ्छितवन्तः। तदेव विशदयति— "त एतैः सर्वाः सपत्नाना मोषधीरयुवतेति। 'ते' 'एतैः' यवैः 'अयुवत' अमिश्रयन्। 'तस्माद्' यवनसाधनत्वाद् 'यवाः' इति तन्नामनिर्वचनम्। ओषधीनां यवनसाधनाः सम्पन्नाः इति यवस्तुतिः ॥ ९ ॥

"ते होचुरिति। सर्व्वौषधिरसानां यवेषु स्थापनं प्रत्यक्ष मिति प्रमाणेन दृढयति— "तस्माद् यत्रान्या ओषधयो म्लायन्तीति ॥ १० ॥

"स यवानावपतीति[१]। यवावापे मन्त्र माह— "यवोऽसि यवयेति[२]। हे यवपदार्थ! त्वं 'यवोऽसि' पृथक्कर्त्तासि, अतः 'यवय' अस्मत्तो द्वेष्टॄन् पृथक् कुरुत। 'अरातीः' अदानशीलान् ॥

"अथ प्रोक्षतीति[३]। औदुम्बरीः। "एको वै प्रोक्षणस्य बन्धु-

१— का० श्रौ० सू० ६. २. १५ क।

२— वा० सं० ५. २६. १।

३— का० श्रौ० सू० ६. २. १५ ख।

रिति। यत्र-यत्र प्रोक्षण मस्ति, तस्य सर्वस्यापि मेध्य मेतत् करो-
तीति एवं रूपं ब्राह्मण मेक मेवेत्यर्थः ॥ ११ ॥

"स प्रोक्षतीति। हे उदुम्बरशाखाग्र! 'त्वा' त्वाम् 'दिवे' द्युलोकाय, तद्दरीभावाय, प्रोक्षामीति शेषः[1]। एव मुत्तरवाक्येऽपि योज्यम्[2] ॥ १२ ॥

"अथ याः प्रोक्षण्य इति[3]। "शुन्धता मिति[4] मन्त्रेण प्रोक्षणी-शेष मवटेऽवनयेत्। पितरः सीदन्त्येषु इति 'पितृषदनाः' भूम्यधो-वर्त्तिनो लोकाः। प्रायेण गर्त्तस्य पित्र्यकार्येषु दर्शनात् अवटस्य पितृसदनत्वम् तदेवाह—"पितृदेवत्यो वै कूपः खातः इति ॥१३॥

"अथ बर्हींषीत्यादि[5]। सुविशदम्[6]। "सा यथानिखाता ओषधिषु मिता स्यात्, एव मेतास्वोषधीषु मिता भवतीति। वने 'अनिखाता' दृढमूला स्वभावेनोत्पन्ना 'यथा' 'ओषधिषु' सदोत्पन्नेषु तृणगुल्मादिषु मध्ये 'मिता' भवति, सबर्हिष्के गर्त्ते 'मिता' शाखापि 'एवं' भवतीत्यर्थः ॥ १४ ॥

"ता मुच्छ्रयतीति[7]। 'उच्छ्रयति' ऊर्द्ध्वं स्थापयेत्। तन्मन्त्र-

---

१— का० श्रौ० सू० ६. २. १६।

२— वा० सं० ५. २६. २, ३, ४ त्रयो मन्त्राः।

३— का० श्रौ० सू० ६. २. १७।

४— वा० सं० ५. २६. ५।

५— का० श्रौ० सू० ६. २. १८।

६— अत्र मन्त्रः— वा० सं० ५. २६. ६।

७— का० श्रौ० सू० ८. ५. ३४। "ऊर्द्ध्वां करोति"।

स्याय मर्थः[1]— हे उदुम्बरशाखे ! तवाग्रभागेन 'दिवम्' 'उत्तभान' उत्तम्भनं कुरु ; शरीरस्थौल्येन 'अन्तरिक्षं' 'पृण' पूरय ; 'पृथिव्यां' 'दृंहस्व' दृढा भव, पृथिवी मपि दृढां कुर्वित्यर्थः ; पृथिव्याः शैथिल्ये शाखाया अपि दार्ढ्यायोगात् । ऊर्गूपस्यौदुम्बरस्य लोकत्रयेऽपि सम्बन्धात् लोकेषूर्ग्संस्थापनं कृतं भवति । स्पष्ट मन्यत् ॥ १५ ॥

"अथ मिनोतीति[2]। औदुम्बरीमानमन्त्रः[3]— 'द्युतानः' दीप्यमानः, एतन्नामको वायुर्देवः, 'मारुतः' मरुतां देवानां वायूनां सम्बन्धी, सः 'मिनोतु' अवटे प्रक्षिपतु । तथा 'मित्रावरुणौ' देवौ 'ध्रुवेण' अविचलितेन 'धर्मणा' धारणेन मिनुताम् । स्पष्ट मन्यत् । मित्रावरुणशब्दयोरर्थ माह— "प्राणोदानौ वै मित्रावरुणाविति । एतदधिदैवतम् ; अहोरात्राभिमानिनौ देवाविति[4] अध्यात्मम् ॥ १६ ॥

समन्तकं पर्यूहणं विधत्ते— "अथ पर्यूहति[5] ब्रह्मवनि त्वेति[6]। हे शाखाद्रव्य ! 'ब्रह्मवनि' ब्रह्मणः सम्भक्तृ 'त्वा' त्वाम् 'पर्यूहामि' प्रक्षिपामि । एव मुत्तरवाक्यान्यपि योज्यानि ॥

मन्त्रं व्याचष्टे— "बक्री वा इति । प्रायेण 'यजुःषु' मन्त्रेषु 'आशीः' बक्री परिदृश्यते । अतोऽत्र ब्रह्मक्षत्रोभयरूपं फल माशास्यते । "भूमा वै रायस्पोष इत्याद्यसकृद् गतम्[7] ॥ १७ ॥

---

१— वा० सं० ५. २७. १ ।

२— का श्रौ० सू० ८. ५. ३५ । अवटमध्ये प्रक्षिपति ।

३— वा० सं० ५. २७. २ । ४— ऐ० ब्रा० ४. २. ४ द्रष्टव्यम् ।

५— का० श्रौ० सू० ६. ३. १० । यूपावटं पूरयति ।

६— वा० सं० ५. २७. ३ । ७— पुरस्तात् २६८, ३०३ पृ० ।

"अथ पर्यूषतीति[1]। 'पर्यूषति' परितः सङ्घट्टयेत्। "ऋषी गतौ"-इति[2] धातुः। "ब्रह्म दृंहेत्यादिर्दृंहणमन्त्रो[3] यजमानापेक्षितस्य कर्मफलस्य प्रतिपादक इत्याह— "आशीरेवैतस्य कर्मण इति। 'एतस्य' शाखादृंहणकर्मणः फलरूपाशीः प्रतिपाद्यत इत्यर्थः। परिघट्टनं = पर्यषणम्, भूमिप्रमाण मद्भिः कर्त्तव्य मित्याह— "समभूमि पर्यषण मिति। भूम्या समं 'समभूमि', 'पर्यषणं' भूमिसमं 'करोति'। व्यतिरेक माह— "गर्त्तस्य वा इति। "अथैवं देवत्रेति। 'अथ'-शब्दः उक्तवैलक्षण्यद्योतनार्थः। एवं साम्ये सति 'देवत्रा' देवेषु अन्वितो भवतीत्यर्थः। "तथा हागर्त्तमिद् भवतीति। 'तथा ह' तथा सति, भूमिसाम्ये सति 'अगर्त्तमित्' अगर्त्तमिता भवति। मिनोतेः कर्मणि क्विप्॥ १८॥

"अथाप उपनिनयतीति[4]। 'उपनिनयति' मृत्परमाणूनां संश्लेषाय 'अस्यै खनन्तः' अस्याः भूम्याः भागं दारयन्तः, ता मेव भूमिम् अक्रूरां 'क्रूरीकुर्वन्ति'। 'आपः' तु शमनहेतुत्वात् 'शान्तिः', अतः 'तत्' तेन 'अद्भिः' 'शान्त्या' शान्तेरेकत्वादेकवचनम्। क्रौर्यशमन मदृष्टं प्रयोजनम्; अद्भिः सन्धानं तु संहतिहेतु दृष्टं प्रयोजनम्॥ १९॥

---

१— का० श्रौ० सू० ६. ३. ११। "परितः कुट्टनेन पांसूनधः प्रवेशयति, पिट्टयतीत्यर्थः"– इति तत्र या० दे०।

२— तु० प० ७ धा०। ३— वा० सं० ५. २७. ४।

४— का० श्रौ० सू० ६. ३. १२।

"अथैव मभिपद्येति[1]। 'अभिपद्य' शाखा मालभ्य, एवं 'वाचयति' ध्रुवासीत्येवम्प्रकारेण[2]। हे शाखे ! त्व मिदानीं कृतप्रकारेण 'ध्रुवा' अविचला 'असि'। 'अयं' 'यजमानः' अपि 'अस्मिन्' स्वकीये एव गृहे 'प्रजया' 'पशुभिः' सहितः सन् 'ध्रुवः' भवतु। न केवलं 'प्रजया पशुभिः' इत्यभिधानेन तद् द्वयं समृद्ध्यते, किन्तर्हि ? प्रजापशुव्यतिरिक्त मन्यच्च धनादिकं 'यं यं कामं कामयते' स सर्वोऽप्युभयकामनयैव समृद्ध्यते। अत्र 'पशुभिरिति वा' इति 'वा'-शब्देन 'प्रजया'-इत्यनेन मन्त्रपदेन 'पशुभिः'-इत्यस्य विकल्पः[3] ॥ २० ॥

औदुम्बरीशाखाग्रे होमं विधत्ते- "अथेति। "विष्टप मभि जुहोतीति। 'विष्टपं' विशाखम् 'अभि' विष्टपस्याग्रभागस्याभितः, यथा शाखाया अग्रमूलभागौ मध्यदेशश्च अक्ता भवन्ति, एव माज्यं 'जुहोति' ॥

तन्मन्त्रस्याय मर्थः[4]- 'द्यावापृथिवी' हे द्यावापृथिव्यौ ! शाखाग्र-मूलभागवर्त्तिन्यौ युवां 'घृतेन' हूयमानेन 'पूर्येथाम्' पूर्णे भवत। अत्र सूत्रम्- "स्रुवेण विशाखे जुहोति घृतेन द्यावापृथिवी इति भूमिप्राप्ते स्वाहा करोति"- इति[5] ॥

द्यावापृथिवीपूर्त्त्यभिधानस्य प्रयोजन माह- "तदिमे द्यावा-

---

१- का० श्रौ० सू० ८. ५. ३६।
२- वा० सं० ५. २८. १।
३- का० श्रौ० सू० ८. ५. ३७।
४- पाठस्त्वस्य- वा० सं० ५. २८. २।
५- का० श्रौ० सू० ८. ५. ३८, ३९।

पृथिवी ऊर्जा रसेन भाजयतीत्यादिना। ऊर्ग्रूपौदुम्बरयुक्तेनाज्येन यत् द्यावापृथिवीपूरणम्, तत् ऊर्ग्रसेनैव द्यावापृथिवीप्रापणं कृतं भवति। तेन तयोः किङ्कृतं भवति? "अनयोरूर्जं रसं दधाति"। स्पष्ट मन्यत् ॥ २१ ॥

मध्यमच्छदिर्निधानं विधत्ते— "अथ छदिरधिनिदधातीन्द्रस्य छदिरसीति[1]। इन्द्रदेवत्यत्वात् सदोऽत्रेन्द्रः, तस्याच्छादक मसि। तथा 'विश्वजनस्य छायासि' विश्वेषां सदसि स्थितानां जनानां छायाकारी असि। एतयोर्मन्त्रभागयोर्ब्राह्मणे स्पष्टे[2] ॥

"उभयतश्छदिषी उपदधातीति[3]। मध्यमस्य छदिषः 'उभयतः' दक्षिणोत्तरयोः; — तानि मध्यमच्छदींषि त्रीण्यपि प्रमाय, तेषाम् 'उत्तरतः त्रीणि' छदींषि उपदध्यात्, तथा 'परः' परस्तादपि दक्षिणतोऽपि 'त्रीणि' 'उपदधाति'[4] ॥

छदिषां नवत्वं प्रशंसति— "तानि नव भवन्तीति। त्रिवृत्स्तोमसाध्यत्वात् यज्ञस्य त्रिवृत्त्वम्। स च 'त्रिवृत्' स्तोमो 'नव वै' नवस्तोत्रियात्मकः खलु; "तिसृभ्यो हिङ्करोति स एकयेत्यादिसामब्राह्मणोक्तप्रकारेण त्रिवृत्स्तोमे तिसृणा मृचां नवत्वसम्पादनात्[5]। तस्मात् छदिषां नवत्वं युक्तम् ॥ २२ ॥

---

१— का० श्रौ० सू० ८. ६. १०। छदिस्तृणमयः कटः।

२— मन्त्रपाठस्तु वा० सं० ५. २८. ३।

३— का० श्रौ० सू० ८. ६. ११।

४— "मन्त्रः प्रतिच्छदिरावर्त्तनीयः"–इति का० सू० ८. ६. ११ या० दे०।

५— सा० ता० ब्रा० ३अ० १ख०।

सदस उदगायतत्वं विधत्ते— "तदुदीचीनवंशं सदो भवतीति। सदस उदीचीनवंशत्वं प्रशंसितुं हविर्द्धानस्य सदोवैलक्षण्यं दर्शयति— "प्राचीनवंशं हविर्द्धान मित्यादिना। 'एतत्' हविर्द्धानं 'देवानां निष्केवल्यम्' मनुष्यलक्षणाभावेन निःशेषेणैव देवानां केवलं भवति। "भवे छन्दसि"-इति[1] यत्। "तस्मात् तत्र नाश्नन्ति, न भक्षयन्तीति। 'नाश्नन्ति' पुरोडाशादिकम्, "न भक्षयन्ति' सोमम्। प्रमादात् भक्षणे दोष माह—"मूर्द्धा हास्य विपतेदिति। उक्तवैपरीत्य माग्नीध्रसदसोर्दर्शयति— "अथैते मिश्र इति। 'एते मिश्रे' स्तोत्रशस्त्रादिपाठाश्रयत्वात् दैवम्, भक्षणसम्भवात् मानुषं चेति 'मिश्रे' भवतः। "उदीची वै मनुष्याणां दिगिति। प्रायेणोदीच्यां दिशि मनुष्यवृद्धिदर्शनात् मनुष्यसम्बन्धव्यपदेशः॥

सदोनिर्माणप्रकारं सूत्रकार आह— "नाभिदघ्नं सदः, मत्या वा, उदग्वंशम् अष्टादशारत्नि, एकविंशतिश्चतुर्विंशतिर्वा, नव तिर्यक्, अर्द्धायामो वा, औदुम्बरीं मध्ये, पृष्ठ्या मेके[2], इन्द्रस्य छदिरिति[3] मध्यमं छदिरारोप्यापरपूर्वे च, त्रिवर्गौ चोत्तरतः"—इति[4]। अष्टादशारत्न्यादयस्त्रयः पक्षाः उदगायामविषये विकल्पिताः; तिर्यक्प्रमाणविषये नवारत्नित्व मर्द्धायामत्वं च विकल्पितम्।

---

१— पा० सू० ४. ४. ११०।

२— "एके-ग्रहणं पूजार्थम्"-इति चात्र या० दे०।

३— वा० सं० ५. २८. ३।

४— का० श्रौ० सू० ८. ६. १-११।

उक्तपरिमाणे सदसि औदुम्बरी मध्या भवति, पृष्ठ्यां[1] दक्षिणतः स्थिता वेत्यर्थः[2] ॥ २३ ॥

सदसः परिश्रयणं समन्त्रकं विधत्ते— "तत् परिश्रयन्ति[3] परि त्वा गिर्वण इतीति[4]। मन्त्रस्याय मर्थः— हे 'गिर्वणः' गीर्भिः वननीय इन्द्र! 'त्वा' त्वाम् 'इमाः' अस्माभिः प्रयुज्यमानाः 'गिरः' स्तुतिरूपा वाचः 'विश्वतः' सर्वतः 'परिभवन्तु'। किञ्च 'वृद्धायुम्' वृद्धा आयवो मनुष्याः, ऋत्विग्यजमानलक्षणा यस्य स तथोक्तः, तादृशम् 'अनु' 'वृद्धयः' समृद्धिमत्यो भवन्तु। तथा 'जुष्टयः' प्रीणयन्त्यो वाचः 'जुष्टाः' प्रीताः 'भवन्तु'। तव गिरां च वृद्धिजोषावुपर्युपरि वर्द्धेया मित्यर्थः ॥

प्रथमपादं व्याचष्टे—"इन्द्रो वै गिर्वा, विशो गिर इत्यादिना। इन्द्रस्य देवेषु मध्ये क्षत्रियजातित्वात् गिराञ्च स्तौत्वाद् बहुत्वाच्च विशां रूपत्वम्; अतो गीर्भिरिन्द्रपरिग्रहाभिधानात् क्षत्रियस्यो-भयतस्तत्क्षेमार्थं प्रजाः कल्पितवान् भवति ॥ २४ ॥

सदसो द्वारशाखाप्रभृतीनां हविर्द्धानस्य दर्भैराच्छाद्य सीवना-दिकं[5] विधत्ते— "अथ त्वसूजन्येत्येवमादिना[6]। सीवनग्रन्थीकर-

---

१— पृष्ठ्याशब्दार्थः ३१४ पृ० २ टी० द्रष्टव्यः।

२— "पूर्वनिखाता मौदुम्बरीं स्थूणां सदसो मध्ये कुर्यात्"–इति या० दे०।

३— का० श्रौ० सू० ८. ६. १२ क।

४— वा० सं० ५. २९. १।

५— सीवनग्रन्थ्यभिमर्शनानीत्यर्थः।

६— का० श्रौ० सू० ८. ६. १२ ख।

णाभिमर्शनवाक्यानि हविर्द्धानवद् व्याख्येयानि; मन्त्रेष्वैन्द्रत्वं विशेषः[1] ॥ २५ ॥

आग्नीध्रस्य स्थान माह— "अथ हविर्द्धानयोरित्यादिना[2]। हविर्द्धानशकटयोः पश्चाद्भागस्य साम्येन य उत्तरो देशः, तत्र 'आग्नीध्रम्' आग्नीध्रीयं मण्डपं कुर्यात्। तत्रापि त्रयः पक्षाः। आग्नीध्रीयस्य यावत् परिमाणं तस्यार्द्धं सौमिकवेद्या उत्तरभागे स्वीकुर्यादित्येकः पक्षः। अर्द्धादधिक मंशं वेद्याः स्वीकुर्यादिति द्वितीयः। सर्व मपि सौमिकवेद्या मिति तृतीयः। तदेतत् पक्षत्रयम् "तस्यार्द्धं मन्तर्वेदीत्यादिनोक्तम्। 'निष्ठितं' निष्पन्न माग्नीध्रीयम्, "वैश्वदेव मसि"—'इति'[3]-मन्त्रेण अभिमृशेत्[4]। अस्य वैश्वदेवत्वं कारणद्वयेन। तत्र प्रथमं कारण माह— "यद्-स्मिन् पूर्वेद्युरिति। 'वसतीवर्यः' सोमाभिषवार्था आपः; तासु विश्वेदेवा सुत्यादिनात् पूर्वेद्युरधिवसन्ति; अतो वैश्वदेवत्वम्। तथा चोपरिष्टादाम्नास्यते— "ता आग्नीध्रे सादयति विश्वेषां देवानां भागधेयी स्थेति"— इति[5]। तदासु विश्वान् देवान् संवेशयतीत्यतो विश्वेषां देवाना माश्रयभूताना मपा माधारभूतत्वात् वैश्वदेवत्वम् ॥ २६ ॥

---

१— वा० सं० ५. ३०. १-३।

२— का० श्रौ० सू० ८. ६. १३।

३— वा० सं० ५. ३०. ४।

४— का० श्रौ० सू० ८. ६. १४।

५— उपरिष्टात् ७ प्र० २ ब्रा० १९ क०।

द्वितीयं कारण माह— "देवा ह वा इत्यादिना। "तान्त्स-दसो जिग्युरिति। 'तान्' सदोनिविष्टान् देवान् 'सदसः' सकाशात् जितवन्तः, ततो निष्काषितवन्त इत्यर्थः। न केवलं तानेव देवान्, अपि तु 'अन्तस्सदसं' सदोमध्येऽवस्थितान् 'धिष्ण्यान्' अग्नीन् नाशयन्; तेषा मग्नीनां तत्र सद्भाव एव नास्ति ॥ २७ ॥

तत्र ते न सन्तीति चेत् कथं ज्वलन्तीत्याह— "सर्वे ह स्म वा एत इति। "तानाग्नीध्र मभि संरुरुधुरिति। सदसो निष्का-षिता आग्नीध्रप्रविष्टाः, तत्राप्यसुरैः संरुद्धाः, ते देवा आग्नीध्रधिष्ण्य-गतस्याग्नेः 'अर्द्धं' समीपं प्राप्य 'तान्' असुरान् 'जिग्युः'। 'ततः' आग्नीध्रस्याग्नेः सामर्थ्याद् 'विश्वे देवाः' 'अमृतत्वम्' असुरकृतहिंसा-रहितत्वम् प्राप्ता इत्यर्थः। 'तस्मात्' विश्वेषां देवाना माश्रयत्वाद् 'वैश्वदेवम्' वैश्वदेवत्वम् ॥ २८ ॥

"तान् देवा इति। 'तान्' उद्घाटितान् धिष्ण्यान् 'देवाः' 'प्रतिसमैन्धत' पुनरदीपयन्। 'यथा' येन प्रकारेण 'प्रत्यवस्येत्' प्रतितिष्ठेत्। यद्वा प्रत्यवसानं भोजनम्; यथा आहुत्याधारो भवेत्, तथा समैन्धत। "तस्मादेनानिति। स्पष्टम्। "तस्माद् य इति। 'तस्मात्' आग्नीध्रस्य विश्वेषां देवानां जयहेतुत्वात् 'यः समृद्धः', 'सः' 'आग्नीध्रं' आग्नीध्रस्य कर्म 'कुर्यात्'। "यो वा इति। 'यो वै 'ज्ञातः' अयं सदाचारीति विदितः, 'अनूचानः' साङ्ग-प्रवचनाध्यायी 'समृद्धः'। आग्नीध्रस्य श्रैष्ठ्यं दक्षिणाप्राथम्यभाक्त्वेन समर्थयते— "तस्मादग्नीधे प्रथमायेत्यादि ॥

प्रसङ्गाद् यजमानार्थं कञ्चिदपूर्वनियम माह— "तस्माद् यं दीक्षिताना मवल्यं विन्देदिति । 'दीक्षितानां' मध्ये 'यं' दीक्षितम्, यद्वा तेषां सम्बन्धिनं कञ्चिदृत्विजम् 'अवल्यं' दौर्बल्यं 'विन्देत्' लभेत, तद्दौर्बल्यपरिहाराय "एनम् आग्नीध्रं नयत"—'इति' ब्रूयात् । एवं वदता मभिप्राय माह—"यत्तदनार्त्तं तन्नारिष्यतीतीति । लोके 'यद्' भयादिरहितम्, 'तत्' 'नारिष्यति' आर्त्तिं न लभेत; अत एतस्याग्नीध्रस्य देवाना मार्त्तिपरिहारसाधनत्वात् असावप्यनार्त्तो भवेदित्यभिप्रायेण नयतेति ब्रूयादित्यर्थः । "तद् यदत इत्यादिः । उक्तार्थोपसंहारः[१] ॥ २९ ॥ ५ [६.१.] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे षष्ठाध्याये प्रथमं ब्राह्मणम् ॥

## ॥ इति तृतीयकाण्डे चतुर्थः प्रपाठकः समाप्तः[२] ॥

---

१— तै० सं० ६का० २प्र० सर्व मेतत् विहितम्, तत्रैव १का० २,३ प्र० मन्त्रास्साम्नाताः ; अपि सायणीयं तद्भाष्य मुत्कृष्टतरम् ।

२— "कण्डीसङ्ख्या १३२"—इति क, ख ; "कण्डिकासङ्ख्या १३२"—इति ग, घ । तत्र १ब्रा० ३६क०, २ब्रा० १८क०, ३ब्रा० २५क०, ४ब्रा० २४क०, ५ब्रा० २९क० ; सङ्कलनया १३२ इति सिद्धम् ॥

# अथ

## पञ्चमप्रपाठके प्रथमं ब्राह्मणम्,

## अपि वा

## षष्ठाध्याये द्वितीयं ब्राह्मणम् ।

॥ हरिः ॐ ॥

विज्ञामानो हैवास्य धिष्ण्याः । इमे समङ्का ये वै समङ्कास्ते विज्ञामान एत ऽउ हैवास्यैत ऽआत्मनः* ॥१॥

दिवि वै सोम आसीत् । अथेह देवास्ते देवा अकामयन्ता नः सोमो गच्छेत्तेनागतेन यजेमहीति त ऽएते माये ऽअसृजन्त सुपर्णीं च कद्रूं च व्वागेव सुपर्णीयं कद्रूस्ताभ्याꣳ समदं चक्रुः ॥ २ ॥

ते ह्यत्तीयमाने ऽऊचतुः । यतरा नौ दवीयः परापश्यादात्मानं नौ सा जयादिति तथेति सा ह कद्रूरुवाच परेक्षस्वेति ॥ ३ ॥

---

* 'ऽआत्मानः'—इति सा०-सम्मतः पाठ इति डा०-वेबरः ।

सा ह सुपर्ण्युवाच। अस्य* सलिलस्य पारेऽश्वः श्वेत स्थाणौ सेवते त महं पश्यामीति त मेव त्वं पश्यसीति तꣳ हीत्यथ ह कद्रूरुवाच तस्य वालो न्यषञ्जि त मसुं वातो धूनोति त महं पश्यामीति॥४॥

सा यत् सुपर्ण्युवाच। अस्य सलिलस्य पार ऽइति वेदिर्वै सलिलं वेदि मेव सा तदुवाचाश्वः श्वेत स्थाणौ सेवत ऽइत्यग्निर्वा ऽअश्वः श्वेतो यूप स्थाणुरथ यत् कद्रूरुवाच तस्य वालो न्यषञ्जि त मसुं वातो धूनोति त महं पश्यामीति रशना हैव सा† ॥ ५ ॥

सा ह सुपर्ण्युवाच। एहीदं पताव वेदितुं यतरा नौ जयतीति सा ह कद्रूरुवाच त्व मेव पत त्वं वै न आख्या-स्यसि यतरा‡ नौ जयतीति ॥ ६ ॥

सा ह सुपर्णी पपात। तद्ध तथैवास यथा कद्रूरुवाच ता मागता मभ्युवाद त्व मजैषी३रहा ३ मिति त्व मिति होवाचैतद्व्याख्यानꣳ सौपर्णीकाद्रव मिति ॥ ७॥

सा ह कद्रूरुवाच। आत्मानं वै त्वाजैषं दिव्यसौ सोमस्तं देवेभ्य आहर तेन देवेभ्य आत्मानं निष्क्रीणी-

---

* 'अस्य'–इति ग,घ। † 'सा'–इति ग, घ।

‡ 'यतरा'–इति ग, घ।

ष्वेति* तथेति सा छन्दांꣳसि ससृजे सा गायत्री दिवः सोम माहरत् ॥ ८ ॥

हिरण्मय्योर्ह कुश्योरन्तरवहित आस। ते ह स्म क्षुरपवी निमेषं निमेष मभिसन्धत्तो दीक्षातपसौ हैव ते ऽआसतुस्त मेते गन्धर्व्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या इमा होत्राः† ॥ ९ ॥

तयोरन्यतरां कुशी माचिच्छेद। तां देवेभ्यः प्रददौ सा दीक्षा तया देवा अदीक्षन्त ॥ १० ॥

अथ द्वितीयां कुशी माचिच्छेद। तां देवेभ्यः प्रददौ तत्तपस्तया देवास्तप उपायन्नुपसदस्तपो ह्युपसदः ॥ ११ ॥

खदिरेण ह सोम माचखाद। तस्मात् खदिरो यदेनेनाखिदत् तस्मात् खादिरो यूपो भवति खादिरः स्फ्योऽच्छावाकस्य हैनं गोपनायां जहार सोऽच्छावाको ऽहीयत ॥ १२ ॥

त मिन्द्राग्नी ऽअनुसमतनुताम्। प्रजानां प्रजात्यै तस्मादैन्द्राग्नोऽच्छावाकः‡ ॥ १३ ॥

---

* 'निष्क्रीणीष्वेति'—इति पाठस्त्व दृष्टो डा०-वेबरेण।

† 'इमे होत्रकाः'—इति सा०—सम्मत इति डा०-वेबरः।

‡ 'कः'—इति ग, घ।

तस्माद् दीक्षिता राजानं गोपायन्ति। नेन्नोऽपहरानिति तस्मात्तच सुगुप्तं चिकीर्षेद्यस्य ह गोपनाया मपहरन्ति हीयते ह॥ १४॥

तस्माद् ब्रह्मचारिण आचार्यं गोपायन्ति। गृहान् पशून्नेन्नोऽपहरानिति तस्मात्तच सुगुप्तं चिकीर्षेद्यस्य ह गोपनाया मपहरन्ति हीयते ह। तेनैतेन सुपर्णी देवेभ्य आत्मानं निरक्रीणीत तस्मादाहुः पुण्यलोक ईजान इति॥ १५॥

ऋणꣳ ह वै पुरुषो जायमान एव। मृत्योरात्मना जायते स यद्यजते यथैव तत् सुपर्णी देवेभ्य आत्मानं निरक्रीणीतैव मेवैष एतन्मृत्योरात्मानं निष्क्रीणीते॥ १६॥

तेन देवा अयजन्त। त मेते गन्धर्वाः सोमरक्षा अन्वाजग्मुस्तेऽन्वागत्याब्रुवन्ननु नो यज्ञ ऽआभजत मा नो यज्ञादन्तर्गातास्त्वेव नोऽपि यज्ञे भाग इति॥ १७॥

ते होचुः। किं नस्ततः स्यादिति यथैवास्यामुत्र गोप्तारोऽभूमैव मेवास्यापीह गोप्तारो भविष्याम इति॥ १८॥

तथेति देवा अब्रुवन्। सोमक्रयणा व इति तानेभ्य एतत् सोमक्रयणाननुदिशत्यथैनानब्रुवंस्तृतीयसवने वो

घृत्याहुतिः प्राप्स्यति न सौम्यापहृतो हि युष्मत्सोम-पीथस्तेन सोमाहुतिं नार्हथेति सैनानेषा तृतीयसवन एव घृत्याहुतिः प्राप्नोति न सौम्या यच्छालाकैर्धिष्ण्यान् व्याघारयति ॥ १९ ॥

अथ यदग्नौ होष्यन्ति। तद्वोऽविष्यतीति स यदग्नौ जुह्वति तदेनानवत्यथ यद्वः सोमं बिभ्रत उपर्युपरि चरिष्यन्ति तद्वोऽविष्यतीति स यदेनान्त्सोमं बिभ्रत उपर्युपरि चरन्ति तदेनानवति तस्मादध्वर्युः समया धिष्ण्यान्नातीयादध्वर्युर्हि सोमं बिभर्त्ति त मेते व्यात्तेन प्रत्यासते स एतेषां व्यात्त मापद्येत त मग्निर्व्वाभि-दहेद्यो वायं देवः पशूना मीष्टे स वा हैन मभिमन्येत तस्माद्यद्यध्वर्यौः शालाया मर्थः स्यादुत्तरेणैवाग्नीध्रीयः सञ्चरेत् ॥ २० ॥

ते वा एते*। सोमस्यैव गुप्त्यै न्युप्यन्त आहवनीयः पुरस्तान्मार्ज्जालीयो दक्षिणत आग्नीध्रीय उत्तरतोऽथ ये सदसि ते पश्चात्† ॥ २१ ॥

तेषां वा अङ्गारानुपकिरन्ति। अङ्गाराननुदिशन्त्येत उ हैवैतदध्रिरेऽङ्गारान्न उपकिरन्त्वङ्गाराननुदिशन्तु तथा यस्मा-

---

* 'ते'–इति ग, घ। † 'पश्चात्'–इति ग, घ।

ल्लोकादागताः स्मो दिवस्तथा तं लोकं प्रति प्रज्ञास्यामस्तथा न जिह्मा* एष्याम इति ॥ २२ ॥

स यानुपकिरन्ति । तेनास्मिंल्लोके प्रत्यक्षं भवन्त्यथ याननुदिशन्ति तेनामुष्मिंल्लोके प्रत्यक्षं भवन्ति ॥ २३ ॥

ते वै द्विनामानो भवन्ति । एत ऽउ हैवैतद्दध्रिरे न वा ऽएभिर्नामभिररात्स्म येषां नः सोम मपाहार्षुर्हन्त द्वितीयानि नामानि करवामहा ऽइति ते द्वितीयानि नामान्यकुर्व्वत तैरराध्नुवन् यानुपहूतसोमपीथान्त्सतोऽथ यज्ञ ऽआभजंस्तस्माद् द्विनामानस्तस्माद्ब्राह्मणो ऽन्नूह्यमाने द्वितीयं नाम कुर्व्वीत राध्नोति हैव य एवं व्विद्वान् द्वितीयं नाम कुरुते† ॥ २४ ॥

स यदग्नौ जुहोति । तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यत्सदसि भक्षयन्ति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्त्यथ यद्वविर्द्धानयोर्नाराशꣳसाः सीदन्ति तत्पितृषु जुहोति तस्मात्पितरः सन्ति ॥ २५ ॥

या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता एव मेवैतद्या इमाः प्रजा अपराभूतास्ता यज्ञ ऽआभजति मनुष्याननु पशवो देवाननु वयाꣳस्योषधयो व्वन-

---

* 'जिह्वा'–इति क, डा०-वेबरेणाप्येकत्र दृष्टः ।

† 'ते'–इति ग, घ ।

स्पृतयो यदिदं किञ्चैव मु तत्सर्व्वं यन्न ऽआभक्तं ते ह स्मैत ऽउभये देवमनुष्याः पितरः सम्पिबन्ते सैषा सम्पा ते ह स्म दृश्यमाना एव पुरा सम्पिबन्त ऽउतैतर्ह्य-दृश्यमानाः ॥ २६ ॥ १ ॥

॥ इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम् [६. २.] ॥

धिष्ण्यपदार्थविधानार्थं[1] माख्यायिका माह– "विजामानो हैवास्येत्यादिना । ये 'धिष्ण्याः', ते 'अस्य' यज्ञस्य 'विजामानः' भ्रातरः, बान्धवाः । कुत इत्यत आह– 'इमे' 'समङ्काः' समान-चिह्नाः, यत एव मतो विजामान इत्यर्थः । समानचिह्नानां भ्रातृत्वे व्याप्तिं दर्शयति– "ये वै समङ्कास्ते विजामान इति । 'एत उ' एते खलु 'अस्य' यज्ञस्य 'आत्मानः'[2] ; अतो विजामान इत्येतदुपपन्नम् । तस्मात् सोमयागे धिष्ण्याः[3] कर्त्तव्या इत्यर्थः ॥ १ ॥

सूत्रत्वेनोक्तं विशदयितु माह– "दिवि वै सोम आसीदथेह देवा इत्यादिना । 'इह' भूलोके 'त एते माये' वस्तुतो अतथा-भूते । सुपर्णीकद्र्वोः किं वास्तवं रूप मिति तद्दर्शयति– "वागेव सुपर्णीयं कद्रूरिति । 'समदं चक्रुः' परस्परं कलह मुद-पादयन् ॥ २ ॥

---

१— 'धिष्ण्योपधानपदार्थविधानार्थं'—इति क ।

२— 'अत्यारः'—इति क ।

३— पुरस्तात् १७६ पृ० ३ टीप्पनी द्रष्टव्या ।

"ते हर्त्तीयमान इति । 'ऋतीयमाने' परस्परं कलहायमाने । 'ऋतिः' सौत्रो धातुः[1] । 'ऊचतुः' । कथम् ? 'नौ' आवयोर्मध्ये 'यतरा' 'दवीयः' अत्यन्तं दूरं 'परापश्यात्' पश्येत । 'सा' दूरदर्शिनी सुपर्णी दूरम् 'ईचस्व'-'इति' 'उवाच' ॥ ३ ॥

"सा हेति । 'सा' दूरं पश्यन्ती 'सुपर्णी' 'उवाच' । कि मिति, उच्यते— "अस्य सलिलस्य पारे अश्वः श्वेतः स्थाणौ सेवते, त महं पश्यामि इति" । अस्यार्थं श्रुतिरेवाविष्करिष्यति । 'त मेव' मया दृष्टं श्वेताश्व मेव हे कद्रु ![2] 'त्वम्' अपि 'पश्यसि'—'इति', न तु ततोऽतिरिक्तम् । सा 'कद्रूः' दूरं विलोक्य 'तं हि'—'इति' 'उवाच' । त मश्वं खलु त्वं पश्यसीत्यर्थः । ततोऽधिक मपि दृष्ट्वा कद्रूः पुनर्ब्रूते । कि मिति, उच्यते— "तस्य वालो न्यषञ्जि, त ममुं वातो धूनोति, त महं पश्यामि इति" । 'वालः' पुच्छं 'न्यषञ्जि' स्थाणौ निषक्त मभूत्, 'तं' वालं 'वातः' वायुः 'धूनोति' कम्पयति ॥ ४ ॥

सुपर्ण्याभिहितस्य अस्य सलिलस्येत्यादेस्तात्पर्यं श्रुतिरेवाह— "सा यत् सुपर्ण्युवाचेति । "अस्य सलिलस्येत्यादि । 'सलिलं' सागरादिसम्बद्धं यथा अनतिलङ्घ्यं भवति, एवं वेदिरपीति सलिलत्वेन निरूप्यते । अग्नेः शुक्लभास्वरत्वात् सर्वाशनत्वाच्च श्वेतरूपत्वम् । यूपस्य स्थाणुत्वं तु साक्षादेव । कद्र्वा यदुक्तं तस्य वाल इत्यादिकम्, तदभिप्रायं दर्शयति— "अथ यत् कद्रूरित्यादिना ।

---

१— पा० सू० ३. १. २९ द्रष्टव्यम् ।

२— "कद्रुकमण्डल्वोश्छन्दसि"—इति पा० सू० ४. १. ७१ ।

"रश्मना हैव सेति। वालवदतिदैर्घ्याद्युपवेष्टिता रश्मना वाल मित्युच्यते ॥ ५ ॥

"सा ह सुपर्णुवाचेति। "सा ह कद्रूरित्यादि। सुपर्ण्या श्वेताश्वादेर्दर्शनार्थ माहूता कद्रूः, सुपर्णी-स्वदृष्टस्य वालस्य सुसिद्धत्वात् 'त्व मेव' द्रष्टावयोः कस्या जय इति ब्रूहीत्यर्थः ॥ ६ ॥

"सा ह सुपर्णी पपातेति। एव मुक्ता सुपर्णी गत्वा कद्रूक्तं वास्तव मवगत्य पुनः 'आगतां' 'तां' सुपर्णीं कद्रूः 'उवाद'—"त्व मजैषी३रहा३ मिति"। प्रश्ने प्लुतिः[1]। तया पृष्टा सुपर्णी 'त्व मजैषीः'—'इति' उवाच। विहितस्याख्यानस्य प्रसिद्धत्वाविष्करणाय नाम करोति— "एतद्ध्याख्यान मिति। 'एतत्' "दिवि वै सोम आसीदित्यादि, "होवाचेत्येतदन्त मित्यर्थः[2] ॥ ७ ॥

"सा ह कद्रूरुवाचेति। पराजितया सुपर्ण्या गायत्र्यादिच्छन्दांसि सृष्ट्वा गायत्र्या दिवि स्थितं सोम माहृत्य देवेभ्यः सकाशात् आत्मनिष्क्रयणं कृत मित्यर्थः "सा ह कद्रूरुवाच आत्मानं वै त्वाजैष मित्यादिनोक्तः ॥ ८ ॥

"सा गायत्री दिवः सोम माहरत्"—इति यत् सङ्क्षेपेणोक्तम्, तद् विस्पष्टयति— "हिरण्मय्योर्ह कुश्योरित्यादिना। 'हिरण्मय्योः

---

१— पा० सू० ८. २. १००।

२— द्वितीयकण्डीतः सप्तमकण्ड्यन्त मिति यावत्। ऐ० ब्रा० ३. ३. १,२; ६. ३. ६ खण्डेष्वपि द्रष्टव्यम्। "इयं वै कद्रूरसौ सुपर्णी छन्दांसि सौपर्णेयाः"—इत्यादि च तै० सं० ६. १. ६. १। महाभारतेऽप्यादिपर्वण्येषा कथा बृंहिता, तथा भागवतेऽपि ६. ६. २१।

कुश्यो:’ आयुधयो: ‘अन्त:’ ‘अवहित:’ आच्छन्न: सोमो ऽभूत्। “जानपद इत्यादिना अयोविकारार्थात् कुशशब्दात् ङीष्[1]। ‘ते’ कुश्यौ ‘क्षुरपवी’ क्षुरधारे इव[2] तीक्ष्णाग्रे ‘निमेषं-निमेषं’ सर्वदेत्यर्थ:। ‘अभिसन्धत्त:’ यथान्यो नापहरेदेवं रक्षत इत्यर्थ:। कुश्योर्वास्तवस्वरूप माह— “दीक्षातपसाविति। “त मेते गन्धर्वा इति। ‘सोमरक्षा:’ सोमरक्षका: ‘एते गन्धर्वा:’ ‘तं’ सोमं ‘जुगुपु:’। ते के? ये ‘इमे’ सदसि वर्त्तमाना: ‘धिष्ण्या:’, (‘इमा: होत्रा:’) इमे होत्रका:, होतृवर्जमैत्रावरुणादय:[3] ॥ ९ ॥

“तयोरन्यतरां कुश्री माच्छिद्देति। गायत्री ‘तां’ छित्वा च ‘देवेभ्य:’ ‘प्रददौ’। ‘तया देवा अदीक्षन्त’ ॥ १० ॥

“अथ द्वितीया मिति। गायत्र्या छिन्ना द्वितीया कुश्री देवेभ्यो दत्ता, सा तपोनामोपसद इत्याह— “तपो ह्युपसद इति ॥ ११ ॥

---

१— पा० सू० ४. १. ४२।

२— नास्त्येतत् पदं क-पुस्तके।

३— “होत्राशब्द: स्त्रीलिङ्गोऽपि पुरुषान् होत्रकानभिधत्ते”— इति ऐ० ब्रा० ६ प० ३अ० ६क० सा० भा०। “होत्रकाणां— मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानाम्”— इति ऐ० ब्रा० ६. २. ५ सा० भा०। “मुख्यवर्जिता द्वादशर्त्त्विजो होत्रका:”— इति आश्व० श्रौ० सू० १. २. २६ वृ०। इति परिभाषया प्रतिवेदं त्रयो होत्रका भवन्ति; चतुर्षु वेदेषु चतुर्णां होत्रध्वर्यूद्गातृब्रह्मणां मुख्यत्वात्। आश्व० श्रौ० ४. १. ३ सूत्राणि द्रष्टव्यानि।

"खदिरेण हेति। सोमाहरणसमये खदिरस्यातिसारत्वात् तं साधनं कृत्वा सोमं भक्षितवती, अतः खादनसाधनत्वात् खदिर इति नाम सम्पन्नम्। अतः खदिरस्य सोमाहरणोपयोगात् सोमयागे यूपः स्फ्यश्च खादिरौ कर्त्तव्यौ। 'अच्छावाकस्य' 'गोपनायाम्'। होत्र-काणा मेव सोमरक्षकगन्धर्वरूपत्वात् अच्छावाकाख्यो होत्रका यदा सोमरक्षकेषु मध्ये रक्षितवान्, तदा गायत्री 'जहार'; अतः 'अच्छावाकः' 'अहीयत' हीनो निकृष्टोऽभूत्। अतएवेतरहोत्रकावत् प्रथमत एव सदःप्रवेश मपि [न] समालभत ॥ १२ ॥

"त मिन्द्राग्नी इति। 'तं' हीन मच्छावाकम्, 'इन्द्राग्नी' ऐन्द्राग्नशस्त्रपाठेन सन्तुष्टौ, 'अनुसमतनुताम्' सन्तान मनुप्रवेश मकुरुताम्। अतः 'अच्छावाकः' 'ऐन्द्राग्नः' इन्द्राग्निदेवताकः। तथा चोत्तरत्र अच्छावाकहोमकाले[1] आम्नास्यते[2]— "अहीयत वा अच्छावाकस्त मिन्द्राग्नी"-इत्यादिना ॥ १३ ॥

"तस्माद् दीक्षिता राजान मित्यादि, औपोद्घातिकं वाक्यम्। स्पष्टम्। 'अपहरान्' अपहरेयुः ॥ १४ ॥ ॥ १५ ॥

सोमाहरणप्रसङ्गात् सुपर्णी-दृष्टान्तमुखेन मृत्युभयपरिहाराय सोमयागस्यावश्यकर्त्तव्यता माह— "ऋणं ह वै पुरुषो जायमान एव मृत्योरात्मना जायत इत्यादिना। 'जायमान एव मृत्योः' ऋण-भावे जनन मेवोपाधिरित्यर्थः। इद मृणं प्रातिभाव्यवदन्यत

---

१— 'अच्छावाकचमसहोमकाले'-इति ङ।
२— उपरिष्टाद् ( ४. ३. १. १, २. ) द्रष्टव्यम्।

आयातं न भवति, किन्तु स्वत एवायात मित्येव मर्थ माह— 'आत्मना'—इति ॥ १६ ॥

"तेन देवा अयजन्तेत्यादि। 'तेन' गायत्र्याहृतेन। "अनु नो यज्ञ आ भजतेति। 'नः' अस्मानपि अस्मिन् 'यज्ञे' 'अन्वाभजत' अन्वाभाजयत, हविर्भागयुक्तान् युष्मानस्मानपि भागिनः कुरुत। उक्तवैपरीत्यप्रतिषेधः— "मा नो यज्ञादिति। 'अन्तर्गाताः' अन्तरितान् मा कार्ष्ट। "इणो गा लुङि"-इति[1] गादेशे, "गातिस्था" -इति[2] सिचो लुक् ॥ १७ ॥ ॥ १८ ॥

"तथेतीति। "सोमक्रयणा व इतीति। सोमः क्रीयते यैर्गन्धर्वादिभिः, ते 'सोमक्रयणाः', 'वः' युष्माकं 'तान्' भागान् एतस्मिन् सोमक्रयकाले 'एभ्यः' गन्धर्वेभ्यः, धिष्ण्यरूपेणावस्थितेभ्यः 'अनुदिशति' अनुदिशेत्; एते युष्मभ्यं भागा इति ब्रूयात्। 'घृत्या' घृतसाध्या, 'सा' 'तृतीयसवने' युष्मान् 'प्राप्स्यति', 'न सोम्या'; 'अपहृतो हि युष्मत्सोमपीयः' इति। पातव्यः सोमः 'सोमपीयः' सोमस्यापहृतत्वादित्यर्थः। "यच्छालाकैर्धिष्ण्यान् व्याघारयतीति। 'यद्' यया आहुत्या 'शालाकैः' तृणसमूहैः विहृतान् 'धिष्ण्यान्' घृतेन 'व्याघारयति' सैषा हुतेति ॥ १९ ॥

"अथ यदग्नौ होष्यन्तीति। 'अथ' प्रदीपनानन्तरम्, 'अग्नौ' प्रदीप्ते, अग्निष्वित्यर्थः। 'होष्यन्ति', 'तद्' आज्यं 'वः' युष्मान् 'अवि-

---

१— पा० सू० २. ४. ४५।

२— पा० सू० २. ४. ७७।

ष्यति’ तर्पयिष्यति ‘इति’ देववाक्यम्। तत्तात्पर्यं श्रुतिः स्वय मेव दर्शयति— “स यदग्नौ जुह्वतीति। तर्हि सोमाहुतिः कथं लभ्यत इति तत्राह— “अथ यद् वः सोमं बिभ्रत उपर्युपरि चरिष्यन्ति, तद् वोऽविष्यतीति। स्पष्ट मन्यत्। सोमधारकस्याध्वर्योर्धिष्ण्यातिक्रमं प्रसक्तं निषेधति— “तस्मादध्वर्युः समया धिष्ण्यान्नातीया-दिति। “त मेते व्यात्तेन प्रत्यासत इत्यादि। ‘तम्’ अध्वर्युम् ‘एते’ सोमरक्षकाः धिष्ण्याग्नयः ‘व्यात्तेन’ विवृतेनास्येनोपलक्षिताः सन्तः, प्रतीक्ष्य निवसन्ति। ‘सः’ अपि धिष्ण्यानतिक्रामन् ‘एतेषां’ ‘व्यात्तं’ विवृतं मुखं प्रविशेत्। प्रवेशे का हानिरित्यत आह— “त मग्निर्वाभिदहेद् यो वायं देवः पशूना मिति। “स वा हैन मभि मन्येतेति। अभिमानो हिंसेच्छा। तर्हि सञ्चारेऽपेक्षिते क उपाय इति तं दर्शयति— “तस्माद् यद्यध्वर्योः शालाया मिति। ‘यदि’ ‘अर्थः स्यात् शालायां’ प्राग्वंशे प्रयोजनं भवेत्॥ २०॥

धिष्ण्यानां सोमरक्षकत्व मभिधातुं सर्वेषां तद्रक्षकत्व माह— “ते वा एते सोमस्यैवेति॥ २१॥

सर्वेषां सोमरक्षकत्वे समाने सदोगतानां धिष्ण्याना मिव कथ मितरेषा मनुदेशनं नास्तीत्याह— “तेषां वा अर्द्धानुपकिरन्त्यर्द्धा-ननुदिशन्तीत्यादिना। अनुदेशो नाम विद्यमानपदार्थ एवं भव-तीति निर्देशः। अत एवाहवनीयादौ तत्तद्गन्धर्वात्मना “सम्राडसि कृशानुः”—[१]इत्याद्यनुदेशः क्रियते। अर्द्धा धिष्ण्याः कर्त्तव्याः, केचन

१— वा० सं० ५. ३२. ८।

अनुदेश्याः इति विधिरुन्नीयते[1]। द्वैरूप्ये कारण माह– "तथा यस्मादिति। 'तथा' सति, धिष्ण्यनिवापाभावे सति यल्लोकं पूर्व मवस्थितं द्युलोकं 'प्रति प्रज्ञास्यामः' जानीम इति, "तथा न जिह्माः एष्याम इतीति। द्युलोकं सर्वथा परित्यज्य भूमौ कृतनिवासानां पुनर्द्युगमने सति जिह्मता स्यात्। सर्वेषां केवल मनुदेशने भूलोके प्रत्यक्षता न स्यात्। अत उभयार्थ मुभयथाकारणम् ॥ २२, २३ ॥

यथा स्थानद्वैविध्यम्, एवं नामद्वैविध्य मपि; तत्तु सङ्केतपूर्वक मित्याह– "ते वै द्विनामानो भवन्त्येत उ हैवैतद्दधिर इति। नामान्तरधारणविषये मतिं चक्रुरित्यर्थः। पूर्वेषां नाम्ना मपरितोषे कारण माह–"न वा एभिर्नामभिररात्स्मेति। 'न अरात्स्म' समृद्धा न भवामि। "येषा मित्यादि स्पष्टम्। "विभुरसि प्रवाहणः"[2]– इत्याद्यग्न्युपस्थानमन्त्रेषु प्रतिपादितानि द्विनामानि। द्वितीयनाम्ना प्राप्तां समृद्धिं दर्शयति– "यानपवृत्तसोमपीथान्त्सतोऽथ यज्ञ आभजन्निति। यज्ञभागन्तु "तृतीयसवने वो हुत्याऽऽहुतिः प्राप्स्यतीत्युक्त मित्यर्थः[3] ॥ २४ ॥

अथ प्रसङ्गात् सोमयागं देवमनुष्यपितृद्वारेण सर्वजगत्स्थितिहेतुरिति प्रशंसति– "स यदग्नौ जुहोतीति। अग्नौ तत्तद्देवोद्देशेन होम एव सर्वदेवेषु होमो भवति। 'तस्मात्' यज्ञभागलाभात्

---

१— "अर्द्धव्रत-मन्त्रं वाजसनेयिनः समामनन्ति, अर्द्धं मन्त्रेणोत्तमे प्रवर्ग्योपसदौ"–इति आप० श्रौ० सू० ११. १५. ७।

२— वा० सं० ५. ३१. १। ३—पुरस्तात् (१६४ पृ० २० पं०) द्रष्टव्यम्।

'देवाः' 'सन्ति' आत्मानं लभन्ते; इदानी मपि 'अपराभूताः' अविनष्टा वर्त्तन्त इत्यर्थः। एवं मनुष्यपितृवाक्ये अपि योज्ये। "अथ यद्धविर्द्धानयोर्नाराशंसाः सीदन्ति, तत् पितृषु जुहोतीति। हविर्द्धानशकटस्य दक्षिणभागे चमसेषु[1] ये सोमा हुतावशिष्टा भक्षिताः पुनराप्यायिताश्च वर्त्तन्ते, ते नाराशंसाः; तेन पितृदेवत्याः। तत्र स्थापनेषु पितृषु जुहोति॥ २५॥

"या वै प्रजा इति। 'या वै प्रजाः' देवपितृमनुष्यव्यतिरिक्ताः, असुररक्षःप्रभृतिकाः, 'ताः' 'पराभूताः' विनष्टा अभवन्। याप्येवं पूर्वं मासीत् परमा च। 'एतद्' इदानी मपि, 'अपराभूताः' 'याः' सन्ति, 'ताः' देवाद्याः 'यज्ञे' 'आभजति'। अस्तु तेषां यज्ञभागः, तदितरेषां पशुपक्षिप्रभृतीनां कथं यज्ञेऽनुप्रवेश इति, तत्प्रकार माह— "मनुष्याननुपशव इति। वयसा मन्तरिक्षसञ्चारसाम्येन देवानुप्रवेशाभिधानम्; ओषध्यादीनां रक्षकाभावेन देवाधीना स्थितिः। "उभये देवमनुष्याः पितरः इति। देवमनुष्य एको राशिः, पितरस्त्वेकः, द्वैराश्य मापन्ना उभयेऽपि 'सम्पिबन्ते' साहित्येनैकीभावेन पानं कुर्वन्ति। 'सैषा' 'सम्पा' सह पीतिः। "आतश्चोपसर्गे"-इति[2] भावे अङ्। प्रथमं देवैरग्निमुखेन पानम्,

---

१— "एष यश्चमसो देवपानस्तस्मिन् देवा अमृता मादयन्ते"–इति ऋ० सं० १०. १६. ८। "औदुम्बरेण चमसेन चतुःस्रक्तिना"–इति चेद्वैवोपरिष्टात् ( ७. २. ११. २ ) आम्नास्यते।

२— पा० सू० ३. ३. १०६।

पश्चान्मनुष्यैः सदसि शेषपानम्, पश्चान्नाराशंसेन पितॄणाम्; इत्येवंरूपानुसन्धेयेत्यर्थः। तेषा मागमन मेव न दृश्यते, कुतः सहपान मिति, तत्राह— "ते ह स्म दृश्यमाना एवेति[1] ॥ १६ ॥ १ [ ६. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥

---

[ अथ तृतीयं ब्राह्मणम्. ]

सर्वं वा ऽएषोऽभि दीक्षते। यो दीक्षते यज्ञꣳ ह्यभि दीक्षते यज्ञꣳ ह्येवेदꣳ सर्व मनु तं यज्ञꣳ सम्भृत्य य मिम मभि दीक्षते सर्व मिदं व्विसृजते ॥ १ ॥

यद्वैसर्जिनानि जुहोति। स यदिदꣳ सर्वꣳ व्विसृजते

---

१— "धिष्ण्यान् निवपति"–इत्यादीनि का० श्रौ० सूत्राणीह समीक्षितव्यानि ( ८. ६. १५–२२. )। "चात्वालाद्धिष्ण्यानुपवपति"–इत्यादीनि आप० श्रौ० ११. १४. १–६ सूत्राणि चैवमर्थकानि।

तस्माद् वैसर्जिनानि* नाम तस्माद्योऽपिव्रतः स्यात्सो-ऽन्वारभेत यद्यु ऽअन्यच्च चरेन्नाद्रियेत यद्वै जुहोति तद्देवेदꣳ सर्वं विसृजते ॥ २ ॥

यद्वेव वैसर्जिनानि जुहोति । यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषा मियं विक्रान्ति-रिद मेव प्रथमेन पदेन पस्पाराथेद मन्तरिक्षं द्वितीयेन दिव मुत्तमेनैताम्वेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते यज्जुहोति तस्माद्वैसर्जिनानि जुहोति† ॥ ३ ॥

सोऽपराह्णे वेदिꣳ स्तीर्त्वा । अर्द्धव्रतं प्रदाय सम्प्र-पद्यत ऽइध्म मभ्यादधत्युपयमनीरुपकल्पयन्त्याज्य मधि-श्रयति स्रुचः सम्मार्ष्ट्युपस्थे राजानं यजमानः कुरुतेऽथ सोमक्रयण्यै पदं जघनेन गार्हपत्यं परिकिरति पदा वै प्रतितिष्ठति प्रतिष्ठित्या ऽएव‡ ॥ ४ ॥

तद्वैके । चतुर्द्धा कुर्व्वन्ति यत्राहवनीय मुद्धरन्ति तास्तूपयमनीषु चतुर्भाग मक्षं चतुर्भागेणोपाञ्जन्त्ये-तास्तूपयमनीषु चतुर्भागं जघनेन गार्हपत्यं चतुर्भागं परिकिरति ॥ ५ ॥

---

* 'वैसर्जनानि'–इति स्यात् सायणसम्मतः । एव मिहोत्तरत्रापि । भाष्यं ( ३८३ पृ० ६ पं० ) द्रष्टव्यम् ।

† 'ति'–इति ग, घ । ‡ 'व'–इति ग, घ ।

तद् तथा न कुर्य्यात्। सार्द्धं मेव परिकिरेज्जघनेन गार्हपत्य मथोत्पूयाज्यं चतुर्गृहीते जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं पृषदाज्यं ज्योतिरसि विश्वरूपं विश्वेषां देवानाꣳ समिदिति वैश्वदेवꣳ हि पृषदाज्यं धारयन्ति स्रुचो यदा प्रदीप्त इध्मो भवति ॥ ६ ॥

अथ जुहोति। त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहेति तदेतेनैवास्यां पृथिव्यां प्रतिष्ठायां प्रतितिष्ठत्येतेनेमं लोकꣳ स्पृणुते*॥७॥

अथाप्तुवे द्वितीया माहुतिं जुहोति। जुषाणो ऽअप्तुराज्यस्य वेतु स्वाहेत्येष उ हैवैतदुवाच रक्षोभ्यो वै बिभेमि यथा मान्तरा नाष्ट्रा रक्षाꣳसि न हिनसन्नेवं मा कनीयाꣳस मेव वधात्† कृत्वातिनयत स्तोक मेव स्तोको ह्यप्तुरिति त मेतत् कनीयाꣳस मेव वधात् कृत्वात्यनयन्त्स्तोक मेव स्तोको ह्यप्तू रक्षोभ्यो भीषा तस्मादप्तुवे द्वितीया माहुतिं जुहोति ॥ ८ ॥

उद्यच्छन्तीध्मम्‡। उपयच्छन्त्युपयमनीरथाहाग्नये

---

* 'ते'–इति ग, घ।

† 'बधात्'–इति पवर्गीयादिपाठ इह, उत्तरत्र च सर्वत्र ग-घ-पुस्तकयोः।

‡ 'ध्मम्'–इति ग, घ।

प्रह्रियमाणायानुब्रूहि सोमाय प्रणीयमानायेति वाग्नये प्रह्रियमाणायानुब्रूहीति त्वेव ब्रूयात् ॥ ९ ॥

आददते ग्राव्णः। द्रोणकलशं व्वायव्यानीध्मं कार्ष्मर्य-मयान् परिधीनाश्ववालं प्रस्तरं मैक्षव्यौ व्विधृती* तद्बर्हिरुपसन्नद्धं भवति वपाश्रपण्यौ रशने ऽअरणी ऽअधिमन्थनः शकलो व्वृषणौ तत्समादाय प्राञ्च आयन्ति स एष ऊर्द्ध्वो यज्ञ एति ॥ १० ॥

तदायत्सु व्वाचयति। अग्ने नय सुपथा राये ऽअस्मा-न्विश्वानि देव व्वयुनानि व्विद्वान्†। युयोध्यस्मज्जुहुराण-मेनो भूयिष्ठां ते नम उक्तिं व्विधेमेत्यग्निमेवैतत्पुर-स्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षांस्यपघ्नन्नेत्यथाभये-नानाष्ट्रेण हरन्ति त ऽआयन्त्यागच्छन्त्याग्नीध्रं त माग्नीध्रे निदधाति ॥ ११ ॥

स निहिते जुहोति। अयं नो ऽअग्निर्व्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयं व्वाजान् जयतु‡ व्वाज-सातावयꣳ शत्रून् जयतु§ जर्हृषाणः स्वाहेति तदेते-

---

* 'व्विधृती'–इति ग, घ।　　† 'व्विद्वान्'–इति ग, घ।

‡ 'व्वाजां जयतु'–इति क, ख।　　§ 'शत्रं जयतु'–इति क, ख।

नैवैतस्मिन्नन्तरिक्षे प्रतिष्ठायां प्रतितिष्ठत्येतेनैतंल्लोकꣳ* स्पृणुते ॥ १२ ॥

तद्देव निदधति ग्राव्णः। द्रोणकलशं व्वायव्यान् यथेतर मादायायन्ति तदुत्तरेणाहवनीय मुपसादयन्ति ॥ १३ ॥

प्रोक्षणीरध्वर्युरादत्ते। स इध्म मेवाग्रे प्रोक्षत्यथ व्वेदि मथास्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय व्विस्रꣳस्य ग्रन्थि माश्ववालः प्रस्तर उपसन्नद्धो भवति तं गृह्णाति गृहीत्वा प्रस्तर मेकवृद्बर्हि स्तृणाति स्तीर्त्वा बर्हिः कार्ष्मर्यमयान् परिधीन् परिदधाति परिधाय परिधीन्त्समिधावभ्यादधात्यभ्याधाय समिधौ ॥ १४ ॥

अथ जुहोति। उरु व्विष्णो व्विक्रमस्वोरु क्षयाय नस्कृधि। घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेति तदेतेनैवैतस्यां दिवि प्रतिष्ठायां प्रतितिष्ठत्येतेनैतं लोकꣳ स्पृणुते यदेतया जुहोति ॥ १५ ॥

यद्वेव वैष्णव्यर्चा जुहोति। कनीयाꣳसं वा ऽएन मेतद्दधात् छत्वात्यनैषु स्तोक मेव स्तोको ह्यमुस्त मेतदभयं

---

* 'तं लोकꣳ'–इति क, ख।

प्राप्य य एवैष तं करोति यज्ञ मेव यज्ञो हि विष्णु-स्तस्माद्वैष्णव्यर्चा जुहोति ॥ १६ ॥

अथासाद्य स्रुचः । अप उपस्पृश्य राजानं प्रपादयति तद्यदासाद्य स्रुचो ऽप उपस्पृश्य राजानं प्रपादयति वज्रो वा ऽआज्यꣳ रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमꣳ हिनसानीति तस्मादासाद्य स्रुचो ऽप उपस्पृश्य राजानं प्रपादयति ॥ १७ ॥

स दक्षिणस्य हविर्द्धानस्य नीडे कृष्णाजिन मास्तृणाति । तदेन मासादयति देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्निति तदेनं देवायैव सवित्रे परि-ददाति गुप्त्यै ॥ १८ ॥

अथानुसृज्योपतिष्ठते । एतत् त्वं देव सोम देवो देवां२॥ऽउपागा* इद महं मनुष्यान्त्सह रायस्पोषेणे-त्यग्नीषोमौ वा ऽएत मन्तर्जम्भ† ऽआदधाते यो दीक्षत ऽआग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्भवति यो वै विष्णुः सोमः स हविर्वा ऽएष देवानां भवति यो दीक्षते तदेन मन्तर्जम्भ ऽआदधाते तत्प्रत्यक्षꣳ सोमान्निर्मुच्यते यद्वाहैतत् त्वं देव सोम देवो देवाँ२॥ऽउपागा इद मह

---

* 'देवांऽउपागा'—इति क, ख। एव मुत्तरत्र च।

† 'मन्तर्जभ'—इति च पाठभेदत्वेन स्वीकृतम् डा० वे०। एव मुत्तरत्र च।

मनुष्यान्त्सह रायस्पोषेणेति भूमा वै रायस्पोषः सह भूम्नेत्येवैतदाह ॥ १९ ॥

अथोपनिष्क्रामति। स्वाहा निर्व्वरुणस्य पाशान्मुच्य ऽइति व्वरुणपाशे वा ऽएषो ऽन्तर्भवति योऽन्यस्यासंस्तन्प्रत्युक्षं व्वरुणपाशान्निर्मुच्यते यदाह स्वाहा निर्व्वरुणस्य पाशान्मुच्य ऽइति* ॥ २० ॥

अथेत्याहवनीये समिध मभ्यादधाति। अग्ने व्रतपास्त्वे व्रतपा इत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाग्ने व्रतपास्त्वे व्रतपा इति या तव तनूर्म्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ सा मयि। यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरमꣳस्तानु तपस्तपस्पतिरिति तन्प्रत्युक्ष मग्नेर्निर्मुच्यते स स्वेन सतात्मना यजते तस्मादस्याचाश्नन्ति मानुषो हि भवति तस्मादस्याच नाम गृह्णन्ति मानुषो हि भवत्यथ यत्पुरा नाश्नन्ति यथा हविषो ऽहुतस्य नाश्नीयादेवं तत्तस्माद्दीक्षितस्य नाश्नीयादथाचाङ्गुलीर्व्विसृजते ॥ २१ ॥ २ ॥

॥ इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् [ ६. ३. ] ॥

---

* 'इति'—इति ग, घ।

वैसर्जनीयानि विधातु माह—"सर्वं वा एषोऽभि दीक्षत इति। यो दीक्षते एष इति सम्बन्धः। कथं सर्व मभीति, तत्राह— "यज्ञं ह्यभिदीक्षत इति। यज्ञस्य कथं सर्वत्व मिति, तत्राह— "यज्ञं ह्येवेदं सर्व मन्विति। 'इदं सर्वं' 'यज्ञम्' 'अनु'सृत्य उत्पन्नम्; कर्मफलं वा सर्वस्य जगतः। 'य मिमं' सर्वं भूतं 'यज्ञम्' 'अभि'-लक्ष्य 'दीक्षते', 'तं' यज्ञं 'सम्भृत्य' वैसर्जनहोमान्तं प्राचीन मङ्ग-जातं कृत्वेत्यर्थः। कृष्णाजिनमेखलादिकं तदिदं 'सर्वं' 'विसृजते'। पूर्वं व्रतपरित्यागासम्भवात् होमानन्तरं व्रतपरित्यागः॥ १॥

"यद् वैसर्जिनानि जुहोतीति। विसर्जनसाधनत्वाद् वैसर्जना-नीति[1] नाम सम्पन्नम्। 'तस्माद्' विसर्जनसम्बन्धित्वाद् 'योऽपिव्रतः स्यात्' व्रतं भोजनं, यजमानेन सह प्राप्तभोजनः स्याद्, बन्धुवर्गः स्यादित्यर्थः। "स मपिव्रतान् कृयध्व मिति सम्प्रेष्यति"—इत्यापस्तम्बे-नोक्तम्[2]। 'सः' यजमानः 'अन्वारभेत'। यद्यपि कश्चिद् 'अन्यत्र' देशान्तरे वर्त्तते, 'तन्नाद्रियेत'; सर्वथाक्रातव्य इति बुद्धिं न कुर्यात्। तथाच कात्यायनः— "अपिव्रताश्चान्वारभन्ते यजमानं वाससाच्छा-दयत्येनांस्त्वरत्सु नाद्रियेत"—इति[3]। 'यद् वै' यदेव जुहोति वैसर्ज-नानि, 'तदेवेदं' 'सर्वं' व्रतं 'विसृजते' विसर्जयेत्॥ २॥

---

१— तदेवं 'वैसर्जिनानि'-इतीकारमध्यं पदं न स्यात् सायणस्य।

२— आप० श्रौ० सू० ११. १६. १२।

३— का० श्रौ० सू० ८. ६. ३६, ३७, ३८। येषां यजमानव्रतेऽपि व्रतत्व मस्ति, दायाद्येनाविभक्ता इति पितृभूतिः। अपिव्रता गोत्रजा इति

वैसर्जनहोमं प्रकारान्तरेण प्रशंसति— "द्वे वैसर्जनानि जुहोति यज्ञो वै विष्णुरित्यादिना[1] विक्रान्तिं विशिनष्टि— "येषा मियं विक्रान्तिरिति। येय मिदानीं परिदृश्यमानप्रकारा स्वाधीनलोक-त्रयरूपा 'विक्रान्तिः' इति, एष यज्ञाख्यो 'विष्णुः' 'एतस्मै' यजमानाय 'विक्रमते'। विष्णोर्विक्रमणं कुतो लभ्यत इति तद् दर्शयति— "यज्जुहोतीति। आहवनीयाग्नीध्रोत्तरवेदिरूपेषु त्रिषु स्थानेषु होम एवात्र यज्ञाख्यस्य विष्णोर्यजमानार्थभूरादिलोकत्रयव्याप्तिरित्यर्थः। तस्माद् वैसर्जनहोमाः कर्त्तव्या इत्यर्थः[2] ॥ ३ ॥

इत्थं वैसर्जनानि[3] विधाय तद्धोमकालं मन्त्रं च विधास्यन् अन्तरालवर्त्तिन मग्नीषोमीयप्रयोग माह— "सोऽपराह्णे वेदिं स्तीर्त्वेत्यादिना[4]। दिनस्यापराह्णकाले सौमिकवेदिं स्तीर्त्वा। "अर्द्धव्रतं प्रदायेति[5]। तस्मिन् दिने एकस्तनम्[6]; व्रतार्द्धस्य प्रातर्व्रतार्थ मुपयुक्तत्वादर्द्धव्रतं प्रदायेत्युक्तम्। स्पष्ट मन्यत्। "अथ सोम-क्रयण्यै पदं जघनेन गार्हपत्यं परिकिरतीति। सोमक्रयकाले य

---

कर्कोपाध्यायः। संसृष्टं साधारणं कर्म येषां ते अपित्र्यता दायादाः; ते ह्येकेनापि कृष्यादि कर्म कृतं सर्वं उपजीवन्तीति हरिस्वामिनः।

१— "द्वाभ्यां गार्हपत्ये जुहोति"—इत्यादि च तै० सं० ६. ३. २. २।

२— "सुवर्गाय वा एतानि"—इत्यादि तै० सं० ६. ३. २. १।

३— 'वैसर्जिनानि'—इति क। एव मन्यत्रापि सर्वत्र।

४— का० श्रौ० सू० ८, ६. १६, ३०।

५— "अर्द्धव्रत मत्र वाजसनेयिनः समामनन्ति"—इति आप० श्रौ० सू० ११. १५. ७।

६— 'एकस्तनम्'—इति क।

एकहायन्याः सप्तमपदपांशुर्धृतः[१], तं[२] प्राचीनवंशगतस्याहवनीयस्य पश्चाद्भागे प्रक्षिपेदित्यर्थः। प्रक्षेपं प्रशंसति— "पदा वै प्रतितिष्ठति प्रतिष्ठित्या एवेति। पदसम्बद्धपांशोः[३] प्रतिष्ठारूपाया माहवनीय-जघनार्द्धप्रदेशलक्षणपृथिव्यां स्थापनं यजमानस्य 'पदा' प्रतिष्ठिति-र्भवति ; अतः स क्षेपः 'प्रतिष्ठित्यै' सम्पद्यते ॥ ४ ॥

पदपांशोः[४] चतुर्द्धा विभज्य विनियोगः केषाञ्चित् पक्षः, त मुदाहृत्य निराचष्टे— "तद्धैके चतुर्द्धा कुर्वन्तीत्यादिना। "तासूप-यमनीष्विति। अग्नीषोमीयप्रणयनकाले तास्वित्यर्थः। अनेनैवाभि-प्रायेण जघनेन सोमक्रयणीपदपांशोर्विनियोगो नोक्तः कात्यायनेन। अत्र "अग्नीषोमीयवेदेः स्तरण मग्रहणं प्रस्तरस्यापराह्णेऽर्द्धव्रते"—इत्यादि, "शालाद्वार्य मपरेण सोमक्रयणीपदं प्रकिरति चतुर्द्धैके"—इत्यन्तं सूत्रजातं[५] द्रष्टव्यम् ॥ ५ ॥

"तदु तथेति। अग्नीषोमीयार्थ माज्यपृषदाज्ययोर्ग्रहणं विधत्ते— "अथोत्पूयाज्यं चतुर्गृहीत मिति[६]। पृषदाज्यग्रहणमन्त्र माह— "ज्योतिरसीति[७]। हे पृषदाज्य ! त्वं 'ज्योतिः' द्योतमानो द्योतको

---

१— पुरस्तात् ३. १. ३–१० द्रष्टव्यम्।

२— 'सप्तमपदपांसुम्'–इति क।

३— पांशुशब्दस्य दन्त्योपान्तपाठोऽप्यनेकत्र।

४— 'पदपांसु'–इति क।

५— का० श्रौ० सू० ८. ६. २६–३२।

६— का० श्रौ० सू० ८. ६. ३४। ७— वा० सं० ५. ३५. १।

वा भवसि । ज्योतिर्विशेष्यते— "विश्वरूप मिति । वैचित्र्याद् विश्वरूपत्वम् । आज्यस्य साधारण्येन इतरद्रव्यवत् प्रतिनियतदैवतत्वाभावात् पृषदाज्य मपि विश्वेषां देवानां समिदित्युच्यते । अनेकद्रव्यात्मकत्वाद्वा वैश्वदेवत्वम्[1] ॥ ६ ॥

इदानीं समन्त्रक माहवनीये वैसर्जनहोमं विधत्ते— "अथ जुहोति त्वं सोम तनूकृद्भ्य इति[2] । जुह्वा व्यापृतत्वात् प्रचरण्या होमः[3] ।

मन्त्रस्याय मर्थः— हे 'सोम !' 'त्वं' 'तनूकृद्भ्यः' तनूं शरीरं कृन्तति तुन्दतीति तनूकृन्ति रक्षांसि, द्विषन्तीति द्वेषांसि, अन्यैः अस्मद्विरोधिभिरभिचरद्भिः कृतानि प्रेरितानि, तादृशेभ्यो नियन्तासि । यथा तादृशानि अस्मान् न बाधन्ते, तथा पालयसि । तस्मात् त्व मेवास्माकम् 'उरु' प्रभूतं 'वरूथं' बलम् 'असि' । तस्मै तुभ्य मिदं सुहुत मस्तु ॥

तदेतेनेत्यादि । वैसर्जनानां लोकत्रयजयरूपत्वस्योक्तत्वात् गार्हपत्यहोमः पृथिव्यां प्रतिष्ठारूपः । अस्यां जायापत्ययोश्च प्रतिष्ठोपपद्यत इति तदर्थ माह— "एतेनेमं लोकं स्तृणुत इति[4] ॥ ७ ॥

आहुत्यन्तरं समन्त्रकं विधत्ते— "अथाग्नये द्वितीया माहुति

---

१— "ध्रुवायाः पुरस्तात् पृषदाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति समिदन्तेन"—इति का० श्रौ० सू० ५. ४. २६ ।

२— वा० सं० ५. ३५. २ । ३— का० श्रौ० सू० ८. ७. १ ।

४— "वैसर्जनानि जुहोति रक्षसा मपहत्यै"—इत्यादि तै०सं० ६. ३. २. ३ ।

मिति[1]। 'अंशुः' सूक्ष्मरूपः सोमः। सः 'अंशुः', आज्यस्य 'जुषाणः' प्रीयमाणः 'वेतु' भक्षयतु आज्यम्, 'स्वाहा' सुहुत मस्तु॥

मन्त्रतात्पर्य माह[2]— "एष उ हैवेति। 'एषः' मन्त्रः एव, 'एतद्' वक्ष्यमाणम् 'उवाच'। एतच्छब्दार्थं माह— "रक्षोभ्यो वा इत्यादिना। "यथा मान्तरेति। प्रणयनकाले मध्यमार्गे शालामुखीयहविर्द्धानयोरन्तराले इत्यर्थः। "कनीयांस मेव बधात् कृत्वेति। रक्षःकृताद् 'बधात्' हेतोः 'कनीयांसं कृत्वा'। कनीयः-शब्दार्थं माह— "स्तोक मेवेति। "स्तोको ह्यंशुरित्यादि स्पष्टम्॥ ८॥

"उद्यच्छन्तीध्म मिति[3]। "उपयच्छन्त्युपयमनीरिति। इध्मा-धानोपयमन्युपकल्पादीनां तु कृते[4] प्रदीप्तेध्मगतम् अग्निम् 'उद्य-च्छन्ति' ऊर्द्धं धारयेत्। तदाधारेषु नीयमानाः सिकता अपि 'उपयच्छन्ति' अधो धारयेत्।

अग्नीषोमप्रणयनप्रैषविषये विकल्पपक्षं निराकृत्य 'अग्नये प्रह्रिय-माणाय'-इति पक्षं सिद्धान्तयति— "अथाहाग्नय इत्यादिना[5]॥९॥

---

१— का० श्रौ० सू० ८. ७. २।

२— तत्पाठस्तु— वा० सं० ५. ३५. ३।

३— ३०० पृष्ठायां ४ पङ्क्तौ द्रष्टव्यम्।

४— ५ अ० २ ब्रा० १ क० (२९५, २९९ पृ०) द्रष्टव्यम्।

५— का० श्रौ० सू० ८. ७. ३, ४।

"आददते ग्रावण इत्यादि[१]। 'ग्रावणः' सोमाभिषवार्थान् पाषाणान्[२]। 'द्रोणकलशः' सोमाधारः, प्रभूतः पात्रविशेषः[३]। 'वायव्यान्' ग्रहान्,[४] वायुदेवत्यानि सोमपात्राणि[५]। "ग्रावणो वायव्यानि"—इत्यादि श्रुतेरेव[६] पात्राणां वायव्यत्वम्। 'इध्मम्[७]। काश्मर्यपरिध्याद्याः[८] पश्वर्थाः[९]। "तद्बर्हिरुपसन्नद्धं भवतीति[१०]। आतिथ्याया मास्तीर्ण मित्यर्थः; "यदातिथ्यायां बर्हिस्तदुपसदस्, तदाग्नीषोमीयस्य"—इति श्रुतेः[११]। 'वपाश्रपण्यौ' पशुवपाश्रपणसाधने

१— "आहवनीयं गच्छत्यादाय ग्रावद्रोणकलशसोमपात्राणीध्मचतुष्टयञ्च सन्नद्धं वपाश्रयणी रशने शकलत्रयणं मरणी च"—इति का० श्रौ० सू० ८. ७. ५।

२— पञ्च ग्रावाणोऽभिषवार्थाः पाषाणाः।

३— द्रुममयो वैकङ्कतः, यस्योपरिधाराग्रहा गृह्यन्ते।

४— 'वायव्यानि ग्रहाः'—इति क्व।

५— नव ग्रहपात्राणि, दश चमसाः, परिप्लवा, ऋतुपात्रे, ऊर्णापात्रे, स्थाल्यस्वतस्रः, पूतभृदाधवनीयौ, उदञ्चनः, सोमासन्दी इत्येवमादीनि।

६— तै० स० ६. ३. २. १०।

७— "इध्मं विंशतिकाष्ठकम्"—इति का० श्रौ० ८. ७. ५ सू० वृ०।

८— 'परिध्याद्याः'—इत्येव क्व।

९— "कार्ष्मर्यमयाः परिधयः"—इति का० श्रौ० सू० ८. १. १२। "कार्श्मर्यः श्रीपर्णी, तन्मयाः" इति तत्र या० दे०।

१०— का० श्रौ० सू० ८. १. १५ वृत्तिर्द्रष्टव्या।

११— ऐ० ब्रा० १. ४. ८ सा० भा० द्रष्टव्यम्। जै० सू० ४. २. २९, ३०. १४ अधिकरण मेतद्विचारार्थक मेव। तत्रैव १२. १. ४२, ४३. १९ अधिकरण मपि।

कार्श्मर्यशाखे[1]। 'रशने' यूपपश्वर्थे द्वे[2]। 'अरणी' द्वे[3]। 'अधिमन्थनः शकलः' उत्तरारणेरधस्तात् स्थाप्यः। 'वृषणौ' वृषणस्थानीयौ दर्भौ। एतान् सोमार्थान् आग्नीषोमीयार्थांश्च 'समादाय' 'प्राञ्चः' 'आयन्ति' गच्छेयुः। "स एष ऊर्द्धो यज्ञ एतीति। अध्वर्यु-प्रमुखैर्यज्ञाङ्गाना मुद्यमनाद् 'यज्ञः' एव 'ऊर्द्धः एति' ऊर्द्धं गतो भवति ॥ १० ॥

"तदायत्सु वाचयतीति[4]। तेषु सर्वेषु 'आयत्सु' "अग्ने नय"—इति[5] 'वाचयति' अध्वर्युः।

तस्याय मर्थः।— हे 'अग्ने'! 'देव!' 'नय' प्रापय 'अस्मान्' 'राये' धनार्थं 'सुपथा' शोभनेन मार्गेण। त्वं 'विश्वानि' 'वयुनानि' मार्गान् 'विद्वान्' जानन्। किञ्च 'जुहुराणं' कौटिल्यम्, आचरतः 'एनः' पापं कुटिलं चेत्युभयम् 'अस्मत्' अस्मत्तः 'युयोधि' पृथक् कुरु। 'ते' तुभ्यं 'भूयिष्ठां' अतिप्रभूतां 'नम उक्तिं' 'विधेम' करवामेति ॥

"अग्नि मेवेत्यादि। स्पष्टम्। "त आयन्तीति। प्राञ्चो गता आगच्छेयुः। कुत्रागच्छेयुः? आग्नीध्र मागच्छन्ति। सौमिकवेदे-रुत्तरेण मार्गेणागतम् 'आग्नीध्रे निदधाति' तं प्रणीत मग्निम्[6] ॥ ११ ॥

---

१— "विशाखाविशाखे द्वे"—इति या० दे०।

२— "द्विगुणरशना पश्वर्था, यूपार्था त्रिगुणरशना च"—इति या० दे०।

३— अधरारणिरुत्तरारणिश्चेति। ४— का० श्रौ० सू० ८. ७. ६।

५— वा० सं० ५. ३६. १। ६— का० श्रौ० सू० ८. ७. ७–६।

"स निहिते जुहोतीति। 'सः' अध्वर्युः 'निहिते' अग्नौ स्थापिते। तत्र होममन्त्रोऽयम्— "अयं नो अग्निरिति[१]।

तस्याय मर्थः।—'अयम्' 'अग्निः' 'नः' अस्माकं 'वरिवः' धनं 'कृणोतु'। तथा 'अयम्' एव 'मृधः' सङ्ग्रामान् 'प्रभिन्दन्' 'पुर एतु'। तथा 'अयं' 'वाजसातौ' सङ्ग्रामे 'वाजान्' 'जयतु' अस्मदर्थम्। 'अयं' 'जर्हृषाणः' पुनः-पुनः हृष्यन् 'शत्रून् जयतु'। 'स्वाहा' सुहुत मस्तु, इद माज्यम्॥

"तदेतेनेत्यादि। शालामुखीयाग्नीध्रीयोत्तरवेदीनां क्रमेण भूम्यादिलोकत्रयात्मकत्वात् 'अन्तरिक्षे' 'स्पृणुते' पालयति[२]॥१२॥

"तदेव निदधतीति[३]। स्थापयेद् ग्रावादिकम्। 'इतरम्' इध्मबर्हिरादिकम्, अग्नीषोमीयार्थम्। "उत्तरेणाहवनीय मुपसादयन्तीति[४]। उत्तरवेदिस्थस्यैवाहवनीयत्वात्तदुत्तर इत्यर्थः॥१३॥

"प्रोक्षणीरध्वर्युरादत्त इति[५]। प्रोक्षणीरादाय अध्वर्युरिध्म मेव पूर्वं प्रोक्षेत्[६]। "प्रोक्षणीरध्वर्युरादत्ते स इध्म मेव पूर्वं प्रोक्षतीत्यादिना प्राकृतः प्रयोगः पुनरभिधीयते; तत्र विशेषविधानार्थं प्रस्तरं पृथक् गृहीत्वा बर्हिरेकावृत्त्यैव स्तृणीयात्। "खरोत्तरार्द्धं एकवृत् स्तरणं पश्चाद्वोत्तरवेदेः"-इति[७] हि सूत्रम्॥१४॥

---

१— आम्नातस्त्वयम्— वा० स० ५. ३७. १।
२— का० श्रौ० सू० ८. ७. १०।　३— का० श्रौ० सू० ८. ७. ८।
४— का० श्रौ० सू० ८. ७. १०।　५— का० श्रौ० सू० ८. ७. ११।
६— का० श्रौ० सू० ८. ७. १२।
७— का० श्रौ० सू० ८. ७. १३, १४। एकवृत् = एकावृत्तिः।

"अथ जुहोतीति[1] । 'अथ' आधानसमिदाधानपर्यन्तं[2] पश्वर्थमङ्गजातं कृत्वा, पश्चाद् वैसर्जनीयं होमं तुरीयं 'जुहोति', "उरु विष्णो"—इति मन्त्रेण[3] ।

अयं मन्त्रार्थः ।—हे 'विष्णो !' यज्ञात्मक ! त्वम्, 'उरु' प्रभूतं द्युलोकपर्यन्तं 'विक्रमस्व' विक्रमणं कुरु । विक्रमणप्रयोजन माह— 'क्षयाय' अस्माकं निवासाय 'उरु' विस्तीर्णं 'कृधि' कुरुत । 'घृतयोने' अग्ने ! 'घृतं' हुतं 'पिब' । 'यज्ञपतिं' यजमानं 'प्रतिर' प्रपूर्वस्तिरतिर्वर्द्धने वर्त्तते । 'स्वाहा' सुहुत मस्तु ॥

"तदेतेनेत्यादि । पूर्ववत्[4] ॥ १ ५ ॥

मन्त्रस्य यद् वैष्णवत्वं प्राक् प्रतिपादितम्, तस्यात्यत्वपरिहारेण स्वाभाविकरूपप्राप्तिरूपत्वेन प्रशंसति— "यद्वेव वैष्णव्यर्चा जुहोतीत्यादिना । "त मेतदभयं प्राप्य य एवैष तं करोतीति । 'एतत्' एतेन, वैष्णवत्वकरणेन 'अभयं' नाशकरक्षोभयरहितं कृत्वा 'एषः' सोमः पूर्वं 'य एव' यादृग्यज्ञरूपः, 'तं' तादृग्रूपं 'करोति' । विष्णुत्वप्रापणेन कथं स्वाभाविकरूपप्राप्तिरिति तत्राह— "यज्ञो हि विष्णुरिति ॥ १ ६ ॥

"अथासाद्य स्रुचोऽप उपस्पृश्य राजानं प्रपादयतीति । 'आसाद्य' उत्तरवेदेः पश्चाद्देशे बर्हिषि 'स्रुचः' आसाद्य 'राजानं' सोमं

---

१— का० श्रौ० सू० ८. ७. १५, १६ ।

२— 'आधानसमिद्द्याधानपर्यन्तं'—इति च ।

३— वा० सं० ५. ३८. १ ।

४— ३८६ पृ० १४ प०, ३९० पृ० ८ प० द्रष्टव्यम् ।

'प्रपादयति' हविर्द्धानं प्रवेशयति[१]। उदकोपस्पर्शनं प्रशंसति— "तस्मा दासाद्येत्यादिना। "वज्रो वा इत्यादि। प्राग् व्याख्यातम्[२] ॥१७॥

"स दक्षिणस्येति। 'दक्षिणस्य हविर्द्धानस्य' 'नीडे' परिवृते मध्यप्रदेशे कृष्णाजिनोपरि सोमं निदध्यात्। "दक्षिणे ऽनसि कृष्णाजिन मास्तीर्य तस्मिन् सोमं निदधाति"—इति[३] सूत्रम्। "देव सवितरेष ते"—इत्यासादनमन्त्रः[४]। स्पष्टोऽर्थः। हे सोम! त्वां 'मा दभन्' मा हिंसिषुः ॥ १८ ॥

"अथानुसृज्योपतिष्ठत इति। 'अनुसृज्य' विसृज्येत्यर्थः। तथाच कात्यायनः— "एतत्त्व मिति विसृज्योपतिष्ठते"—इति[५]।

मन्त्रस्यार्थः[६]।— हे 'सोम देव!' 'त्वम्' इदानीं 'देवान्' 'उपागाः' प्राप्तोऽसि, 'अहम्' अपि मनुष्यः सन् 'एतत्' इदानीं 'मनुष्यान्' अस्मदीयान् 'उपागाः' प्राप्तोऽस्मि। न केवल अह मेव किन्तु 'रायस्पोषेण सह' धनपोषणसहित एव ॥

यजमानस्याग्नीषोमयोर्जम्भानुप्रवेशेन तदीयधनस्यापि अनुप्रवेशात्, इदानीं निर्गमसाहित्य मपेक्षितम्। "अग्नीषोमौ वा एत मन्तर्जम्भ इत्यादिकम्, एतत् मन्त्रब्राह्मणम्, "अथ प्रतिप्रस्थाता

---

१— तच्च सोमानयनं यजमानकर्त्तृकं ब्रह्मकर्त्तृकं वा भवति। का० श्रौ० सू० ११. १. १३, १४. द्रष्टव्यम्।

२— पृ० २५० पं० १७ द्रष्टव्यम्। ३— का० श्रौ० सू० ८. ७. १७।

४— वा० सं० ५. ३९. १। ५— का० श्रौ० सू० ८. ७. १८।

६— तत्पाठस्तु— वा० सं० ५. ३९. २।

अग्रेण शाला मग्नीषोमीयेण पशुना"—इत्यत्र[1] व्याख्यातम्। तत् "एतत्त्वं देव सोम देवो देवाँ उपागा इद मह मनुष्यान्"—इत्यभिधानेन[2] 'प्रत्यक्षम्' एव 'सोमाद्' विमुच्यते ॥ १९ ॥

हविर्द्धानात् समन्त्रकं निष्क्रमणं विधत्ते— "अथोपनिष्क्रामतीति। "स्वाहा निर्वरुणस्येति। "स्वाहा निरिति निष्क्रम्य"—इति सूत्रम्[3]। मन्त्रे[4] वरुणपाशप्रसङ्गं दर्शयति— "वरुणपाशो वा एषोऽन्तर्भवतीति ॥ २० ॥

"अथेत्याहवनीये समिध मभ्यादधातीति[5]। समिध मेवाभ्यादधद्वान्तरदीक्षा उपैति "अग्ने व्रतपा"—इति[6]। तत्र स्वशरीर मग्नावेव संस्थाप्य अग्निशरीरस्य धारण मुक्तम्, इह तु तद्वैपरीत्येन यथायथं शरीरस्वीकार इति विशेषः। "स स्वेन सतात्मना यजत इति। पूर्व मन्यात्मना सता, इदानीं 'स्वेन' यजमानात्मना 'सता' 'यजते'; स्वशरीरस्य पुनः-प्राप्तत्वात्। दीक्षितान्ननिषेधभावाभावयोरप्यय मेवाभिप्राय इत्याह— "तस्माद्स्यात्राश्नन्तीति। तस्मादिति हेतुं विवृणोति— "मानुषो हीति। नामग्रहणस्यापि मानुषभाव एव; अतोऽर्वाद् वैसर्जनहोमपर्यन्तं दीक्षितस्य नाम न गृह्णीयादिति विधिरुन्नीयते। "यथा हविषोऽहुतस्य नाश्नीयादेवं तदिति[7]। 'अहुतं' देवातिथिषु मनुष्यो 'नाश्नीयात्', 'एवं तत्'

---

१— २०१पृ० ७पं० द्रष्टव्यम्।
२— वा० सं० ५. ३९. २।
३— का० श्रौ० सू० ८. ७. १९।
४— वा० सं० ५. ३९. ३।
५— का० श्रौ० सू० ८. २. ४।
६— वा० सं० ५. ४०. ११।
७— ऐ० ब्रा० २. १. ३ द्रष्टव्यम्।

अपि भवति; धनस्यापि यजमानेन सह प्रवेशादित्यभिप्रायः। “नामग्रहणभोजने अस्यातः कुर्वन्तीति[1] सूत्रम् ॥२१॥ २ [६.३.]॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे षष्ठाध्याये तृतीयं ब्राह्मणम् ॥

---

[अथ चतुर्थं ब्राह्मणम्.]

यूपं व्रश्च्यन् वैष्णव्यर्चा जुहोति। वैष्णवो हि यूपस्तस्माद्वैष्णव्यर्चा जुहोति ॥ १ ॥

यद्वेव वैष्णव्या जुहोति। यज्ञो वै विष्णुर्यज्ञेनैवैतद्यूप मच्छैति तस्माद्वैष्णव्यर्चा जुहोति ॥ २ ॥

स यदि स्रुचा जुहोति। चतुर्गृहीत माज्यं गृहीत्वा जुहोति यद्यु स्रुवेण स्रुवेणैवोपहत्य जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि। घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेति ॥ ३ ॥

यदाज्यं परिशिष्टं भवति। तदादत्ते यत्तक्ष्णः शस्त्रं भवति तत्तक्ष्णादत्ते त आयन्ति स यं यूपं जोषयन्ते ॥ ४ ॥

---

१— का० श्रौ० सू० ८. ७. २२।

त मेव मभिमृश्य जपति। पश्चादेव प्राङ् तिष्ठन्नभि-मन्त्रयतेऽत्यन्याँ२॥*ऽअगां नान्याँ२॥ऽउपागा मित्युति ह्यन्यानेति नान्यानुपैति तस्मादाहात्यन्याँ२॥ऽअगां नान्याँ२॥ऽउपागा मिति ॥ ५ ॥

अर्व्वाक् त्वा परेभ्यो ऽविदं परोऽवरेभ्य इति। अर्व्वा-ग्घ्येनं परेभ्यो विन्दति य ऽएतस्मात्पराञ्चो भवन्ति परो-ऽवरेभ्य इति परो ह्येन मवरेभ्यो विन्दति य ऽएतस्माद-र्व्वाञ्चो भवन्ति तस्मादाहार्व्वाक् त्वा परेभ्यो ऽविदं परो-ऽवरेभ्य इति ॥ ६ ॥

तं त्वा जुषामहे देव व्वनस्पते देवयज्याया ऽइति। तद्यथा बहूनां मध्यात्साधवे कर्म्मणे‡ जुषेत स रातमना-स्तस्मै कर्म्मणे स्यादेव मेवैन मेतद्बहूनां मध्यात्साधवे कर्म्मणे जुषते स रातमना व्रश्चनाय भवति ॥ ७ ॥

देवास्त्वा देवयज्यायै जुषन्ता मिति। तद्वै समृद्धं यं देवाः साधवे कर्म्मणे जुषान्तै तस्मादाह देवास्त्वा देव-यज्यायै जुषन्ता मिति§ ॥ ८ ॥

अथ स्रुवेणोपस्पृशति। व्विष्णवे त्वेति व्वैष्णवो

---

* 'न्यां२'–इति क, ख। इहोत्तरत्राप्येवं सर्वत्र।

† 'ऽअगान्ना'–इति च पाठो डा०-वेबरेण दृष्टः।

‡ 'कर्मणे'–इति ग, घ। § 'मिति'–इति घ।

हि यूपो यज्ञो वै विष्णुर्यज्ञाय ह्येनं वृश्चति तस्मादाह विष्णवे त्वेति* ॥ ९ ॥

अथ दर्भतरुणकं मन्तर्दधाति । ओषधे त्रायस्वेति वज्रो वै परशुस्तथो हैन मेष वज्रः परशुर्न हिनस्त्यथ परशुना प्रहरति स्वधिते मैनꣳ हिꣳसी-रिति वज्रो वै परशुस्तथो हैन मेष वज्रः परशुर्न हिनस्ति ॥ १० ॥

स यं प्रथमꣳ शकल मपच्छिनत्ति । त मादत्ते तं वा ऽअनक्षस्तम्भं वृश्चेदुत ह्येन मनसा वहन्ति तथानो† न प्रतिबाधते ॥ ११ ॥

तं प्राञ्चं पातयेत् । प्राची हि देवानां दिगथो उदञ्च मुदीची हि मनुष्याणां दिगथो प्रत्यञ्चं दक्षिणायै त्वेवैनं दिशः परिबि‡बाधिषेतैषा वै दिक् पितॄणां तस्मा-देनं दक्षिणायै दिशः परिबिबाधिषेत ॥ १२ ॥

तं प्रच्युवमान मनुमन्त्रयते । द्यां मा लेखीरन्तरिक्षं मा हिꣳसीः पृथिव्या सम्भवेति वज्रो वा ऽएष भवति यं यूपाय वृश्चन्ति तस्माद्वज्रात् प्रच्युवमानादिमे लोकाः

---

* 'त्वेति'—इति ख । 'त्वेति'—इति ग, घ ।

† 'तथानो'—इति च पाठो डा० वेबरेण दृष्टः ।

‡ 'वि'—इति क । एव मिहोत्तरत्र च ।

सुꣳरेजन्ते तदेभ्य एवैन मेतल्लोकेभ्यः शमयति तथेमां-ल्लो*काञ्छान्तो न हिनस्ति ॥ १३ ॥

स यदाह । द्यां मा[†] लेखीरिति दिवं[‡] मा हिꣳसी-रित्येवैतदाहान्तरिक्षं मा हिꣳसीरिति नाच तिरोहित मिवास्ति पृथिव्या सम्भवेति पृथिव्या सञ्ज्ञानीष्वेत्येवै-तदाहायꣳ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेत्येष ह्येनꣳ स्वधितिस्तेजमानः प्रण-यति[§] ॥ १४ ॥

अथाव्रश्चन मभिजुहोति । नेदतो नाष्ट्रा रक्षाꣳ-स्यनूत्तिष्ठानिति वज्रो वा ऽआज्यं तद्वज्रेणैवैतन्नाष्ट्रा रक्षाꣳस्यवबाधते तथातो नाष्ट्रा रक्षाꣳसि नानूत्तिष्ठ-न्त्यथो रेतो वा ऽआज्यं तद्वनस्पतिष्वेवैतद्रेतो दधाति तस्माद्रेतस ऽआव्रश्चनाद्वनस्पतयोऽनु प्रजायन्ते ॥ १५ ॥

स जुहोति । अतस्त्वं देव वनस्पते शतवल्शो[||] विरोह सहस्रवल्शा[¶] वि वयꣳ रुहेमेति नाच तिरोहित मिवास्ति ॥ १६ ॥

---

* 'माँल्लो'–इति ख, 'मांलो'–इति घ ।

† 'मा'–इति ग, घ । ‡ 'दिवं'–इति ग, घ ।

§ 'प्रणयति'–इति घ ।

|| 'शतवल्ट्शो'–इति च पाठो डा०-वेबरेण दृष्टः ।

¶ 'सहस्रवल्ट्शा'–इति च डा०-वेबर-दृष्टः पाठः ।

तं परिवासयति। स यावन्त मेवाग्र परिवासयेत् तावान्त्स्यात् ॥ १७ ॥

पञ्चारत्निं परिवासयेत्। पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संवत्सरस्य तस्मात् पञ्चारत्निं परिवासयेत् ॥ १८ ॥

षडरत्निं परिवासयेत्। षड्वाऽऋतवः संवत्सरस्य संवत्सरो व्वज्रो व्वज्रो यूपस्तस्मात् षडरत्निं परिवासयेत् ॥ १९ ॥

अष्टारत्निं परिवासयेत्। अष्टाक्षरा वै गायत्री पूर्व्वार्द्धो वै यज्ञस्य गायत्री पूर्व्वार्द्ध एष यज्ञस्य तस्मादष्टारत्निं परिवासयेत् ॥ २० ॥

नवारत्निं परिवासयेत्। त्रिवृद्वै यज्ञो नव वै त्रिवृत् तस्मान्नवारत्निं परिवासयेत् ॥ २१ ॥

एकादशारत्निं परिवासयेत्। एकादशाक्षरा वै त्रिष्टुब् वज्रस्त्रिष्टुब् वज्रो यूपस्तस्मादेकादशारत्निं परिवासयेत् ॥ २२ ॥

द्वादशारत्निं परिवासयेत्। द्वादश वै मासाः संवत्सरस्य संवत्सरो व्वज्रो व्वज्रो यूपस्तस्माद् द्वादशारत्निं परिवासयेत् ॥ २३ ॥

त्रयोदशारत्निं परिवासयेत्। त्रयोदश वै मासाः

संवत्सरस्य संवत्सरो वज्रो वज्रो यूपस्तस्मात्त्रयोदशा-रत्निं परिवासयेत् ॥ २४ ॥

पञ्चदशारत्निं परिवासयेत्। पञ्चदशो वै वज्रो वज्रो यूपस्तस्मात् पञ्चदशारत्निं परिवासयेत् ॥ २५ ॥

सप्तदशारत्निर्व्वाजपेययूपः। अपरिमित एव स्या-दपरिमितेन वा ऽएतेन वज्रेण देवा अपरिमित मजयं-स्तथो ऽएवैष एतेन वज्रेणापरिमितेनैवापरिमितं जयति तस्मादपरिमित एव स्यात् ॥ २६ ॥

स वा ऽअष्टाश्रिर्भवति। अष्टाक्षरा वै गायत्री पूर्व्वार्द्धो वै यज्ञस्य गायत्री पूर्व्वार्द्ध एष यज्ञस्य तस्मादष्टाश्रि-र्भवति ॥ २७ ॥ ३ ॥

॥ इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् [६. ४.] ॥

अथ यूपप्रयोग उच्यते— "यूपं व्रश्च्यन्नित्यादिना। 'व्रश्च्यन्' छेत्स्यन्। 'वैष्णव्यर्चा' आहवनीये जुहुयात्[1]। "सास्य देवता"-इत्यण्[2]। "दिवं मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्याः सम्भव-ेति"-इतिमन्त्रेण[3]। मन्त्रादौ लोकत्रयाक्रमणस्योक्तत्वेन विष्णु-साम्याद् वैष्णवत्व मतस्तदर्थवाच्यृचो वैष्णवत्वं युक्तम् ॥ १ ॥

---

१— का० श्रौ० सू० ६. १. १६। २— पा० सू० ४. २. २४।

३— वा० सं० ५. ४३. १। तत्र "द्यां मा लेखीरिति पाठः।

ऋचो वैष्णव्यत्वं प्रशंसति— "यद्वेव वैष्णव्या जुहोतीति। "यज्ञेनैवैतद्यूप मच्छैतीति। यज्ञेनैव यूप मभिलक्ष्य गतवान् भवति ॥ २ ॥

"स यदि स्रुचेत्यादि। स्पष्टम्। "उरु विष्णविति। एष मन्त्रो वैसर्जनीहोम मधिकृत्य व्याख्यातः[1], अत एव ब्राह्मणे नेह व्याख्यातः। अत्र सूत्रम्— "यूपाहुतिं जुहोति चतुर्गृहीतं स्रुवेण वोरु विष्णविति[2] ॥ ३ ॥

"यदाज्यं परिशिष्टं भवतीति। अवशिष्ट माज्य मध्वर्युरादत्ते। "यत्तक्ष्ण इति। 'यत्' तच्चकस्य 'शस्त्रं भवति' वाशीनिशानं शिलादौ। जोषयन्ते यं यूपायाल मिति, त आयन्तीति सम्बन्धः[3] ॥ ४ ॥

"त मेव मभिमृश्य जपतीति[4]। 'तम्' यूपम् 'एवम्' 'अभिमृश्य जपति' "अत्यन्यानगाम्"-इत्येवंरूपेणेत्यर्थः। अथवा अभिमर्शनं न कर्त्तव्यम्, 'पश्चात्' 'प्राङ्' 'तिष्ठन् एव' 'अभिमन्त्रयते'। अत्र "यूप मभिमृशत्यत्यन्यानिति प्राङ् तिष्ठन्नभिमन्त्रयते वा पालाशं बहुलपर्णम्"-इत्यादि[5] सूत्रं द्रष्टव्यम् ॥

मन्त्रस्याय मर्थः[6]।— हे पुरोवर्त्ति-पलाशादिरूपवृक्ष! तव प्राप्तेः पूर्वम् 'अन्यान्' यूप्यानपि नानाजातीयान् वृक्षान् 'अत्यगाम्'

---

१— पुरस्तात् ५ प्र० २ ब्रा० १५, १६ क० (३८०, ३९१ पृ०) द्रष्टव्यम्।
२— का० श्रौ० सू० ६. १. ४। ३— का० श्रौ० सू० ६. १. ५।
४— का० श्रौ० सू० ६. १. ६ क। ५— का० श्रौ० सू० ६. १. ६–१०।
६— आम्नातस्त्वेषः— वा० सं० ५. ४२. १।

अतिक्रम्य त्वां प्राप्तोऽस्मि। एवम् ‘अन्यान्’ ब्राह्मणोक्तातिरिक्तानपि ‘नोपागाम्’ नापगच्छामि। ‘त्वा’ त्वाम् ‘परेभ्यः’ त्वत्तोऽप्युपरि वर्त्तमाना ये सन्ति, तेभ्यः ‘अर्वाक्’ अधस्तात् प्रथमं वर्त्तमानम् ‘अविदम्’। तथा ‘अवरेभ्यः’ पूर्वभाविनः सकाशात् त्वां ‘परः’ परस्ताद् वर्त्तमानम् ‘अविदम्’। आद्यन्तयोर्वर्त्तमानानां वाता-तपादिकृतदोषसम्भवात् निकृष्टत्वम्, अतः सर्वेषां मध्ये वर्त्तमानं त्वा मेव निर्दोष मविद मित्यर्थः। हे ‘देव! वनस्पते!’ ‘तं’ तादृशं ‘त्वा’ त्वां ‘जुषामहे’ इति ॥

मन्त्रभागस्य तात्पर्य माह— “तद्यथेति। ‘यथा’ ‘बहूनां’ पुरुषाणां ‘मध्यात्’ एक मवहृत्य ‘साधवे’ शोभनीये ‘कर्मणे’ ‘जुषेत’ सेवेत, ‘सः’ जुष्टा ‘एतमनाः’ दत्तचित्तः, कर्मार्थ मङ्गीकृत-मनस्कः सन् ‘तस्मै कर्मणे’ तत् कर्म कर्त्तुं भवेत्, अथवा ‘कर्मणे एतमनाः स्यात्’ कर्म कर्त्तुं बुद्धिः प्रवृत्तेत्यर्थः। ‘एव मेवैतत्’ इति दार्ष्टान्तिकाभिधान मुक्तार्थम् ॥ ५—७ ॥

“देवास्त्वेति। देवानां जोषणाभिधानस्य प्रार्थनायाः प्रयोजन माह— “तद्वै समृद्धं यं देवाः साधवे कर्मणे जुषान्तेति ॥ ८ ॥

“अथ स्रुवेणेति[१]। “विष्णवे त्वा”—‘इति’[२] मन्त्रेण ‘स्रुवेण’ ‘उपस्पृशति’। ‘विष्णवे’ यूपायेत्यर्थः। स्पृशामीति शेषः। कथं यूपस्य विष्णुत्व मिति, तत्राह— “वैष्णवो यूप इति। ‘यूपः’ ‘वैष्णवो हि’ विष्णुदेवत्यः खलु। तदेव कथ मिति, तत्राह—

---

१— का० श्रौ० सू० ६. १. ११। २— वा० सं० ५. ४२. २।

"यज्ञो वै विष्णुरिति। यज्ञस्यापि विष्णुत्वे यूपस्य किमायात मित्यत आह— "यज्ञाय ह्येनं वृश्चतीति ॥ ९ ॥

"अथ दर्भतरुणक मिति[1]। "ओषधे त्रायस्व"—'इति'[2] कुशतरुणेन यूपं व्यवहितं कुर्यात्। हे 'ओषधे!' त्वं प्रहारव्यथातो 'एनं' वृक्षं 'त्रायस्व'। 'वज्रो वै परशुः' छेदकत्वात् परशोर्वज्रत्वम्। "स्वधिते मैनम्"-'इति'[3] छेदनमन्त्रः स्पष्ट एव ॥ १० ॥

"स यं प्रथम मिति। प्रथमच्छिन्नं शकलं यूपावटे प्रक्षेपार्थमाददीत[4]। "तं वा अनक्षस्तम्भ मित्यादि[5]। न विद्यते 'अक्षस्य' शकटाङ्गस्य स्तम्भो यस्मिन् व्रश्चनकर्मणि, 'तम् अनक्षस्तम्भम्'; अक्षसंस्पर्शो यथा न स्यात्, एवं सर्वं वृश्चेदित्यर्थः[6]। तत्प्रयोजन माह— "उत ह्येन मनसेति। अक्षो ह्यनसा यूपं नयेयुः, तदा अक्षं मा वधिष्टेति ॥ ११ ॥

यूपस्याधःपातनविषये प्रागादिदिक्त्रयं विकल्पयति— "तं प्राञ्चं पातयेदित्यादिना। अन्यस्यां दिशि पातनं निषेधति। "दक्षिणायै त्वैनं दिशः परिबिबाधिषेतेति[7]। 'एनं' यूपं 'दक्षिणायै'

---

१— का० श्रौ० सू० ६. १. १२। २— वा० सं० ५. ४२. ३।

३— वा० सं० ५. ४२. ४। ४— का० श्रौ० सू० ६. १. १३।

५— का० श्रौ० सू० ६. १. १४।

६— "स्थाणुरनसोऽक्षं स्तभ्नातीत्यक्षस्तम्भः, न अक्षस्तम्भोऽनक्षस्तम्भः; यथा गच्छतः शकटस्य अक्ष मवशिष्टः स्थाणुर्न स्तभ्नाति, तथा नीचं छिन्द्यादित्यर्थः"—इति चात्र या० दे०।

७— का० श्रौ० सू० ६. १. १७। 'परिबिबाधिषेतेति'—इति च

'दक्षिणस्या' 'दिशः' परिबाधकं कारयितुं मिच्छेदित्यर्थः; तस्याः पितृदेवत्यत्वात् ॥ १२ ॥

"तं प्रच्यवमान मनुमन्त्रयत इति। तत्प्रयोजन माह— "वज्रो वा एष भवतीति। "स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीय मिति-श्रुतेः[1] वज्रावयवत्वाद् यूपस्य वज्रत्वम्। अतो वज्रपात इव यूपार्थ-वृक्षपातः। "लोकाः संरेजन्त इति। "भ्यसते रेजत इति भयवेप-नयोः"-इति[2] यास्कः ॥ १३ ॥

"स यदाहेति। "पृथिव्या सम्भव"-इत्यस्य[3] तात्पर्य माह— "सञ्ज्ञानीष्वेत्येवैतदाहेति। सम्मति मैकमत्यं प्राप्नुहीत्यर्थः। "अयं हि त्वेति[4]। 'अयं' खलु 'स्वधितिः' छेदनसाधनपरशुः 'तेतिजानः' निशितो भवन् 'महते' 'सौभगाय' सुभगत्वाय, अष्टाश्रग्राद्याकारा-श्रयणाद्धि सुभगवते; अथवा सुभगो यज्ञः, स एव सौभगः, तदर्थ-त्वात् प्रणयनस्य। 'प्रणिनाय' प्रणयनं कृतवान्, पृथक् कृतवानित्यर्थः। छेदनाभावे प्रणयनासम्भवात् पूर्वशेषत्वपक्षे परशुना यज्ञार्थं छिन्नस्त्वं लोकत्रय मपीडयन्नधः पतेत्यर्थः। पृथग्विनियोगपक्षे उक्तलक्षणं त्वां शोधयामीत्यर्थः[5] ॥ १४ ॥

आव्रश्चनहोमं विधाय प्रशंसति— "अथाव्रश्चन मभिजुहोति

---

१— तै० सं० ५. २६. ४। इन्द्रो वृत्राय वज्रं प्राहरदित्यादि द्रष्टव्यम्।

२— निरु० ३. ४. ४।

३— वा० सं० ५. ४३. १।

४— वा० सं० ५. ४३. २।

५— "अयं हि त्वेति शोधनम्"—इति का० श्रौ० सू० ६. १. १८।

नेदतो नाष्ट्रेत्यादिना। आ समन्तात् व्रश्चनम् 'आव्रश्चनम्', तदभि तस्मिन् जुहोति। उक्तहोमविषये सूत्रकारो विकल्पयामास— "अतस्त्व मित्याव्रश्चनेऽभिजुहोति, यूपे वा तत्संस्कारात् स्थाणौ श्रुतेश्चेति[1]। होमसाधनस्याज्यस्य द्वे सामर्थ्ये; वज्ररूपेण रक्षकत्वम्, रेतोरूपेणोत्पादकत्वं चेति। अत आव्रश्चनप्रदेशहोमो वज्रः। तस्मात् स्थाणाद्राक्षसादिक मुत्पन्नं न भवेत्, उत्पन्नञ्च परिक्षतं भवति; तथा तत्र आव्रश्चनप्रदेशे रेतःस्थापनात् शाखा बहुधा जायन्ते[2] ॥ १५ ॥

स जुहोतीति। आव्रश्चनहोममन्त्रस्याय मर्थः[3]।— हे 'वनस्पते! देव!' 'त्वम्' 'अतः' अस्मात् प्रदेशात् 'शतवल्शः' अपरिमिताङ्कुरः सन् 'विरोह' प्रादुर्भव। 'वयं' च 'सहस्रवल्शाः' सन्तः 'विरुहेम' विविधं प्रादुर्भवेम ॥ १६ ॥

"तं परिवासयतीति[4]। 'तं' यूपं वक्ष्यमाणेन कृत्वा 'परिवासयति' आच्छिनत्ति। परिवासने विशेष माह— "स यावन्त मेवाग्र इति। 'अग्रे' प्रथमम्, प्रथमच्छेदकाले 'यावन्तं' यावत्परिमाणं 'परिवासयेत्', 'तावान्स्यात्' तावतैव भवितव्यम्, स्वापेक्षित-प्रमाणाय न पुनश्छिन्द्यादित्यर्थः ॥ १७ ॥

यूपमानविषये पञ्चारत्निप्रभृतिपञ्चदशारत्निपर्यन्तान् बहून्

---

१— का० श्रौ० सू० ६. १. २०–२२।

२— "आव्रश्चनाद् वृक्षाणां भूयांस उत्तिष्ठन्ति" तै० सं० २. ५. १. ४।

३— वा० सं० ५. ४३. ३। ४— का० श्रौ० सू० ६. १. २३।

प्रकारान् विकल्पितान् दर्शयति— "पञ्चारत्निं परिवासयेत्, पाङ्क्तो यज्ञ इत्यादिना[1]। "यो वै यज्ञे हविष्पङ्क्तिं वेद"-इत्यादिना[2] यज्ञस्य हविरादिपञ्चसङ्ख्यायोगात् पशोः पाङ्क्तत्वम् ॥ १८ ॥

"षडरत्नि मिति। "संवत्सरो वज्र इति। संवत्सरस्य, वृत्र-प्रहरणकाले पुनःपुनरावर्त्तनसाम्याद्वा, संवत्सरनिर्वर्त्तकस्यादित्य-स्यासुरघातकत्वाद्वा, सारभूतत्वाद्वा वज्रत्वम् ॥ १९ ॥

"अष्टारत्निं परिवासयेदिति। "पूर्वार्द्धो वै यज्ञस्य गायत्रीति। साक्षादवयवत्वेन 'गायत्री' प्रातस्सवनसम्बन्धाद् यज्ञस्य 'पूर्वार्द्धः'; एषः यूपोऽपि पुरस्तात् मीयमानत्वात् 'पूर्वार्द्धः' ॥ २० ॥

"नवारत्नि मिति। "त्रिवृद्वै यज्ञ इति। त्रिवृदादिस्तोमसाध्य-त्वात्, सवनभेदेन त्रिवृत्त्वाद्वा, 'यज्ञस्त्रिवृत्'। स च 'त्रिवृत्' स्तोमः 'नव वै'; स्तोत्रियनवकरूपत्वात्[3] ॥ २१ ॥

"एकादशारत्नि मिति। "वज्रस्त्रिष्टुबिति। त्रिष्टुभा सह प्रजा-पतेः सकाशादुत्पन्नत्वात्। स चोत्पत्तिरिन्द्रद्वारा वेदितव्या[4] ॥ २२ ॥

"द्वादशारत्नि मिति। उक्तं संवत्सरस्य वज्रत्वम्[5] ॥ २३ ॥ २४ ॥

"पञ्चदशारत्नि मिति। "पञ्चदशो वै वज्र इति। एतदपि

---

१— का० श्रौ० सू० ६. १. २४–२६। २— ऐ० ब्रा० २. ३. ६।

३— ता० ब्रा० २ प्र० १–३ खण्डाः द्रष्टव्याः।

४— "प्रजापतिः — ० त मिन्द्रो देवतान्वसृज्यत, त्रिष्टुप् छन्दो बृहत् साम"-इत्यादि तै० सं ७. १. १. ७।

५— ऊनविंशकण्डीव्याख्यानं ( ४०५ पृ० ४ पं० ) द्रष्टव्यम्।

"उरसो बाहुभ्यां पञ्चदशं निरमिमीत, त मिन्द्रो देवतान्वसृ-ज्यन्त"-इति श्रुतेः[१] पञ्चदशस्येन्द्रसम्बन्धाद् द्रष्टव्यम् ॥ २५ ॥

"सप्तदशारत्निर्वाजपेय यूप इति[२]। अतोऽत्र स न गृह्यते ॥

इत्थं बहून् पक्षानुपन्यस्यातोऽप्यधिक मप्युन्मान मनुजानाति— "अपरिमित एव स्यादिति। तत्र कारण माह— "अपरिमितेन वेति। वज्रस्याचिन्त्यमहिमत्वात् देवानां प्रयोजनानुसारेण तत्प्र-माणस्वीकारात् यूपोऽप्यपरिमितो भवेदित्यर्थः ॥ २६ ॥

"स वा अष्टाश्रिर्भवतीत्यादि[३]। स्पष्टम्। कात्यायनोऽपि पञ्चा-रत्न्यादिपक्षान् विकल्पयामास— "पञ्चारत्निः पञ्चदशपर्यन्तः सोमे, दशसप्तचतुर्दशवर्जं मपरिमितो वा"-इति[४] ॥ २७ ॥ ३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ६ ॥

---

१— तै० सं० ७, १. १. ७।

२— "सप्तदश वाजपेये, एकविंशतिरश्वमेधे"-इति का० श्रौ० सू० ६. १. २३, २४। वाजपेयाङ्गभूतेऽग्नीषोमीये इति यावत्।

३— का० श्रौ० सू० ६. १. २७।

४— का० श्रौ० सू० ६. १. ३१, ३२।

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गनार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पाचसात्सिङ्गनार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

---

[ अथ सप्तमाध्याये प्रथमं ब्राह्मणम्. ]

अभ्रि मादत्ते। देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्या मादद्दे नार्य्यसीति समान एतस्य यजुषो बन्धुर्योषो वा ऽएषा यदभ्रिस्तस्मादाह नार्यसीति* ॥ ॥ १ ॥

अथावटं परिलिखति। इद् महङ् रक्षसां ग्रीवा अपिकृन्तामीति वज्रो वा ऽअभ्रिर्व्वज्रेणैवैतन्नाष्ट्राणाङ् रक्षसां ग्रीवा अपिकृन्तति ॥ २ ॥

अथ खनति। प्राञ्च मुत्कर† मुत्किरत्युपरेण सम्माया-वटं खनति तदग्रेण प्राञ्चं यूपं निदधात्येतावन्मात्राणि बर्हीॅष्युपरिष्टादधिनिदधाति तद्वेवोपरिष्टाद्यूपशकल मधिनिदधाति पुरस्तात्पार्श्वतश्चषाल मुपनिदधात्यथ यवमत्यः प्रोक्षण्यो भवन्ति सोऽसावेव बन्धुः‡ ॥ ३ ॥

स यवानावपति। यवोऽसि यवयास्मद्द्वेषो यवया-रातीरिति नात्र तिरोहित मिवास्त्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मध्य मेवैतत्करोति ॥ ४ ॥

---

* 'सीति'–इति ग, घ। † 'मुत्कर'–इति ग, घ।

‡ 'बन्धुः'–इति ग, घ।

स प्रोक्षति। दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति वज्रो वै यूप एषां लोकाना मभिगुप्त्या ऽएषां त्वा लोकाना मभिगुप्त्यै प्रोक्षामीत्येवैतदाह ॥ ५ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते। ता अवटे ऽवनयति शुन्धन्तां लोकाः पितृषदना इति पितृदेवत्यो वै कूपः खातस्त मेवैतन्मेध्यं करोति ॥ ६ ॥

अथ बर्हीᳫँषि। प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति पितृषदन मसीति पितृदेवत्यं वा ऽअस्यै-तद्भवति यन्निखातᳫँ स यथानिखात ओषधिषु मितः स्यादेव मेतास्वोषधिषु मितो भवति ॥ ७ ॥

अथ यूपशकलं प्रास्यति। तेजो ह वा ऽएतद्वन-स्पतीनां यद् बाह्याशकल*स्तस्माद्यदा बाह्याशकल मपतक्ष्णुवन्त्यथ शुष्यन्ति तेजो ह्येषा मेतत्तद्यद्यूपशकलं प्रास्यति सतेजसं मिनवानीति तद्यदेष एव भवति नान्य एष हि यजुष्कृतो मेध्यस्तस्माद्यूपशकलं प्रास्यति ॥ ८ ॥

स प्रास्यति। अग्नेर्णीरसि स्वावेश उन्नेतृणा मिति पुरस्ताद्वा ऽअस्मादेषोऽपच्छिद्यते तस्मादाहाग्नेर्णीरसि

---

* अत्र, इत उत्तरत्र च 'बाह्यशकल'–इत्येव सायणसम्मतः पाठ इति डा० वेबरः। परमस्ति तत्र-तत्र च पाठभेदः।

स्वावेश उन्नेतृणा मित्येतस्य वित्तादधि त्वा स्थास्यतीत्यधि ह्येनं तिष्ठति तस्मादाहैतस्य वित्तादधि त्वा स्थास्यतीति ॥ ९ ॥

अथ स्रुवेणोपहत्याज्यम्। अवट मभिजुहोति नेदधस्तान्नाष्ट्रा रक्षांस्युपोत्तिष्ठानिति वज्रो वा ऽआज्यं तद्वज्रेणैवैतं नाष्ट्रा रक्षांस्युपबाधते तथाधस्तान्नाष्ट्रा रक्षांसि नोपोत्तिष्ठन्त्यथ पुरस्तात् परीत्योदङ्ङासीनो* यूप मनक्ति स आह यूपायाज्यमानायानुब्रूहीति†॥१०॥

सोऽनक्ति। देवस्त्वा सविता मध्वानक्त्विति सविता वै देवानां प्रसविता यजमानो वा ऽएष निदानेन यद्यूपः सर्वं वा ऽइदं मधु यदिदं किञ्च तदेन मनेन सर्वेण संस्पर्शयति तदस्मै सविता प्रसविता प्रसौति तस्मादाह देवस्त्वा सविता मध्वानक्त्विति‡ ॥ ११ ॥

अथ चषाल मुभयतः प्रत्यज्य प्रतिमुञ्चति। सुपिप्पलाभ्यस्त्वौषधीभ्य इति पिप्पलं हैवास्यैतत्तद्यन्मध्ये सङ्गृहीत मिव भवति तिर्यग्वा ऽइदं वृक्षे पिप्पल माहतं स यदेवेदं सम्बन्धनं चान्तरोपेनित मिव तदेवैतत्करोति तस्मान्मध्ये सङ्गृहीत मिव भवति ॥ १२ ॥

---

* 'दङ्ङासीनो'–इति क, ख। † 'ति'–इति ग, घ।

‡ 'त्त्विति'–इति ख।

आन्त मग्निष्ठा मनक्ति। यजमानो वा ऽअग्निष्ठा रस आज्यꣳ रसेनैवैतद्यजमान मनक्ति तस्मादान्त मग्निष्ठा मनक्त्यथ परिव्ययणं प्रति समन्तं परिमृशत्यथाहो-च्छ्रीयमाणायानुब्रूहीति ॥ १३ ॥

स उच्छ्रयति। द्या मग्रेणास्पृक्ष ऽआन्तरिक्षं मध्ये-नाप्राः पृथिवी मुपरेणादृꣳहीरिति वज्रो वै यूप एषां लोकाना मभिजित्यै तेन वज्रेणेमांल्लोकान्त्स्पृणुतऽएभ्यो लोकेभ्यः सपत्नान्निर्भजति ॥ १४ ॥

अथ मिनोति। या ते धामान्युश्मसि गमध्यै यत्र गावो भूरि शृङ्गा अयासः अत्राह तदुरुगायस्य विष्णोः परमं पद मव भारि* भूरीत्येतया त्रिष्टुभा मिनोति वज्रस्त्रिष्टुब् वज्रो यूपस्तस्मात्त्रिष्टुभा मिनोति ॥ १५ ॥

सम्प्रत्यग्नि मग्निष्ठां मिनोति। यजमानो वा ऽअग्नि-ष्ठाग्निरु वै यज्ञः स यदग्नेरग्निष्ठाꣳ ह्वलयेद्ध्वलेद्ध यज्ञाद्यज-मानस्तस्मात् सम्प्रत्यग्नि मग्निष्ठां मिनोत्यथ पर्यूहत्यथ पर्यृषत्यथाप उपनिनयति ॥ १६ ॥

अथैव मभिपद्य वाचयति। विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे। इन्द्रस्य युज्यः सखेति वज्रं वा

---

* 'भाति'—इति सा०-सम्मतः। स च ऋक्पाठः २. २. २४. ६ (निरु० २. २. ३.)। मन्त्रस्यैतस्योपक्रमेऽप्यस्यैवं पाठभेद ऋग्यजुःसंहितयोः।

ऽएष प्राहार्षीद्यो यूप मुदश्शिश्रियद्विष्णोर्व्विजितिं पश्यतेत्येवैतदाह यदाह व्विष्णोः कुर्म्माणि पश्यत युतो व्रतानि पस्पशे*। इन्द्रस्य युज्यः सखेतीन्द्रो वै यज्ञस्य देवता व्वैष्णवो यूपस्तꣳ सेन्द्रं करोति तस्मादाहेन्द्रस्य युज्यः सखेति† ॥ १७ ॥

अथ चषाल मुदीक्षते। तद्विष्णोः परमं पदꣳ सुदा पश्यन्ति सूरयः। दिवीव चक्षुराततं मिति व्वज्रं वा ऽएष प्राहार्षीद्यो यूप मुदश्शिश्रियत्तां व्विष्णोर्व्विजितिं पश्यतेत्येवैतदाह यदाह तद्विष्णोः परमं पदꣳ सुदा पश्यन्ति सूरयः। दिवीव चक्षुराततं मिति‡ ॥ १८ ॥

अथ परिव्ययति। अनग्नतायै न्वेव परिव्ययति तस्मादुचैव परिव्ययत्युचैव हीदं व्वासो भवत्यन्नाद्य मेवास्मिन्नेतद्दधात्युचैव हीद मन्नं प्रतितिष्ठति तस्मा-दुचैव परिव्ययति ॥ १९ ॥

त्रिवृता परिव्ययति। त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृता परि-व्ययति ॥ २० ॥

---

* 'पप्रपशे'–इति ग-घ-पुस्तकयोरशुद्धः।

† 'सखेति'–इति ख, 'सखेति'–इति ग, घ।

‡ 'मिति'–इति ख, 'मिति'–इति ग, घ।

स परिव्ययति। परिवीरसि परि त्वा दैवीर्व्विशो व्ययन्तां परीमं यजमानꣳ रायो मनुष्याणा मिति तद्यजमानायाशिष माशास्ते यदाह परीमं यजमानꣳ रायो मनुष्याणा मिति* ॥ २१ ॥

अथ यूपशकल मवगूहति। दिवः सूनुरसीति प्रजा हैवास्यैषा तस्माद्यदि यूपैकादशिनी स्यात् स्वꣳ स्व मेवावगूहेदविपर्यासं तस्य हैषा मुग्ध्वानुव्रता प्रजा जायतेऽथ यो व्विपर्यास मवगूहति न स्वꣳ स्वं तस्य हैषा मुग्धाननुव्रता प्रजा जायते तस्माद स्वꣳ स्व मेवावगूहेदविपर्यासꣳ† ॥ २२ ॥

स्वर्गस्यो हैष लोकस्य समारोहणः क्रियते। यद्यूपशकल इयꣳ रशना रशनायै यूपशकलो यूपशकलाच्चषालं चषालात् स्वर्गं लोकꣳ समश्नुते ॥ २३ ॥

अथ यस्मात्स्वरुर्नाम। एतस्माद्वा एषोऽपच्छिद्यते तस्यैतत्‡ स्व मेवारुर्भवति तस्मात्स्वरुर्नाम ॥ २४ ॥

तस्य यन्निखातम्। तेन पितृलोकं जयत्यथ यदूर्द्ध्वं निखाताद्दा रशनायै तेन मनुष्यलोकं जयत्यथ यदूर्द्ध्वꣳ रशनाया आ चषालात्तेन देवलोकं जयत्यथ यदूर्द्ध्वं

---

* 'म्रिति'—इति ग, घ। † 'सम्'—इति ख।

‡ 'तदस्यैतत्'—इति क।

चषालाद् द्व्यङ्गुलं वा त्र्यङ्गुलं वा साध्या इति देवास्तेन तेषां लोकं जयति सलोको ह* वै साध्यैर्देवैर्भवति य एव मेतद्वेद ॥ २५ ॥

तं वै पूर्व्वार्द्धे मिनोति। व्वज्रो वै यूपो व्वज्रो दण्डः पूर्व्वार्द्धं वै दण्डस्याभिपद्य प्रहरति पूर्व्वार्द्ध एष यज्ञस्य तस्मात्पूर्व्वार्द्धे मिनोति ॥ २६ ॥

यज्ञेन वै देवाः। इमां जितिं जिग्युर्यैषा मियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यः स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयं-स्तस्माद्यूपो नाम पुरस्ताद्वै प्रज्ञा पुरस्तान्मनोजवस्तस्मा-त्पूर्व्वार्द्धे मिनोति ॥ २७ ॥

स वा ऽअष्टाश्रिर्भवति। अष्टाक्षरा वै गायत्री पूर्व्वार्द्धो वै यज्ञस्य गायत्री पूर्व्वार्द्ध एष यज्ञस्य तस्मादष्टाश्रि-र्भवति ॥ २८ ॥

तꣳ ह स्मैतं देवा अनुप्रहरन्ति। यथेद मप्येतर्ह्येके-ऽनुप्रहरन्तीति देवा अकुर्व्वन्निति ततो रक्षाꣳसि यज्ञ मनूदपिबन्त ॥ २९ ॥

---

* नास्त्येतत् पदं ग-घ-पुस्तकयोः।

ते देवा अध्वर्यु मब्रुवन् । यूप शकल मेव जुहुधि तदाहैष स्वगाकृतो भविष्यति तथो रक्षांꣳसि यज्ञं नानूत्पास्यन्ते ऽयं वै वज्र उद्यत इति* ॥ ३० ॥

सोऽध्वर्युः । यूपशकल मेवाजुहोत्तदुहैष स्वगाकृत आसीत्तथो रक्षांꣳसि यज्ञं नानूदपिबन्तायं वै वज्र उद्यत इति ॥ ३१ ॥

तथो ऽएवैष एतत् । यूपशकल मेव जुहोति तदुहैष स्वगाकृतो भवति तथो रक्षांꣳसि यज्ञं नानूत्पिबन्तेऽयं वै वज्र उद्यत इति स जुहोति दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहेति ॥ ३२ ॥ ४ ॥

॥ इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् [ ७.१. ] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

"अभ्रि मादत्ते देवस्य त्वा (१क०)"–इत्यादिकम्, "स यथा-निखात ओषधिषु मितः स्यादेव मेतास्वोषधिषु मितो भवति (७क०)"–इत्यन्तञ्च ग्रन्थजात मौदुम्बर्याः अवटनिर्माणविधानेनैव

---

* 'इति'–इति ग, घ।

व्याख्यातप्रायम्[1]। "उपरेण सम्मायेति। यूपस्यातष्टो मूलभाग उपरः; तावत्परिमितं यूपावटं कुर्यात्। "एतावन्मात्राणीति। मुष्टिपरिमितानि यूपाग्रे निदध्यात् यूपशकलं च[2] ॥ १—७ ॥

यूपशकलस्य गर्त्ते स्थापनं सार्थवादं विधत्ते— "अथ यूपशकलं प्रास्यति[3] तेजो ह वा एतदित्यादिना। तत्तेजस्त्व मिदानीन्तन-प्रसिद्ध्या समर्थयते— "तस्माद् यदा ब्राह्मणकस्य मित्यादिना। 'अपतक्ष्णुवन्ति' तक्षणेन लघूकुर्वन्ति। "तनूकरणे तक्षः"-इति[4] स्मृः। "एष एव भवतीति। यूपत्वगात्मक एव भवेत् 'नान्यः' शकलः। अत्र कारण माह— "एष हि यजुष्कृतो मेध्य इति। यजुषा "स्वधिते मैनम्"-इतिमन्त्रेण निष्पादितः[5], अत एव मेध्यः ॥ ८ ॥

शकलप्रासनं समन्त्रकं विधत्ते— "स प्रास्यति[6] अग्रेणी-रसीति[7]। छिद्यमानस्य यूपस्य प्रथमम् अग्रे नीयत इति 'अग्रेणीः', यूपावयवभूत इत्यर्थः। यद्वा अग्रेऽवस्थितो यूपोऽवटं प्रति नीयत इति 'अग्रेणीः', पुरस्सर इत्यर्थः। यस्त्वम् 'अग्रेणीरसि', स त्वम् 'उन्नेतॄणां' ऊर्द्ध्वं नेतॄणा मध्वर्यूणां 'स्वावेशः' यूपावटे सुखेन तैरा-

---

१— पुरस्तात् ( ३४६ पृ० १ पं० ) द्रष्टव्यम्।

२— "देवस्य त्वेत्यभ्रि मादाय"-इत्यादीनि सूत्राण्यत्रालोच्यानि ( सू० ६. २. ८—१२)। "देवस्य त्वा"-इति मन्त्रस्तु वा० सं० ६. १. १।

३— का० श्रौ० सू० ६. २. १३। ४— पा० सू० ३. १. ७६।

५ — अनुपद मेवोक्तम् ( ४०२ पृ० ५ पं० )।

६— का० श्रौ० सू० ६. २. १९। ७— वा० सं० ६. २. १।

विश्वत इति स्वावेशः। स त्वं हे यूपशकल! 'एतस्य' कर्मणः 'वित्तात्'। "विद ज्ञाने"[१]। कर्मणि षष्ठी। विद्धि, विदितार्थो भवति; कर्म कृतवान् न भवति। "अधि त्वा स्थास्यतीति। अधीत्युपरिभावे। हे यूपशकल! 'त्वा मधि' तवोपरि यूपः स्थास्यति, तस्यावस्थानं वित्तात्। अग्रेणीरित्यस्य तात्पर्य माह— "पुरस्ताद्वा अस्मादिति। यस्मादेव शकलः 'अस्माद्' यूपात् 'पुरस्तात्' अपि छिद्यते; अस्य प्रथमशकलत्वात्, यूपात् प्रथमं नीयमानत्वात् 'अग्रेणीः' स्वावेश इत्यर्थः। 'एतस्य' सम्यक् बन्धनं वित्तादित्यादि स्पष्टम् ॥ ९ ॥

"अथ स्रुवेणोपहत्याज्य मिति। 'आज्यम् उपहत्य', 'स्रुवेण' आदाय, 'अवटम् अभि' तूष्णीं 'जुहोति'। "तूष्णीम्"-इति[२] सूत्रम्। आव्रश्चनहोमार्थवादे "नेदधस्तादित्यादिकं व्याख्यातम्[३]। "अथ पुरस्तात् परीत्येति[४]। अवटस्य 'पुरस्तात्' 'परीत्य' परिक्रम्य 'उदङ्' उदङ्मुखः 'आसीनः' अध्वर्युर्यजमानो वा 'यूपम् अनक्ति'; "अध्वर्युर्यजमानो वा यूप मनक्ति"-इति[५] सूत्रकारवचनात्। स्पष्टार्थो यूपाञ्जनप्रैषः ॥ १० ॥

"सोऽनक्तीति[६]। "देवस्त्वा"—इत्यञ्जनमन्त्रस्य[७] तात्पर्य माह—

---

१— अदा० प० ५४ धा०।

२— "स्रुवेणावटे जुहोति तूष्णीम्"-इति का० श्रौ० सू० ६. २. २०।

३— पुरस्तात् ( ४०४ पृ० १ पं०) द्रष्टव्यम्।

४— का० श्रौ० सू० ६. २. २१ क। ५— का० श्रौ० सू० ६. २. २१ ख।

६— का० श्रौ० सू० ६. ३. १। ७— वा० सं० ६. २. २।

"सविता वै देवाना मित्यादिना। यजमाननिष्पाद्यस्य यागस्य यूपेनापि निष्पाद्यत्वात्, तत्सिद्धिन्यायात् यजमान एव यूपत्वेनोपचर्यते। "इयं पृथिवी सर्वेषां भूतानां मधु"-इत्याद्युक्तप्रकारेण[1] 'सर्व मिदं मधु'। 'ततः' 'एनम्' यूप मेव, यूपद्वारेण 'अनेन सर्वेण' मधुभूतेन चराचरेण आज्यद्वारेण 'संस्पर्शयति' ॥ ११ ॥

"अथ चषाल मुभयतः प्रत्यज्येति[2]। चषालो यूपस्योपरि प्रतिमोक्तव्योऽष्टाश्रिः मध्ये सन्नतो वलयः[3]। तम् 'उभयतः' आज्येन 'प्रत्यज्य' 'प्रति मुञ्चति' उपरि बध्नाति ॥

मन्त्रार्थस्त्वेषः[4]।— हे चषाल! त्वां 'सुपिप्पलाभ्यः' शोभनफलाभ्यः 'ओषधीभ्यः' तासां मर्थाय, प्रति मुञ्चामीति शेषः। अस्य यूपस्य चषालं सुपिप्पलं खलु, तच्चषालं मध्ये सङ्गृहीत मिव कुर्यात् ॥

उक्तं यूपफलरूपत्वं लौकिकवृन्तदृष्टान्तेन दृढयति— "तिर्यग्वा इद मिति। 'आहतं' सम्बद्धम्, 'यदेवेदं सम्बन्धनं' सम्यक् बन्धनसाधनं वृन्तं फलं च, 'अन्तरा' वृन्तफलयोर्मध्ये "उपेनित मिव" 'उपेनितम्' अल्पपरिमाणं विद्यते, 'तदेव' 'एतत्' एतेन चषालोपेनितेन कृतवान् भवति। 'तस्मात् मध्ये' इद मित्युपसंहारः ॥१२॥

---

१— इहैवोपरिष्टात् (१४ का० ४ प्र० ५ ब्रा० १ क०) द्रष्टव्यम्।

२— का० श्रौ० सू० ६. ३. ३, ४।

३— "अग्राच्चषालं पृथुमात्र मष्टाश्रि मध्यसङ्गृहीतम्, ऊर्द्धमग्रे प्रतिमुञ्चति"-इति का० श्रौ० सू० ६. १. २८, २९।

४— वा० सं० ६. २. ३।

पुनराञ्जनं विधत्ते— "आन्त मग्निष्ठा मनक्तीति[1]। 'अग्निष्ठाः' अग्नेरभिमुखाश्रिः, तम् 'अग्निष्ठाम्', 'आन्तम्' उपरिप्रदेशपर्यन्तम् 'अनक्ति'। "सोपर मग्निष्ठादेश मक्त्वा"-इत्यादि[2] च सूत्रम्। 'सोपरम्' उपरसहितम्। अग्निसन्निधिसाम्यात् 'अग्निष्ठाः' यजमानः। "अथ परिव्ययण मित्यादि। 'परिव्ययणं' परिव्ययणो रशनावेष्टनप्रदेशः, तं 'प्रति' 'समन्तम्' आज्येन 'परिमृशति' परिमृशेत्। "उच्छ्रीयमाणायानुब्रूहि"-'इति'[3] सम्प्रैष मुक्त्वा— ॥ १३ ॥

"स उच्छ्रयति द्या मग्रेणेत्यादि[4]। "द्या मग्रेण"-इति मन्त्रेण[5] उच्छ्रयणं कुर्यात्। हे यूप! 'द्याम्' अन्तरिक्षम् 'अग्रेण' अग्रभागेन 'अस्पृक्षः' स्पृष्टवानसि, तथा तव 'मध्येन' मध्यभागेन 'अन्तरिक्षम् आ अप्राः' आपूरितवानसि, 'पृथिवीम् उपरेण' भूमौ स्थाप्यो भाग उपरः, तेन भूलोकम् 'अदृंहीः' दृढ मकरोः। "वज्रो वै यूपः"—इत्यादि कृतशब्दार्थम् ॥ १४ ॥

"अथ मिनोतीत्यादि[6]। "या ते"-इति मन्त्रेण[7] यूपं मिनुयात्। हे विष्णो! 'ते' 'या' यानि 'धामानि' स्थानानि 'गमध्यै' गमनाय प्राप्तये 'उश्मसि' कामयामहे, 'यत्र' येषु धामसु 'गावः' रश्मयः 'भूरिशृङ्गाः' प्रभूतोर्द्ध्वप्रदेशाः 'अयासः' अयनाः गन्तारो रश्मयः, तं परिवेषं हे विष्णो! 'अत्रा' एषु स्थानेषु 'उरुगायस्य'

---

१— का० श्रौ० सू० ६. ३. ५।　　२— का० श्रौ० सू० ६. २. ५।
३— का० श्रौ० सू० ६. ३. ६।　　४— का० श्रौ० सू० ६. ३. ७।
५— वा० सं० ६. २. ४।　　६— का० श्रौ० सू० ६, ३. ८।
७— वा० सं० ६. ३. १।

प्रभूतवाग्गीयमानस्य, 'विष्णोः' व्याप्तस्य, तव श्रुति-स्मृति-प्रसिद्धं 'परमम्' उत्कृष्टं 'पदम्' 'भूरि' प्रभूतम् 'अवभाति' सर्वदा प्रकाशते, प्रार्थयामह इति शेषः। अथ मधिदैवतः सङ्क्षेपेणोक्तार्थः॥

अथवा प्रकृतेऽधियज्ञपरतया व्याख्येयः। अस्मिन् पक्षे 'विष्णोः' सवनत्रयव्याप्तस्य यज्ञस्य, धामानीत्यादि पूर्ववत्; अत्रोरुगायस्य विष्णोस्ते 'परमं' परार्द्धं 'पदं' यूपाख्य मवभातीति[१]॥

मन्त्रस्य त्रिष्टुप्त्वं यूपमानस्योचित मिति प्रशंसति— "एतया त्रिष्टुभेति ॥ १५ ॥

माने विशेष माह— "सम्प्रत्यग्नि मिति[२]। 'अग्निष्ठाम् 'सम्प्रत्यग्निम्' अग्न्यभिमुखं 'मिनोति' प्रक्रमार्थम्। विपक्षे दोषप्रदर्शनेन दृढयति— "यजमानो वा अग्निष्ठाग्निरिति। 'सः' अध्वर्युः 'यद्' यदि 'अग्नेः' सकाशात् 'अग्निष्ठां' 'कलयेत्' चालयेत्, 'यज्ञात्' 'यजमानः' अपि 'कलेत्' पश्येत्, 'तस्मात्' सम्प्रत्यग्निं' मिनुयात्॥

"अथ पर्यूहतीति[३]। पर्यूहणादिमन्त्राणा मौदुम्बर्या मुक्तत्वात्[४] अत्र ब्राह्मणे उपेक्षिताः ॥ १६ ॥

"अथैव मभिपद्येति[५]। एवं कर्मकलापं कृत्वा यूप मन्वारभ्य

---

१— एतन्मन्त्रस्य यास्कीयं व्याख्यानञ्च द्रष्टव्यम् (२. २. ३. निरु०)।

२— का० श्रौ० सू० ६. ३. ६। ३— का० श्रौ० सू० ६. ३. १०।

४— पर्यूहणम्, पर्यृषणम्, अप उपनिनयन मिति त्रीणि कर्माणि ४ प्र० ५ ब्रा० १७, १८, १९ कण्डिकासु (३४४ पृ०) विहितानि। तत्र द्वावेव मन्त्रौ। तौ त्विह वा० सं० ६. ३. २, ३ पुनराम्नातौ।

५— का० श्रौ० सू० ६. ३. १२।

'वाचयति' "विष्णोः कर्माणि"-इत्यमुं[1] मन्त्रम्। "विष्णोः कर्माणीति वाचयति यूप मन्वारब्धम्"-इति[2] हि सूत्रम्॥

अथ मर्थः।— 'विष्णोः' यज्ञात्मनः 'कर्माणि पश्यत' इह नराः! 'यतः' यस्माद् 'व्रतानि' कर्माणि जायन्ते, यानि च 'पस्पशे' स्पृष्टवान्। यो विष्णुः 'इन्द्रस्य' च यज्ञाभिमानिनो देवस्य 'युज्यः' योग्यः 'सखा' सखिभूतः॥

मन्त्रतात्पर्यं व्याचष्टे— "वज्रं वा एष इत्यादिना। 'उदश्रियत्'-इति, "श्रिञ् सेवायाम्[3]"-इत्यस्य लुङि रूपम्। कर्मणां बहुत्वेऽपि विजितेरेकत्वात् एकवचनान्तं निर्द्दिष्टम्। चतुर्थपादे इन्द्रश्रवणं सङ्गत मित्याह— "इन्द्रो वै यज्ञस्य देवतेति॥ १७॥

"अथ चषाल मुदीचते[4] तद्विष्णोरित्यादि[5]। 'उदीचते' ऊर्द्ध मीचेत। 'विष्णोः' यज्ञस्य 'तत्' 'परमं पदम्' पश्यत इति पदं यूपः, तं 'सदा पश्यन्ति' 'सूरयः' विद्वांसः। कीदृशम्? 'दिवि' आकाशे निरावरणे 'आततं' प्रसृतम् 'चक्षुरिव'।

मन्त्रस्य तात्पर्य माह— परमपदस्य यूपस्य शत्रुवधार्थ मुद्यतवज्ररूपत्वात्, तद्दर्शनेन यज्ञविघातकाना मसुराणां पलायनात्, उच्छ्रितयूप एव विष्णोर्विजितिस्तं 'पश्यत'— 'इति' मन्त्रः 'आह' इत्यर्थः॥ १८॥

---

१— वा० सं० ६. ४. १। २— का० श्रौ० सू० ६. ३. १२।

३— धा० उ० ८९७ धा०। ४— का० श्रौ० सू० ६. ३. १३।

५— तन्मन्त्रपाठस्तु— वा० सं० ६. ४. २।

रशनापरिव्ययनं विधाय प्रशंसति— "अथ परिव्ययतीति[१]। परिव्ययनप्रदेश मभिनयेन निर्द्दिशति— 'अत्र'[२] नाभिप्रदेशे इत्यर्थः। "नाभिदघ्ने परिवयति"-इति तैत्तिरीयकम्[३]। उक्तार्थे लोकस्थितिं हेतूकरोति— "अत्रेव हीति। लोके हि मध्यदेशे खलु 'इदं' वसनं 'भवति'; तस्मादित्यर्थः। "अन्नाद्य मेवेत्यादि। रशनाया अन्नसम्बन्धिविकारत्वेनान्नरूपत्वात् अन्न मेवास्मिन्नुप-स्थापितवान् भवति ॥ १९ ॥

रशनायास्त्रैगुण्य माह— "त्रिवृतेति[४]। अन्नस्य त्रिवृत्त्वं कुत्र दृष्ट मिति, तद् दर्शयति— "पशवो ह्यन्न मिति। कथं तेषु त्रिवृत्त्व मिति तदुपपादयति— "पिता मातेत्यादि। दधिपयोरूपस्यान्नस्य त्रयाणा मपि कारणत्वात् तेषा मप्यन्नत्वोपचारः ॥ २० ॥

"स परिव्ययतीति। परिव्ययने मन्त्र माह— "परिवीरसीति[५]। हे यूप! त्वं 'परिवीरसि' परितो रशनया वेष्टितोऽसि। 'दैवी विशः' देवसम्बन्धिन्यः प्रजाः त्वां 'परिव्ययन्ताम्' वेष्टयन्तु। तथा 'इमं यजमानम्' एव 'मनुष्याणाम्' इतरेषां मध्ये 'रायः' धनानि परिव्ययन्तु ॥ २१ ॥

"अथ यूपशकल मवगूहतीति[६]। 'यूपशकलं' स्वरुम् अवगूहेत् रशनामध्ये। 'तस्मात्' स्वरोर्यूपरूपत्वात्। एवं सर्वथावगूहनीयत्वात्

---

१— का० श्रौ० सू० ६. ३. १४ ख।

२— 'अत्रैव'-इति क। ३— तै० स० ६. ३. ४, १६।

४— "त्रिगुणा त्रिव्यामा कौशी रशना" का० श्रौ० सू० ६. ३. १४ क।

५— वा० सं० ६. ६. १। ६— का० श्रौ० सू० ६. ३. १७।

यूपैकादशिनपक्षेऽपि स्वस्वयूपानतिक्रमेणैवावगूहेत्[1]। 'अविपर्यासं' विपर्यासाया: क्रमेणाग्रहणात्। दोषाभिधानेनाविपर्यासं प्रशंसति— "तस्य हैषामुग्धानुव्रतेत्यादिना। अमुग्धा माह— 'अनुव्रता' यजमानव्यापारानुकूला। विपर्यासपक्षे उक्तवैपरीत्यं व्याख्येयम् ॥ २२ ॥

यूपशकल-रशना-चषालानां क्रमेणोर्द्ध्वभावित्वात् स्वर्गारोहणसोपानत्वेन प्रशंसति— "स्वर्ग्यो हैष लोकस्य समारोहण इत्यादिना ॥ २३ ॥

यूपावयवत्वेन स्वरोः सर्वथावगूहनं प्रशंसितुं तन्नाम निर्वक्ति— "अथ यस्मात् स्वरुर्नामेति। 'एतस्मात्' एव 'एषः' यूपशकलः 'अपच्छिद्यते'। तत् 'एतत्' छिन्नं द्रव्यम् अस्य यूपसम्बन्धि पुनः 'स्व मेव' स्वकीय मेव 'अरुः' गन्ता भवति। 'तस्मात्' स्व मियर्त्तीति 'स्वरुः' 'नाम' सम्पन्नम्[2] ॥ २४ ॥

यूपं लोकत्रयजयात्मना प्रशंसति— "तस्य यन्निखात मिति। निखन्यत इति निखातो गर्त्तान्तरालः। "तेन पितृलोकं जय-

---

१— का० श्रौ० सू० ६. ३. १८।

२— "त एतं स्वरु मपश्यन् यूपशकलम्"–इति ऐ० ब्रा० २. १. ३। "यूपशकल मेतं— स्वरुनामकं स्वल्पं काष्ठखण्डम्"–इति तत्र सायणः। "स्वरुणा पशु मनक्ति"–इति तै० सं० ५. ५. ७. १। तै० ब्रा० २. ४. ७. १०, ११। "स्वरु मन्तर्धाय स्वधितिना पशुं समनक्ति, घृतेनाक्तौ पशुं त्रायेथा मिति शिरसि। न वा स्वधितिना, स्वरुणैव"–इति आप० श्रौ० सू० ७. १४. ११, १२। मीमांसादर्शने च जै० सू० ४. २. १–७, अधि० १ स्वरुविचारो द्रष्टव्यः।

तीति। चषालादुपरि यूपाग्रं द्व्यङ्गुलभागः, 'तेन' भागेन 'साध्या इति' प्रसिद्धाः 'देवाः' सन्ति, 'तेषां लोकं जयति'[१]। वेदितुः फल माह—"सलोको ह वा इति॥ २५॥

यूपस्य पूर्वार्द्धं भूमौ यत् मानम्, तत् दण्डसाम्यतः स्तौति— "तं वै पूर्वार्द्धे मिनोतीति। यज्ञस्य प्रहरणसाधनत्वात् दीर्घत्वाच्च वज्रो दण्डः। 'दण्डस्य पूर्वार्द्धम्' 'अभिपद्य' गृहीत्वा प्रहरति'; 'यज्ञस्य' अपि 'एषः' यूपः 'पूर्वार्द्धः', होमात् पूर्व मनुष्ठेयत्वात्। 'तस्मात्' 'पूर्वार्द्धे' पूर्वभागे 'मिनोति'॥ २६॥

प्रकारान्तरेण पूर्वार्द्धं मभिमातुं भूयो द्योतयति— "यज्ञेन वै देवा इत्यादिना। एतदसकृद् गतम्[२]। देवैस्तिरोभावितस्य यज्ञस्य यूपस्य इतरेषा मनुष्याद्दृणां प्रज्ञापकत्वात्, प्रज्ञापकस्य पुरस्ता-द्भाविलदर्शनात् यूपोऽपि पुरस्तात् देशे स्थाप्य इत्यर्थः। 'मनोजवः' मनसो वेगः। यूपस्य देवैराच्छादितयज्ञस्य प्रज्ञापकत्वं तैत्तिरी-यकेऽप्युक्तम्— "यज्ञेन वै देवाः सुवर्गं लोक मायन्; तेऽमन्यन्त, मनुष्या नोऽन्वाभविष्यन्तीति; ते यूपेन योपयित्वा सुवर्गं लोक मायन्; त मृषयो यूपेनैवानुप्राजानन्; तद् यूपस्य यूप-त्वम्"-इति[३]॥ २७॥

"स वा अष्टाश्रिरित्यादि। स्पष्टम्॥ २८॥

---

१— तै० सं० ६. ३. ४. २१, २२ वचने द्रष्टव्ये।

२— १ का० ५ प्र० १ ब्रा० १ क० ( ४०५ पृ० ) द्रष्टव्यम्।

३— तै० सं० ६. ३. ४. २०।

यूपे[1] निगूढस्य स्वरोस्तरत्र प्रतिपत्तिकर्मत्वेन यूपप्रतिनिधात्मना होम मभिधातु माह— "तं ह स्मैत मित्यादिना। "यथेद मप्येतर्ह्येक इति। 'अप्येतर्हि' इदानी मपि, 'एके' अनुष्ठातारः, 'इदम्'-इत्यनुप्रहरणक्रियाविशेषणम्। देवा यथा, तथा अनुप्रहरन्तीत्यर्थः। इदानी मपि अनुप्रहरण मेव कुर्वन्ति। "देवा अकुर्वन्निति। न तावद् यज्ञस्थानीयस्य यूपस्य दग्धत्वेन बाधकाभावात् यथाकामम् 'उदपिबन्त'॥ २९॥ ३०॥

सोऽध्वर्युरिति। देवाः 'तत्' तेनैव खलु 'एषः' यज्ञः 'स्वगाकृतः' स्वं स्थानं प्राप्तः, कृतप्रतिपत्तिकः 'आसीत्'। स्पष्ट मन्यत्[2]॥ ३१, ३२॥ ४ [७. १.]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे सप्तमाध्याये प्रथमं ब्राह्मणम्॥

---

१— "अष्टाश्रिं करोत्युपरवर्जम्"-इति का० श्रौ० सू० ६. १. २७। 'अष्टाश्रिम्— अष्टकोणम्। उपरोऽवटः, तत्सम्बन्धिनं निखननार्हं यूपस्य प्रदेशं मूलतः पञ्चमांशं वर्जयित्वा'-इति तत्र या० दे०।

२— सर्व मेतद् यूपप्रकरणं तैत्तिरीयभाष्ये भगवता सायणाचार्येण व्यक्तं व्याख्यातम्, तै० सं० ६. ३. ३, ४ द्रष्टव्यम्।

( अथ द्वितीयं ब्राह्मणम्. )

यावती वै वेदिस्तावती पृथिवी । वज्रा वै यूपास्त-दिमा मेवैतत् पृथिवी मेतैर्वज्रैस्पृणुतेऽस्यै सपत्ना-न्निर्भजति तस्माद् यूपैकादशिनी भवति द्वादश उप-शयो भवति वितष्टस्तं दक्षिणत उपनिदधाति तद्यद् द्वादश उपशयो भवति ॥ १ ॥

देवा ह वै यज्ञं तन्वानाः* । तेऽसुररक्षसेभ्य आस-ङ्गाद् बिभयाञ्चक्रुस्तद्य एत ऽउच्छ्रिता यथेषुरस्ता तया वै स्तृणुते वा न वा स्तृणुते यथा दण्डः प्रहृतस्तेन वै स्तृणुते वा न वा स्तृणुतेऽथ य एष द्वादश उपशयो भवति यथेषुरायतानस्ता यथोद्यत मप्रहृत मेव मेष वज्र उद्यतो दक्षिणतो नाष्ट्राणाᳬ रक्षसा मुपहत्यै तस्माद् द्वादश उपशयो भवति ॥ २ ॥

तं निदधाति† । एष ते पृथिव्यां लोक आरण्यस्ते पशुरिति पशुश्च वै यूपश्च तदस्मा ऽआरण्य मेव पशूना मनुदिशति तेनो ऽएष पशुमान् भवति तद् द्वयं‡ युपैकादशिन्यै सम्मयन माहुः स्वःसुत्यायै ह न्वेवैके

* 'नाः'–इति ग, घ ।

† 'तन्निदधाति'–इति ख ।

‡ 'तद् वयं'–इति घ ।

सुम्मिन्वन्ति प्रकुव्रतायै* चैवु श्वःसुत्यायै यूपं मिन्वन्तीत्यु च ॥ ३ ॥

तदु तथा नु कुर्यात्। अग्निष्ठ मेवोच्छ्रयेदिदं वै यूप मुच्छ्रित्याध्वर्युरा परिव्ययणान्नान्ववर्जत्यपरिवीता वा ऽएतु ऽएतां रात्रिं व्वसन्ति सा न्वेव परिचक्षा पशवे[†] वै यूप मुच्छ्रयन्ति प्रातर्वै पशूनालभन्ते तस्मादु प्रातरेवोच्छ्रयेत् ॥ ४ ॥

स य उत्तरोऽग्निष्ठात् स्यात्[‡]। तु मेवाग्र ऽउच्छ्रयेदथ दक्षिण मथोत्तरं दक्षिणार्द्ध मुत्तमं तथोदीची भवति ॥ ५ ॥

अथो ऽइतरथाहुः। दक्षिण मेवाग्रेऽग्निष्ठादुच्छ्रयेदथोत्तर मथ दक्षिण मुत्तरार्द्ध मुत्तमं तथो हास्योदगेव कर्मानुसन्तिष्ठत ऽइति[§] ॥ ६ ॥

स यो व्वर्षिष्ठः स दक्षिणार्द्धः स्यात्। अथ ह्रसीयानथ ह्रसीयानुत्तरार्द्धो ह्रसिष्ठस्तथोदीची भवति ॥ ७ ॥

अथ पत्नीभ्यः पत्नीयूप मुच्छ्रयन्ति। सर्वत्वाय न्वेव[||] पत्नीयूप उच्छ्रीयते तत् त्वाष्ट्रं पशु मालभते त्वष्टा वै

---

* 'प्रकु ऽव्रतायै'—इति ख, डा०—वेबरेण B-पुस्तके दृष्टश्च ।

† 'पशवो'—इति क ।　　‡ 'स्यात्'—इति ग, घ ।

§ 'इति'—इति ग, घ ।

|| 'त्वेवु'—इति पाठः सायणसम्मतः B-पुस्तके दृश्यते च इति डा०-वेबरः ।

सिक्तꣳ रेतो विकरोति तदेष एवैतत्सिक्तꣳ रेतो वि-
करोति मुष्करो भवत्येष वै प्रजनयिता यन्मुष्करस्तस्मान्
मुष्करो भवति तन्न* सꣳस्थापयेत्पर्यग्निकृत मेवोत्सृजेत्
स यत्सꣳस्थापयेत् प्रजायै हान्त मियात्तत् प्रजा मुत्सृ-
जति तस्मान्न सꣳस्थापयेत्पर्यग्निकृत मेवोत्सृजेत् ॥ ८ ॥
५ [ ७. २. ]

॥ इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥

अग्नीषोमीययूपप्रसङ्गात् यूपैकादशिनीं[1] विधातु मुपोद्घात-
यति— "यावती वै वेदिरिति। "इयं वेदिः परो अन्तः
पृथिव्याः[2]", "वेदि माहुः पर मन्तं पृथिव्याः[3]"—इत्यादिश्रुतेः।
'इमां' पृथिवीम् 'एतैः' यूपैः 'वज्रैः' 'स्पृणुते' बलवतीं करोति।
अतोऽत्यन्तदार्ढ्याय यूपैकादशिनी कर्त्तव्या। अत्र यूपैकादशिनी-
विधानं "यूपैकादशिनी चेत् रथाक्षमात्राण्यन्तराणि"—इत्यादि-

---

* 'तं न'—इति ग, घ।

१— अग्निष्टोमे आग्नेय-सारस्वत-सौम्य-पौष्ण-बार्हस्पत्य-वैश्वदेव-ऐन्द्र-मारुत-ऐन्द्राग्न-सावित्र-वारुणा इत्येकादशस्तोमायनसञ्ज्ञकाः सवनीयाः पशवो भवन्ति। एषा मेकादशानां नियोजनार्थं मेक एव यूपः, प्रतिपशु एकैको वेति नियमात् यूपा अप्यस्मिन् पक्षे एकादशैव भवन्ति। एकादशानां वर्ग एकादशिनीति सङ्क्षेपः। तै० सं० ६. ६. ५ द्रष्टव्यम्। तदेतत् सर्वं वा० सं० ३० अध्याये स्पष्टम्।

२— ऋ० सं० १. १६४. ३५। ३— तै० सं० ७. ४. १८. ६।

सूत्रेषु[1] द्रष्टव्यम्। तस्मिन् पक्षे 'उपशयः' यूपानां समीपे शेते इत्युपशयोऽन्यो यूपः[2], स 'द्वादश भवति'। स च 'वितष्टः' विशेषेणोपरप्रदेशेऽपि तष्टः। 'तं' यूपानां दक्षिणदेशे भूमौ निखातं कृत्वा तूष्णीं स्थापयेत्[3] ॥ १ ॥

उपशयं रक्षोनाशकत्वेन प्रशंसति— "देवा ह वै यज्ञं तन्वाना इत्यादिना। यथा मुक्तेषुः प्रहृतो दन्तिदण्डो वा यदा ऋजु-र्गच्छति, तदा लक्ष्यं विध्यति, न चेन्न; एवं यूपोऽपि उपशय-सहितः स्थापितः; तत्पतनाशङ्काया अपगतत्वात् रक्षसां यूप-विषयं भयं नोदियादित्यर्थः। अतो यूपस्य सोपशयत्वे सति मुक्तेषुवत् यदोपशयाख्यं वज्र मुद्यच्छतीति रक्षसां भय मुत्पद्यते। तस्मादुपशयः कर्त्तव्य इत्यर्थः ॥ २ ॥

निधानमन्त्र माह— "तं निदधात्येष ते पृथिव्यां लोक आरण्यस्ते पशुरितीति[4]। हे उपशय! यूप! यूपानां दक्षिणप्रदेशः 'पृथिव्यां' 'ते' तव 'लोकः' स्थानम्, अतो न भूम्या मन्तर्मिनामीत्यर्थः। तर्ह्यस्य कः पशुः? इत्याकाङ्क्षायां दर्शयति— "आरण्यस्ते पशु-रिति। अरण्ये भवः 'आरण्यः' व्याघ्रादिरिति निर्द्दिशेत्, पृथिव्यां स्थापयेत्। तथाच सूत्रम्— "वितष्टं द्वादशं निदधात्येष त इतीति[5]। यूपस्य सर्वथा पशुसम्बन्धोऽपेक्षित इत्याह— "पशुस्य वै

---

१— का० श्रौ० सू० ८. ८. ६–१२।
२— तै० सं० ६. ६. ४. ६ द्रष्टव्यम्।
३— का० श्रौ० सू० ८. ८. २३।   ४— वा० सं० ६. ६. १।
५— का० श्रौ० सू० ८. ८. २३।

यूपस्येति। अविनाभूतावित्यर्थः। 'वै'-शब्दः इतरयूपानां पशु-सम्बन्धनियमप्रसिद्धिद्योतनार्थः। 'तत्' तस्मादव्यभिचारात्। "तद् द्वय मिति। यूपैकादशिन्याः 'समयनं' 'द्वयं' द्विविध मित्यर्थः। 'आहुः' विवदन्ते अभिज्ञाः॥

तत्रैकेषाञ्चित् पक्ष माह— "श्वःसुत्यायै ह त्वेवैके सम्मिन्वन्तीति। 'श्वः' परेद्युः क्रियमाणायाः सुत्यायाः पूर्वस्मिन् दिने अग्निष्ठप्रमुखान्[1] सर्वान् यूपान् निखनन्ति॥ ३॥

तं पक्षं निराचष्टे— "तदु तथेति। तस्मिन् काले 'अग्निष्ठम्' एकम् 'एव' उत्तरवेदेः पुरोदेशस्थम् अग्नीषोमीयपश्वर्थम् 'उच्छ्रयेत्'[2]। इतरेषा मपि पूर्वेद्युरुच्छ्रयणे दोष माह— "इदं वा इत्यादिना। 'इदं' वक्ष्यमाणं भवतीत्यर्थः। 'आ परिव्ययणात्' रशनापरिव्ययणपर्यन्तम्, 'अध्वर्युः 'नान्वर्जति' नैव हस्तस्पर्शं परित्यजेत्। अतोऽग्निव्यतिरिक्तानां परिव्ययणस्य 'प्रातः' परेद्युः पशूपकरणकाले कर्त्तव्यत्वात् इतरे 'रात्रिम्' 'अपरिवीता' नग्ना वसन्ति। 'सा न्वेव' सैव, उक्ताजघन्यैव 'परिचक्षा' पूर्वेद्युरुच्छ्रयमाणपक्षस्य निन्दा।

स्वपक्षे युक्ति माह— "पशवे वै यूप मुच्छ्रयन्तीति। 'तस्मात्' 'प्रातरेव' परेद्युरेव उच्छ्रयणं कुर्यादिति निगमनम्[3]॥ ४॥

एकादशिनीपक्षे केन क्रमेणोच्छ्रयण मिति, त माह— "स य

---

१— अग्नौ अग्निसमीपे तिष्ठतीत्यग्निष्ठः प्रथमो यूपः।

२— का० श्रौ० सू० ६. २. ५।

३— का० श्रौ० सू० ८. ८. १५।

उत्तरोऽग्निष्ठात् स्यादिति। अग्निष्ठमध्य मवधिं कृत्वा तत उत्तरतः प्रथमम्, ततो दक्षिणतो द्वितीयम्, तत उत्तरतस्तृतीयम्, ततो दक्षिणतश्चतुर्थं मित्येव मुभयोः पार्श्वयोरुत्तरप्राथम्येन पञ्च पञ्च यूपा उच्छ्रिताः। एवं क्रमेण दक्षिणार्द्धे भवम् 'उत्तमं' कुर्यात्। 'तथा' सन् 'उदीची भवति' उत्तरोपक्रमा भवतीत्यर्थः[1] ॥ ५ ॥

"अथो इतरथाऽऽहुरिति। "दक्षिण मेवाग्र इत्यादिकं पूर्ववाक्य-वैपरीत्येन व्याख्येयम्। तथो ह्यस्येति। एवं कुर्वतः कर्म 'उदगेव' आनुपूर्व्येण 'सन्तिष्ठते' समाप्यते। पूर्वस्मिन् पक्षे उदगुपक्रमः, द्वितीये उदगपवर्ग इति भेदः ॥ ६ ॥

"स यो वर्षिष्ठ इति। तेषा मुत्तरोत्तरो 'यः वर्षिष्ठः', 'सः दक्षिणार्द्ध्यः स्यात्'। "अथ ह्रसीयानित्यादिना दक्षिणोपक्रम मुदगपवर्गम्। प्रथमं वर्षिष्ठ मत्युच्छ्रितम्, ततः पर मीषदुच्छ्रित मित्येवं क्रमेणोच्छ्रयेत्। तथा सति सर्वेषा मुत्तरस्तु 'ह्रसिष्ठः' अतिशयेन ह्रस्वो भवति[2] ॥ ७ ॥

प्रसङ्गात् पात्नीवत पशुप्रयोग माह[3]— "अथ पत्नीभ्यः पत्नी-यूप मुच्छ्रयन्तीति[4]। 'पत्नीयूपम्'-इति पात्नीवतयूपस्य सञ्ज्ञा, तं 'पत्नीभ्यः' अर्थाय उच्छ्रयेत्। एतत् प्रशंसति—"सर्वत्वाय न्विति। "तत्त्वाष्ट्र मित्यादि[5]। 'तत्' तत्र यूपे 'त्वाष्ट्रं' त्वष्टृदेवताकं 'पशुम्'

---

१— का० श्रौ० सू० ८. ८. १८–२१।

२— का० श्रौ० सू० ८. ८. १९।

३— 'पशुप्रयोजन माह'–इति क।

४— का० श्रौ० सू० ८. ८. ४१। ५— का० श्रौ० सू० ८. ९. १।

आलभेत । देवतां प्रशंसति— "त्वष्टा वै सिक्तं रेत इति । 'वै'-शब्देन "यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति, तावच्छो वै तत् प्रजायते"—इत्यादि[1]श्रुत्यन्तरप्रसिद्धिर्द्योत्यते । विशेष माह— "मुष्करो भवतीति । 'मुष्करः' प्रकृष्टमुष्कः । "ऊषसुषी-त्यादिना र-प्रत्ययः[2] । इतरपशुवत् सञ्ज्ञपनप्रसक्तावाह— "तन्न संस्थापयेत्, पर्यग्निकृत मेवोत्सृजेदिति । 'संस्थापनं' पशुसञ्ज्ञपनम् । 'एव'-शब्दो भिन्नक्रमः । उत्सृजेदेव, न संस्थापयेत् । संस्थापनपक्षे दोष माह— "स यत् संस्थापयेदिति । 'प्रजायै' प्रजायाः, पुत्रपौत्रादि-रूपायाः 'अन्तम्' अवसानम् 'इयात्' प्राप्नुयात् । मुष्करस्य प्रजन-नेन पितृलोपन्यासात् सञ्ज्ञपन मयुक्तः[3] ॥ ८ ॥ ५ [७. २.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥

---

१— तै० सं० १. ५. ९. ५ द्रष्टव्यम् ।

२— "ऊषसुषिमुष्कमधो रः"—इति पा० सू० ५. २. १०७ ।

३— तै० सं० ६. ६. ४, ५ अनुवाकावालोच्यौ । तत्रात्रैव प्रकरणे श्रुत मिदं सामाजिकं वचनम्— "यदेकस्मिन् यूपे द्वे रशने परिव्ययति, तस्मादेको द्वे जाये विन्दते ; यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति, तस्मान्नैका द्वौ पती विन्दते"—इति (६. ६. ४. ७.) ।

( अथ तृतीयं ब्राह्मणम्. )

पशुश्च वै यूपश्च। न वा ऽऋते यूपात्पशु मालभन्ते कदा चन तद्यत्तथा नु ह वा ऽएतस्मा ऽअग्रे पशवश्चक्षमिरे यदन्न मभविष्यन् यथेद मन्नं भूता यथा हैवायं द्विपात् पुरुष उच्छ्रित एवꣳ हैव द्विपाद उच्छ्रिताश्चेरुः ॥ १ ॥

ततो देवा एत व्वज्रं ददृशुः। यद्यूपं त मुच्छिश्रियुस्तस्माद्भीषा प्राह्रीयन्त* ततश्चतुष्पादा अभवंस्ततोऽन्न मभवन् यथेद मन्नं भूता एतस्मै हि वा ऽएतेऽतिष्ठन्त तस्माद् यूप ऽएव पशु मालभन्ते नर्त्ते यूपात् कदाचन† ॥ २ ॥

अथोपाकृत्य पशुम्। अग्निं मथित्वा नियुनक्ति तद्यत्तथा नु ह वा ऽएतस्मा ऽअग्रे पशवश्चक्षमिरे यद्धविरभविष्यन् यथैनानिदꣳ हविर्भूतानग्नौ जुह्वति तान् देवा उपनिरुरुधुस्त ऽउपनिरुद्धा नोपावेयुः ॥ ३ ॥

ते होचुः। न वा ऽइमेऽस्य यामं‡ व्विदुर्यदग्नौ हविर्जुह्वति नैतां प्रतिष्ठा मुपरुद्धैव पशूनग्निं मथित्वाग्नावग्निं

---

* 'प्राह्णीयन्त'–इति सा०-सम्मत इति डा०-वेबरः।

† 'चन्'–इति ग, घ।

‡ 'यानं'–इति सा०-सम्मत इति डा०-वेबरः।

जुहवाम ते व्वेदिष्यन्त्येष वै किल हविषो याम एषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्युवैष्यन्ति ततो रातमनस आलम्भाय भविष्यन्तीति॥ ४ ॥

त उपरुध्यैव पशून्। अग्निं मथित्वाग्नावग्नि मजुहवुस्तेऽविदुरेष वै किल हविषो याम एषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्युवायंस्ततो रातमनस आलम्भायाभवन्॥ ५ ॥

तथो ऽएवैष एतत्। उपरुध्यैव पशु मग्निं मथित्वाग्नावग्निं जुहोति स व्वेदैष वै किल हविषो याम एषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्युवैति ततो रातमना आलम्भाय भवति तस्मादुपाकृत्य पशु मग्निं मथित्वा नियुनक्ति ॥ ६ ॥

तदाहुः*। नोपाकुर्यान्नाग्निं मन्थेद्रशना मेवादायाञ्जसोपपरेत्याभिधाय नियुञ्ज्यादिति तदु तथा न कुर्याद्यथाधर्मं तिरश्चया चिकीर्षेदेवं तत्तस्मादेतदेवानुपरीयात्॥ ७ ॥

अथ तृण मादायोपाकरोति । द्वितीयवान्निरुणधाऽइति द्वितीयवान् हि वीर्यवान्॥ ८ ॥

स तृण मादत्ते। उपावीरसीत्युप हि द्वितीयोऽवति

* 'ऊः'—इति ग, घ।

तस्मादाहोपावीरसीत्युप देवान्* दैवीर्विशः प्रागु†रिति दैव्यो वा ऽएता व्विशो यत्पशवोऽस्थिषत देवेभ्य इत्येवैतदाह यदाहोप देवान्‡ दैवीर्विशः प्रागु§रिति ॥ ९ ॥

उशिजो व्वह्नितमानिति। व्विद्वाꣳसो हि देवास्तस्मादाहोशिजो व्वह्नितमानिति ॥ १० ॥

देव त्वष्टर्व्वसु रमेति। त्वष्टा वै पशूनामीष्टे पशवो व्वसु तानेतद्देवा अतिष्ठमानांस्त्वष्टार मब्रुवन्नुपनिमदेति यदाह देव त्वष्टर्व्वसु रमेति ॥ ११ ॥

हव्या ते स्वदन्ता मिति। यदा वा ऽएत ऽएतस्मा ऽअध्रियन्त यद्धविरभविष्यंस्तस्मादाह हव्या ते स्वदन्ता मिति ॥ १२ ॥

रेवती रमध्व मिति। रेवन्तो हि पशवस्तस्मादाह रेवती रमध्व मिति बृहस्पते धारया व्वसूनीति ब्रह्म वै बृहस्पतिः पशवो वसु तानेतद्देवा अतिष्ठमानान् ब्रह्मणैव परस्तात्पर्यदधुस्तन्नात्यायंस्तथो ऽएवैनानेष एतद् ब्रह्मणैव परस्तात्परिदधाति तन्नातियन्ति तस्मादाह बृहस्पते धारया व्वसूनीति पाशं कृत्वा प्रतिमुञ्चत्यथातो नियोजनस्यैव ॥ १३ ॥ ६ [७. ३.] ॥

॥ इति पञ्चमप्रपाठके षष्ठं ब्राह्मणम् ॥

---

*, ‡ 'देवां'—इति ग, घ। †, § 'प्रागु'—इति ग, घ।

पशुनियोजनाय सर्वथा यूपेनैव भवितव्य मित्यमु मर्थ माख्यानमुखेनोपपादयति— “पशुश्च वै यूपश्चेत्यादिना । अविनाभूतावित्यर्थः । व्याप्तिं दर्शयति— “न वा ऋत इति । यतो यूपं विना पश्वालम्भो नास्ति, केनापि प्रकारेण न तथा स्यात्, यथा पशोर्यूपेन; अतस्तदुपपद्यत इत्यर्थः । तत् प्रदर्श्यते— “न ह वा इत्यादिना । ‘एतस्मै’ वक्ष्यमाणाय देवाना मन्नभावाय ‘न’ ‘चक्षमिरे’ क्षममाणा भवन्ति, ‘अन्न मभविष्यन्निति’ ‘यत्’ अस्ति, तस्या मित्यर्थः । ‘यथा’ ‘इदम्’ इदानीं यूपनियुक्ताः ‘अन्नं भूत’ अन्न मभवन्, तथा यूपाख्यवज्रोद्यताया रहिते काले इत्यर्थः । अन्नभावाभावे कारण माह— “यथा हैवायं द्विपात् पुरुष इति ॥१॥

“ततो देवा इति । ‘तं यूपम्’ ‘उच्छिश्रियुः’ उच्छ्रयण मकुर्वन् । ‘तस्मात्’ भयात् हेतोः ‘प्राल्लीयन्त[१]’ प्रकर्षेण लीना[२] अवचनीया[३] अभवन् । ‘ततः’ हेतोः मनुष्यवद् द्विपादाः सन्तः पश्चात् ‘चतुष्पादा अभवन्’ ॥ २ ॥

प्रासङ्गिकं यूपैकादशिनीपक्षं परिसमाप्य प्रकृत मग्नीषोमीयपशुप्रयोग माह— ‘अथोपाकृत्य पशु मिति[४] । पशूपाकरणानन्तरम्[५] अग्निमन्थनानन्तर मेव पशुं यूपे नियुञ्जीत । पशुनियो-

१, २, ३— ‘प्राल्लीयन्त’–इति, ‘ल्लीना’–इति, ‘अवनता’–इति च क्व ।

४— ‘अग्नीषोमीयोऽतः पशुः’–इति का० श्रौ० सू० ८. ७. २५ ।

५— “उपावर्त्तध्व मित्ययं प्रैष उपाकरणशब्देनोच्यते, तद्व्यतिरिक्तं किमपि न ब्रूयात्; तेनोपाकरणेन अध्वर्युरुद्गातृभ्यो यज्ञं प्रयच्छति”–इति या० दे० ( का० श्रौ० सू० ३. ३. १७. ) । १ भा० ३५६ पृ० २ टीप्पनी च द्रष्टव्या ।

जनस्य अग्निमन्थनानन्तरकालं प्रशंसति— "तद्यत्तथा न ह वा एतस्मा अग्रे पशव इत्यादिना । पूर्वार्थवादवाक्यवत् व्याख्येयम् । 'नोपावेयुः' नोपगताः पशवः ॥ ३ ॥

"ते होचुरिति । 'न वा' 'इमे' पशवः 'यदग्नौ जुह्वति' । यतः 'अस्य' नियोजनस्य 'यामं' प्रायनम्,[1] अग्नौ होमलक्षणं 'न विदुः' न ज्ञातवन्तः। तदेव विशिनष्टि— "नैतां प्रतिष्ठा मिति । 'एतां' होमलक्षणां 'प्रतिष्ठाम्' अग्न्याख्यपरमपदस्थितिम् 'अग्नौ' उत्तरवेदिस्थे 'अग्निम्' मन्थनजन्यम् । 'एष वै किल'—इत्येतच्छ-ब्दार्थ माह— "अग्नौ वै किल हविर्जुह्वतीति । 'अभ्यवैष्यन्ति' अवगतिं प्राप्स्यन्ति । 'आलम्भाय' 'रातमनसः' दत्तमनस्काः 'भवि-ष्यन्ति' 'इति' । शिष्टं स्पष्टार्थम् ॥ ४ ॥ ५ ॥ ६ ॥

केवलनियोजनपक्ष मुदाहृत्य निराचष्टे— "तदाहुर्नोपाकुर्या-दिति । उपकरणाद्यकृत्वा प्रथमत एव 'रशना मादाय' साम्मुख्येन यूपसमीपं गत्वा 'अभिधाय' पशुं बद्ध्वा 'नियुञ्ज्यात्' नियु-ञ्जीत ॥ ७ ॥

क्रम मुक्त्वा इदानीं सार्थवाद मुपाकरणं विधत्ते— "अथ तृण मादायेति[2] । तृणादानस्य प्रयोजन माह— "द्वितीयवानिति। 'निरुणधे' निरोधं[3] करवाणि । तावता किं मायात मित्यत आह—

---

१— 'यानं (?) प्रायम्'–इति क ।

२— आपस्तम्बसूत्रे उपाकरणप्रकारः सुव्यक्तः ( ७. १६. २–५. ) ।

३— 'पशोर्निरोधं'–इति क ।

"द्वितीयवान् हि वीर्यवानिति। असहायस्य व्यापाराक्षमत्वं लोकसिद्धम् ॥ ८ ॥

"स तृण मादत्त इति[१]। तृणादानमन्त्रस्याय मर्थः[२]— हे तृण! त्वम् 'उपावीरसि' समीपे स्थित्वा रक्षकोऽसि, एकः कार्यकरोऽसीत्यर्थः। "अवितॄस्तृ"-इति ई-प्रत्ययः[३]। 'दैवीः विशः' पशुलक्षणा देवसम्बन्धिन्यः प्रजाः 'देवान्' 'उपप्रागुः' प्राप्ताः देवतार्थ मुपस्थिता इत्यर्थः[४] (९)। "उशिजो वह्नितमानितीति। देवान् विशिनष्टि— 'उशिजः' मेधाविनामैतत्[५], विद्वांस इत्यर्थः। 'वह्नितमान्' वोढृतमान् (१०)। "देव त्वष्टरिति। 'त्वष्टः! देव!' पशुस्वामिन्! 'वसु' वस्वाख्यं धनं 'रम' रमय, नियोजयेत्यर्थः (११)॥

"हव्या ते स्वदन्ता मितीति। हे पशो! 'ते' 'हव्या' हवींषि 'स्वदन्ताम्'। "रेवती रमध्व मितीति[६]। 'रेवतीः' रेवत्यो गावः पशवः 'रमध्वं' सङ्क्रीडध्वम्। हे 'बृहस्पते!' बृहतः परिबृंहणकर्मणः स्वामिन्! त्वं 'वसूनि' पशुलक्षणानि 'धारय' अत्र स्थापय॥

---

१— का० श्रौ० सू० ६. ३. १९ क।

२— सोऽयं मन्त्रः— वा० सं० ६. ७. १।

३— शाक० उ० सू० ३. १५८।

४— 'पशु मुपस्पृशत्युप देवानिति'-इति का० श्रौ० सू० ६. ३. १९ ख। मन्त्रस्तु— वा० सं० ६. ७. २। ५— निघ० ३. १५. १९।

६— वा० सं० ६. ८. १। यद्यपि संहिताग्रन्थे पृथगेवैष मन्त्रः, परं मिह पूर्वमन्त्रशेषत्वेन स्वीकृत इति ध्येयम्।

मन्त्रं व्याचष्टे— “उप हि द्वितीयोऽवतीत्यादिना । ‘हि’-शब्दो लोकप्रसिद्धिद्योतनार्थः । लोक एकः कर्म कर्त्तुं मशक्तः, द्वितीयः तत्साहाय्यकरणेन त भवतीति प्रसिद्धम् । “दैवीर्विश इत्यस्य तात्पर्य माह— “दैव्यो वा एता विशो यत् पशव इति । यथा विशः स्वस्वामिनं पुष्णन्ति, एवं पशवो हविषा पुष्णन्तीति तेषां प्रजारूपत्वोपचारः । “अस्थिषत देवेभ्य इतीति । तेषा मर्यायात्मानं प्रकाशितवन्त इत्यर्थः । “प्रकाशनस्थेयाख्ययोश्च”-इत्यात्मनेंपदम्[1] । उशिक्शब्दार्थ माह— “विद्वांसो हि देवा इति । त्वष्टुः प्रार्थनाया कारण माह— “त्वष्टा वै पशूना मित्यादिना । ‘वै’-शब्दः “त्वष्टा वै पशूनां मिथुनानां रूपकृत्”-इत्यादि[2]-श्रुत्यन्तरप्रसिद्धिद्योतनार्थः । “देव त्वष्टुर्वसु”-‘इति’ मन्त्रभागो ‘यदाह’, ‘अतिष्ठमानान्’ पशून् प्रति ‘त्वष्टारं’ ‘देवाः’ ‘उपनिमद’ ‘इति’ यत् ‘अब्रुवन्’, ‘एतत्’ एव ‘आह’ इत्यर्थः । ‘उपनिमद’ अस्मत्समीपे नितरां मादयेति तस्यार्थः । अथवा ‘यत्’ अध्वर्युणा ‘देव त्वष्टुः’ इत्यभिधानम्, तत्; पुरा यद् देवैरुक्तलक्षणं त्वष्टृप्रार्थन मुक्तम्, तत्स्थानीय मित्यर्थः ॥ एवंविधेषु वाक्येषु सर्वत्रैवं व्याख्येयम् ॥

“हव्या ते स्वदन्ता मिति । अस्याभिप्राय माह— “यदा वा एत इति । यद्यप्युपाकरणकाले हविषा मनिष्पत्तेः स्वदनं नोपपद्यते, तथापि पलायन मकृत्वा यदावृता अभवन्, तदेव हविर्भविष्यतीत्यर्थः । अत एव मभिधान मुपपद्यते (१२) ॥

---

१— पा० सू० १. ३. २३ ।

२— उपरिष्टात् १२ का० १ प्र० ८ ब्रा० ७ क० । तै० सं० २. १. ८. ३ ।

“रेवन्तो हि पशव इत्यादि । ब्राह्मणं स्पष्टम्[1] ॥

‘ब्रह्मणैव’ ‘परस्तात्’ परे देशे ‘पर्यदधुः’ परितो अधारयन् । “अथातो नियोजनस्यैवेति । विधान मभिधीयत इति शेषः ॥ ९—१२ ॥ ६ [७. ३.] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे सप्तमाध्याये तृतीयं ब्राह्मणम् ॥

## ॥ इति तृतीयकाण्डे पञ्चमः प्रपाठकः[2] ॥

---

१— सर्वं ह्येतत् तै० सं० ६. ३. ६ द्रष्टव्यम् ।

२— “कण्डीसङ्ख्या १२७”–इति क ; “कण्डिकाः १२७”–इति ख ; “कण्डिकासङ्ख्या १२७”–इति ग, घ । तत्र १ ब्रा० २६ क०, २ ब्रा० २१ क०, ३ ब्रा० २७ क०, ४ ब्रा० ३२ क०, ५ ब्रा० ८ क०, ६ ब्रा० १३ क० ; सङ्कलनया १२७ इति सिद्धम् ॥

अथ

षष्ठप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

सप्तमाध्याये चतुर्थं ब्राह्मणम् ।

॥ हरिः ॐ ॥

पाशं कृत्वा प्रतिमुञ्चति* । ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामीति व्वरुण्या वा ऽएषा यद्रज्जुस्तदेन मेतदृतस्यैव पाशेन प्रतिमुञ्चति तथो हैन मेषा व्वरुण्या रज्जुर्न्न हिनस्ति ॥ १ ॥

धर्षा मानुष इति । न वा ऽएत मग्रे मनुष्यो ऽधृष्णोत्स यद्देवत्तस्य† पाशेनैतद्देवहविः प्रतिमुञ्चत्यथैनं मनुष्यो धृष्णोति तस्मादाह धर्षा मानुष इति‡ ॥ २ ॥

* 'प्रतिमुञ्चति'—इति क ।

† 'यद्देवत्तस्य'—इति क-पाठः, डा०-वेबरेण दृष्टस्व ।

‡ 'इति'—इति ख, 'इति'—इति ग, घ ।

अथ नियुनक्ति। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मग्नीषोमाभ्यां जुष्टं नियुनज्मीति* तद्यथैवादो देवतायै हविर्गृह्णन्नादिशत्येवमेवैतद्देवताभ्या मादिशत्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्य मेवैतत्करोति॥ ३॥

स प्रोक्षति। अद्भ्यस्त्वौषधीभ्य इति तद्यत एव सम्भवति तत एवैतन्मेध्यं करोतीदꣳ हि यदा वर्षत्यथौषधयो जायन्त ऽओषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति रसाद्रेतो रेतसः पशवस्तद्यत एव सम्भवति यतश्च जायते तत एवैतन्मेध्यं करोति॥ ४॥

अनु त्वा माता मन्यता मनु पितेति। स हि मातुश्चाधि पितुश्च जायते तद्यत एव जायते तत एवैतन्मेध्यं† करोत्यनु भ्राता सगर्भ्योऽनु सखा सयूथ्य इति स यत्ते जन्म तेन त्वानुमत मारभ ऽइत्येवैतदाहाग्नीषोमाभ्यां त्वा जुष्ट प्रोक्षामीति तद्याभ्यां देवताभ्या मारभते ताभ्यां मेध्यं करोति॥ ५॥

अथोपगृह्णाति। अपाम्पेरुरसीति। तदेन मन्तरतो

---

* 'नियुनज्मीति'—इति क, ख।

† 'तन्मेध्यं'—इति ग, घ।

मेध्यं करोत्यथाधस्तादुपोक्षत्यापो देवीः स्वदन्तु स्वात्तं चित्सद्देवहविरिति तदेनं सर्वतो मेध्यं करोति ॥ ६ ॥

अथाहाग्नये समिध्यमानायानुब्रूहीति। स उत्तर माघार माघार्य्यासंस्पर्शयन्स्रुचौ पर्य्येत्य* जुह्वा पशुं समनक्ति शिरो वै यज्ञस्योत्तर आघार एष वा ऽअत्र यज्ञो भवति यत् पशुस्तद्यज्ञ ऽएवैतच्छिरः प्रतिदधाति तस्माज्जुह्वा पशुं समनक्ति ॥ ७ ॥

स ललाटे समनक्ति। सन्ते प्राणो व्वातेन गच्छता मिति स मङ्गानि यजत्रैरित्युंसयोः सं यज्ञपतिराशिषेति श्रोण्योः स यस्मै कामाय पशु मालभन्ते तत् प्राप्नु-हीत्येवैतदाह ॥ ८ ॥

इदं वै पशोः सञ्ज्ञप्यमानस्य। प्राणो व्वात मपि†-पद्यते तत् प्राप्नुहि यत्ते प्राणो व्वात मपिपद्याता ऽइत्येवैतदाह स मङ्गानि यजत्रैरित्यङ्गैर्वा ऽअस्य यजन्ते तत् प्राप्नुहि यत्ते ऽङ्गैर्य्यजान्ता ऽइत्येवैतदाह सं यज्ञपति-राशिषेति यजमानाय वा ऽएतेनाशिष माशासते तत् प्राप्नुहि यत्त्वया यजमानायाशिष माशासान्ता ऽइत्येवैतदाह सादयति स्रुचावथ प्रवरायाश्रावयति सो-ऽसावेव बन्धुः ॥ ९ ॥

---

* 'पर्य्यैत्य'– इति ग, घ। † 'अभि'– इति स्यात् सा०-सं०।

अथ द्वितीय माश्रावयति। द्वौ ह्यत्र होतारौ भवतः स मैत्रावरुणायाहैवाश्रावयति यजमानं त्वेव प्रवृणीते ऽग्निर्हि देवीनां विशां पुर एतेत्यग्निर्हि देवतानां मुखं तस्मादाहाग्निर्हि देवीनां विशां पुर एतेत्ययं यजमानो मनुष्याणा मिति तः हि सोऽन्वर्द्धो भवति यस्मिन्नर्द्धे यजते तस्मादाहायं यजमानो मनुष्याणा मिति तयोरस्थूरि गार्हपत्यं दीदयच्छतः हिमा द्वायू* ऽइति तयोरनार्त्तानि गार्हपत्यानि शतं वर्षाणि सन्त्वित्येवैतदाह ॥ १० ॥

राधाःसीत्सम्पृञ्चानावसम्पृञ्चानौ तन्व इति। राधाःस्येव सम्पृञ्चाथां मापि† तनूरित्येवैतदाह तौ ह यत्तनूरपि सम्पृञ्चीयातां प्राग्निर्यजमानं दहेत्सयदग्नौ जुहोति तदेषोऽग्नये प्रयच्छत्यथ या मेवात्र्त्विजो यजमानायाशिष माशासते ता मस्मै सर्व्वा मग्निः समर्द्धयति तद्राधाःस्येव सम्पृञ्चाते नापि तनूस्तस्मादाह राधाःसीत्सम्पृञ्चानावसम्पृञ्चानौ तन्व इति॥ ११ ॥ १ ॥

॥ इति षष्ठप्रपाठके प्रथमं ब्राह्मणम् ॥

---

* 'हिमा व्वायू'—इति ख, 'हिमा द्वा यू'—इति ग।

† 'नापि'— इत्येव पाठः स्यात् सायण-सम्मतः।

समन्त्रकं बन्धन माह—"पाशं कृत्वा प्रतिमुञ्चतीति[1]। पाशाग्र-ग्रन्थ्या सुषिरं कृत्वा, तस्मिन्नितर मग्रं बहिः प्रसार्य, बहिर्गतं पाश माकृष्य, यथा शिरो न गलति, तथा कृत्वा बध्नीयात् ॥

"ऋतस्य त्वेति[2]। हे 'देवहविः!' पशो! त्वाम् 'ऋतस्य पाशेन' 'प्रतिमुञ्चामि'। 'मानुषः' अहं केवलं 'धर्षा' धर्षणधर्मा। "वरुणेत्यादि। बध्नामीति बन्धनकर्मणो वरुणाभिमानिकत्वात् तत्साधनभूताया वरुणसम्बन्धिरज्जोः तत्त्वम्, त मपि परिहाय मन्त्रेण बन्धे सति ऋतपाशेन बन्धो भवेत् ॥ १ ॥

"धर्षा मानुष इतीति। मन्त्रभागस्य तात्पर्य माह— "न वा एत मग्र इत्यादिना। यस्मात् पशुधर्षणसामर्थ्यं मनुष्यस्य देवकृत-पाशविमोकायत्तम्, अतो मन्त्रो "धर्षा मानुषः" 'इति' ब्रूते इत्यर्थः ॥ २ ॥

"अथ नियुनक्तीत्यादि। स्पष्टम्। देवतानिर्देशस्य प्रयोजन माह— "यथैवाद इति। 'यथैव' 'अदः' अमुष्मिन् दर्शपूर्णमासयागे हविर्निर्वापे देवतादर्शनम्, 'एवम्' इदानी मपि प्रोक्षतीति। "एको वा इत्यशक्तद् गतम् ॥ ३ ॥

"स प्रोक्षतीति[3]। "अद्भ्यस्त्वौषधीभ्य इतीति[4]। 'अद्भ्यः' च 'ओषधीभ्यः' च सम्भूतं त्वां 'प्रोक्षामि'। "मेध्यं करोतीति। सञ्ज्ञपनार्थं वाह्यमानं त्वां माताद्रिरनुमन्यताम्। 'सगर्भ्यः' समाने

---

१— का० श्रौ० सू० ६. ३. २७। २— वा० सं० ६. ८. २।
३— का० श्रौ० सू० ६. ३. ३१। ४— वा० सं० ६. ९. १।

उदरे भवः, 'अनुसखः' समानख्यानः, 'सयूथ्यः' समानयूथे भवः, सर्वैरनुमतं त्वाम् 'अग्नीषोमाभ्याम्' अर्थाय 'प्रोक्षामि' ॥

मन्त्रस्य परमप्रयोजन माह— "तद् यत एवेत्यादिना । कथं ताभ्यः सकाशात् पाशासम्भव इति, तदुपपादयति— "इदं हि स यदा वर्षतीत्यादिना । आपश्चौषधयश्चोपादानकारणम्, मातापितरावाश्रयत्वेन निमित्तकारणम् । अतस्तत्सकाशान्मेध्यं करोति । सगर्भ्यादीना मपि जन्मसम्बन्धसम्भवात् तेन सम्बन्धिना सगर्भ्यादिनानुमन्यत इत्युक्तं भवति । स्पष्ट मन्यत् ॥ ४, ५ ॥

"अथोपगृह्णातीति[1] । प्रोक्षणशेषं[2] पानार्थं मुखसमीपे धारयेत् । हे 'पशो !' त्वम् 'अपां' जलानां 'पेरुः' पानशीलोऽसि । 'तत्' तस्योदकस्यान्तः-प्रवेशात् 'एनं' पशुम् 'अन्तरतः मेध्यं करोति[3] ॥

"अथाधस्तादिति[4] । अधस्तादुपोक्षणमन्त्रस्याय मर्थः— हे 'आपो देवीः' आपो देव्यः ! 'स्वदन्तु' स्वादयन्तु । तथा स पशुः 'स्वात्तं' सुष्ठु स्वीकृतं भवतु । पशुर्विशेष्यते— 'देवहविः' देवतयोर्हविर्भूत मिति[5] ॥ ६ ॥

"अथाहाग्नये समिध्यमानायेति[6] । सामिधेन्यर्थं सम्प्रैषं कुर्यात् । "स उत्तर माघार माघारयेति[7] । द्वितीय मित्यर्थः । 'स्रुचौ'

---

१— का० श्रौ० सू० ६. ३. ३२ । २— 'प्रोक्षणीशेषं'—इति क ।
३— वा० सं० ६. १०. १ । ४— का श्रौ० सू० ६. ३. ३३ ।
५— वा० सं० ६. १०. २ । ६— का० श्रौ० सू० ६. ४. १ ।
७— का० श्रौ० सू० ६. ४. २ ।

जुह्वपभृतौ 'असंस्पर्शयन्', पुनरुत्तरतः 'पर्येत्य' 'जुह्वा' उत्तराघारावशिष्टेनाज्येन 'पशुम्' 'अनक्ति' आर्द्रीकरोति। तत् प्रशंसति— "शिरो वै यज्ञस्योत्तराघार इति। प्रधानत्वात् 'पशुः यज्ञः', तस्य प्रथमतोऽनुष्ठेयत्वात् शिरस्त्वम्। अत आघारशेषेणाञ्जनेन 'यज्ञे' 'शिरः' स्थापितवान् भवति ॥ ७ ॥

अवयवावयविभेदेन मन्त्रभेद माह— "स ललाटे समनक्ति[1] सन्ते प्राण इति[2]। बाह्यवातस्यैव शरीरान्तःप्रवेशेन प्राणत्वात् तस्य वातप्राप्तिर्युक्ता। 'अङ्गानि' 'यजत्रैः' यागैः 'सङ्गच्छन्ताम्'। तथा 'यज्ञपतिः' यजमानः 'आशिषा' 'सङ्गच्छताम्'। एतेन 'श्रोण्योः' अनक्ति। अथ कृत्स्नतात्पर्यं यज्ञविषया आशीरेवेत्याह— "स यस्मै कामायेति ॥ ८ ॥

मन्त्रान् क्रमेण व्याचष्टे— "इदं वै पशोरित्यादि। 'इदं' वक्ष्यमाणम्, लोकप्रसिद्ध मित्यर्थः। सामान्येनोक्तं विशेषेण योजयति— "तत् प्राप्नुहीति। यद्येतन्निमित्तेन प्राणो वात मभिपद्येत, तत् प्राप्नुहीत्येवैतदाहेत्यर्थः। गतप्राय मन्यत्। अत्र सूत्रम्— "आ प्रयाजेभ्य उत्तराघार माघार्य पशुं पूर्वं समनक्ति ललाटांसश्रोणिषु सन्त इति प्रतिमन्त्रम्"— इति[3] ॥

"सादयति स्रुचावथ प्रवरायाश्रावयतीति। जुह्वपभृतौ सादयित्वा

---

१— का० श्रौ० सू० ६. ४. २।

२— वा० सं० ६. १०. २, ३, ४।

३— का० श्रौ० सू० ६. ४. ३।

प्रवरायाश्रावयेत् । आश्रावणार्थवादं प्रकृतिगत मत्रादिशति—"सोऽसावेव बन्धुरिति ॥ ९ ॥

"अथ द्वितीय माश्रावयतीति[1] । मैत्रावरुणस्यापि होत्रकर्त्तृत्वाद् "द्वौ ह्यत्र होतारौ भवत इत्युक्तम् । द्वितीयाश्रावणं किमर्थ मित्याह— "स मैत्रावरुणायाहैवाश्रावयतीति । 'सः' अध्वर्युः । "यजमानं त्वेवेति । 'एव'-कारेणर्त्विजां प्रवरणं निषिध्यते ॥

यजमानप्रवरनिगदस्याय मर्थः— 'अग्निः' खलु 'दैवीनां विशां' देवसम्बन्धिनीनां प्रजानां 'पुर एता' मुख्य इत्यर्थः । तथा 'मनुष्याणां विशां' 'यजमानः' 'पुर एता' मुख्यः । सर्वेऽपि प्राणिनस्त मनुसृत्य भवन्तीत्यर्थः । 'तयोः' अग्नियजमानयोः 'गार्हपत्यं' गृहपतिकर्म 'अस्थूरि' अनाश्यम् । शतवर्षपर्यन्तं हि दीक्षानुयष्टव्यत्वेत अग्नेस्तत्त्वं यजमानस्य च गार्हपत्यसम्बन्धः । 'राधांसि इत्' अन्नान्येव 'सम्पृञ्चानौ' मिश्रयन्तौ । 'तन्वः' तनूः 'असम्पृचानौ' शरीरसम्पर्को यथा न स्यात् ॥

क्रमेण व्याचष्टे— "अग्निर्हेत्यादिना । "तं हि सोऽन्वर्द्धो भवति, यस्मिन्नर्द्धे यजत इति । 'यस्मिन्' 'अर्द्धे' राष्ट्रे अयं यजमानो 'यजते', 'सोऽन्वर्द्धः'; 'तं हि' त मनु । "हीने"-इत्यनोः कर्मप्रवचनीयत्वम्[2] । 'अस्थूरि'-शब्दार्थ माह— "अनार्त्तानि गार्हपत्यानीति । 'राधांसि'—इत्येतद् विभज्य व्याचष्टे— "राधांस्येवेत्यादिना । इच्छब्द एवार्थे[3] । तेन निरसनीय माह— "नापि तनू-

---

१— का० श्रौ० सू० ६. ४. ४ द्रष्टव्यम् ।

२— पा० सू० १. ४. ८६ । ३— मन्त्रे इति शेषः ।

रिति । विपक्षे बाधक माह— "तौ ह यत्तनूरपीति । ननु "सं राधांसि सम्पृचानौ"-इत्युक्तम्, सम्पर्कश्च परस्परप्रदानसव्यपेक्षः कथ मत्र सम्भवतीति, तदुपपादयति— "स यदाग्नौ जुहोतीति । यदग्नौ प्रदानम्, यश्च तदग्नौ सम्पर्कः, ऋत्विग्भिः यजमानार्थ माशास्यमानानां फलानां तुष्टेनाग्निना दान मस्ति, तदेवाग्नेर्यज-मानसम्पर्कः । 'तत्' तेन प्रतिपादितप्रकारेण तौ 'राधांसि सम्पृ-चाते' इति ॥ १०, ११ ॥ १ [ ७, ४. ] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे सप्तमाध्याये चतुर्थं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ७ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गनार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गनार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे सप्तमाध्यायः समाप्तः ॥ ७ ॥

---

[ अथाष्टमाध्याये प्रथमं ब्राह्मणम्. ]



तद्यचैतत् प्रवृतो होता होतृषदन ऽउपविशति ।* तदुपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादत्ते ॥ १ ॥

अथाप्रीभिश्चरन्ति । तद्यदाप्रीभिश्चरन्ति सर्व्वेणेव वा ऽएष मनसा सर्व्वेणेवात्मना यज्ञꣳ सम्भरति सञ्च जिहीर्षति यो दीक्षते तस्य रिरिचान इवात्मा भवति त मेताभिराप्रीभिराप्याययन्ति तद्यदाप्याययन्ति तस्मा- दाप्रियो नाम तस्मादाप्रीभिश्चरन्ति ॥ २ ॥

ते वा ऽएत ऽएकादश प्रयाजा भवन्ति । दश वा ऽइमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणाः प्रति- ष्ठिता एतावान्वै पुरुषस्तदस्य सर्व्वं मात्मान माप्याययन्ति तस्मादेकादश प्रयाजा भवन्ति ॥ ३ ॥

स आश्राव्याह । समिधः प्रेष्येति प्रेष्य प्रेष्येति चतुर्थे चतुर्थे प्रयाजे समानयमानो दशभिः प्रयाजैश्चरति दश प्रयाजानिष्ट्वाह शास माहरेत्यसिं वै शास इत्या- चक्षते ॥ ४ ॥

---

* नास्त्येतच्छेदचिह्नं मुद्रितपुस्तकादन्यत्र ।

अथ यूपशकल मादत्ते। तावग्रे जुह्वा अक्त्वा पशोर्ललाट मुपस्पृशति घृतेनाक्तौ पशूंस्त्रायेथा मिति व्वज्रो वै यूपशकलो व्वज्रः शासो व्वज्र आज्यं तु मेवैतत् कृत्स्नं व्वज्रꣳ सम्भृत्य तु मस्याभिगोप्तारं करोति नेदेनं नाष्ट्रा रुक्षाꣳसि हिनसन्निति पुनर्यूपशकल मवगूहत्येषा ते प्रज्ञाताश्रिरस्त्वित्याह शासं प्रयच्छन्त्सादयति स्रुचौ ॥ ५ ॥

अथाह पर्य्यग्नयेऽनुब्रूहीति*। उल्मुक मादायाग्नीत्पर्यग्निं करोति तद्यत्पर्य्यग्निं करोत्यच्छिद्र मेवैन मेतदग्निना परिगृह्णाति नेदेनं नाष्ट्रा रुक्षाꣳसि प्रमृशानित्यग्निर्हि रुक्षसा मपहन्ता तस्मात्पर्यग्निं करोति तद्यत्रैनꣳ श्रपयन्ति तदभिपरिहरति ॥ ६ ॥

तदाहुः। पुनरेतदुल्मुकꣳ हरेदथान्य मेवाग्निं निर्म्मथ्य तस्मिन्नेनꣳ श्रपयेयुराहवनीयो वा ऽएष न वा ऽएष तस्मै यदस्मिन्नशृतꣳ श्रपयेयुस्तस्मै वा ऽएष यदस्मिञ्छृतं जुहुयुरिति ॥ ७ ॥

तदु तथा न कुर्यात्। यथा वै ग्रसित मेव मस्यैतद्भवति यदेनेन पर्यग्निं करोति स यथा ग्रसित मनुहाया-

---

* 'ह्वीति'–इति ग, घ।

च्छिद्य तदन्यस्मै प्रयच्छेदेवं तत् तस्मादेतस्यैवोल्मुकस्याङ्गारान्निमृद्य तस्मिन्नेनं श्रपयेयुः ॥ ८ ॥

अथोल्मुक मादायाग्नीत् पुरस्तात् प्रतिपद्यते। अग्निमेवैतत् पुरस्तात् करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षांस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण पशुं नयन्ति तं वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते प्रतिप्रस्थातार मध्वर्युरध्वर्युं यजमानः ॥ ९ ॥

तदाहुः*। नैष यजमानेनान्वारभ्यो मृत्यवे ह्येतं नयन्ति तस्मान्नान्वारभेतेति तदन्वेवारभेत न वा ऽएतं मृत्यवे नयन्ति यं यज्ञाय नयन्ति तस्मादन्वेवारभेत यज्ञादु हैवात्मान मन्तरियाद्यन्नान्वारभेत तस्मादन्वेवारभेत तत्परोक्ष मन्वारब्धं भवति व्वपाश्रपणीभ्यां प्रतिप्रस्थाता प्रतिप्रस्थातार मध्वर्युरध्वर्युं यजमान एतदु परोक्ष मन्वारब्धं भवति ॥ १० ॥

अथ स्तीर्णायै व्वेदेः। द्वे तृणे ऽअध्वर्युरादत्ते स आश्राव्याहोपप्रेष्य होतर्हव्या देवेभ्य इत्येतदु व्वैश्वदेवं पशौ† ॥ ११ ॥

अथ व्वाचयति। रेवति यजमान इति व्वाग्वै रेवती

---

* 'ऊ'—इति ग, घ।  † 'भ्रौ'—इति ग, घ।

सा यद्वाग् बहु वदति तेन वाग्घेवती प्रियं धा आविशेत्युनार्त्ति माविशेत्येवैतदाहोरोरन्तरिक्षात् सजूर्देवेन वातेनेत्यन्तरिक्षं वा ऽअनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथायं पुरुषो ऽमूल उभयतः परिच्छिन्नोऽन्तरिक्ष मनुचरति तद्वातेनैनꣳ संविदानान्तरिक्षाद्गोपायेत्येवैतदाह यदाहोरोरन्तरिक्षात् सजूर्देवेन वातेनेति ॥ ११ ॥

अस्य हविषस्त्मना यजेति । वाच मेवैतदाहानार्त्तस्यास्य हविष आत्मना यजेति समस्य तन्वा भवेति वाच मेवैतदाहानार्त्तस्यास्य हविषस्तन्वा सम्भवेति ॥ १३ ॥

तद्यत्रैनं विशसन्ति । तत् पुरस्तात् तृण मुपास्यति वर्षो वर्षीयसि यज्ञे यज्ञपतिं धा इति बर्हिरेवास्मा ऽएतत् स्तृणात्यस्कन्नꣳ हविरसदिति तद्यदेवास्याच विशस्यमानस्य किञ्चित् स्कन्दति तदेतस्मिन् प्रतितिष्ठति तथा नामुया भवति ॥ १४ ॥

अथ पुनरेत्याहवनीय मभ्यावृत्यासते । नेदस्य सञ्ज्ञप्यमानस्याध्यक्षा असामेति तस्य न कूटेन प्रघ्नन्ति मानुषꣳ हि तन्नो ऽएव पश्चात्कर्णं पितृदेवत्यꣳ हि तदपिगृह्य वैव मुखं तमयन्ति वेष्कं वा कुर्वन्ति तन्ना-

ह जहि मारयेति मानुषꣳ हि तत्सञ्ज्ञपयान्वगन्निति तद्धि देवत्रा स यदाहान्वगन्नित्येतर्हि ह्येष देवाननु-गच्छति तस्मादाहान्वगन्निति ॥ १५ ॥

तद्यत्रैनं निविध्यन्ति। तत्पुरा सञ्ज्ञपनाज्जुहोति स्वाहा देवेभ्य इत्यथ यदा प्राह सञ्ज्ञप्तः पशुरित्यथ जुहोति देवेभ्यः स्वाहेति पुरस्तात् स्वाहाकृतयो वा ऽअन्ये देवा उपरिष्टात् स्वाहाकृतयोऽन्ये तानेवैतत् प्रीणाति त ऽएन मुभये देवाः प्रीताः स्वर्गं लोकꣳ* मभिवहन्ति ते वा ऽएते परिपशव्ये ऽइत्याहुती स यदि कामयेत जुहुयादेते यद्यु कामयेतापि नाद्रियेत ॥ १६ ॥ २ ॥

॥ इति षष्ठप्रपाठके द्वितीयं ब्राह्मणम् [ ८. १. ] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

होत्रादिप्रवरणानन्तरभाविनं प्रयोग माह— "तद्यत्रैतत्प्रवृतो होता होतृषदन उपविशतीत्यादिना[१]। होतृषदनं वेदेरुत्तरा

* 'स्वर्गंल्लोकꣳ'-इति, 'स्वर्गंल्लोकꣳ'-इति च पाठौ दृश्येते।

१— का० श्रौ० सू० ३. २. १। १भा० ३४५पृ० १पङ्क्तितश्च द्रष्टव्यम्।

श्रोणिः । 'तत्' तत्र 'उपविश्य' 'प्रश्नौति' "अग्निर्होता वेतु"—इत्यादि[1] स्रुगादापनम् । निगदेनानुजानाति— "घृतवती मध्वर्यो स्रुच मास्यस्व"—इत्येवं रूपेण[2] ॥ १ ॥

"अथाप्रीभिश्चरन्तीति । समित्तनूनपादित्याद्येकादश प्रयाजा आप्रियः[3] । नामनिर्वचनेनाप्रियं प्रशंसितुं तत्प्रवृत्तिनिमित्तस्याप्यायनस्य सम्भावना माह— "सर्वेणेव वा एष मनसा सर्वेणेवात्मना यज्ञं सम्भरतीत्यादिना । 'एषः' दीक्षितः 'सर्वेणेव मनसा' 'सर्वेणात्मना' मनोव्यतिरिक्तेन प्राणादिसङ्घातेन, सर्वेषां तत्रैवोपजीव्यत्वात् । अतः 'सञ्जिहीर्षति' संहर्त्तु मिच्छति । ततो 'रिरिचान इव' रिक्तः शून्य इव 'आत्मा भवति' । 'तस्मात्' आप्यायनसाधनत्वात् 'आप्रियः' इति तन्नामनिर्वचनम् ॥ २ ॥

आप्यायनसाधनत्व मेवोपजीव्यैकादशत्वं विधाय प्रशंसति— "ते वा एत एकादश प्रयाजा इति । सप्त शीर्षण्याः, द्वावपानौ, नाभिर्दशमी, तेषा माधारो देह एकादश इति विवेकः[4] ॥ ३ ॥

"स आश्राव्याहेत्यादि । समिद्याग एव 'समिधः प्रेष्य' 'इति' एवं ब्रूयात् । तनूनपात्प्रभृतीनां 'प्रेष्य-प्रेष्य' 'इति' एवं नाम निर्दिशेत् । "चतुर्थे-चतुर्थे प्रयाजे समानयमान इति । जुहूगतेन

---

१— का० श्रौ० सू० ३. २. १५ । १भा० ३५०पृ० १पङ्क्तिस्थ द्रष्टव्यम् ।

२— १का० १अ० २ब्रा० १कण्डिका मान्नात एवैष मन्त्रः ।

३— "अथात आप्रियः"-इत्यादिग्रन्थोऽत्रालोच्यः (निरु० ८. २. १-७.) ।

४— १भा० ३७१पृ० तृतीया टीप्पनी द्रष्टव्या ।

आज्येन प्रयाजत्रयं कृत्वा, पुनरुपभृति स्थित माज्य मथ चतुर्थादि-सप्तमान्तप्रयाजचतुष्टयाय समवनीय, पुनरष्टमाद्येकादशान्तप्रयाज-चतुष्टयार्थं मष्टम मवनयेदित्यर्थः। दशमप्रयाजानन्तरं 'शासम्' असिम् 'आहर' 'इति' ब्रूयात्। "शसु हिंसायाम्"[१]। शस्यते हिंस्यते अनेनेति 'शासः असिः'। शासशिद्धस्याप्रसिद्धस्य प्रसिद्धार्थता मभिप्रेत्य व्याचष्टे– "असिर्वै शास इतीति ॥ ४ ॥

"अथ यूपशकलाविति। यूपशकलौ जुह्वा अग्रगतेनाज्येन समज्य, ताभ्या मक्ताभ्यां 'पशोर्ललाट मुपस्पृशति'[२]। तन्मन्त्रस्याय मर्थः– हे घृतेनाक्तौ स्वरुस्वधिती! युवां 'पशून्' त्रायेथाम्[३]। अत्र सूत्रम्– "स्वरु मादायाक्तोभौ जुह्वग्रे ताभ्यां पशोर्ललाट मुपस्पृशति[४] घृतेनाक्ताविति[५]"-इति ॥

"वज्रो वा इत्यादि। यूपशकलादीनां वज्रत्वं प्रागुक्तम्[६]। "एषा ते"-इति ब्रुवन्, 'शासम्' उत्सृजतोऽस्य हविषोऽवदानाय 'प्रायच्छन्'। 'एषा' अष्टाश्रिः हे शमितः! 'ते प्रज्ञाता अस्तु'– 'इति आह' ॥ ५ ॥

"अथाह पर्यग्नयेऽनुब्रूहीति[७]। 'अथ' स्रुचोः सादनानन्तरम्, 'पर्यग्नयेऽनुब्रूहीति' उक्त्वा, 'पर्यग्नीकरोति' पशोः परितः अग्निं

---

१— धा० पं० ७२७ धा०।

२,४— का० श्रौ० सू० ६. ४. १२।

३,५— वा० सं० ६. ११. १।

६— पुरस्तात् ७. १. ३०, ३१ ( ४२५ पृ० ) द्रष्टव्यम्।

७— का० श्रौ० सू० ६. ५. १।

करोति, उल्मुकेनाग्नीध्रः। "अच्छिद्र मेवैन मित्याद्यर्थवादः स्पष्टार्थः। अत्र तन्त्रं सादयित्वा स्रुचोश्चात्वाल मुत्तरेण शमिता अपोल्लिखति, पर्यग्नये तु वाचयति, आहवनीयादुल्मुक मादाय अग्निं त्रिः समन्तं पर्येति, पश्चात् शामित्रदेशयूपचात्वालाहवनीयान्यपशुशामित्रो वेति। "तद् यत्रैनं श्रपयन्ति, तदभिपरिहरतीति। 'यत्र' शामित्रोत्तरभागे 'एनं' पशुं 'श्रपयन्ति', 'तत्' स्थानम्[१] 'अभि' लक्ष्य 'एनम्' उल्मुकं पाकार्थ माहरेत् ॥ ६ ॥

उल्मुकहरणविषये केषाञ्चित् पक्षम्, तद्युक्तिञ्चोपन्यस्य निराकृत्य स्वपक्षं स्थापयति— "तदाहुः पुनरेतदुल्मुकं हरेदथान्य मेवाग्निं निर्मन्थ्य तस्मिन्नेनं श्रपयेयुरित्यादिना। 'पुनः' पर्यग्निकरणानन्तरम् 'एतत् उल्मुकम्' 'हरेत्' आहवनीये स्थापयेत्। "आहवनीयो वा एष इति। यतोऽय माहवनीयः, अतः हुतहोमार्थ एषः, शृतश्रपणाय नार्हतीति तेषा मभिप्रायः ॥ ७ ॥

"तदु तथा न कुर्यादिति। पर्यग्निकरणादेवायं पशुस्तेनाग्निना ग्रसितोऽभूत्; अतो मुखस्थं हविः पुनराकृष्य पुनर्मन्थनाग्नौ श्रपणादन्यस्मै प्रदानं कृतं भवति। तस्मात् तेषां पक्षो न युक्त इत्यर्थः ॥ ८ ॥

अथाग्नीध्रप्रतिप्रस्थात्रध्वर्युयजमानानां[२] शामित्रं प्रति गमन माह— "अथोल्मुक मादायाग्नीदित्यादिना[३]। उल्मुकस्य पुरो-

---

१— 'तत्स्थानम्'- इति क्व। २— 'अथ तेषां'- इत्येव क्व।
३— का० श्रौ० सू० ६. ५. ७, ८, ९।

गमनप्रयोजन माह— "अग्नि मेवैतदिति। ततश्च किं मित्याह— "अग्निः पुरस्तादिति । अग्न्यनुगमनं न युक्त मिति ॥ ९ ॥

"तदाहुरिति । तेषा मभिप्राय मन्यथयति— "न वा एत मिति । केवलहननार्थं नयनं चेत् 'मृत्यवे नयति' । यज्ञार्थं नयनं पशोः स्वर्गप्राप्त्यर्थत्वात् न मृत्यवे नयन मिति स्वपक्षे शङ्कितं बाधं परिहृत्य विपक्षे बाध माह— "यज्ञाद् हैवात्मान मिति । तस्मिन् समये प्रतिप्रस्थाता वपाश्रपणीभ्यां कार्श्मर्यमयीभ्यां[1] पशुम् अन्वारभते, त मनु अध्वर्युश्च; अतस्ताभ्यां व्यवधानात् म्रियमाणस्य पशोः न साक्षादन्वारम्भो भवति । अतोऽपि नोक्त इत्यर्थः॥ १० ॥

"अथ स्तीर्णायै वेदेर्द्वे तृणे अध्वर्युरादत्त इति[2] । अन्वारम्भ-समये वेद्यास्तीर्णे बर्हिषि, तृणद्वय मादाय अन्वारभते । 'सः' तृणगृहीता अध्वर्युः आश्रावण मुक्त्वा, प्रपद्य, "होतर्हव्या देवेभ्यः"— 'इति' आह । होतुर्हव्यान्युद्दिश्य, देवेभ्य उपप्रेष्य, मैत्रावरुणप्रैषादनन्तर मध्रिगुप्रैषं पठतीति तस्यार्थः। अत्र 'देवेभ्यः'— इत्यभिधानात् पशोर्वैश्वदेवत्वापादनम् ॥ ११ ॥

"अथ वाचयतीति[3] । "रेवतीति[4] । हे 'रेवति' रयिमति धनवति वा देवते 'यजमाने' 'प्रियम्' अभिमतम् अनार्त्ति-लक्षणं 'धाः' धेहि । दधातेर्लुङि सिचो लुकि रूपम् । यद्वा दधातेः क्विप् । धारयित्री त्वम् आविशदिन्द्रिय मिति सम्बन्धः,

---

१— नैतत् पदं ङ-पुस्तके । २— का० श्रौ० सू० ६. ५. १० ।
३— का० श्रौ० सू० ६. ५. ११ । ४— वा० सं० ६. ११. २ ।

अनार्त्तिं कुर्वित्यर्थः। यद्वा अनार्त्तस्यास्य हविषः आत्मना यजेति वक्ष्यमाणत्वात्[1] 'प्रियम्' अनार्त्तिं कर्त्तुं पशूनाविशेत्यर्थः। हे वाग्देवि! 'उरोः अन्तरिक्षात्' विस्तीर्णादन्तरिक्षात् 'वातेन' 'सजूः' समानप्रीतिः सती यजमानम् अन्तरिक्षाद्, 'गोपाय'— इति शेषः। किञ्च 'अस्य हविषः' यज्ञपशुलक्षणस्य हविषः 'त्मना' आत्मना, स्वरूपेण 'यज'। 'अस्य' पशोः' 'तन्वा सम्भव' शरीरेण सम्भव। हे रेवति! यजमानपशौ च सम्भूय यागं साधयेत्यर्थः। अत्रत्यरेवतीशब्दस्य वाग्वाचकत्व मुपपादयति— "सा यद् वाग् बहु वदति, तेन वाग् रेवतीति। तदपेक्षितं दानादिधनार्जनं लोकप्रसिद्धम्। प्रियशब्दार्थ माह— "अनार्त्ति माविशेति। न विद्यते आर्त्तिर्यस्मिन्नित्यनार्त्तिः, प्रियः पदार्थः। उरोरन्तरिक्षादित्यभिधानस्य प्रयोजन माह—"अन्तरिक्षं वा अनु रक्षश्चरतीत्यादिना। 'अमूलं' मूलसम्बन्धरहितम्। न केवल ममूल मेव, किन्तु 'उभयतः' उपरि अधस्ताच्च 'परिच्छिन्नम्' संश्लेषरहितं सद्रक्षश्चरति। तत्र दृष्टान्तः— "यथायं पुरुष इति। 'तत्' तेन, अन्तरिक्षे रक्षःसञ्चारकारणेनैतस्माद् वातादान्तरिक्ष्याद् गोपायतीत्याह मन्त्रः। "अस्य हविषस्त्मना यज"—इत्यस्याभिप्राय माह— "वाचा मेवैतदाहेति। एतत्त्रय मेव विशदयति— "अनार्त्तस्यास्येति। एतद्धवीरूपः सन् देवान् प्रीणातीत्यर्थः। एव मुत्तरवाक्य मपि व्याख्येयम् ॥ १२, १३ ॥

---

१— इहैवोत्तरस्यां कण्डिकायां द्रष्टव्यम्।

"तद्यत्रैनं विशसन्तीति[1] । "वर्षीयसीति[2] । विशसनप्रदेशेऽध्वर्युः तृण मपास्यति— हे तृण ! 'वर्षः' वर्षीयः प्रवृद्धं त्वं 'वर्षीयसि' प्रवृद्धे 'यज्ञपतिं' 'धाः' स्थापय । एतद्बर्हिस्तरणेन स्थापनीय मिति स्तौति— "बर्हिरेवास्मा एतदित्यादिना । 'अस्मै' पशवे । तदपि किमर्थ मित्यत आह— "अस्कन्नं हविरसदिति । तद् विशद-यति— "तद् यदेवेति । 'तत्' अन्यत्र पतित मपि 'एतस्मिन्' केवलबर्हिषि 'प्रतितिष्ठति' । "तथा नामुया भवतीति । 'तथा' कृते सति अन्यत्र पतित मङ्गम् 'अमुया' अमुत्र, अन्तरिक्षेऽनभिमतप्रदेशे 'न भवति' न विनश्यतीत्यर्थः ॥ १४ ॥

"अथ पुनरेत्याहवनीय मिति । पुनराहवनीय मभ्यावर्त्तन-स्याभिप्राय माह— "नेदस्येति । 'अध्यक्षाः' न भवामेति, सन्नि-हिताः सन्तो वारयितारो न भवामेति । "न कूटेनेति । 'कूटेन' शृङ्गेण साधनेन, शृङ्गं गृहीत्वा, न हन्यात् । नैव कर्णस्य पश्चाद्भाग मग्रभागं वा गृहीत्वा । तर्हि कथम्? 'मुख मपि गृह्य' ग्लानं कुर्यात् । 'वेष्कं' मुखवेष्टनं च शब्दाभावाय कुर्यात्[3] ॥

सञ्ज्ञपनप्रकारः सूत्रे दर्शितः— "तस्मिन्नेनं निघ्नन्ति प्रत्यक्-शिरस मुदक्पादं, प्राक्शिरसं वा, सङ्गृह्य मुखं तमयन्त्यवाश्य-मानम्, वेष्केण वा, एत्याहवनीय मावृत्यासते, सञ्ज्ञपयान्वगन्नित्येवं

---

१— का० श्री० सू० ६. ५. १५ । २— वा० सं० ६. ११. ३ ।

३— "वेष्को गलावेष्टकः, गलं वावेष्ट्य तमयन्ति सञ्ज्ञपयन्ति मारयन्ति" –इति का० श्रौ सू० ६. ५. १५ सू० या० दे० ।

ब्रूयात्"-इति[१]। 'जहि', 'मारय' इत्यादि मानुषबधवत् क्रूरवचनं न ब्रूयात्, किन्तु हे शमितः ! 'सञ्ज्ञपय', असौ तु[२] 'अन्वगन्' अनुगतोऽभूत्। "तद्धीत्यादि स्पष्टम् ॥ १५ ॥

"तद्यत्रैनं निविद्धन्तीति। 'सञ्ज्ञपनात्' प्राक् "स्वाहा देवेभ्यः" 'इति' जुहुयात्। सञ्ज्ञपनानन्तरं "देवेभ्यः स्वाहा" 'इति' जुहुयात्[३]। होमभेदेन स्वाहाकारप्रयोगवैपरीत्यम्। प्रयोजनाभिधानेन प्रशंसति— "पुरस्तात् स्वाहाकृतयो वा अन्ये देवा इत्यादिना। एतयोराहुत्योर्नाम करोति— "ते वा एते परिपशव्ये इत्याहुती इति[४]। उक्ते द्वे आहुती 'परिपशव्ये' परित आज्यं तयोः पशो-र्हितं यतः, अतः 'परिपशव्ये' इति नामधेये इत्यर्थः। "उग-वादिभ्यो यत्"-इति[५] यत्, "ओर्गुणे"-इति[६] भ-सञ्ज्ञकस्य गुणः।

---

१— का० श्रौ० सू० ६. ५. १६—२१। "श्वासरोधो यथा स्यात् तथा दृढं मुखस्य ग्रहणं कृत्वा अवाश्यमानं यथा मार्यमाणः शब्दं न करोति तथा तमयन्ति। तमु आकाङ्क्षायाम्। पशुर्हि निरुद्धप्राणः सन् श्वास माकाङ्क्षति ताम्यति। ताम्यन्तं प्रयुङ्क्ते तमयन्ति। तथा कुर्वन्ति यथा स ताम्यति। श्वासरोधं कृत्वा मारयन्तीति तात्पर्यार्थः" —इति तत्र या० दे०।

२— नैतत् पदद्वयं क-पुस्तकादन्यत्र।

३— का० श्रौ० सू० ६. ५. २३, २४।

४— का० श्रौ० सू० ६. ५. २५।

५— पा० सू० ५. १. २।

६— पा० सू० ६. ४. १४६।

एतयोरनुष्ठाने ऐच्छिकत्व माह— "स यदि कामयेतेति ॥ १६ ॥ २ [ ८. १. ] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डेऽष्टमाध्याये प्रथमं ब्राह्मणम् ॥

---

[ अथ द्वितीयं ब्राह्मणम्. ]

यदा प्राह सञ्ज्ञप्तः पशुरिति*। अथाध्वर्युराह नेष्टः पत्नी मुदानयेत्युदानयति नेष्टा पत्नीं पान्नेजनं बिभ्रतीम् ॥ १ ॥

तां व्वाचयति। नमस्त ऽआतानेति यज्ञो वा ऽआतानो यज्ञꣳ हि तन्वते तेन यज्ञ आतानो जघनार्द्धो वा ऽएष यज्ञस्य यत्पत्नी ता मेतत्प्राचीं यज्ञं प्रसादयिष्यन् भवति तस्मा ऽएवैतद्यज्ञाय निह्नुते तथो हैना मेष यज्ञो न हिनस्ति तस्मादाह नमस्त ऽआतानेति ॥ २ ॥

अनर्व्वा प्रेहीति। असपत्नेन प्रेहीत्येवैतदाह घृतस्य कुल्या ऽउपऽऋतस्य पथ्या ऽअन्विति साधूपेत्येवैतदाह

* 'रि़ति'–इति ग, घ।

देवीरापः शुद्धा व्वोढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा व्वयं परिव्वेष्टारो भूयास्मेत्यप एवैतत्पावयति ॥ ३ ॥

अथ पशोः प्राणानद्भिः पत्न्युपस्पृशति । तद्यदद्भिः प्राणानुपस्पृशति जीवं वै देवानाꣳ हविरमृत ममृताना मथैतत् पशुं घ्नन्ति यत् सञ्ज्ञपयन्ति यद्विशासत्यापो वै प्राणास्तदस्मिन्नेतान् प्राणान् दधाति तथैतज्जीव मेव देवानाꣳ हविर्भवत्यमृत ममृतानाम् ॥ ४ ॥

अथ यत्पत्न्युपस्पृशति । योषा वै पत्नी योषायै वा ऽइमाः प्रजाः प्रजायन्ते तदेन मेतस्यै योषायै प्रजनयति तस्मात् पत्न्युपस्पृशति ॥ ५ ॥

सोपस्पृशति । व्वाचं ते शुन्धामीति मुखं प्राणं ते शुन्धामीति नासिके चक्षुस्ते शुन्धामीत्यक्ष्यौ श्रोत्रं ते शुन्धामीति कर्णौ नाभिं ते शुन्धामीति योऽय मनिरुक्तः प्राणो मेढ्रं ते शुन्धामीति वा पायुं ते शुन्धामीति योऽयं पश्चात् प्राणस्तत् प्राणान् दधाति तत्समीरयत्यथ सꣳहृत्य* पदश्चरित्रांस्ते शुन्धामीति पद्भिर्वै प्रतितिष्ठति प्रतिष्ठित्या ऽएव तदेनं प्रतिष्ठापयति ॥ ६ ॥

अथ या आपः परिशिष्यन्ते । अर्द्धा वा यावत्यो वा

---

* 'सꣳहृत्य'—इति च पाठो डा०-वेबरेण दृष्टः ।

ताभिरेनं यजमानश्च शीर्षतोऽग्रेऽनुषिञ्चतस्तन्प्राणां-श्चैवास्मिंस्तत्तौ धत्तस्तच्चैन मतः समीरयतः ॥ ७ ॥

तद्युत् क्रूरीकुर्वन्ति। यदास्थापयन्ति शान्तिराप-स्तदद्भिः शान्त्या शमयतस्तदद्भिः सन्धत्तः ॥ ८ ॥

तावनुषिञ्चतः। मनस्त ऽआप्यायतां वाक्त ऽआप्या-यतां प्राणस्त ऽआप्यायतां चक्षुस्त ऽआप्यायताᳬ श्रोत्रं त ऽआप्यायता मिति तत्प्राणान् धत्तस्तत्समीरयतो यत्ते क्रूरं यदास्थितं तत्त ऽआप्यायतां निष्ट्यायता* मिति ॥ ९ ॥

तद्युत् क्रूरीकुर्व्वन्ति। यदास्थापयन्ति शान्तिराप-स्तदद्भिः शान्त्या शमयतस्तदद्भिः सन्धत्तस्तत्ते शुध्यत्विति तन्मेध्यं कुरुतः श मुहोभ्य इति जघनेन पशुं निन-यतः ॥ १० ॥

तद्युत् क्रूरीकुर्व्वन्ति। यदास्थापयन्ति नेदेतदन्वशा-न्तान्यहोराचाण्य†सन्निति तस्माच्छ मुहोभ्य इति जघ-नेन पशुं निनयतः‡ ॥ ११ ॥

अथोत्तानं पशुं पर्य्यस्यन्ति। स तृण मन्तर्द्दधात्योषधे

* 'निष्ट्यायता'—इति ख।

† 'ञ्याण्य'—इति ख, 'चाण्यु'—इति ग, घ; 'चाण्यै'—इति च दृष्टो वेबरेण।

‡ 'निनयतुः'—इति ख।

त्रायस्वेति वज्रो वा ऽअसिस्तथो हैन मेष वज्रोऽसिर्न हिनस्त्यथासिनाभिनिदधाति स्वधिते मैनꣳ हिꣳसी-रिति वज्रो वा ऽअसिस्तथो हैन मेष वज्रोऽसिर्न हिनस्ति ॥ १२ ॥

सा या प्रज्ञाताश्रिः। तयाभिनिदधाति सा हि यजुष्कृता मेध्या तद्यदग्रं तृणस्य तत्सव्ये पाणौ कुरुतेऽथ यद् बुध्नं तद्दक्षिणेनादत्ते ॥ १३ ॥

स यत्राच्छ्यति। यत एतल्लोहित मुत्पतति तदुभय-तोऽनक्ति रक्षसां भागोऽसीति रक्षसाꣳ ह्येष भागो यद-सृक् ॥ १४ ॥

तदुपास्याभितिष्ठति। इद महꣳ रक्षोऽभितिष्ठामीद महꣳ रक्षोऽवबाध ऽइद महꣳ रक्षोऽधमन्तमो नयामीति तद्यज्ञेनैवैतन्नाष्ट्रा रक्षाꣳस्यवबाधते तद्यदमूल मुभ-यतः परिच्छिन्नं भवत्यमूलं वा ऽइद मुभयतः परि-च्छिन्नꣳ रक्षोऽन्तरिक्ष मनुचरति यथायं पुरुषो ऽमूल उभयतः परिच्छिन्नोऽन्तरिक्ष मनुचरति तस्मादमूल मुभयतः परिच्छिन्नं भवति ॥ १५ ॥

अथ वपा मुत्खिदन्ति। तया वपाश्रपण्यौ प्रोर्णौति घृतेन द्यावापृथिवी प्रोर्णुवाथा मिति तदिमे द्यावापृथिवी ऽऊर्ज्जा रसेन भाजयत्यनयोरूर्जꣳ रसं

दधाति ते रसवत्या ऽउपजीवनीये ऽइमाः प्रजा उपजीवन्ति ॥ १६ ॥

कार्ष्मर्य्यमय्यौ वपाश्रपण्यौ भवतः। यत्र वै देवा अग्रे पशु मालेभिरे तदुदीचः कृष्यमाणस्यावाङ्मेधः पपात स एष वनस्पतिरजायत तद्यत् कृष्यमाणस्या-वाङपतत्तस्मात् कार्ष्मर्य्यस्तेनैवैन मेतन्मेधेन समर्द्ध-यति कृत्स्नं करोति तस्मात् कार्ष्मर्य्यमय्यौ वपाश्रपण्यौ भवतः ॥ १७ ॥

तां परिवासयति। तां पशुश्रपणे प्रतपति तथो ह्यस्याश्चापि शृता भवति पुनरुल्मुक मग्नीदादत्ते ते जघ-नेन चात्वालं यन्ति त ऽआयन्त्यागच्छन्त्याहवनीयꣳ स एतत्तृण मध्वर्युराहवनीये प्रास्यति वायो वे* स्तोकाना मिति स्तोकानाꣳ हैषा समित्[†] ॥ १८ ॥

अथोत्तरतस्तिष्ठन्वपां प्रतपति। अत्येष्यन्वा ऽएषोऽग्निं भवति दक्षिणतः परीत्य अपयिष्यंस्तस्मा ऽएवैतन्निह्नुते तथो हैन मेषोऽतियन्त मग्निर्न हिनस्ति तस्मादुत्त-रतस्तिष्ठन्वपां प्रतपति ॥ १९ ॥

ता मन्तरेण यूपञ्चाग्निं च हरन्ति। तद्यत्समया न हरन्ति येनान्यानि हवींꣳषि हरन्ति नेदशृतया सम-

---

* 'वै'—इति ख।　　† 'समित्'—इति ग, घ।

या यज्ञं प्रसृजामेति यद्‌ बाह्येन न हरन्त्यग्रेण यूपं बहिर्द्धा ह* यज्ञात् कुर्युस्तस्मादन्तरेण यूपं चाग्निं च हरन्ति दक्षिणतः परीत्य प्रतिप्रस्थाता श्रपयति ॥ २० ॥

अथ स्रुवेणोपहत्याज्यम्। अध्वर्युर्व्वपा मभिजुहोत्यग्निराज्यस्य व्वेतु स्वाहेति तथो हास्यैते स्तोकाः शृताः स्वाहाकृता आहुतयो भूत्वाग्निं प्राप्नुवन्ति ॥ २१ ॥

अथाह स्तोकेभ्योऽनुब्रूहीति। स आग्नेयी स्तोकेभ्योऽन्वाह तद्यदाग्नेयी स्तोकेभ्योऽन्वाहेतःप्रदाना वै व्वृष्टिरितो ह्यग्निर्व्वृष्टिं व्वनुते स एतै स्तोकैरेतन्स्तोकान् वनुते त ऽएते स्तोका व्वर्षन्ति तस्मादाग्नेयी स्तोकेभ्योऽन्वाह यदा शृता भवति† ॥ २२ ॥

अथाह प्रतिप्रस्थाता शृता प्रचरेति। स्रुचावादायाध्वर्युरतिक्रम्याश्राव्याह स्वाहाकृतिभ्यः प्रेष्येति व्वषट्कृते जुहोति ॥ २३ ॥

हुत्वा व्वपा मेवाग्रेऽभिघारयति। अथ पृषदाज्यं तद्‌ ह चरकाध्वर्यवः पृषदाज्य मेवाग्रेऽभिघारयन्ति प्राणः पृषदाज्य मिति व्वदन्तस्तद्‌ ह याज्ञवल्क्यं चरकाध्वर्युरनुव्याजहारैवं कुर्व्वन्तं प्राणं वा ऽअय मन्तरगादध्वर्युः प्राण एनᳩ हास्यतीति ॥ २४ ॥

---

* नास्त्येतत् पदं ग-घ-पुस्तकयोः। † ‘भुवति’—इति ख।

स ह स्म बाहू ऽअन्ववेक्ष्याह । इमौ पलितौ बाहू क्व स्विद् ब्राह्मणस्य व्वचो बभूवेति न तदाद्रियेतोत्तमो वा ऽएष प्रयाजो भवतीदं वै हविर्यज्ञ उत्तमे प्रयाजे ध्रुवा मेवाग्रेऽभिघारयति तस्यै हि प्रथमावाज्यभागौ होष्यन् भवति व्वपां वा ऽअत्र प्रथमाᳪं होष्यन् भवति तस्माद्वपा मेवाग्रेऽभिघारयेदथ पृषदाज्य मथ यत्पशुं नाभिघारयति नेदश्रृत मभिघारयाणीत्येतदेवास्य सर्व्वः पशुरभिघारितो भवति यद्वपा मभिघारयति तस्माद्वपा मेवाग्रेऽभिघारयेदथ पृषदाज्यम् ॥ २५ ॥

अथाज्य मुपस्तृणीते । अथ हिरण्यशकल मवदधात्यथ व्वपा मवद्यन्नाहाग्नीषोमाभ्यां छागस्य व्वपायै मेदसोऽनुब्रूहीत्यथ हिरण्यशकल मवदधात्यथोपरिष्टाद् विराज्यस्याभिघारयति ॥ २६ ॥

तद्यद्धिरण्यशकलावभितो भवतः । घ्नन्ति वा ऽएतत्पशुं यदग्नौ जुह्वत्यमृत मायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति तथात उदेति तथा सञ्जीवति तस्माद्धिरण्यशकलावभितो भवत आश्राव्याहाग्नीषोमाभ्यां छागस्य व्वपां मेदः प्रेष्येति न प्रस्थित मित्याह प्रसुते प्रस्थित मिति व्वषट्कृते जुहोति ॥ २७ ॥

हुत्वा व्वपाᳪं समीच्यौ । व्वपाश्रपण्यौ कृत्वानुप्रास्यति

स्वाहाकृते ऽऊर्द्ध्वनभसम्मारुतं गच्छत मिति नेदिमे ऽअमुया सतो याभ्यां वपा मश्निश्रपामेति ॥ २८ ॥

तद्युद्वपया चरन्ति। यस्यै वै देवतायै पशु मालभन्ते ता मेवैतद्देवता मेतेन मेधेन प्रीणाति सैषा देवतैतेन मेधेन प्रीता शान्तोत्तराणि हवीꣳषि श्रप्यमाणान्युपरमति तस्माद् वपया चरन्ति* ॥ २९ ॥

अथ चात्वाले मार्ज्जयन्ते। क्रूरी वा ऽएतत् कुर्वन्ति यत् सञ्ज्ञपयन्ति यद्विशासति शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः सन्दधते तस्माच्चात्वाले मार्ज्जयन्ते ॥ ३० ॥ ३ ॥

॥ इति षष्ठप्रपाठके तृतीयं ब्राह्मणम् [ ८. २. ]

सञ्ज्ञपनानन्तरप्रयोग माह— "यदा प्राह सञ्ज्ञप्तः पशुरित्यध्वर्युराहेत्यादिना ॥ १ ॥

"तां वाचयतीति[१]। 'तां' पशुं प्रति आगच्छन्तीं पत्नीं 'वाचयति' "नमस्त आतान"–'इति'[२]। आ समन्तात् तन्यत इत्यातानो 'यज्ञः'। हे 'आतानः' 'ते' तुभ्यं 'नमः'। यज्ञ! त्वम् 'अनर्वा' असपत्नः सन् प्रेहि। 'घृतस्य कुल्याः'; जुह्वादिषु बह्वाज्यसम्भवात्।

---

* 'चरन्ति'–इति ख।

१— का० श्रौ० सू० ६. ६. १। २— वा० सं० ६. १२. १, १३।

ता विशिनष्टि— 'ऋतस्य पथ्याः' इति । पथिभवाः पथ्याः । ताः कुल्याः 'अनु'(लक्ष्य) 'उप' प्रेहीति सम्बन्धः । इत्थं यज्ञं प्रसाध्य, अथापः प्रसाधयति— 'सुपरिविष्टाः' पात्रेषु परिपूरिताः 'देवीः' द्योतमानाः 'आपः' 'शुद्धाः' स्वभावतः संस्कारेण च विशुद्धाः सत्यो यूयं 'देवेषु' विषयभूतेषु पशुम् 'वोड्ढम्' अपहत । 'वयं' च 'देवेषु' मध्ये 'सुपरिविष्टाः', देवानां 'परिवेष्टारः' ॥

नमस्कारवचनं यज्ञातिक्रमपरिहारत्वेन प्रशंसति— "जघनार्द्ध इति । यज्ञस्य जघनार्द्धे पत्नीशालाया मवस्थिता पत्यपि जघनार्द्ध इत्युच्यते । तां प्राङ् नयति, तस्मिन् यज्ञायतने जघननिह्नवन-कृता भवति । घृतकुल्याद्युपन्यास आगमनानुकूल्यप्रदर्शनायेति व्याचष्टे— "साधूपेत्येवैतदाहेति । उपेत्युपसर्गसामर्थ्यात् एतीति क्रिया सम्बध्यते । देवीराप इत्यादिमन्त्रभागस्य[1] तात्पर्य माह— "अप एवैतत् पावयतीति । अत्र 'शुद्धा वोड्ढम्'—इति शुद्धि-विधानात् शुद्धीकरणम् ॥ २, २ ॥

"अथ पशोरित्यादि[2] । प्राणमुखनासाचक्षुरादीनि अद्भिः पत्नी 'उपस्पृशति' प्रक्षालयेदित्यर्थः । अपा मुपस्पर्शनं पशोः सजीवत्व-करणात्मना प्रशंसति— "जीवो वै देवाना मित्यादिना । पदद्वयं व्याचष्टे— "अमृत ममृताना मिति । देवाः अमृताः अमृतधर्माणः, जीवन मप्यमृतं मृतिरहितम् ; अतो योग्यत्वात् देवानां जीवनं युज्यते । सञ्ज्ञपनविशसने उभे अपि हननात्मके, अतो हेतोरस्य

१— वा० सं० ६. १३, १ द्रष्टव्यम् ।

२— का० श्रौ० सू० ६. ६. २,३ ।

पुनः-प्राणापेक्षत्वात्, अपां च "आपोमयः प्राणः"-इति श्रुतेः प्राणरूपत्वात्, छिद्रेष्वपां प्रक्षेप एव प्राणनिधारण मित्यर्थः। ततश्च देवानां सजीवं हविर्दत्तं भवति ॥ ४ ॥

अपा मुपस्पर्शनं प्रशस्य, पत्नीकर्त्तृकत्वं प्रशंसति— "अथ यत् पत्न्युपस्पृशतीति। "योषा वा इत्यादिना ॥ ५ ॥

अवयवावयविभेदेनोपस्पर्शनमन्त्रभाग माह— "सोपस्पृशतीति। "वाचं ते शुन्धामीति[१] मुख मिति। 'मुखं' वदनम्। हे पशो! 'ते' 'प्राणं' प्राणनम्, नासिकाभ्या मुत्पद्यमानं प्राणवायुम् 'शुन्धामि' विशुद्धं करोमि। एव मुत्तरत्रापि योज्यम्। चक्षुःश्रोत्रे दर्शनश्रवणशक्तीन्द्रिये। "नाभिं ते शुन्धामि"—इति 'अनिरुक्तम्' अनभिव्यक्तप्राणम्; अथवा कि मनिरुक्तेन प्राणेन? "मेढ्रं ते" —इति ब्रूयात्। 'पश्चात्प्राणः' अधस्ताद् वर्त्तमानोऽपानः, तं तत्र पायौ स्थापितवान् भवति। 'अथ संहृत्य पदः' पादानेकीकृत्य "चरित्रांस्ते शुन्धामि"— 'इति' पादानपि शोधयेत्। पादशोधनं शंसति— "पद्भिर्वा इति ॥ ६ ॥

"अथ या आपः परिशिष्यन्त इति[२]। परिशिष्टाभिः अद्भिरभि-रल्पीयसीभिर्वा यजमानः पत्नी च पशोः शीर्षाग्रं प्रथमं तदा-रभ्य निषिञ्चतः। 'तौ' पत्नीयजमानौ 'तत्' तेन निषिञ्चनेन 'पशोः' 'प्राणान्' 'धत्तः' धारयतः। 'तत्' तेन 'एनं' पशुम् 'अतः' अस्मात् स्थानात् 'समीरयतः' ॥ ७ ॥

---

१— वा० सं० ६. १४. १। २— का० श्रौ० सू० ६. ६. ४।

"तद् यत् क्रूरीकुर्वन्तीति । 'आस्थापयन्ति' सञ्ज्ञपयन्तीत्यर्थः ॥ ८ ॥

"तावनुषिञ्चत इत्यादि । तदेव क्रूरीकरणं 'तौ' पत्नीयजमानौ 'अनुषिञ्चतः' शिरसि अवशिष्टोदकस्यैकदेशेनानुषिञ्चनं कुर्याताम् । शिरस्सेचनमन्त्र माह— "मनस्त इति[1] । मनआदिपञ्चकस्य शिरस्स्थानात् तैः पञ्चभिर्मन्त्रैः[2] शिरो निषिञ्चतः । "तत् प्राणान् धत्तस्तत् समीरयत इति आप्यायनप्रयोजनाभिधानम् । "इतराङ्ग-निषेकमन्त्र माह— "यत् ते क्रूरं यदास्थित मिति[3] । "यत्ते क्रूरम्"—इत्यस्य[4] व्याख्यानं 'यदास्थितम्' इति । आस्था = सञ्ज्ञप्तिः, इत्युक्तम् । न हि सञ्ज्ञपनादन्यत् क्रूर मस्ति । "तत् ते आप्याय-ताम्", कोऽर्थः ? 'निष्यायताम्' संहतं भवत्वित्यर्थः ॥ ९ ॥

"तद्यत् क्रूरीकुर्वन्तीति । 'ते' तव 'तत्' स्थित मङ्गं 'शुध्यतु' मेध्यं भवतु ॥ १० ॥

"तद्यत् क्रूरीकुर्वन्तीति । पशोर्जघनार्द्धस्य समन्त्रकं निनयनं विधत्ते— "मह्योभ्य इतीति[5] । "जघनेनेति । पशोर्जघनप्रदेशं निनयतः स्थानभेदेन मन्त्रभेदं सूत्रकार आह— "शेषेण यजमानस्य शिरःप्रभृत्यनुषिञ्चतः, मनस्त इति शिरः, यत् ते क्रूर मित्यङ्गानि, श मह्योभ्य इति पश्चात् पशोर्निषिञ्चतः"— इति[6] । मन्त्रे अह-

---

१— का० श्रौ० सू० ६. ६. ५ । २— वा० सं० ६. १५. १–५ ।
३— का० श्रौ० सू० ६. ६. ६ । ४— वा सं० ६. १५. ६ ।
५— वा० सं० ६. १५. ७ । ६— का० श्रौ० सू० ६. ६. ४–७ ।

र्विषयं यत् सुखप्रार्थन मस्ति, तत्र कारण माह— “यत् क्रूरीकुर्व-न्तीति ॥ ११ ॥

विशसनप्रयोग माह—“अथोत्तान मिति[1] । “असिनाभिनिद-धातीति । अत्रासेः कर्मभूतस्य कारणत्वोपचारेण तृतीया ॥ १२ ॥

“सा या प्रज्ञाताश्रिरिति । ‘या’ पूर्वं पश्वञ्जनायासीत्, याभिर्निदध्यात्, सा यथा पशोरुपरि भवति, तथा स्थापयित्वा विन्द्यादभिनिधानं छेदनोपलक्षणतया भवितव्य मिति । अत्र हेतु माह— “सा हि यजुष्कृतेति ॥ १३ ॥

“स यत्राच्छ्यतीति । “तदुभयतोऽनक्तीत्यादि[2] । ‘तत्’ तस्य छिन्नस्य दर्भस्य यत् अग्रम्, तत् सव्ये पाणौ गृहीत्वा ; यन्मूलम्, तद् दक्षिणेनादाय ; ‘यत्र’ यस्मिन् प्रदेशे ‘आच्छ्यति’ आच्छिनत्ति,[3] तत्र प्रदेशे ‘यतः’ यस्मात् ‘लोहित मुत्पतति’, ‘तत्’ तत्र मूलतृणस्य ‘उभयतः’ मूल मग्रञ्च ‘अनक्ति’ “रक्षसा मिति मन्त्रे-णेति[4] ॥ १४ ॥

“तदुपास्याभितिष्ठतीति[5] । ‘तत्’ दर्भाग्रम् “इद मह मिति[6] यजमानोऽतिक्रामति । ‘इदम्’ इदानीम्, अनेन दर्भाक्रमण-

---

१— का० श्रौ० सू० ६. ६. ८ ।

२— का० श्रौ० सू० ६. ६. ६ ।

३— एतदनन्तरं ‘तत् तृणम्’-इति पदद्वय मधिकं क-पुस्तके ।

४— वा० सं० ६. १६. १ ।

५— का० श्रौ० सू० ६. ६. ११ ।

६— वा० सं० ६. १६. २ ।

व्याजेन 'रक्षः' 'अभितिष्ठामि' आक्रमामि । तथा 'अधमं तमः' निकृष्ट मन्धकारं भूमेरधस्ताद्वर्त्तमानं तम एव प्रापयामि । गत मन्यत् ॥ १५ ॥

"अथ वपा मुत्खिदन्तीति[1] । "तया वपाश्रपण्यौ प्रोर्णौतीति । 'तया' उद्धृतया वपया वपाश्रपण्योः शाखयोरुपरि 'प्रोर्णौति' प्रच्छादयेत् । "घृतेनेत्यादि[2] तत्र मन्त्रः । हे 'द्यावापृथिवी' द्यावापृथिव्यौ ! युवां वपाश्रपण्योराच्छादनद्वारा 'घृतेन' दीप्यमानेन वपापदार्थेन 'प्रोर्णुवाथां' प्रकर्षेणाच्छादयेथाम् । यद्वा विस्तृतत्वात् वपाश्रपण्यावेव द्यावापृथिव्युपचर्यते । "तदिमे द्यावापृथिवी"— इत्यादि प्राग् व्याख्यातम्[3] ॥ १६ ॥

वपाश्रपण्योः कार्ष्मर्यमयत्वं विधाय प्रशंसति— "कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतो यत्र वै देवा अग्रे पशु मालेभिर इत्यादिना । पशोः कर्षणादधःपतितस्य मेधस्य कार्ष्मर्यरूपेणोत्पत्तेः तस्य पशोः सम्बन्धेन यज्ञः कृत्स्नो भवति । अत एव कर्षणसम्बन्धात् कार्ष्मर्य इति नाम सम्पन्नम् । पशोः कर्षणादपि कार्ष्मर्यं प्रशस्त मित्यभि-प्रायः ॥ १७ ॥

"तां परिवासयतीति । 'तां' तयोरुपस्तृतां 'परिवासयति' पशोः सकाशात् छिनत्ति । छिन्नां 'तां' 'पशुश्रपणे' पशुः श्रप्यते यस्मिन्नग्नौ स पशुश्रपणः तत्र, 'प्रतपति' । 'तथा' सति 'अस्य'

---

१— का० श्रौ० सू० ६. ६. १२ । २— वा० सं० ६. १६. ४ ।
३— पुरस्तात् ३५४ पृ० १८ प० द्रष्टव्यम् ।

पशोर्वपा 'अत्रापि' 'शृता' स्यादित्यभिप्रायः। "अत्रापि"-इत्यपि शब्द आहवनीयेन सह समुच्चयार्थः। "पुनरुल्मुकमग्नीदादत्त इति। प्रागाहृत मुल्मुकं अपणार्थ मपहृताङ्गारं पुनरग्नीदादाय सर्वेऽपि चात्वालात् पश्चाद्भागादाहवनीयं प्राप्नुयुः। तत्राध्वर्यु-रेतत्पुरा सव्ये धृतं तृणाग्र माहवनीये "वायो वेः"—इति प्रास्येत्। अत्र कात्यायनः— "परिवास्य चात्वालेऽवसिच्य शामित्रे प्रतपति, शामित्रैकदेश माहवनीये प्रास्यत्यग्नीत्, तृणाग्रं चाध्वर्युर्वायोवे-रिति"-इति[1]। हे 'वायो!' 'स्तोकानाम्', वपाया उपरि आज्या-भिधारणकालेऽधःपतिता विन्दवः स्तोकाः, तेषाम्, आधारत्वेनेदं तृणाग्रं समित्स्थानीयं 'वेः' विद्धि, अग्निं गमय वा[2] ॥ १८ ॥

"अथोत्तरतस्तिष्ठन्नित्यादि[3]। एतत् उत्तरतः प्रतितपनम्, उपरि दक्षिणतः प्रतितपनार्थो यः प्रतिप्रस्थातुरप्येति क्रमः, तत्समाधानार्थ मित्यर्थः ॥ १९ ॥

दक्षिणतः प्रतितापाय गमनमार्गं दर्शयति— "ता मन्तरेण यूप मिति। "तद्यदिति। 'समया' समीपे, वेदिमध्यदेशे 'न हरन्ति'। केनाभिप्रायेण? अस्य पशोस्तया वपया 'समया' साम्मु-ख्येनैव सामीप्येन 'यज्ञम्' आहवनीयेनैव 'प्रसजाम' प्रकर्षेण संरा-ध्नुमः 'इति'। प्रसञ्जनं चेष्टनम्। आहवनीयात् पुरोदेशतो हरणेऽपि यूपाद् बहिर्न हरेत्; 'यज्ञात्' सकाशात् 'बहिर्द्धा' कुर्यात्।

---

१— का० श्रौ० सू० ६. ६. १३, १४, १५।

२— वा० सं० ६. १६. ५।

३— का० श्रौ० सू० ६. ६. १६।

यूपस्यापि यज्ञावयवत्वात् उत्तरतः प्रतपन मध्वर्युकर्त्तृकम्; विशेषाश्रवणात् ॥ २० ॥

"अथ स्रुवेणोपहत्याज्य मिति[1]। तयाध्वर्युः प्रतिप्रस्थाता वपायां तप्यमानायां स्रुवेणाज्य मुपहत्यादाय वपोपरि अध्वर्युर्जुहुयात् "अग्निराज्यस्य वेतु"—इति[2]। 'आज्यस्य' आज्यं 'वेतु' भक्षयतु, 'स्वाहा' इदं सुहुत मस्तु। "तयो हेत्यादि। 'अस्य' वपाद्रव्यस्य, वपाद्वारा पशोर्वा। "स्वाहाकारेण वा वषट्कारेण वा देवेभ्योऽन्नं हूयते"—इति श्रुतेः[3] 'स्वाहाकृताः' स्वाहाकारेण दत्ते सति 'आहुतयः' भवन्तीत्यर्थः ॥ २१ ॥

"अथाह स्तोकेभ्योऽनुब्रूहीतीति[4]। होत्रा स्तोकेभ्योऽनूच्यमानानां मन्त्राणा माग्नेयत्वं वृष्टिसाधनत्वेन प्रशंसति— "तद्यदाग्नेयी स्तोकेभ्योऽन्वाहेत्यादिना। 'इतः प्रदाना वै वृष्टिः' अस्माद् भूलोकात्[5] प्रजाता प्रसाधयति। "इतो ह्यग्निर्वृष्टिं वनुते"—इति सङ्क्षेपेणोक्तं विशदयति— "स एतैरिति। 'एतैः' घृतस्तोकैः 'एतान्' वृष्ट्यवयवभूतान् 'वनुते', 'ते' अग्निना भक्षिताः 'एते' घृतस्तोकाः[6]

---

१— का० श्रौ० सू० ६. ६. १७।　　२— वा० सं० ६. १६. ६।

३— "स्वाहाकृतं हविरदन्तु देवाः"—इति ऋ० सं० १०. ११०. ११. = ऐ० ब्रा० २. २. ३. = निरु० ८. ३. ६। "उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः"—इति च का० श्रौ० सू० १. २. ७।

४— का० श्रौ० सू० ६. ६. १८।

५— 'अस्माल्लोकात्'—इति क।

६— नैतत् पदं क-पुस्तकादन्यत्र।

पुनरुदकात्मना परिणताः पृथिव्यां 'वर्षन्ति'। 'तस्मात्' उक्तप्रकारेण वृष्टेरग्न्यायत्तत्वात् 'आग्नेयी' 'स्तोकेभ्यः' अनुब्रूयात् 'यदा' वपा 'शृता' 'भवति' ॥ २२ ॥

"अथाह प्रतिप्रस्थातेति[1]। अनन्तरं 'प्रतिप्रस्थाता' तद्वपा परिपक्वासीत् अतः 'अध्वर्यो! प्रचारं कुरु' इति ब्रूयात्। 'प्रेष्यः' प्रयोगप्रकारः, स्वाहाकृतयोऽन्यप्रयाजदेवताः सन्ति[2] ॥ २३ ॥

"हुत्वा वपा मेवेति[3]। प्रयाजं हुत्वा 'अग्रे' पृषदाज्यात् प्राक् 'वपा मेव' प्रयाजशेषेणाभिघारयेत्। 'अथ' पश्चात् अनूयाजाद्यर्थं 'पृषदाज्यम्'। चरकशाखोक्ता[4]ऽऽध्वर्यवप्रयोगकर्त्तारः 'चरकाध्वर्य्यवः'। 'पृषदाज्य मेवाग्रेऽभिघारयन्ति'। दधिमिश्र माज्यं पृषदाज्यम्। प्राणवत् गवा मन्तर्वर्त्तमानत्वात्; प्राणः पुष्टिः, तद्धेतुत्वाद्वा पृषदाज्यस्य प्राणत्वम्। 'तदु' तस्मिन्नभिघारणप्राथम्यविषये 'याज्ञवल्क्यम्' 'अनु' लक्ष्यीकृत्य 'व्याजहार' उक्तवान्। याज्ञवल्क्यं विशिनष्टि— "एवं कुर्वन्त मिति। पृषदाज्य मतिक्रम्य वपा मेवाभिघारयन्तम् 'अथ मध्वर्युः' 'प्राणं' खलु 'अन्तरगात्', अतः 'एनम्' अध्वर्युं 'प्राणो हास्यति'—'इति' याज्ञवल्क्यं सम्बोध्य वक्ता अध्वर्युः साधारणेनाह ॥ २४ ॥

"स ह स्मेति। एव मधिक्षिप्तः 'सः' याज्ञवल्क्यः 'ह' 'बाहू' 'अन्ववेक्ष्य' समवेक्ष्य, तस्मै प्रकाशनाय 'इमौ बाहू' 'पलितौ'

---

१— का॰ श्रौ॰ सू॰ ६. ६. १९। २— का॰ श्रौ॰ सू॰ ६. ६. २०।
३— का॰ श्रौ॰ सू॰ ६. ६. २१। ४— 'चरकशास्त्रोक्ता'–इति क।

जरया युक्तौ लोलयुक्तावभूताम् । अय मभिप्रायः— एतावान् कालो वपाप्रथमाभिघारणेनैव गतः, अथापि प्राणस्तु न निर्गत इति । स्वय मपि चरकाध्वर्युवत् परीक्षणेनैव ब्रूते— 'ब्राह्मणस्य' चरकाध्वर्योः 'वचः' प्राण एनं हासतीत्येतदात्मकम् 'क बभूव' ? नावगत मित्यर्थः । तस्मात् 'तत्' वचनं नादर्त्तव्य मित्युपसंहारः । हविष्ट्वसमानेऽपि पशोरनभिघारणस्याभिप्राय माविष्करोति— "नेदशृत मिति । अभिघारणं होतव्यहविःसंस्कारः । अशृतस्य होमानर्हत्वात् अभिघारणं न युज्यत इत्यभिप्रायः । तर्हि संस्कारस्यास्य पशुसंस्पर्श एव नोपलभ्यत इत्याशङ्क्य तत्प्राप्त्युपाय माह— "एतदेवास्येति ॥ २५ ॥

वपायाग माह— "अथाज्य मुपस्तृणीत इति । उभयतो हिरण्यशकलस्थापन मप्राणस्य पशोः सप्राणत्वसम्पादनाय ॥ २६ ॥

"तराद्धिरण्यशकलावभितो भवत इति । अथामृतायात्मना स्तौति— "घ्नन्ति वा एतत् पशुं यदग्नौ जुह्वतीत्यादिना । "वपां मेद इति । "प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने"—इत्यत्र[1] "हविषोऽप्रस्थितस्य प्रतिषेधो वक्तव्यः"—इत्युक्तम्[2] । अतः षष्ठीप्रतिषेधायैतस्य प्रयोगे प्राप्ते प्रतिषेधति— "न प्रस्थित मित्याहेति । सर्वत्राध्वर्यवप्रसक्ताश्रवणीयपशोः पुनः प्रसञ्जयति— "प्रसुते प्रस्थित मिति । ब्रूयादिति शेषः । 'प्रसुते' अभिषवकृते सति वपायागस्तत्रेत्यर्थः ॥ २७ ॥

---

१— पा० सू० २. ३. ६१ । २— का० वा० १५०८ ।

"हुत्वा वपां समीच्यौ वपाश्रपण्यौ हुत्वानुप्रास्यतीति[१]। 'समीच्यौ' परस्पराभिमुखे, प्राचीं विशाखां प्रतीचीं मितरा मिति। 'स्वाहाकृते' स्वाहाशब्दे उच्चरिते, हविषीत्यर्थः ॥

अस्य प्रासने मन्त्रः— 'ऊर्द्ध्वनभस मिति[२]। 'ऊर्द्ध्वम्' उपरिभूतं 'नभः' अन्तरिक्षं यस्य वायोः स तथोक्तः, तम् 'ऊर्द्ध्वनभसम्', तं 'मारुतं' वायुम्, हे वपाश्रपण्यौ! युवां 'गच्छतम्'। 'याभ्यां' शाखाभ्यां 'वपाम् अग्निश्रपाम' वपाश्रपण मकार्ष्म, ते 'इमे' 'अमुया' अमुत्र, समुच्छ्रयरहिते अनभिमते देशे प्रणष्टे 'न' भवत इत्यभिप्रायेणाग्नौ प्रास्यत् ॥ २८ ॥

वपायागं प्रशंसति— "तद् यद् वपया चरन्तीति। अवयवयागविप्रकृष्टकालीनस्याङ्गयागस्य मध्यव्यवधानेन क्षुधार्त्ताया देवताया अवान्तरक्षुन्निवर्त्तकत्वेन क्रोधशान्तिहेतुरित्यर्थः ॥ २९ ॥

"अथ चात्वाल इत्यादि[३]। स्पष्टम् ॥ ३० ॥ ३ [८. २.]॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डेऽष्टमाध्याये द्वितीयं ब्राह्मणम् ॥

---

१—का० श्रौ० सू० ६. ६. २७। अत्र मन्त्रः—वा० सं० ६. १६. ७।

२— वा० सं० ६. १६. ८।

३— का० श्रौ० सू० ६. ६. २८। अत्र मन्त्रः— वा० सं० ६. १७. १।

( अथ तृतीयं ब्राह्मणम् . )

यद्देवत्यः पशुर्भवति। तद्देवत्यं पुरोडाश मनुनिर्व्वपति तद्युत्पुरोडाश मनुनिर्व्वपति सर्व्वेषां वा ऽएष पशूनां मेधो यद् व्रीहियवौ तेनैवैन मेतन्मेधेन समर्द्धयति कृत्स्नं करोति तस्मात् पुरोडाश मनुनिर्व्वपति ॥१॥

अथ यद्वपया प्रचर्य। एतेन पुरोडाशेन प्रचरति* मध्यतो वा ऽइमां व्वपा मुत्खिदन्ति मध्यत एवैन मेतेन मेधेन समर्द्धयति कृत्स्नं करोति तस्माद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरत्येष न्वेवैतस्य बन्धुर्यत्र क चैष पशुं पुरोडाशोऽनुनिरुप्यते† ॥ २ ॥

अथ पशुं व्विशास्ति। त्रिः प्रच्यावयता त्रिः प्रच्युतस्य हृदय मुत्तमं कुरुतादिति त्रिष्ट्वि यज्ञः‡ ॥ ३ ॥

अथ शमितारꣳ सꣳशास्ति। यत्त्वा पृच्छाच्छृतꣳ हविः शमिता३रिति शृत मित्येव ब्रूतान्न शृतं भगवो न शृतꣳ हीति§ ॥ ४ ॥

---

* 'प्रचरति'–इति ग।

† 'प्यते'–इति ख। 'प्युते'–इति ग, घ।

‡ 'यज्ञः'–इति क, 'यज्ञ'–इति ग, घ।

§ 'हीति'–इति ख, 'हीति'–इति ग, घ।

अथ जुह्वा पृषदाज्यस्योपहत्य। अध्वर्युरुपनिष्क्रम्य पृच्छति शृतꣳ हविः शमितारिति शृत मित्याह तद्देवाना मित्युपाꣳश्वध्वर्युः* ॥ ५ ॥

तद्युत् पृच्छति। शृतं वै देवानाꣳ हविर्नाशृतꣳ शमिता वै तद्वेद यदि शृतं वा भवत्यशृतं वा ॥ ६ ॥

तद्युत् पृच्छति। शृतेन प्रचराणीति तद्यदशृतं भवति शृत मेव देवानाꣳ हविर्भवति शृतं यजमानस्यानेना ऽध्वर्युर्भवति शमितरि तदेनो भवति त्रिष्कृत्वः पृच्छति त्रिवृद्धि यज्ञोऽथ यदाह तद्देवाना मिति तद्धि देवानां यच्छृतं तस्मादाह तद्देवाना मिति ॥ ७ ॥

स हृदय मेवाग्रेऽभिघारयति। आत्मा वै मनो हृदयं प्राणः पृषदाज्य मात्मन्येवैतन्मनसि प्राणं दधाति तथैतज्जीव मेव देवानाꣳ हविर्भवत्यमृत ममृतानाम्† ॥ ८ ॥

सोऽभिघारयति। सं ते मनो मनसा सं प्राणः प्राणेन गच्छता मिति न स्वाहाकरोति न ह्येषाहुतिरुद्वासयन्ति पशुम्‡ ॥ ९ ॥

---

* 'यः'—इति ग, घ।

† 'नाꣳ'—इति ग, घ।

‡ 'पशुम्'—इति ग, घ।

तं जघनेन चात्वाल मन्तरेण यूपं चाग्निं च हरन्ति। तद्युत्समया न हरन्ति येनान्यानि हवीꣳषि हरन्ति ऋतꣳ सन्तं नेदञ्जशो व्विकृत्तेन क्रूरीकृतेन समया यज्ञं प्रसृजामेति यद्व बाह्येन न हरन्त्यग्रेण यूपं बहिर्द्धा ह यज्ञात् कुर्युस्तस्मादन्तरेण यूपं चाग्निं च हरन्ति दक्षिणतो निधाय प्रतिप्रस्थातावद्यति प्लक्षशाखा उत्तरबर्हिर्भवन्ति ता अध्युवद्यति तद्युत् प्लक्षशाखा उत्तरबर्हिर्भवन्ति ॥ १० ॥

यत्र वै देवाः*। अग्रे पशु मालेभिरे तं त्वष्टा शीर्ष-तोऽग्रेऽभ्युवामोतैवं चिन्नालभेरन्निति त्वष्टुर्हि पशवः स एष शीर्षन्मस्तिष्कोऽनूक्यश्च मज्जा तस्मात् स व्वान्त इव त्वष्टा ह्येत मभ्युवमत्तस्मात्तं नाश्नीयात् त्वष्टुर्ह्येत-दभिवान्तम् ॥ ११ ॥

तस्यावाङ् मेधः पपात। स एष व्वनस्पतिरजायत तं देवाः प्रापश्यंस्तस्मात् प्रक्षः प्रक्षो ह वै नामैतद्युत् प्लक्ष इति तेनैवैन मेतन्मेधेन समर्द्धयति कृत्स्नं करोति तस्मात् प्लक्षशाखा उत्तरबर्हिर्भवन्ति ॥ १२ ॥

अथाज्य मुपस्तृणीते। जुह्वां चोपभृति च व्वसाहोम-

---

* 'वाः'–इति ग, घ।

हुवन्याꣳ समवत्तधान्या मुथ हिरण्यशकलावुवदधाति जुह्वां चोपभृति च ॥ १३ ॥

अुथ मनोतायै हविषोऽनुवाुच आह। तद्युन्मनोतायै हविषोऽनुवाुच आुह सुर्वा ह वै देवुताः पशु मालभ्युमान मुपसुङ्गच्छन्ते मुम नाुम ग्रहीष्यति मुम नाुम ग्रहीष्यतीति सुर्व्वासाꣳ हि देवुतानाꣳ हविः पशुस्तासाꣳ सुर्व्वासां देवुतानां पशौ मुनाꣳस्योतानि भवन्ति तान्येवैतत् प्रीणाति तुथो ह्यमोघाय देवुतानां मुनाꣳस्युपसुङ्गतानि भवन्ति तुस्मान्मनोतायै हविषोऽनुवाुच आह ॥ १४ ॥

स हृदयस्यैवाग्रेऽवद्यति। तद्युन्मध्यतः सतो हृदयस्याग्रेऽवद्युति प्राणो वै हृदय मतो ह्ययु मूर्द्धः प्राणः सञ्चरति* प्राणो वै पशुर्यावुद्ध्येव प्राणेन प्राणिति तावत् पशुरुथ युदास्मात् प्राणोऽपक्रामति दार्वेव तुर्हि भूतोनर्थ्युः† शेते ॥ १५ ॥

हृदय मु वै पशुः‡। तुदस्यात्मुन एवाग्रेऽवद्यति

---

* 'सम्भवति'—इति सायणसम्मत इति डा० वेबरः।

† 'नर्थ्या'—इति, 'मर्थ्युः'—इति च पाठद्वयं दृष्टं डा-वेबरेण।

‡ 'पशूः'—इति ग, घ।

तस्माद्यदि किञ्चिदवदानꣳ हीयेत न तदाद्रियेत सर्वस्य हैवास्य तत्पशोरवत्तं भवति यद्धृदयस्याग्रेऽवद्यति तस्मान्मध्यतः सतो हृदयस्यैवाग्रेऽवद्यत्यथ यथापूर्वम्* ॥ १६ ॥

अथ जिह्वायै। सा हीयं पूर्वार्द्धात् प्रतिष्ठत्यथ वक्षसस्तद्धि ततोऽथैकचरस्य दोष्णोऽथ पार्श्वयोरथ तनिम्नोऽथ वृक्कयोः ॥ १७ ॥

गुदं त्रेधा करोति। स्थविमोपयड्भ्यो† मध्यं जुह्वां द्वेधा कृत्वावद्यत्यणिम त्र्यङ्गेष्वथैकचरायै श्रोणेरेतावन्नु जुह्वा मवद्यति‡ ॥ १८ ॥

अथोपभृति। त्र्यङ्गस्य दोष्णो गुदं द्वेधा कृत्वावद्यति त्र्यङ्गायै श्रोणेरथ हिरण्यशकलाववदधात्यथोपरिष्टादाज्यस्याभिघारयति ॥ १९ ॥

अथ व्वसाहोमं गृह्णाति। एडसीति खलुयेव हि यूस्तस्मादाह एडसीत्यग्निष्ट्वा श्रीणात्वित्यग्निर्ह्येतच्छ्रपयति तस्मादाहाग्निष्ट्वा श्रीणात्वित्यापस्त्वा समरिणन्नित्यापो ह्येत मङ्गेभ्यो रसꣳ सम्भरन्ति तस्मादाहापस्त्वा समरिणन्निति ॥ २० ॥

---

* 'र्वम्'—इति ग, घ।　　† स्थविमोपयुड्भ्यो'—इति घ।

‡ 'द्यति'—इति ग, घ।

व्वातस्य त्वा ध्राज्या ऽइति। अन्तरिक्षं वा ऽअय मनुपवते योऽयं पवतेऽन्तरिक्षाय वै गृह्णाति तस्मादाह व्वातस्य त्वा ध्राज्या ऽइति ॥ २१ ॥

पूष्णो रꣳह्या ऽइति। एष वै पूष्णो रꣳहिरेतस्मा ऽउ हि गृह्णाति तस्मादाह पूष्णो रꣳह्या ऽइति ॥ २२ ॥

ऊष्मणो व्यथिषदिति। एष वा ऽऊष्मैतस्मा ऽउ हि गृह्णाति तस्मादाहोष्मणो व्यथिषदित्यथोपरिष्टाद् द्विराज्यस्याभिघारयति ॥ २३ ॥

अथ पार्श्वेन वासिना वा प्रयौति। प्रयुतं द्वेष इति तन्नाष्ट्रा एवैतद्रक्षाꣳस्यतोऽपहन्ति ॥ २४ ॥

अथ यद्वपरिशिष्यते। तत्समवत्तधान्या मानयति तद्धृदयं प्रास्यति जिह्वां व्वक्षस्तनिम मतस्ने व्वनिष्ठु मथोपरिष्टाद् द्विराज्यस्याभिघारयति ॥ २५ ॥

तद्यद्धिरण्यशकलावभितो भवतः। घ्नन्ति वा ऽएतत् पशुं यदग्नौ जुह्वत्यमृत मायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति तथात उदेति तथा सञ्जीवति तस्माद्धिरण्यशकलावभितो भवतः ॥ २६ ॥

अथ यदक्ष्णयावद्यति। सव्यस्य च दोष्णो दक्षिणायाश्च श्रोणेर्दक्षिणस्य च दोष्णः सव्यायाश्च श्रोणेस्तस्मादयं पशुरक्ष्णया पदो हरत्यथ यत्सम्यगवद्येत्समीचो

हैवायं पशुः पद्दो हरेत्तस्मादक्ष्णयावद्यत्यथ यन्नु श्रोण्यो ऽवद्यति नाꣳसयोर्नानूकस्य नापरसक्थयोः ॥ २७ ॥

असुरा ह वा ऽअग्रे पशु मालेभिरे। तद्देवा भीषा नोपावेयुस्तान् हेयं पृथिव्युवाच मैतदा दृढ महं व एतस्याध्यक्षा भविष्यामि यथा यथैत ऽएतेन चरिष्यन्तीति ॥ २८ ॥

सा होवाच। अन्यतरा मेवाहुति महौषुरन्यतरां पर्यशिषन्निति स यां पर्यशिꣳषंस्तानीमान्यवदानानि ततो देवाः स्विष्टकृते त्र्यङ्गाण्युपाभजंस्तस्मात् त्र्यङ्गाण्यथासुरा अवाद्यञ्छ्रोण्योꣳसयोरनूकस्यापरसक्थयोस्तस्मात्तेषां नावद्येद्यन्न्वेव त्वष्टानूक मभ्युवमत्तस्मादनूकस्य नावद्येदथाहाग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहीत्याश्राव्याहाग्नीषोमाभ्यां छागस्य हविः प्रेष्येति न प्रस्थित मित्याह प्रसुते प्रस्थित मिति* ॥ २९ ॥

अन्तरेणाऽऽर्च्यौ याज्यायै व्वसाहोमं जुहोति। इतो वा ऽअय मूर्द्धा मेध उत्थितो य मस्या इमꣳ रसं प्रजा उपजीवन्त्यर्वाचीनं दिवो रसो वै व्वसाहोमो रसो मेधो रसेनैवैतद्रसं तीव्रीकरोति तस्मादयꣳ रसोऽद्यमानो न क्षीयते ॥ ३० ॥

---

* 'मिति'—इति ग, घ।

तद्यदन्तरेण। अर्द्धर्चौ याज्यायै वसाहोमं जुहोतीयं वा ऽअर्द्धर्चोऽसौ द्यौरर्द्धर्चोऽन्तरा वै द्यावापृथिवी ऽअन्तरिक्ष मन्तरिक्षाय वै जुहोति तस्मादन्तरेणार्द्धर्चौ याज्यायै वसाहोमं जुहोति॥ ३१॥

स जुहोति। घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहेत्येतेन वैश्वदेवेन यजुषा जुहोति वैश्वदेवं वा ऽअन्तरिक्षं तद्यदेनेनेमाः प्रजाः प्राणत्यश्चोदनत्य*श्चान्तरिक्ष मनुचरन्ति। तेन वैश्वदेवं वषट्कृते जुहोति यानि जुह्वा मवदानानि भवन्ति॥ ३२॥

अथ जुह्वा पृषदाज्यस्योपघ्नन्नाह। वनस्पतयेऽनुब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति वषट्कृते जुहोति तद्यद्वनस्पतये जुहोत्येत मेवैतद्यज्ञं यूपं भागिनं करोति सोमो वै वनस्पतिः पशु मेवैतत्सोमं करोति तद्यदन्तरेणोभे ऽआहुती जुहोति तथोभयं व्याप्नोति तस्मादन्तरेणोभे ऽआहुती जुहोति॥ ३३॥

अथ यान्युपभृत्यवदानानि भवन्ति। तानि समा-

---

* '०दानत्य०'–इति घ-पाठः। पुरस्तात् २. ५. २. २ कण्डी द्रष्टव्या, उपरिष्टाच्च ४. १. २. १६।

नयमान आहाग्नये स्विष्टकृतेऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति व्वषट्कृते जुहोति ॥ ३४ ॥

अथ यद्वसाहोमस्य परिशिष्यते। तेन दिशो व्याघारयति दिशः प्रदिश आदिशो व्विदिश उद्दिशो दिग्भ्यः स्वाहेति रसो वै व्वसाहोमः सर्वास्वेवैतद्दिक्षु रसं दधाति तस्मादयं दिशि दिशि रसोऽभिगम्यते ॥ ३५ ॥

अथ पशुꣳ सम्मृशति। एतर्हि सम्मर्शनस्य कालोऽथ यत्पुरा सम्मृशति य इम उपतिष्ठन्ते* ते व्विमथिष्यन्त इति शङ्कमानो यद्यु व्विमाथान्न शङ्केतान्नैव सम्मृशेत् ॥ ३६ ॥

ऐन्द्रः प्राणः†। अङ्गे अङ्गे निदीध्यदैन्द्र उदानो ऽअङ्गे ऽअङ्गे निधीत इति यदङ्गशो व्विकृत्तो भवति तत्प्राणोदानाभ्याꣳ सन्दधाति देव त्वष्टर्भूरि ते सꣳस मे तु सलक्ष्मा यद्विषुरूपं भवातीति कृत्स्नवृत मेवैतत्करोति देवत्रा यं त मवसे सखायोऽनु त्वा मातापितरो मदन्त्विति तद्यत्रैन महौषीत्तदेनं कृत्स्नं कृत्वानुसमस्यति सोऽस्य कृत्स्नोऽमुष्मिंल्लोक‡ आत्मा भवति ॥ ३७ ॥ ४ ॥

॥ इति षष्ठप्रपाठके चतुर्थं ब्राह्मणम् [८. ३.] ॥

---

* 'ये म ऽउपतिष्ठन्ते'—इति सायणसम्मतः पाठ इति डा० वेबरः।

† 'णः'—इति ग, घ।

‡ 'मुष्मिल्लोक'—इति, 'मुष्मिंल्लोक'—इति, 'मुष्मिन् लक'—इति च पाठाः।

अथानुनिर्वाप्य पुरोडाशं तद्देवतां च विधत्ते— "यद्देवत्य इति[1]। या देवता पशोः, पुरोडाशो ऽपि तद्देवताकः कर्त्तव्यः। पुरोडाशानुनिर्वापं पूर्यमाणस्य पशोः समृद्धिहेतुत्वेन प्रशंसति— "सर्वेषां वा एष पशूना मिति। सर्वपशूनां मेधरूपत्व मैतरेयब्राह्मणे "पुरुषं वै देवाः पशु मालभन्त, तस्मादालब्धान्मेध उदक्रामत्"—इत्यादिना[2] प्रपञ्चितम् ॥ १ ॥

पुरोडाशस्य वपानन्तर्यं प्रशंसति— "अथ यद् वपया प्रचर्यैति। पशुपुरोडाशस्य पशुच्छिद्रपूर्त्तिरूपप्रयोजनं सर्वेषु पशुष्वतिदिशति— "एष न्वेवैतस्य बन्धुरिति ॥ २ ॥

"अथ पशुं विशास्तीति[3]। शमिता[4]। तदा शमितुरेव मनुशासनं कुर्यात्— हे शमितः! 'त्रिः प्रच्यावय'[5] प्रधानस्विष्टकृदुपयड्भेदेन त्रिविधाङ्गानि[6] त्रिविधचिह्नानि यथा स्युः, तथा

---

१— का० श्रौ० सू० ६. ७. १६ द्रष्टव्यम्।

२— ऐ० ब्रा० २. १. ८ द्रष्टव्यम्।

३— "शसु हिंसायाम् (भ्वा०प० ७२७)"—इति का०सू०वृत्तौ या०दे०।

४— का० श्रौ० सू० ६. ७. १। "ऋत्विग्भ्योऽन्यः कश्चित् शमितेत्येतत्सञ्ज्ञः पशुं विशास्ति हिनस्ति मारयतीत्यर्थः"—इत्यादि च तत्र का० श्रौ० ६. ७. १-२-३-४-सूत्रीयवृत्तिषु द्रष्टव्यम्।

५— 'त्रिः प्रच्यावयतात्'—इति क।

६— तत्र, जुह्वा मवदेयानि 'जौहवानि' प्रधानयागार्थानि हृदयादीनि प्रथमानि, उपभृत्यवदेयानि दक्षिणसक्थ्यादीनि 'औपभृतानि' स्विष्टकृद्यागार्थानि द्वितीयानि, वसाहोमहवन्या मवदेयानि वनिष्ठादीनि उपयड्यागार्थानि तृतीयानीति विवेकः।

प्रच्यावय[1]। 'त्रिः प्रच्युतस्य' पशोः 'हृदयम्' अवयवम् 'उत्तमम्' उपरिभावं 'कुरुतात्' 'इति'[2]। यद्वा 'त्रिः प्रच्यावय' यथाङ्गानि त्रिः प्रच्युतानि स्युः, तथा कुरु। 'प्रच्युतस्य' पक्वस्य 'हृदयं' शूलाग्रेण पक्वम् 'उत्तमम्' उपरिवर्त्तमानं कुरु। प्रच्यावनस्य त्रित्वं प्रशंसति—"त्रिवृद्धि यज्ञ इति। उक्तं त्रिवृत्त्वम्[3] ॥ ३ ॥

"अथ शमितारं संशास्तीति[4]। अनुशासनं कुर्यात्। शृतत्वाभिधानभीत्या प्रथमत एव संशासनम् ॥ ४ ॥

"अथ जुह्वेति। पाकानन्तरं 'जुह्वा पृषदाज्यस्योपहत्य' जुह्वां पृषदाज्यं हृदयावदानार्थ मादाय शामित्रं प्रति गत्वा 'शमितारं' 'शृतं हविः ?' 'इति' पृच्छेत्। 'शृतम्' 'इति' प्रत्युक्ते 'तत् देवानाम्' 'इति' 'उपांशु' जुहुयात्[5] ॥ ५ ॥

प्रश्नप्रयोजन माह— "तद् यत् पृच्छतीति। प्रश्नाभावपक्षे 'अशृतम्' इति। 'शृतं वा' स्यात्। तच्च ऐन्द्रं नैर्ऋतं वा भवेत्, न दैवम्; "यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स दैवः"—इति हि तैत्तिरीयकम्[6]। अतः शृताशृतविभागं शमिता जानातीति "शृतं हविः शमितः ?"-इति प्रश्नो युज्यत इत्यर्थः ॥ ६ ॥

---

१— "प्रच्यावय = उत्कालय"-इति का० सू० वृ०।

२— का० श्रौ० सू० ६. ८. २।  ३— का० श्रौ० सू० ६. ७. ५।

४— का० श्रौ० सू० ६. ८. १क०। "शास्ति = शिक्षयति"-इति तत्र वृ०।

५— का० श्रौ० ६. ८. १ ख, ४, ५ सूत्राणि द्रष्टव्यानि।

६— तै० सं० २. ६. ३. ७।

"तद्यत् पृच्छतीति । अत एव प्रश्नसामर्थ्यात् प्रमादात् अनृत मपि भवेत् । 'यजमानस्य नृतं भवति' नृते यत् फलं तदविकलं भवतीत्यर्थः । अत एव प्रश्नादेव 'अध्वर्युः' 'अनेनाः' अपापः 'भवति'; शमितार मेव 'तदेनः' आश्रयति । "त्रिः खल इत्यादि । स्पष्टम् ॥ ७ ॥

"स हृदय मेवाग्रेऽभिघारयतीति[1] । हृदयाभिघारणं प्रशंसति— "आत्मा वै मन इत्यादिना । यदेतत् हृदयाख्य मन्नम्, तत् मन-आख्यकः 'आत्मा' खलु; "एतं मनोमय मात्मान मुपसङ्क्रामति"-इत्यादौ[2] आत्मत्वव्यवहारात् । अथवा मन-उपाधिकः 'आत्मा' खलु; परिपूर्णस्य परमात्मनः परिच्छेदेन जीवभावः, मनस उपाधित्वात् । उक्तं पृषदाज्यस्य प्राणत्वम् । अतः एतेन हृदयाभि-घारणेन आत्मभूते मनसि प्राणं स्थापितवान् भवति । तथा सति हृदयद्वारा प्राणप्रज्ञयोः स्थापितत्वात् 'देवानाम्' इदं सजीवं 'हविः' सम्पद्यते । अग्रशब्दश्रुतेः सामर्थ्यादितराण्यपि पश्चादाज्ये-नाभिघारयेत् ॥ ८ ॥

"सोऽभिघारयतीत्यादि[3] । मन्त्रस्यार्थः[4] ।— हे अभिघार्यमाण हृदय ! 'ते' 'मनः' । मनःप्राणयोर्हृद्यवस्थानात् आश्रयाश्रयिणो-रभेदात् 'ते मनः' इति स्वस्वामिसम्बन्धोपचारः । 'मनसा' पृषदाज्य-

---

१— का० श्रौ० सू० ६. ७. ६ ।

२— तै० उप० २. ८ । श्यान्यत्रान्यत्र च बहुत्र । तद्यथा— इहै-वोपरिष्टात् १४. ५. ३. १० ; १४. ८. ८. १ ; छा० उप० ३. १४. २ ।

३— का० श्रौ० सू० ६. ८. ६ ।  ४— वा० सं० ६. १८. १ ।

लक्षणेन। पृषदाज्यस्य मनोलक्षणत्वेन स्तुतत्वात् प्राणमनसोरवि-योगात् पृषदाज्य मपि मन इत्युच्यते। तेन 'सङ्गच्छताम्' सङ्गतं भवतु। तथा 'ते' 'प्राणः' 'प्राणेन' पृषदाज्यलक्षणेन 'सङ्गच्छताम्'। यद्वा हे 'पशो!' 'ते' यौ मनःप्राणौ अपगतौ, ताभ्यां मनःप्राणाभ्यां हृदयरूपेणावस्थिताभ्यां सङ्गच्छता मित्यर्थः। "न ह्येषाहुतिरिति। अभिघारणरूपत्वेनाहुतिसंस्कारत्वात् स्वत आहुतित्वाभावात् न स्वाहा कुर्यात् ॥ ९ ॥

"तं जघनेनेत्यादि[1]। पूर्ववद् व्याख्येयम्। संसर्जनस्य निषेधोपयोगसिद्धये हविषः क्रूरता माह— "नेदङ्गश इति। अङ्गादङ्गात्। "सङ्ख्यैकवचनाच्च वीप्सायाम्"-इति[2] शस्। दक्षिणत आहृतं हविः 'प्रतिप्रस्थाता' अवद्येत्। "प्लक्षशाखा उत्तरबर्हिर्भवन्तीति। बर्हिष उपरिभूताः स्युः। बर्हिष उपरि हविषा मवदानार्थ माच्छादयेत्, तासा मुपरि अवद्येत्। प्लक्षशाखाः प्रशंसति— "तद् यत् प्लक्षशाखा इत्यादिना[3] ॥ १० ॥

"यत्र वै देवा इति। पुरा देवानां पश्वालम्भनसमये 'त्वष्टा' देवः, पशुस्वामी। एव मेवोत्तरकाले आलम्भनं करिष्यति, पशुशिरसि च मनः कृतवान्; स उच्छिष्टपदार्थः, शिरसि मस्तिष्कादिरूपेण परिणतोऽभूत्। अथवा शिरसः उच्छिष्टसंस्पर्शनात् 'स एषः' शिरःसम्बद्धो 'मस्तिष्कः' कपालः, 'अनूक्यश्च' तन्मांसम्, 'मज्जा' तदाश्रितः सारः, इत्यभक्ष्योऽभूत् ॥ ११ ॥

---

१— का० श्रौ० सू० ६. ७. १०। २— पा० सू० ५. ४. ४३।
३— का० श्रौ० सू० ६. ८. ७। तै० सं० ६. ३. १०. ६ द्रष्टव्यम्।

"तस्यावाङ् मेध इति। 'तस्य' देवैरालभ्यमानस्य पशोः सकाशादेव 'मेधः' तु अधः 'पपात'। पतितो वृक्षोऽभूत्। वृक्षत्वेनाभ्युत्पन्नं 'तं' 'देवाः' 'प्रापश्यन्'; अतो देवैः प्रकर्षेण ख्यानात् 'प्रक्ष्यः' इत्युच्यते। इदानीं यः 'प्लक्षः इति' उच्यते, स वस्तुतः 'प्रक्ष्यः' इत्यर्थः ॥ १२ ॥

"अथाज्य मिति। जुह्वादिषु 'उपस्तृणीते'[1]। 'जुह्वाम्' प्रधानावदानार्थम्[2]। 'उपभृति' स्विष्टकृदर्थम्[3]। वसाहोमार्थं 'वसाहोमहवन्याम्'[4]। 'समवत्तधान्याम्' समवत्तधानी इडापात्रम्[5]।

---

१— का० श्रौ० सू० ६. ८. ८।

२— "हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि"–इति का० श्रौ० सू० ६. ८. ९। हृदय माम्रफलसदृशम्, जिह्वा रसना, क्रोडं वक्षो भुजान्तरम्, सव्यस्य सक्थ्नः सव्यस्य बाहोः पूर्वनडकं मंसादधो वर्त्तमानम्, द्वे अपि पार्श्वे, यकृत् कालेयम्, वृक्कौ कुक्षिस्थौ गोलकौ महदामलकतुल्यौ, गुदमध्यं येन शकृत् निर्गच्छति, तद् विषमं त्रेधा कृत्वा तस्य यो मध्यमो भागो न स्थूलो न च कृशः तम्, दक्षिणा श्रोणिः दक्षिणसक्थ्न उपरि वर्त्तमानो मांसलप्रदेशः दक्षिणा स्फिक्।

३— "दक्षिणसक्थिपूर्वनडकं गुदतृतीयाणिष्ठं सव्या श्रोणिरित्यौपभृतानि"–इति का० श्रौ० सू० ६. ७. ७।

४— "वर्षिष्ठ मुपयड्भ्यः"–इति का० श्रौ० सू० ६. ९. ८। अतिशयेन महद् वर्षिष्ठम्; यद् गुदतृतीय मतिस्थूलं तत्।

५— "जुह्वूपभृतोरुपस्तृणीते वसाहोमहवन्यां पात्र्याञ्च"–इति का० श्रौ० सू० ६. ८. ८। "समवत्तं धीयते यया सा समवत्तधानी इडापात्री"–इति च तत्रैव या० दे० वृ०।

जुहूपभृतोर्हिरण्यशकल मवधायावदीयमानस्य हविषः सम्बन्धिन्यै मनोतादेवतायै[1] अनुवचनार्थं होतारं ब्रूयात् ॥

मनोतानामनिर्वचनेन तदनुवचनं प्रशंसति— "तद्यन्मनोताया इत्यादिना। 'ओतानि' सम्बद्धानि मनांसि यस्याम्। अत्र "त्वं ह्यग्ने प्रथमो मनोता"—इतिमन्त्रवर्णात्[2] 'अग्निः' 'मनोता' पशोर्मनस्सम्बन्धः। सम्बन्धस्य निमित्त माह— "सर्वासां देवाना मिति। 'पशौ' आज्यवत्प्रियत्वसाधारण्यात् 'तानि' 'मनांसि' 'ओतानि'। 'एतत्' एतेन, आग्नेयेनानुवचनेन। स्पष्ट मन्यत् ॥ १३, १४ ॥

प्रधानार्थावद्यमानाङ्गानि तत्क्रमं च प्रशंसति— "स हृदयस्यैवाग्र इत्यादिना। हृदयस्यावदानप्रदेशं विशिनष्टि— "तद्यन्मध्यतः सत इति। देहमध्यप्रदेशे वर्त्तमानस्य हृदयस्य प्राणत्वं तदुत्पत्तिस्थानत्वेनेत्याह— "अतो ह्यय मूर्द्धः प्राणः सम्भवतीति। प्राणपशुत्वब्राह्मणं प्राग् व्याख्यातम्। अत एव प्राणस्याभावे पशुत्वाभावात् हृदयस्य प्रथमं समवदाने सति हृदयव्यतिरिक्ताना मङ्गाना मवदान मपि सम्पन्नम्; यदि प्रमादात् किञ्चिदेवाङ्गहीन मपि स्यात्, तथापि कृत्स्नपश्ववदानं सम्पद्यत इत्यर्थः। तस्मात् हृदय मेवाग्रेऽवद्येत्। 'यथापूर्वं' पशोः पूर्व मङ्ग मनतिक्रम्य ॥ १५, १६ ॥

सङ्ग्रहेणोक्तं विवृणोति— "अथ जिह्वायै इति। जिह्वाया अवद्येत्। 'तद्धि ततोऽथ' अथापि जिह्वानन्तरम्, 'पूर्वार्द्धात् प्रतिष्ठति'। 'एकचरस्य दोष्णः' सव्यादित्यर्थः। 'अथ' 'तनिम्नः' यकृत्तः इत्यर्थः। तस्य चातिकोमलत्वात् तनिमत्त्वम्। 'वृक्कयोः'

---

१— का० श्रौ० सू० ६. ८. ९। २— ऋ० सं० ६. १. १।

वृक्कं[1] कुक्ष्युभयपार्श्वस्थमाम्राकारं मांसद्वयम्। एवं हृदयादीनि नव सम्पन्नानि ॥ १७ ॥

दशमं वक्तु माह— "गुदं त्रेधेति[2]। त्रिधाकृतेषु गुदाङ्गेषु यदतिस्थूलं तदुपयाजार्थ मवद्येत्; मध्यमं जुह्वां प्रधानहोमार्थं द्विधाकृत्वावद्येत्; यद्दणुतरं त्र्यङ्गेषु, तन्मध्ये[3] अवद्येत्[4] ॥

एकादशं दर्शयति— "गुदं त्रेधा करोतीति। "अथैकतरायै श्रोणेरिति। दक्षिणाया इत्यर्थः॥ १८॥

स्विष्टकृदर्थं माह— "अथोपभृति त्र्यङ्गस्येति। त्रीणि अङ्गानि यस्येति त्र्यङ्गम्, सौविष्टकृतं हविः। तान्येवाह— "दोष्ण इति। सव्यस्य प्रधानार्थत्वविहितत्वात्[5] दक्षिणस्य दोष्णः सकाशादित्यर्थः। 'गुदं' गुदस्याणुभागं 'द्वेधा कृत्वा' उपभृति स्विष्टकृदर्थम् 'अवद्यति' अवद्येत्। 'त्र्यङ्गायै श्रोणेः' स्विष्टकृदर्थायाः श्रोणेः सकाशात् सव्यायाः श्रोणेरित्यर्थः। प्रधानस्य इडायाश्चावदानं प्रत्यङ्गं द्विः कुर्यात्। "स्रुचोरवद्यति यथोक्तं द्विर्द्विः"—इतिसूत्रात्[6] ॥

"अथ हिरण्यशकलाविति[7]। जुह्वा मुपभृति चावत्तस्योपरि हिरण्यशकलौ स्थापयेत्, अथाभिघारयेत् ॥ १९ ॥

---

१— 'वृक्ष्यं (! वृक्कं ?)'–इति क।

२— का० श्रौ० सू० ६. ८. १०।

३— 'त्र्यङ्गेषु मध्ये'–इति क।

४— पूर्व मिदं वर्णितं टीप्पन्याम् (१३ क० २, ३, ४.)।

५— 'प्रधानार्थ मभिहितत्वात्'–इति क।

६— का० श्रौ० सू० ६. ८. ६।

७— का० श्रौ० सू० ६. ८. १० (६. ६. २४, २५ सू०)।

"अथ वसाहोमं गृह्णातीति[1]। रेडसीति[2] वसाहोमं गृह्णीयात्; हूयत इति यत् होमद्रव्यम्, तत् वसाहोमहवन्यां गृह्णीयादित्यर्थः॥

मन्त्रस्यायमर्थः— हे वसाद्रव्य! त्वं 'रेडसि' हिंसक मसि। "रिषेर्हिंसार्थस्य[3] विचि लघूपधगुणे रेड़िति रूपम्; ब्राह्मणानुगुणं लत्वादिकं कृत्वा 'लेलया'-रूपम्। "लेलयेवेति। द्रवद्रव्यत्वात् इतस्ततश्चलनं विवक्षित्वा[4] व्याख्यातम्[5]। तादृशं 'त्वा' त्वाम् 'अग्निः' 'श्रीणातु' अपयतु, तेन सह मिश्रयतु। 'आपस्त्वा समरिणन्'। "री गतिरेषणयोः"-इत्यस्य[6] लुङि रूपम्। उदकानि त्वां समतरन्नित्यर्थः; उदकैः सह सर्वाङ्गेभ्यो निस्सृतत्वात्। 'वातस्य' वायोः 'धाज्यै' गत्यै गृह्णामि। तथा 'पूष्णः' 'रंह्यै' वेगाय गृह्णामि। वाय्वादित्ययोरन्तरिक्षाश्रयत्वात् धाजिरंह्योरन्तरिक्षपरतया ब्राह्मणे व्याख्यातम्। "ऊष्मणो व्यथिषत्"-इति वसाविशेषणम्। ऊष्मा, ततः सकाशात् व्यथयतीति व्यथिषत्; तादृक् त्व मसि। तादृशं त्वां गृह्णामि॥

'रेट्'-शब्दं व्याचष्टे— "लेलयेव हि यूरिति[7]। यौति मिश्रयतीति यूः, सा 'लेलयेव'; चलनेन चेतस्ततो गमन मुपमीयते।

---

१— का० श्रौ० सू० ६. ८. ११ क।  २— वा० सं० ६. १८. २।

३— धा० प० ६९४ धा०।  ४— 'विवक्षितत्वात्'-इति छ।

५— "लेलयाशब्दस्यात्यवाचकः"-इति महीधरः। "बह्लेव पृथिवी, लेलयेवान्तरिक्षम्, लेलयेवासौ द्यौः"-इति श्रुत मिहैव पुरस्तात्, २. २. १. १६ द्रष्टव्यम्।  ६— क्र्या० प० २७ धा०।

७— "यूषशब्देन मांसेन सह पक्वं जलमुच्यते" तै० सं० १. ३. १० सा० भा०।

श्रोणावित्यस्य पाकार्थ इति व्याचष्टे— "अग्निर्ह्येतच्छ्रपयतीति। वातस्य ध्राजिः, पूष्णो रंहिरान्तरिक्षपराविति व्याचष्टे— "अन्तरिक्षं वा अथ मनुपवत इत्यादिना। ऊष्मशब्दोऽप्यन्तरिक्षपर इत्याह— "एष वा ऊष्मैतस्मा उ हि गृह्णातीति ॥ २०—२३ ॥

"अथ पार्श्वेनेत्यादि[1]। "प्रयुतं द्वेषः"-'इति'[2]मन्त्रेण 'पार्श्वेन' पार्श्वास्थिना 'असिना वा' गृहीतां वसां विभजति। 'द्वेषः' अनिष्टेभ्यः सकाशात् 'प्रयुतं' पृथक् कृतं भवति ॥ २४ ॥

"अथ यद् यूष् परिशिष्यत इति। गृहीतावशिष्टां वसां 'समवत्तधान्याम्' इडापात्र्याम् आनयेत्[3]। इडार्थं तत्र प्रधानावशिष्टानि हृदयादीनि प्रास्य पुनर्द्विरभिघारयति। 'मतस्ने' वृक्कौ। तनिमादयः प्राग् व्याख्याताः ॥ २५ ॥

अत्र सूत्रकारेण "वपावद्धिरण्यम्"-इति[4] हविषा मुभयतो हिरण्यप्रक्षेप उक्तः, तं प्रशंसति— "तद्यद्धिरण्यशकलावभितो भवत इति। एतद् वपायां व्याख्यातम् ॥ २६ ॥

प्रधानस्विष्टकृदर्थं यदवदानम्, तत् समुच्चित्य प्रशंसति— "अथ यदक्ष्णयावद्यति सव्यस्य च दोष्ण इत्यादिना। 'सव्यस्य' 'दोष्णः' भुजस्य 'दक्षिणायाः श्रोणेः च' प्रधानावदानसमये, 'दक्षिणस्य च दोष्णः' सव्यायाः श्रोणेरिति स्विष्टकृतीत्येवं सम्पद्यते। उक्तलक्षण मवदानं प्रसिद्धपशोर्यदक्ष्णया पादसञ्चरणं तन्मूल मिति प्रशंसति—

---

१— का० श्रौ० सू० ६. ८. १२।
२— वा० सं० ६. १८. ३।  ३— का० श्रौ० सू० ६. ८. १३।
४— का० श्रौ० सू० ६. ८. ११ (६. ६. २४, २५ सू०)।

"तस्मादयं पशुरह्णया पदो हरतीति। अह्णया पादश्रोण्यो-र्व्यत्यासेन[1]। उक्तं दृढयति— "अथ यत् सम्यगवद्येत् समीचो हैवायं पशुः पदो हरेदिति। अथ शिरआदीना मनवदेयत्वोप-पत्ति माख्यानमुखेन प्रदर्शयति— "अथ यन्न शीर्ष्णोऽवद्यति नांसयोरित्यादिना। अंसौ बाह्वोरुपरिप्रदेशौ। अनूको वक्षआधारः, आयतः पृष्ठास्थिविशेषः। तत्रत्य मपि मांसं नावदेयम्। तथा 'न अपरसक्थ्योः' ऊर्वोरुपरिभूतौ उच्छ्रितावयवौ सक्थ्यौ[2] ॥ २७ ॥

"असुरा ह वा इति। असुराः किल पशु मालभन्ते, त माल-भन्तं देवाः 'नोपावेयुः' नापगताः, तदा 'पृथिवी' 'एतत्' भय मासुरं 'मा दृढ्वम्' आदरं मा कार्ष्ट, 'अहं' 'वः' युष्मदर्थम् 'एतस्य' पश्वालम्भस्य 'अध्यक्षा' उपद्रष्टा 'भविष्यामि', 'यथा' येन प्रकारेण 'एते' असुराः 'एतेन' पशुना 'चरिष्यन्ति'–'इति' उक्त्वा, तथैव सम्यगवगता ॥ २८ ॥

"सा होवाचेति। तेऽसुराः 'अन्यतरा मेवाकृति मह्लौषुः' प्रधान मेव कृतवन्तः, 'अन्यतरां' स्विष्टकृतं 'पर्यशिषन्' परित्यक्त-वन्तः। परिशिष्टा का? इति, तां प्रदर्शयति— "तानीमानीति। दक्षिणं दोः, सव्या श्रोणिः, गुदतृतीयं चेति त्रीणि। 'ततः' तस्मात् असुरपरित्यक्तत्वेन दृष्टत्वात् 'अङ्गाणि' 'देवाः' प्राप्ताः। अथ यस्मात् शिरआदीनि 'अवाद्यन्', 'तस्मात्' तैरवत्तत्वेन दृष्टत्वात्

---

१— नैतद् वाक्यं ङ-च-पुस्तकयोः। "गवादयः शयनकाले अङ्गानि पादान् 'अह्नाया' वक्रत्वेनावस्थापयन्ति"–इति तै० सं० १. ३. १० सा० भा०।

२— का० श्रौ० सू० ६. ८. १२।

तानि 'नावद्येत्'। अनूकस्य प्रकारान्तरेणापि तत्त्वं दर्शयति— "त्वष्टेति। एतच्छिरसोऽप्युपलक्षणं गतम्, समानत्वात् ॥

इत्य मवदानप्रकार मुक्त्वा प्रदानप्रकार माह— "अथाग्नीषोमाभ्यां छागस्येत्यादि[1]। वपाप्रैषवदग्नीषोमीयहोमप्रैषेऽपि प्रस्थितपदं निषेधति— "न प्रस्थित मित्याहेति[2] ॥ २९ ॥

वसाहोमस्य काल माह— "अन्तरेणार्द्धर्चाविति[3]। प्रधानाहुतियाज्यायाः पूर्वार्द्धावसाने प्रतिप्रस्थाता 'वसाहोमं जुहोति'। अर्द्धर्चयोमूर्द्धभावित्वं प्रशंसति— "इतो वा अय मूर्द्ध इत्यादिना। पूर्वोत्तरार्द्धर्चौ द्युपृथिव्यात्मकौ; तथा सति 'इतः' पृथिव्याः सकाशात् उत्पन्नो 'मेधः', 'यं' साराङ्गवसेत्यादिरूप मूर्द्ध मुद्गतं मनुष्याः उपभुञ्जते, तथा 'दिवः' सकाशात् उत्थित मुदकात्मक मधो निर्गत मुपभुञ्जते। एवं स लोकद्वयसारस्यान्तरिक्षे उपभोक्तव्यत्वेनावस्थानादर्द्धर्चयोरन्तरालहोमेन द्यावापृथिव्योः 'रसेन' 'एतत्' वसाख्यं 'रसं' 'तिव्रीकरोति'। होमस्यान्तरिक्षार्थत्वाच्चार्द्धर्चयोरन्तरालं कृतवान् भवति। अतस्तीव्ररसोत्पादकत्वात् होमः कर्त्तव्य इत्यर्थः ॥ ३० ॥ ॥ ३१ ॥

वसाहोममन्त्र माह— "स जुहोति घृतं घृतपावान इति[4]। 'घृतं' क्षरणरूपं रसात्मक मिदं हविः 'घृतपावानः' घृतस्य रसद्रव्यस्य पातारः सर्वे देवाः यूयं 'पिबत'। एतदेव विशिनष्टि—

---

१, २— का० श्रौ० ६. ८. १५-१६ सूत्रे द्रष्टव्ये।

३— का० श्रौ० सू० ६. ८. १७। ४— वा० सं० ६. १९. १।

"वसां वसापावान इति। हे वसाद्रव्य! त्वम् 'अन्तरिक्षस्य हविरसि'। अन्तरिक्षस्य सर्वदेवाश्रयत्वात् अस्यापि तदर्थत्वात् अन्तरिक्षस्य देवताद्वारा अन्तरिक्षस्यैव हविष्ट्वम्। अत्र सूत्रम्— "अर्द्धर्चान्तरे याज्यायै वसैकदेशं जुहोति"-इति[1] ॥

मन्त्रस्य वैश्वदेवत्वं प्रकृतहोमसङ्गत मित्याह— "एतेन वैश्वदेवेनेति। अत्र बहुत्वलिङ्गाद् वैश्वदेवत्वं यजुषः; 'अन्तरिक्षम्' अपि सर्वासां देवानां प्राणोदानव्यापारयोराश्रयत्वेन 'वैश्वदेवम्'; अन्तरिक्षार्थश्च वसाहोमः; 'तेन' होमस्य वैश्वदेवत्वेन एतदपि वैश्वदेवं यजुरत्र युज्यत इत्यर्थः। मध्ये होतव्यं वसाहोम माह— "वषट्कृते जुहोति यानि जुह्वा मित्यादि ॥ २२ ॥

"अथ जुह्वेति[2]। 'अथ' वसाहोमानन्तरं 'जुह्वा' जुहूद्वारा 'पृषदाज्यस्य' एकदेशम् 'उपघ्नन्' अवद्यन् "वनस्पतयेऽनुब्रूहि"-'इति'[3] होतारं ब्रूयात्। वनस्पतिर्यूपाभिमानी देवः। स्पष्ट मन्यत् ॥

वनस्पतियागं यूपद्वारा पशोः सोमत्वसम्पादकत्वेन प्रशंसति— "तद्वनस्पतय इत्यादिना[4]। सोमस्यामावस्यायां वनस्पतिषु वासात् सोमस्वामिकत्वात् वनस्पतिः सोमः, अतस्तत्सम्बन्धिनं पशुं सोमं कृतवान् भवति। 'तत्' तस्मात् 'यत्' यथा 'अन्तरेण उभे आहुती' उभयोर्दैवतसौविष्टकृतयोर्मध्ये वनस्पत्याहुतिं 'जुहोति', 'तथा' 'उभयं' दैवतं सौविष्टकृतं च यूपाहुत्या 'व्याप्नोति' ॥ २३ ॥

---

१— का० श्रौ० सू० ६. ८. १७। २— का० श्रौ० सू० ६. ८. १८ क।
३— का० श्रौ० सू० ६. ८. १८ ख। ४— का० श्रौ० सू० ६. ८. १९।

स्विष्टकृत्प्रयोगप्रकार माह— "अथ यान्युपशृत्यवदानानि भवन्ति, तानि समानयमान आहेत्यादिना[१]। अङ्गापेक्षया बहुवचनम्। 'समानयमानः' जुह्वां प्रक्षिपन्॥ २४॥

वसाहोमशेषेण दिग्व्याघारणं विधत्ते— "अथ यद् वसाहोमस्य परिशिष्यते, तेन दिशो व्याघारयतीति[२]। वसाहोमस्य द्रव्यस्य 'दिशः, प्रदिशः'-इत्यादिका मन्त्राः[३]। दिशो व्याघारयतीति श्रुते-रेकैको मन्त्र एकैकदिगर्थः। 'दिशः' प्राग्दिग्भ्यः स्वाहा, 'प्रदिशः' दक्षिणदिग्भ्यः: स्वाहा, 'आदिशः' पश्चिमदिग्भ्यः स्वाहा, 'विदिशः' उत्तरदिग्भ्यः स्वाहा, 'उद्दिशः' ऊर्द्ध्वदिग्भ्यः स्वाहा, 'दिग्भ्यः' सर्वाभ्यो दिग्भ्यः 'स्वाहा'। वसाहोमो 'रसो वै' द्रवद्रव्यात्मकः खलु; दिशि दिशि सम्भृतो रसोऽभिगम्यते॥ २५॥

सम्यग्गतावयवस्य पशोः सम्मर्शनं विधत्ते— "अथ पशुं सम्मृशतीति। 'अथ' दिग्घोमानन्तरम् 'एतर्हि' अस्मिन् काले पशु-सम्मर्शनं कुर्यात्[४]॥

विशसनानन्तरकालस्यैतस्य व्यवस्थां दर्शयति— "अथ यत् पुरा सम्मृशतीति। 'ये' च राक्षसाः 'इमे'[५] मदीयं यज्ञम् 'उपतिष्ठन्ते'

---

१— का० श्रौ० सू० ६. ८. २०।

२— का० श्रौ० सू० ६. ८. २१ (४. ४. १६, १७ सू०), २२।

३— वा० सं० ६. १९. २–७।

४— अत्र का० श्रौ० ६. ८. २२ सू० वृ० द्रष्टव्या।

५— 'मे' इति भाष्यपुस्तकेषु त्रिष्वेव। "य इमे उपतिष्ठन्ते मार्जारादयः, ते विमथिष्यन्ते इति शङ्कमानः"–इति हरिस्वामिनः।

प्राप्नुवन्ति, 'ते' पशुं 'विमथिष्यन्ते' 'इति' 'शङ्कमानः' चेत्, पूर्वस्मिन्नेव काले सम्मृशेत्; अतथाभूतश्चेत् अत्रैव दिग्घोमानन्तर-काले सम्मृशेत्। अत्र सूत्रम्— "ऐन्द्रः प्राण इति पशुं सम्मृशत्य-वदाय वेडां प्राक् प्रदानात्"-इति[1] ॥ २६ ॥

सम्मर्शने मन्त्र माह— "ऐन्द्रः प्राणोऽङ्गेऽङ्गे निदीध्यदिति[2]। इन्द्रः परमात्मा, तत्सम्बन्धी 'ऐन्द्रः' 'प्राणः'। हे पशो! ते 'अङ्गे-अङ्गे' सर्वेष्वङ्गेषु 'निदीध्यत्' नितरां दीप्तो भवतु, दीव्यतु वा। एवं व्यानोऽपि। अत्र सर्वत्र अपानस्थाने उदानव्यवहारः। हे 'त्वष्टः' पशुरूपकर्त्तः! 'देव!' "त्वष्टा वै पशूनां मिथुनानां रूपकृत्"-इति श्रुतिः[3]। 'ते' तव पशोः, 'यत्' अङ्गच्छेदनेन 'सत्त्वम्', अत एव 'विषुरूपं' 'भवाति' भवति, तत् 'ते' त्वत्सम्बन्धि 'सम्' सम्यक्, पूर्वस्मादपि 'भूरि' प्रभूतं 'समेतु' सङ्गतो भवतु। पूर्वं यादृश-संवेशनविशिष्टम्, तादृशसंवेशनविशिष्टं भवेदिति; प्रवृद्धं भवत्वि-त्यर्थः। किञ्च 'देवत्रा' देवेषु मध्ये 'यन्तं' गच्छन्तम्। किमर्थम्? 'अवसे' अस्माकं रक्षणाय, देवानां प्रीतये वा यन्तं त्वां सखि-प्रभृतयः 'अनुमदन्तु' साधु जात मिति कथयन्त्वित्यर्थः॥

क्रमेण विभज्य व्याचष्टे— "यदङ्गशो विकृत्त इत्यादिना। "कृत्स्नवृत मेवैतत् करोतीति। 'एतत्' पशुद्रव्यम्। यद्वा 'एतत्' एतेन "देव त्वष्टः"-इतिमन्त्रेण[4] वागुच्चारणसामर्थ्येन कृत्स्नैरङ्गैः वृतं व्याप्तं करोति, 'यत्र' यस्मिन् प्रदेशे 'एनं' पशुम् 'अक्षैषीत्',

---

१— का० श्रौ० सू० ६. ६. १।  २— वा० सं० ६. २०. १।
३— तै० सं० ६. ३. ११. ५।  ४— वा० सं० ६. २०. २।

'तत्' तेन 'एनं कृत्स्नं कृत्वा' विकलं सकलं कृत्वा 'अनु समस्यति' गतप्राणेन त्वगस्थिमांसेन सह प्राणान् अङ्गानि चानुक्रमेण सङ्घट्टनं कृतवान् भवति। तेन 'सः' पशुः 'अमुष्मिन्' स्वर्गे लोके 'सात्मा' सजीवो 'भवति'[१] ॥ २७ ॥ ४ [८. ३.] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डेऽष्टमाध्याये तृतीयं ब्राह्मणम् ॥

---

[ अथ चतुर्थं ब्राह्मणम्. ]

त्रीणि ह वै पशोरेकादशानि। एकादश प्रयाजा एकादशानुयाजा एकादशोपयजो दश प्राण्या अङ्गुलयो दश पाद्या दश प्राणाः प्राण उदानो व्यान इत्येतावान्वै पुरुषो यः पराङ्घ्यः पशूनां यः सर्वेऽनु पशवः ॥ १ ॥

तदाहुः। किं तद्यज्ञे क्रियते येन प्राणः सर्वेभ्यो ऽङ्गेभ्यः शिव इति ॥ २ ॥

---

१— इडायाश्च सयजमानानां सप्ता ऋत्विजां भक्षणं सिद्धैवोक्तम् ( का० श्रौ० सू० ५. ५. २६, २७ ; ३. ६. ४, ५, ६ )। वनिष्ठु मग्नीधे, अध्यूध्नीं होत्रे, क्लोमं ब्रह्मणे, पुरीततं मध्वर्यवे, प्लीहं यजमानाय। सर्वत्र ददातीति प्रैषः। आपस्तम्बे तु "उपहूतां मैत्रावरुणषष्ठा भक्षयन्ति, प्रतिप्रस्थाता सप्तमः"—इति ॥

यदेव गुदं त्रेधा करोति। प्राणो वै गुदः सोऽयं प्राङ्गाततस्त मयं प्राणोऽनुसञ्चरति ॥ ३ ॥

स यदेव गुदं त्रेधा करोति। तृतीय मुपयड्भ्यस्तृतीयं जुह्वां तृतीय मुपभृति तेन प्राणः सर्वेभ्यो ऽङ्गेभ्यः शिवः* ॥ ४ ॥

स ह त्वेव पशु मालभेत। य एनं मेध मुपनयेद्यदि-कृशः स्याद्यदुदर्य्यस्य मेदसः परिशिष्येत तद्गुदे न्यृषेत् प्राणो वै गुदः सोऽयं प्राङ्गाततस्त मयं प्राणोऽनु-सञ्चरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत् पशुरथ यदास्मात् प्राणोऽपक्रामति दार्वेव तर्हि भूतो-ऽनर्थ्यः शेते ॥ ५ ॥

गुदो वै पशुः†। मेदो वै मेधस्तदेनं मेध मुपनयति यद्यु ऽअꣳसलो भवति स्वय मुपेत एव तर्हि मेधं भवति ॥ ६ ॥

अथ पृषदाज्यं गृह्णाति। द्वयं वा ऽइदꣳ सर्पिश्चैव दधि च द्वन्द्वं वै मिथुनं प्रजननं मिथुन मेवैतत् प्रजननं क्रियते ॥ ७ ॥

तेनानुयाजेषु चरति। पशवो वा ऽअनुयाजाः पयः पृषदाज्यं तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो

---

* 'शिवः'—इति ग, घ। † 'शु'—इति ग, घ।

हितं प्राणो हि पृषदाज्य मन्नꣳ हि पृषदाज्य मन्नꣳ हि प्राणः* ॥ ८ ॥

तेन पुरस्तादनुयाजेषु चरति। स योऽयं पुरस्तात् प्राणस्त मेवैतद्दधाति तेन पश्चादुपयजति स योऽयं पश्चात् प्राणस्त मेवैतद्दधाति ताविमा उभयतः प्राणौ हितौ यश्चाय मुपरिष्टाद्यश्चाधस्तात् ॥ ९ ॥

तद्वा एतदेको द्वाभ्यां व्वषट्करोति। अर्ध्वर्युर्वे च यश्चैष उपयजत्यथ यद्यजन्त मुपयजति तस्मादुपयजो नामाथ यदुपयजति प्रैवैतज्जनयति पश्चाद्ध्युपयजति पश्चाद्धि योषायै प्रजाः प्रजायन्ते ॥ १० ॥

स उपयजति। समुद्रं गच्छ स्वाहेत्यापो वै समुद्र आपो रेतो रेत एवैतत्सिञ्चति ॥ ११ ॥

अन्तरिक्षं गच्छ स्वाहेति। अन्तरिक्षं वा अनु प्रजाः प्रजायन्तेऽन्तरिक्ष मेवैतदनु प्रजनयति ॥ १२ ॥

देवꣳ सवितारं गच्छ स्वाहेति। सविता वै देवानां प्रसविता सवितृप्रसूत एवैतत् प्रजनयति ॥ १३ ॥

मित्रावरुणौ गच्छ स्वाहेति। प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवैतत् प्रजासु दधाति ॥ १४ ॥

---

* 'णः'–इति ग घ।

अहोरात्रे गच्छ स्वाहेति। अहोरात्रे वा ऽअनु प्रजाः प्रजायन्ते ऽहोरात्रे ऽएवैतदनुप्रजनयति ॥ १५ ॥

छन्दाᳬंसि गच्छ स्वाहेति। सप्त वै छन्दाᳬंसि सप्त-ग्राम्याः पशवः सप्तारण्यास्तानेवैतदुभयान् प्रजन-यति ॥ १६ ॥

द्यावापृथिवी गच्छ स्वाहेति। प्रजापतिर्वै प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात्ता इमा द्यावा-पृथिवीभ्यां परिगृहीतास्तथो ऽएवैष एतत्प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां परिगृह्णाति ॥ १७ ॥

अथात्युपयजति। स यन्नात्युपयजेद् यावत्यो हैवाग्रे प्रजाः सृष्टास्तावत्यो हैव स्युर्न प्रजायेरन्नथ यदत्युपयजति प्रैवैतज्जनयति तस्मादिमाः प्रजाः पुन-रभ्यावर्त्तं प्रजायन्ते* ॥ १८ ॥ ५ ॥

॥ इति षष्ठप्रपाठके पञ्चमं ब्राह्मणम् [८. ४.] ॥

प्राणस्य श्रेष्ठत्वकरणाभिमुखेन गुदस्य प्रधानस्विष्टकृदुपयड्भ्यर्थं त्रेधा विभज्य विनियोगं प्रशंसन् प्रयाजादीना मितराङ्गल माह— “त्रीणि ह वै पशोरेकादशानीत्यादिना। प्रयाजा अनुयाजाश्च

---

* 'न्ते'–इति ख, 'न्ते'–इति ग, घ।

एकादशैकादश प्रसिद्धाः, अनुयाजानन्तरं यष्टव्या एकादशोपयाजा[1] उपरिष्टादाम्नास्यन्ते[2]; एकादशत्रयं मिलित्वा त्रयस्त्रिंशत् सम्पद्यन्ते। पशुसूक्तस्य पुरुषस्य द्विपात्पशोरपि शीर्षण्याः प्राणाः सप्त, अवाञ्चौ द्वौ, नाभिर्दशमीति 'दश प्राणाः'। ते च पाणिपादगत-विंशत्यङ्गुलिभिः सहिताः त्रिंशद् भवन्ति; प्राण उदानो व्यान इति त्रयो मुख्यप्राणाः; इति त्रयस्त्रिंशत् एव सन्ति यज्ञा-ङ्गानि ॥ १ ॥

"तदाहुरिति। 'शिवः' श्रेष्ठः। पुरुषपशोर्हस्तपादाङ्गुलयः प्राणरूपाङ्गानि भवन्ति; तथा च मुख्यप्राणस्यापीतराङ्गुलिवत् साधारण्य मेव प्राप्तम्, न श्रेष्ठत्वम्; अतो यज्ञे सर्वेभ्योऽङ्गेभ्यः सकाशात् प्राणस्य श्रेष्ठत्वं केन प्रकारेण कृत मिति प्रश्नः ॥ २ ॥

तस्योत्तर मुच्यते— "यदेव गुदं त्रेधा करोतीत्यादि। तस्मात् प्राणसञ्चरणाधिष्ठानत्वात् 'प्राणः' एव 'गुदः' (॥३॥) तस्य प्रधान-स्विष्टकृदुपयड्भेदेन त्रिषु स्थानेषु विभज्य विनियोग एव सर्वेभ्यो-ऽङ्गेभ्यः श्रेष्ठत्वकारण मित्यर्थः ॥ ३, ४ ॥

अथ गुदस्य प्राणत्वेन श्रेष्ठत्वाभिधानप्रसङ्गात् यदि कथञ्चित् तत्पशोः कृशत्वं स्यात्, तर्हि गुदस्य सम्पूर्णत्वाय उदर्यं मांसं तेन

---

१— 'एकादशोपयज'–इति क।

२— इत उत्तरस्मिन्नेव ब्राह्मणे दशमकण्डिकायां "समुद्रं गच्छ"–इत्यादि-मन्त्रेष्विति भावः। अत एवोक्तं मैतरेयभाष्ये "समुद्रं गच्छ स्वाहेत्यादि-मन्त्रोक्ताः समुद्रादय एकादशोपयाजमन्त्राः"–इति (२. २. ८.)।

सह मिश्रणीय मित्याह— “स ह त्वेव पशु मालभेतेत्यादिना। ‘सः’ एव ‘पशु मालभेत’, ‘यः’ यजमानः ‘एनं’ ‘मेधं’ मेधार्हम् प्रवृद्धम् पशुम् ‘उपनयेत्’ उपगच्छेत्, प्राप्नुयात्। अय मेव मुख्यः पक्षः। ‘यदि’ पशुः ‘कृशः स्यात्’ तदा अकरणात् करणस्य श्रैष्ठ्यात् वक्ष्यमाणप्रकारं कुर्यात्। ‘उदर्यस्य’ उदरे भव मुदर्यम्, तस्य ‘मेदसः’ सकाशात् इडार्थं मुद्धृत्य यन्मांसं ‘परिशिष्येत’, ‘तत्’ आदाय अत्मीयस्मि ‘गुदे’ ‘न्यृषेत्’ गमयेत्, तेन तं प्रवर्द्धये-दित्यर्थः। “प्राणो वै गुद इत्यादि, व्याख्यातम् ॥ ५ ॥

“गुदो वै पशुरिति। ‘यद्यु’ यद्यपि पशुः ‘अंसलः’ प्रवृद्धांसः, पुष्टाङ्गो भवेत्, ‘तर्हि’ ‘स्वयम्’ एव ‘मेधं’ प्राप्तवान्’ ‘भवति’ ॥ ६ ॥

अनुयाजार्थं पृषदाज्यग्रहणं विधाय प्रशंसति— “अथ पृषदाज्यं गृह्णातीत्यादिना। ‘इदं’ वक्ष्यमाणं द्वयं खलु ‘द्वन्द्वम्’। इदं शब्दार्थ माह— “सर्पिश्चैव दधि चेति। अस्तु द्वयम्, ततः किं मित्याह— “द्वन्द्वं वै मिथुन मिति। तच्च ‘प्रजननम्’ अन्यस्यो-त्पादकम्। अतः पृषदाज्यग्रहणेन प्रजननमिथुन मेव कृतवान् भवति ॥ ७ ॥

“तेनानुयाजेष्विति। ‘तेन’ पृषदाज्येन ‘अनुयाजेषु चरति’ अनुयाजान् यजेदित्यर्थः। तदुभयं प्रशंसति— “पशवो वा अनु-याजा इति। अनुयाजानां फलोपभोगहेतुत्वात् पशुत्वम्, पयो-विकारत्वात् ‘पृषदाज्यम्’ एव ‘पयः’; ‘तत्’ तेनानुयाजानुष्ठानेन ‘पशुषु’ ‘एव’ पयःस्थापनम् ‘भवति’ ॥

विहितान् अनुयाजान् विधास्यमानैरुपयड्भिः सह पुरस्तादुप-

रिष्टाच्च विधास्यन् प्रशंसति— "प्राणो हि पृषदाज्य मिति। 'हि'-शब्दद्योत्यां प्रसिद्धि मुपपादयति— 'पृषदाज्यं' तावत् 'अन्नम्', तत् 'अन्नं' व्यतिरेकानविधायित्वात् 'प्राणः'; अतः 'पृषदाज्यं प्राणः' ॥ ८ ॥

"तेन पुरस्तादिति। उपयड्भ्यः 'पुरस्तात् अनुयाजेषु' पृषदाज्यानुष्ठानेन पुरस्तात्-प्राणं मुखस्थ मपानं पशौ निहितवान् भवति; 'पश्चात्' उपयडनुष्ठानस्य पश्चात्-'प्राणम्' उदानाख्यं पशौ स्थापितवान् भवति। मिलित्वा 'यः' 'अयम्' 'उपरिष्टाच्चाधस्ताच्च' प्राणः, तत् प्राणद्वयं स्थापितवान् भवति ॥ ९ ॥

"तद्वा एतदित्यादि। 'एकः' होता, 'द्वाभ्याम्' 'अध्वर्यवे' 'उपयष्ट्रे' प्रतिप्रस्थात्रे[1] 'च', प्रयाजार्थम् उपयड्यागार्थं च 'वषट्' कुर्यात् ॥

उपयाजं नामनिर्वचनेन प्रशंसति— "अथ यत् यजन्तम् उपयजति, तस्मात् उपयजो नामेति। 'यजन्तम्' अध्वर्युम् 'उप'लक्ष्य एतान्यङ्गानि प्रतिप्रस्थाता 'यजति' इति पश्चाद्यष्टव्या उपयज इत्यर्थः[2] ॥

"अथ यदुपयजति प्रैवैतज्जनयतीति। पृषदाज्यरूपैरनुयाजैः प्रजननस्य कृतत्वात् उपयड्भिर्जनयति। कथ मेतेन प्रजनयति? उच्यते— "पश्चाद्ध्युपयजतीति। योषायाः पश्चाद्भागेन प्रजा उत्पद्यन्ते ॥ १० ॥

---

१— उपयष्टा = प्रतिप्रस्थाता।

२— "विजुपे छन्दसि"—इति पा० सू० ३. २. ७३।

"स उपयजतीति[1]। "समुद्रं गच्छ"–इत्यादय उपयड्याग-मन्त्राः[2]। हे गुदावयवरूप, हविः! त्वं 'समुद्रं' समुद्राभिमानिनं देवं 'गच्छ', 'स्वाहा' इदं द्रव्यं सुहुत मस्तु। एव मुत्तरत्रापि द्रष्टव्यम्। एषु मन्त्रेषु मध्ये यत्र देवता स्पष्टं न प्रतिभाति, तत्र तदभिमानिदेवता द्रष्टव्या॥

उपयाजानां प्रजननरूपत्वस्योक्तत्वात् अनुकूलप्रयत्नपरतया मन्त्रान् व्याचष्टे– "आपो वै समुद्र आपो रेत इति। पदार्थस्तु स्पष्ट एव॥

अत्र कात्यायनः– "शामित्रादङ्गारानाहृत्य वेदिश्रोण्यां निव-पत्युत्तरस्याम्, आग्नीध्रीयाद्वा सोमे होतृधिष्ण्ये, प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेद मनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रम्[1] प्रतिवषट्कारम्"–इति[3]॥ ११–१७॥

अत्युपयाजं विधत्ते– "अथात्युपयजतीति। अत्युपयाजनामका-श्चत्वार उपयागाः सप्तकाना मनन्तर माधिक्येन यष्टव्याः[4]। विहितानत्युपयागानन्वयव्यतिरेकाभ्यां पुनः पुनः प्रजाभिवृद्धि-

१– का॰ श्रौ॰ सू॰ ६. ९. १०।

२– वा॰ सं॰ ६. २१. १–११।

३– का॰ श्रौ॰ सू॰ ६. ८. ८–११।

४– 'अत्युपयड्ढोमकाश्चत्वार उपयागसप्तकाना मनन्तर माधिक्येन यष्टव्याः'–इति क।

हेतुतया प्रशंसति— "स यन्नात्युपयजेद् यावत्यो हैवाग्रे प्रजाः सृष्टा इत्यादिना[1] ॥ १८ ॥ ५ [८. ४.] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डेऽष्टमेऽध्याये चतुर्थं ब्राह्मणम् ॥

## ॥ इति तृतीयकाण्डे षष्ठः प्रपाठकः समाप्तः[2] ॥

---

१— तै०सं० ६. ३. ११. १५–१७; ४. १. १–१४; १. ३. १०, ११।

२— "काण्डीसङ्ख्या ११२"–इति क; "कण्डिकाः ११२"–इति ख; "कण्डिकासङ्ख्या ११२"–इति ग, घ। तत्र १ ब्रा० ११ क०, २ ब्रा० १६ क०, ३ ब्रा० ३० क०, ४ ब्रा० ३७ क०, ५ ब्रा० १८ क०; सङ्कलनया ११२ इति सिद्धम्।

# अथ

## सप्तमप्रपाठके प्रथमं ब्राह्मणम्,

## अपि वा

## अष्टमाध्याये पञ्चमं ब्राह्मणम् ।

॥ हरि ॐ ॥

सोऽत्युपयजति । यज्ञं गच्छ स्वाहेत्यापो वै यज्ञ आपो रेतो रेत एवैतत् सिञ्चति ॥ १ ॥

सोमं गच्छ स्वाहेति । रेतो वै सोमो रेत एवैतत् सिञ्चति ॥ २ ॥

दिव्यं नभो गच्छ स्वाहेति । आपो वै दिव्यं नभ आपो रेतो रेत एवैतत् सिञ्चति ॥ ३ ॥

अग्निं वैश्वानरं गच्छ स्वाहेति । इयं वै पृथिव्यग्नि-र्वैश्वानरः सेयं प्रतिष्ठेमा मेवैतत्प्रतिष्ठा मभिप्रजन-यति ॥ ४ ॥

अथ मुखं विमृष्टे । मनो मे हार्दि यच्छेति तथो होपयुष्टात्मानं नानुप्रहणक्ति ॥ ५ ॥

अथ जाघन्या पत्नीः संयाजयन्ति। जघनार्द्धो वै जाघनी जघनार्द्धाद्वै योषायै प्रजाः प्रजायन्ते तत्प्रैवै-तज्जनयति यज्जाघन्या पत्नीः संयाजयन्ति ॥ ६ ॥

अन्तरतो देवानां पत्नीभ्यो ऽवद्यति। अन्तरतो वै योषायै प्रजाः प्रजायन्त ऽउपरिष्टादग्नये गृहपतय ऽउपरिष्टाद्वै वृषा योषा मधिद्रवति ॥ ७ ॥

अथ हृदयशूलेनावभृथं यन्ति। पशोर्ह वा ऽआलभ्य-मानस्य हृदयꣳ शुक् समभ्यवैति हृदयाद्धृदयशूल मथ यच्छृतस्य परितृन्दन्ति तदलञ्जुषं तस्माद परितृद्यैव शूलाकुर्यात् तत् चिःप्रच्युते पशौ हृदयं प्रवृह्योत्तमं प्रत्यवदधाति ॥ ८ ॥

अथ हृदयशूलं प्रयच्छति। तन्न पृथिव्यां परास्ये-न्नाप्सु स यत् पृथिव्यां परास्येदोषधीश्च वनस्पतींश्चैषा शुक् प्रविशेद्यदप्सु परास्येदप एषा शुक् प्रविशेत् तस्मान्न पृथिव्यां नाप्सु ॥ ९ ॥

अप एवाभ्यवेत्य। यत्र शुष्कस्य चार्द्रस्य च सन्धिः स्यात् तदुपगूहेद् यद्य ऽअभ्यवायनाय ग्लायेदग्रेण यूप मुदपात्रं निनीय यत्र शुष्कस्य चार्द्रस्य च सन्धिर्भवति तदुपगूहति मापो मौषधीर्हिꣳसीरिति तथा नापो नौषधीर्हिनस्ति धाम्नो धाम्नो राजंस्ततो वरुण नो

मुञ्च। यदाहुरघ्न्या इति व्वरुणेति शपामहे ततो व्वरुण नो मुञ्चेति तदेनꣳ सर्व्वस्माद्वरुणपाशात् सर्व्वस्माद्वरुण्यात् प्रमुञ्चति* ॥ १० ॥

अथाभिमन्त्रयते। सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च व्वयं द्विष्म इति यत्र वा ऽएतेन प्रचरन्त्यापश्च ह वा ऽअस्मात्तावदोषधयश्चापक्रम्येव तिष्ठन्ति तदु ताभिर्मित्रधेयं कुरुते तथो हैनं ताः पुनः प्रविशन्त्येषो तत्र प्रायश्चित्तिः क्रियते स वै नाग्नीषोमीयस्य पशोः करोति नाग्नेयस्य व्वशाया ऽएवानूबन्ध्यायै ताꣳ हि सर्व्वोऽनु यज्ञः सन्तिष्ठत ऽएतदु हास्याग्नीषोमीयस्य पशोराग्नेयस्य च हृदयशूलेन चरितं भवति यद्वशायाश्चरन्ति ॥ ११ ॥ १ ॥

॥ इति सप्तमप्रपाठके प्रथमं ब्राह्मणम् [८. ५.] ॥

अत्युपयाजमन्त्रान् विधाय पुनः स्रुच्यभिवृद्धिहेतुतया प्रशंसति—"सोऽत्युपयजति यज्ञं गच्छ स्वाहेत्यादिना। "यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य रसो द्रुत्वापः प्रविवेश"–इति[१]–वक्ष्यमाणत्वात् यज्ञ-रसानुप्रवेशेन यज्ञस्याप्रूपत्वम् ॥ १ ॥

---

* 'ति'–इति ख।

१— एतत्प्रपाठकीयतृतीयब्राह्मणारम्भो द्रष्टव्यः।

"सोमं गच्छेति। सोमस्य रसात्मकत्वाद्दौषधित्वाद्दौषधिविकारत्वाद्वा रेतस्त्वम् ॥ २ ॥

दिव्यं नभ इति। 'दिव्यं नभः' लोकः; ततो वृष्ट्युत्पत्तेस्तस्यारूपत्वम्; अधिष्ठानाधिष्ठात्रोरभेदोपचारात् ॥ ३ ॥

"अग्निं वैश्वानर मिति। पृथिव्यग्निर्वैश्वानर इत्युच्यते[1], तस्य सर्वगतत्वेन प्रतिष्ठारूपत्वं स्पष्ट मेव ॥ ४ ॥

"अथ मुखं विमृष्टे[2] मनो मे हार्दीत्यादि[3]। मुखविमर्शनमन्त्रस्याय मर्थः।— हे प्राणरूप गुद! 'मे' 'हार्दि' हृदयसम्बन्धि 'मुखं' 'यच्छ'। यद्वा 'हार्दि' हृदये स्थापितम्। पशोः प्राणरूपस्य गुदस्य विच्छिद्य होमात् उपयष्टुः मनोऽपि प्राणाविनाभूतं गच्छति, अत एवं प्रार्थ्यते। "तया होपयष्टेति। स्पष्टम् ॥ ५ ॥

"अथ जाघन्या पत्नीः संयाजयन्तीति[4]। जाघनी वालदण्डः, तया[5] 'पत्नीः' पत्न्युपलक्षिताः सोमत्वष्ट्राद्या देवताः संयाजयेत्। "जघनार्द्धा वै जाघनीत्यादि, स्पष्टम् ॥ ६ ॥

---

१— अत्र "वैश्वानरः कस्मात्?"–इत्यादि, "सोऽग्निर्वैश्वानरो निपात मेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते-भजेते"–इत्यन्तं (७. २१–३१.) नैरुक्तं द्रष्टव्यम्। २— का० श्रौ० सू० ६. ९. ११।
३— वा० सं० ६. २१. १२। ४— का० श्रौ० सू० ६. ९. १४।
५— "जाघन्या पशोः पुच्छरूपेण हविषा"–इति का० वृ०। अन्यत्र च तत्रैव "जाघनी जघनप्रदेशे भवा पुच्छदण्ड इत्यर्थः। अधिकरणमालाया मप्येव मेव ( ३. ३. १८. जै० )। "जाघनी कटी"-इति पितृभूतिहरिहरौ, तदिह न सङ्गच्छते; कटिपर्यायश्रोण्योः प्रागुपात्तत्वात्।

जाघन्या अपि प्रदेशविशेष माह— "अन्तरतो देवानां पत्नीभ्यो-ऽवद्यतीति[1]। देवानां पत्नीभ्य इति चतुर्थी, तासा मर्थाय। 'अन्तरतः' ऊर्द्ध मुत्थितस्य बालस्य 'अन्तरतः' अलोमक-प्रदेशादित्यर्थः। "उपरिष्टादग्नये गृहपतय इति। सरोमके वाह्यप्रदेशे[2] ॥ ७ ॥

"अथ हृदयशूलेनेत्यादि[3]। हृदयस्य पश्चात् शूलेन परितर्द्दने 'तत्' जोषाय भक्षणाय 'अलं' पर्याप्तं भवति; शुगनुविद्धत्वात् न यागार्हं स्यादित्यर्थः। तस्मात् पाकात् पूर्वं शूलं 'परिहृत्य' पाकं कुर्यात्। "शूलात् पाके"-इति[4] डाजन्तः। पाकात् पूर्वं शूलेन परितर्द्दनात् 'शुक्' हृदयशूलं प्राप्नोतीत्यर्थः। 'त्रिः प्रच्युते पशौ' पाकोत्तरकालं 'हृदयं' शूलात् 'प्रवृह्य' 'उत्तमं प्रत्यवदधाति' इतरावयवाना मुपरि स्थापयेत् ॥ ८ ॥

"अथ हृदयशूलं प्रयच्छतीति[5]। परिकर्मिणे प्रयच्छति। स 'तत्' शूलं 'पृथिव्याम्' 'अप्सु' च 'न परास्येत्'। परास्यतो दोष माह— "ओषधीश्चेति। 'ओषधीश्च वनस्पतींश्च एषा शुक् प्रवि-शेत्', 'यत्' यदि 'पृथिव्यां परास्येत्'। तस्मा मुत्पन्नेष्वोषधिवन-स्पतिषु प्रवेशो युक्तः ॥ ९ ॥

---

१— का० श्रौ० सू० ६. ९. १५।

२— सूत्रेऽत्रास्ति विशेषविधिस्स्व का० श्रौ० सू० ६. ९. १४–२०।

३— का० श्रौ० सू० ६. १०. १, २।

४— पा० सू० ५. ४. ६५।  ५— का० श्रौ० सू० ६.१०. ४।

उक्तदोषाभावोपाय माह— "अप एवेति[1]। 'अपः' सम्प्राप्य 'यत्र' देशे अतीवारसः सरसश्च न भवति, 'तत्' तत्र 'अपगूहेत्'। अपा मेवातिदूरत्वे उपायान्तर माह— "यद्यु इति। यदाब्विषये ग्लानिं प्राप्नुयात्, तदा यूपस्य प्राग्देशे उदपात्रनिनयनं कृत्वा, तत्रापीषदार्द्रदेशे उपगूहेत्। तत्र मन्त्रः[2]— "मापो मौषधी-र्हिंसीः"—इति'[3]। हे शूल! अपा मोषधीनाञ्च हिंसां मा कुरु। ईषदार्द्रे उपगूहनादपां हिंसाप्रसङ्गः, पृथिव्या मुपगूहनात् तदीयौष-धीनां बाधप्रसङ्गः; अतस्तत्रोभयत्र हिंसापरिहारः प्रार्थ्यते॥

तत्र मन्त्रः— "धाम्नो धाम्नो राजन्निति[4]। निगूहनस्य बन्धन-रूपत्वात्, तस्य वरुणाधिष्ठातृकत्वात् वरुणस्य सम्बोधनम्— हे 'राजन्' वरुण! यस्मिन् पापरूपबन्धने अवस्थाने बद्धा स्मः, 'ततः' तस्मात् बन्धस्थानाद् 'नः' अस्मान् 'मुञ्च' पापेन विमुक्तान् कुरु। 'यत्' यस्मिन् आगसि सम्भाविते, आगस्कर्त्तारोऽपि 'अघ्न्याः' अहन्तव्याः, रक्षणीयाः 'इति' 'आहुः' मनुष्याः[5] ॥ १० ॥

---

१— का० श्रौ० सू० ६. १०. ३, ६।

२— अत्र मन्त्रद्वयं दृश्यते सूत्रे, तत्रैकस्तत्रैव पठितोऽपरः प्रतीकग्रहणेन विहितः। तद्यथा— "शुगसि त मभिशोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मो मापो मौषधीरिति"—इति। महीधरेणाप्युक्तम् "शुगसि माप इति मन्त्राभ्या मिति"—इति।

३— वा० सं० ६. २२. १। ४— वा० सं० ६. २२. २।

५— "अघ्न्या इति गोनाम, प्रकरणादिहानूबन्ध्याविषयम्। बहुवचन मनूबन्ध्याबहुत्वेऽर्थवत्। एकानूबन्ध्यापक्षे तु पूजार्थम्"—इतीह महीधरः।

प्रार्थ्यते— "अथाभिमन्त्रयन्त इति[1]। अध्वर्युप्रभृतयः। "सुमित्रिया न इति[2]। 'नः' अस्मदर्थम् 'आपः ओषधयः' च 'सुमित्र्याः' शोभनमित्रेषु साधवः 'सन्तु' हितकारिण्यो भवन्तु। 'यः' 'अस्मान् द्वेष्टि' अस्मासु द्वेष माचरति, 'यं च वयं द्विष्मः', 'तस्मै' तदर्थं 'दुर्मित्र्याः सन्तुः' द्वेषिण्यो भवन्तु॥ अत्र सूत्रकारः— "सुमित्रिया न इत्युपस्पृशन्त्यपः, उपगूहनशेषो वा पूर्वः, अभिमन्त्रणं वोत्तरेण"-इति[3]॥

एतत् प्रशंसति— "यत्र वा एतेनेति। 'एतेन' हृदयशूलनिगूहनेन 'आपश्च' 'ओषधयश्च' 'अस्मात्' स्थानात् 'अपक्रम्य' अपसृत्य 'इव' 'तिष्ठन्ति'। 'तदु' तस्मादेव कारणात् 'ताभिः' सह "सुमित्र्या"-इतिपाठेन मित्रत्वं कृतवान् भवति। स्पष्ट मन्यत्॥

शूलोपगूहनं विषयविशेषे[4] निषेधति— "स वै नाग्नीषोमीयस्य पशोः करोतीत्यादिना। 'स वै' सोऽध्वर्युः। "न सोमेऽनूबन्ध्यावर्जम्"-इति[5] सूत्रम्॥ ११॥ १ [८. ५.]॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे अष्टमेऽध्याये पञ्चमं ब्राह्मणम्॥

---

१— का० श्रौ० सू० ६. १०. ५। २— वा० सं० ६. २२. ३।
३— का० श्रौ० सू० ६. १०. ५, ६, ७।
४— 'शूलोपगूहने विषयविशेषं'-इति क।
५— का० श्रौ० सू० ६. १०. ८।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ८ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गनार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गनार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे अष्टमाध्यायः समाप्तः ॥ ८ ॥

---

[ अथ नवमाध्याये प्रथमं ब्राह्मणम्. ]

प्रजापतिर्व्वै प्रजाः ससृजानो रिरिचान इवामन्यत। तस्मात्पराच्यः प्रजा आसुर्नास्य प्रजाः श्रियेऽन्नाद्याय तस्थिरे ॥ १ ॥

स ऐक्षतारिक्ष्यहम्। यस्माउ* कामायासृक्षि न मे स कामः समार्द्धि पराच्यो मत्प्रजा अभूवन् न मे प्रजाः श्रियेऽन्नाद्यायास्थिषतेति ॥ २ ॥

स ऐक्षत प्रजापतिः। कथं नु पुनरात्मान माप्याययेयोप मा प्रजाः समावर्त्तेरंस्तिष्ठेरन्मे प्रजाः श्रियेऽन्नाद्यायेति ॥ ३ ॥

सोऽर्चञ्छ्राम्यंश्चचार प्रजाकामः। स एता मेकादशिनी मपश्यत् स एकादशिन्येष्ट्वा प्रजापतिः पुनरात्मान माप्याययतोपैनं प्रजाः समावर्त्तन्तातिष्ठन्तास्य प्रजाः श्रियेऽन्नाद्याय स व्वसीयानेवेष्ट्वाभवत् ॥ ४ ॥

तस्मै क मेकादशिन्या यजेत। एवꣳ हैव प्रजया पशुभिराप्यायत उपैनं प्रजाः समावर्त्तन्ते तिष्ठन्तेऽस्य प्रजाः श्रियेऽन्नाद्याय स व्वसीयानेवेष्ट्वा भवत्येतस्मै क मेकादशिन्या यजते ॥ ५ ॥

---

* 'अस्माउ'—इति ग, घ।

स आग्नेयं प्रथमं पशु मालभते। अग्निर्वै देवतानां मुखं प्रजनयिता स प्रजापतिः स उ एव यजमान-स्तस्मादाग्नेयो भवति* ॥ ६ ॥

अथ सारस्वतम्†। वाग्वै सरस्वती वाचैव तत्प्रजापतिः पुनरात्मान माप्याययत वागेन मुपसमावर्त्तत वाच मनुकामात्मनोऽकुरुत वाचो एवैष एतदाप्यायते वागेन मुपसमावर्त्तते वाच मनुका मात्मनः कुरुते ॥ ७ ॥

अथ सौम्यम्‡। अन्नं वै सोमोऽन्नेनैव तत्प्रजापतिः पुनरात्मान माप्याययतान्न मेन मुपसमावर्त्ततान्न मनुक मात्मनोऽकुरुतान्नेनो एवैष एतदाप्यायतेऽन्न मेन मुपसमावर्त्ततेऽन्न मनुक मात्मनः कुरुते ॥ ८ ॥

तद् यत् सारस्वत मनु भवति। वाग्वै सरस्वत्यन्नं सोमस्तस्माद्यो वाचा प्रसाम्यन्नादो हैव भवति ॥ ९ ॥

अथ पौष्णम्। पशवो वै पूषा पशुभिरेव तत्प्रजापतिः पुनरात्मान माप्याययत पशव एन मुपसमावर्त्तन्त पशू-ननुकानात्मनोऽकुरुत पशुभिर्वैवैष एतदाप्यायते पशव एन मुपसमावर्त्तन्ते पशूननुकानात्मनः कुरुते§ ॥ १० ॥

---

* 'ति'-इति ख। † 'तम्'-इति ग, घ।

‡ 'म्यम्'-इति ग, घ। § 'ते'-इति ख। एव मुत्तरत्र च।

अथ बार्हस्पत्यम्। ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैतत्प्रजापतिः पुनरात्मान माप्याययत ब्रह्मैन मुपसमावर्त्तत ब्रह्मानुक मात्मनोऽकुरुत ब्रह्मणो ऽएवैष एतदाप्यायते ब्रह्मैन मुपसमावर्त्तते ब्रह्मानुक मात्मनः कुरुते ॥ ११ ॥

तद् यत् पौष्ण मनु भवति। पशवो वै पूषा ब्रह्म बृहस्पतिस्तस्माद् ब्राह्मणः पशूनभिधृष्णुतमः पुराहिता* ह्यस्य भवन्ति मुख ऽआहितास्तस्माद् तत्सर्व्वं दत्त्वाजिनवासी चरति† ॥ १२ ॥

अथ वैश्वदेवम्‡। सर्व्वं वै विश्वे देवाः सर्व्वेणैव तत्प्रजापतिः पुनरात्मान माप्याययत सर्व्व मेन मुपसमावर्त्तत सर्व्वं मनुक मात्मनोऽकुरुत सर्व्वेणो ऽएवैष एतदाप्यायते सर्व्व मेन मुपसमावर्त्तते सर्व्वं मनुक मात्मनः कुरुते ॥ १३ ॥

तद्यद् बार्हस्पत्य मनु भवति। ब्रह्म वै बृहस्पतिः सर्व्वं मिदं विश्वे देवा अस्यैवैतत् सर्व्वस्य ब्रह्म मुखं करोति तस्मादस्य सर्व्वस्य ब्राह्मणो मुखम् ॥ १४ ॥

---

* 'पुरोहिता'–इति स्यात् सायण-सम्मतः।

† 'ति'–इति ख।

‡ 'वैश्वदेवं'–इति क, ख, 'वैश्वदेवꣳ'–इति ग, घ।

अथैन्द्रम्। इन्द्रियं वै व्वीर्य मिन्द्र इन्द्रियेणैव तद्वीर्येण प्रजापतिः पुनरात्मान माप्याययतेन्द्रिय मेनं व्वीर्य मुपसमावर्त्ततेन्द्रियं व्वीर्य मनुक मात्मनोऽकुरुतेन्द्रियेणो ऽएवैष एतद्वीर्येणाप्यायत ऽइन्द्रिय मेनं व्वीर्य मुपसमावर्त्तत ऽइन्द्रियं व्वीर्य मनुक मात्मनः कुरुते ॥ १५ ॥

तद्युद् वैश्वदेव मनु भवति। क्षत्रं वा ऽइन्द्रो व्विशो व्विश्वे देवा अन्नाद्य मेवास्मा ऽएतत्पुरस्तात् करोति ॥ १६ ॥

अथ मारुतम्*। व्विशो वै मरुतो भूमो वै विड् भूम्नैव तत्प्रजापतिः पुनरात्मान माप्याययत भूमैन मुपसमावर्त्तत भूमान मनुक मात्मनोऽकुरुत भूम्नो ऽएवैष एतदाप्यायते भूमैन मुपसमावर्त्तते भूमान मनुक मात्मनः कुरुते ॥ १७ ॥

तद्युदैन्द्र मनु भवति। क्षत्रं वा ऽइन्द्रो व्विशो व्विश्वे देवा व्विशो वै मरुतो व्विशैवैतत् क्षत्रं परिबृꣳहति तदिदं क्षत्र मुभयतो व्विशा परिबृढम् ॥ १८ ॥

अथैन्द्राग्नम्†। तेजो वा ऽअग्निरिन्द्रियं व्वीर्य मिन्द्र उभाभ्या मेव तद्वीर्याभ्यां प्रजापतिः पुनरात्मान माप्याय-

---

* तम्'–इति ग, घ। † 'ग्नम्'–इति ग, घ।

यतोभे ऽएनं व्वीर्य्ये ऽउपसमावर्त्तेता मुभे वीर्य्ये ऽअनुके ऽआत्मनोऽकुरुतोभाभ्याम्वेवैष एतद्वीर्याभ्या माप्यायत ऽउभे ऽएनं वीर्य्ये ऽउपसमावर्त्तेते ऽउभे वीर्य्ये ऽअनुके ऽआत्मनः कुरुते* ॥ १९ ॥

अथ सावित्रम्† । सविता वै देवानां प्रसविता तथो हास्मा ऽएते सवितृप्रसूता एव सर्व्वे कामाः समृद्ध्यन्ते॥२०॥

अथ व्वारुण मन्तत आलभते। तदेनꣳ सर्व्वस्माद्वरुण-पाशात् सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥ २१ ॥

तस्माद्यदि यूपैकादशिनी स्यात् । आग्नेय मेवाग्निष्ठे नियुञ्ज्यादथेतरान्व्युपनयेयुर्यथापूर्व्वम्‡ ॥ २२ ॥

यद्यु पश्वेकादशिनी स्यात् । आग्नेय मेव यूप ऽआल-भेरन्नथेतरान् यथापूर्व्वम् ॥ २३ ॥

तान्यञ्चोदीचो नयन्ति । आग्नेय मेव प्रथमं नयन्त्यथे-तरान्यथापूर्व्वम् ॥ २४ ॥

तान्यत्र निविध्यन्ति । आग्नेय मेव प्रथमं दक्षिणार्द्ध्ये निविध्यन्त्यथेतरानुदीचोऽतिनीय यथापूर्व्वम् ॥ २५ ॥

तेषां यत्र व्वपाभिः प्रचरन्ति । आग्नेयस्यैव प्रथमस्य व्वपया प्रचरन्त्यथेतरेषां यथापूर्व्वम् ॥ २६ ॥

---

* 'ते'—इति ख ।   † त्रꣳ'—इति ग, घ ।

‡ 'व्वम्'—इति ग, घ । एव मिह्योत्तरत्रापि सर्वत्र ।

तैर्युच प्रचरन्ति। आग्नेयेनैव प्रथमेन प्रचरन्त्यथेतरैर्यथापूर्व्वम्* ॥ २७ ॥ २ ॥

॥ इति सप्तमप्रपाठके द्वितीयं ब्राह्मणम् [९. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ पश्वेकादशिनीं[1] विधातु माख्यायिका माह— "प्रजापतिर्वै प्रजाः ससृजान इत्यादिना। 'रिरिचान इवामन्यत' आत्मानं रिक्त मिवाबुद्ध्यत। कुत इत्यत आह— "तस्मात् पराच्यः प्रजा आसुरिति। 'तस्मात्' प्रजापतेः सकाशात् 'प्रजाः' 'पराच्यः' एव अभवन्। रिक्त मेव विशदयति— "नास्य प्रजा इति। लोके यथा बहुप्रजः कश्चित् ताभिरर्जितैर्धनादिभिः श्रीयुक्तोऽन्नादिमांश्च भवति, एव मस्य तथा न स्थितवत्य इत्यर्थः ॥ १ ॥

"स ऐक्षतेति। विचारं कृतवान्। 'अरिचि' अतिरिक्तोऽभूवम्। रिचेर्लुङुत्तमे रूपम्। तदेव विशदयति— "अह मस्मै कामायासृक्षीति। 'असृक्षि' प्रजासृष्टि मकार्षम्। 'य कामो न

---

* 'र्वम्'–इति ग, घ।

१— "पश्वेकादशिनी द्विविधा। प्रतिपशुयूपा एकयूपा च"–इत्यादि का० श्रौ० ६. ८. २७ सू० वृत्तौ द्रष्टव्यम्।

से' 'समार्द्धि' समृद्धियुक्तोऽभूत्। त मेव विशिनष्टि— "न मे प्रजाः श्रिये चान्नाद्यायेति ॥ २ ॥

"स ऐक्षत इति। विचारविषयां बुद्धिं प्रसारितवानित्यर्थः ॥ ३ ॥

"सोऽर्च्चन्निति। वाह्यव्यापारेणैव 'अर्च्चन्', 'श्राम्यन्' तपः 'चचार' इत्यर्थः। "स एता मिति। 'सः' च बहुत्वाय पश्वेकादशिनीम् 'अपश्यत्' प्रजाप्राप्तिसाधनत्वेन ज्ञातवान्। "एकादशिन्येष्ट्वा प्रजापतिरित्यादि, स्पष्टम्। "वसीयानेवेष्ट्वाभवदिति। 'वसीयान्' वसुमत्तरः ॥ ४ ॥

न केवलं प्रजापतेरेवैकादशिनीप्रयोगादेतदुक्तं फलम्, किन्तु इदानीन्तन मपि तत् फलं तदनुष्ठानाद् भवतीत्याह— "तस्मै क मेकादशिन्या यजेतेत्यादिना। क मिति पुरुषम्। य एकादशिन्या यजते, 'तस्मै' आप्यायनादिकामाय। स यजमानः 'प्रजया पशुभिः' 'आप्यायते' प्रवर्द्धते। आप्यायनेन 'एनं' यजमानं 'प्रजाः' पुत्र-भृत्यादिरूपाः 'समावर्त्तन्ते' प्रतिनिवर्त्तन्ते। आगम्य च तदाप्यायनाय 'श्रिये अन्नाद्याय' च 'प्रजाः' 'तिष्ठन्ते' आत्मानं प्रकाशयन्ति ॥ ५ ॥

इत्थं सामान्येनैकादशिन्याः फल मभिधाय, तानेकादशिनान् पशून् क्रमेण विधाय, तत्फलं च विभज्य दर्शयति— "स आग्नेयं प्रथमं पशु मालभत इत्यादिना[1]। अग्निर्देवता अस्य, स आग्नेयः पशुः, तम्, 'प्रथम मालभते'। सत्स्वनेकदेवताकेषु प्रथम माग्नेयेन भवितव्य मित्येतस्मिन्नर्थे कारण माह— "अग्निर्वै देवतानां मुखं प्रजनयितेति। यः परिपाकहेतुत्वेन सर्वस्य प्रजनयिता अग्निः, स

---

१— का० श्रौ० सू० ८, ८, २८।

'देवतानां मुखम्' खलु। देवानां मुखत्वम् "अग्निर्वै देवाना मवमः"[१],–इति, "अग्निमुखा वै देवाः"-इति-श्रुत्यन्तराच्च[२] सिद्धम्। देवानां मध्ये अग्निरेव 'मुखम्' प्रजा-जनयिता, मुख्यत्वेनोत्पादकः; "ता मग्निरिन्धते, सोमो रेतो दधातन, सविता प्राजनयत्"-इत्यादौ अग्नेरेवेन्धकत्वदर्शनात्। 'सः' अग्निः प्रजापतिना समत्वात् 'प्रजापतिः'। 'स एव' अग्निः 'यजमानः' च; गार्हपत्यः सन् जयमानरूपेणावस्थानात्, यज्ञनिष्पादकत्वसाम्यात् यजमानत्वम्। तस्मात् स्वात्मलाभाय आग्नेयः पशुः कर्त्तव्यः ॥ ६ ॥

"अथ सारस्वत मिति[३]। आलभत इति शेषः। या 'सरस्वती' अस्ति, सा 'वाग्वै' वाग्रूपा खलु। 'वाचैव' द्वितीयपशोर्देवतया रिक्तं स्वात्मानं 'पुनराप्याययत'। 'वाग्' वाग्रूपा प्रजा 'एनं' प्रजापतिम् उपावृत्ततया 'समावर्त्तत'। 'वाचम्' 'अनु' 'एव' 'एषः' यजमानः 'आत्मनः' कामनादिकं करोति ॥

एव मुत्तरेषां पशूनां ब्राह्मणानि च व्याख्येयानि ॥ ७ ॥ ॥ ८ ॥

सौम्यस्य पशोः सारस्वतानन्तर्यं प्रशंसति— "तद् यत् सारस्वत मनु भवतीति। "वाग्वै सरस्वत्यन्न मिति। सोमस्यौषध्यधिपतित्वात् तत्स्वरूपत्वम्। 'तस्माद्' 'यः' पुमान् 'वाचा' 'प्रसामि' अत्यल्पः[४], सः 'अन्नादो भवति'। वाचोऽन्नसाधनत्वात् सारस्वतानन्तरः सौम्य उक्तः ॥ ९ ॥

---

१— ऐ० ब्रा० १. १. १। २— ता० ब्रा० २५. १५. ४।
३— का० श्रौ० सू० ८. ८. २६। ४— 'अनल्पः'-इति क।

"अथ पौष्ण मिति[1]। 'अथ' सौम्यानन्तरं 'पौष्णं' पूषदेवताकं पशु मालभते। "पशवो वै पूषेत्यादि, पूर्ववत् ॥ १० ॥

"अथ बार्हस्पत्य मिति[2]। 'बार्हस्पत्यं' बृहस्पतिदेवताकं पशु मालभते। बृहस्पतेर्मन्त्राधिदेवत्वात् ब्रह्मत्वम्; अथवा 'बृहस्पतिः' 'ब्रह्म वै' ब्राह्मणजातिः खलु ॥ ११ ॥

बार्हस्पत्यस्य पौष्णानन्तर्ये युक्ति माह— "तद्यत् पौष्ण मनु भवतीति। पूष्णः पोषाधिदेवत्वात् पशूनां पोषकत्वात् 'पूषा पशवः'। 'तस्मात्' बार्हस्पत्यस्य पौष्णानन्तर्याद्धेतोः 'ब्राह्मणः' 'पशून्' 'अभिधृष्णुतमः भवति' अत्यन्तधर्षको भवति। 'अस्य' एव-ङ्क्रमेणानुष्ठातुर्यजमानस्य ('पुराहिताः') पुरोहिताः, पुरः स्थापिताः 'भवन्ति' पशवः। तदेव व्याचष्टे— "मुख आहिता इति। यस्माद् ब्राह्मणस्य पशुषु स्वामित्व मस्ति, 'तस्माद्' तस्मादेव कारणात् 'सर्वं' ब्राह्मणेभ्यो 'दत्त्वा' 'अजिनवासी' अजिन माच्छाद्य 'सञ्चरति' ॥

सर्वस्वदक्षिणाके विश्वजिदादौ सर्वस्वं दत्त्वा अजिनवासधारणं सामब्राह्मणे प्रपञ्चेनाम्नातम्[3]। आपस्तम्बोऽपि "उदवसाय रोहिणं दशच्छदीः"-इति प्रक्रम्य, "बहिर्लोम परिधाय"-इति ॥ १२ ॥

"अथ वैश्वदेव मिति[4]। बार्हस्पत्यानन्तरं 'वैश्वदेवं' पशु माल-भते। वैश्वदेवस्य बार्हस्पत्यानन्तर्यार्थवादः स्पष्टार्थः ॥ १३ ॥

"तद्यद् बार्हस्पत्य मनु भवतीति। "अस्यैवैतत् सर्वस्य ब्रह्म

---

१, २— का० श्रौ० सू० ८. ८. २६।

३— सा० ता० ब्रा० १६ अ० ४, ५, ६ ख०।

४— का० श्रौ० सू० ८. ८. २६ क।

मुखं करोतीति। 'अस्य' 'सर्वस्य' अपि जगतः 'एतत्' एतेन सर्वरूपस्य वैश्वदेवस्य आदौ ब्राह्मणजात्यात्मकस्य बृहस्पतेः पुरोभावित्वसम्पादनेन 'ब्रह्म मुखं करोति' ब्राह्मणजाति मेव मुखं कृतवान् भवति ॥ १४ ॥

"अथैन्द्र मिति[1]। 'ऐन्द्रं' पशु मालभते। सप्तमस्य पशोर्यद्देवता इन्द्रोऽस्ति, तम्। "इन्द्रियं वै वीर्य मिति। इन्द्रेण सृष्टम् 'इन्द्रियम्', तच्च 'वीर्यं' वीर्यात्मकम्; सृज्यस्रष्टोरभेदात् 'इन्द्रः' एवेन्द्रियम्; शक्तिशक्तिमतोरभेदादेन्द्रियत्वम् ॥ १५ ॥

"तद्यदिति। इन्द्रस्य देवेषु मध्ये क्षत्रियजातित्व मसकृदुक्तम्, विश्वेषां देवानां तु तदधीनत्वाद् बहुत्वसाम्यात् विशां रूपत्वम्; अतः ऐन्द्रस्य वैश्वदेवानन्तर्यकरणम्। नास्य स्वामिन इन्द्रस्य पुरस्ताद्भाविनो विशः कृतत्वाद् (कृतं) भवति ॥ १६ ॥

"अथ मारुत मिति[2]। 'अथ' ऐन्द्रानन्तरं 'मारुतं' मरुद्देवताकं पशु मालभते ॥ १७ ॥

"तद्यदिति। "तदिदं क्षत्र मुभयतो विशा परिवृढ मिति। पूर्वत्र विश्वदेवात्मिकया विशा, उत्तरत्र मरुद्रूपयेति द्रष्टव्यम् ॥ १८ ॥

"अथैन्द्राग्न मिति[3]। 'अथ' मारुतानन्तरम् 'ऐन्द्राग्नम्' इन्द्राग्निदेवताकम् ॥ १९ ॥

"अथ सावित्र मिति[4]। आलभते। सावित्रवारुणयोर्ब्राह्मणे स्पष्टे ॥ २० ॥ ॥ २१ ॥

---

१— का० श्रौ० सू० ८. ८. २६ ख।

२, ३, ४— का० श्रौ० सू० ८. ८. २६ ग।

"तस्माद् यदीति[1]। 'तस्माद्' पशूना मेकादशत्वात् 'यदि यूपैकादशिनी' यदैकादशयूपसम्भानम्, तदा प्रतिपशुयूपसम्भवात् 'अग्निष्ठे' पूर्वेद्युर्निखाते मध्ययूपे 'आग्नेय मेव' प्रथमं 'पशुं' नियुञ्जीरन्, 'अथ' 'इतरान्' पशून्; 'यथापूर्वं व्युपनयेयुः' यूपोच्छ्रयणानुक्रमेण प्रतियूपं पृथक् पृथक् नियुञ्जीरन्नित्यर्थः[2]। स च क्रमः,— "स य उत्तरोऽग्निष्ठात् स्यात्, त मेवाग्रे उच्छ्रयेदथ दक्षिण मथोत्तर मित्यादिना प्राङ् निर्द्दिष्टः[3] ॥ २२ ॥

"यद्यु पश्वेकादशिनीति[4]। 'यद्यु' यद्यपि 'पश्वेकादशिनी स्यात्', यूपस्त्वेक एव, तदा 'आग्नेय मेव प्रथमं यूपे आलभेरन्, 'अथ' 'इतरान्' सौम्यादिकान् 'यथापूर्वम्' तस्मिन्नेकयूपे नियुञ्जीत सञ्ज्ञपनार्थम् ॥ २३ ॥

"तान्यत्रोदीचो नयन्तीति[5]। उदङ्नयनकालेऽपि 'आग्नेय मेव प्रथमं' नयेत्, 'अथेतरान्' इदानीमुक्तक्रमेण नयेत् ॥ २४ ॥

"तान्यत्र निविध्यन्तीति[6]। सञ्ज्ञप्यानय्य 'आग्नेय मेव प्रथमं दक्षिणार्द्धं' निविद्येत, पीडयेत् ॥ २५ ॥

---

१— ५२६ पृ० १ टीप्पनी द्रष्टव्या।
२— का० श्रौ० सू० ८. ८. २७ क।
३— इहैव पुरस्तात् ७. २. ५. ४२७ पृ० द्रष्टव्यम्।
४— का० श्रौ० सू० ८. ८. २८।
५— का० श्रौ० सू० ८. ८. २७ ख।
६— का० श्रौ० सू० ८. ८. २९।

"तेषां यत्र वपाभिः प्रचरन्तीति"[1]। वपाप्रचारेऽप्याग्नेयस्यैव वपां प्रथमं प्रचरेत्। किं बहुना, अङ्गानां यागावसरेऽप्याग्नेयाङ्गानि प्रथमं यजेत्, 'अथेतरेषाम्' अङ्गानि 'यथापूर्वम्' ॥ २६,२७॥ २ [९.१.]॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे नवमाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम्. )

यत्र वै यज्ञस्य शिरोऽच्छिद्यत। तस्य रसो द्रुत्वापः प्रविवेश तेनैवैतद्रसेनापः स्यन्दन्ते तु मेवैतद्रसꣳ स्यन्दमानं मन्यन्ते ॥ १ ॥

स यद्वसतीवरीरच्छैति। तु मेवैतद्रस माहृत्य यज्ञे दधाति रसवन्तं यज्ञं करोति तस्माद् वसतीवरीरुच्छैति ॥ २ ॥

ता वै सर्व्वेषु सवनेषु व्विभजति। सर्व्वेष्वेवैतत्सवनेषु

---

१— का० श्रौ० सू० ८. ८. ३०। अत्र वृत्तौ बहु द्रष्टव्य मस्ति।

रसं दधाति सर्व्वाणि सवनानि रसवन्ति करोति तस्मात्सर्व्वेषु सवनेषु व्विभजति ॥ ३ ॥

ता वै स्यन्दमानानां गृह्णीयात् । ऐद्धि* स यज्ञस्य रसस्तस्मात् स्यन्दमानानां गृह्णीयात् ॥ ४ ॥

गोपीथाय वा ऽएता गृह्यन्ते । सर्व्वं वा ऽइदं मन्युदिलयति यदिदं किञ्चापि योऽयं पवतेऽथैता एव नेलयन्ति तस्मात् स्यन्दमानानां गृह्णीयात् ॥ ५ ॥

दिवा गृह्णीयात् । पश्यन् यज्ञस्य रसं गृह्णानीति तस्माद्दिवा गृह्णीयादेतस्मै वै गृह्णाति य एष तपति व्विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य व्विश्वे देवास्तस्माद्दिवा गृह्णीयाद्दिवेव वा ऽएष तस्माद्देव दिवा गृह्णीयात् ॥ ६ ॥

एतद्ध वै व्विश्वे देवाः[†] । यजमानस्य गृहानागच्छन्ति स यः पुरादित्यस्यास्तमयाद्वसतीवरीर्गृह्णाति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्त ऽएतद्धविः प्रविशन्ति त ऽएतासु व्वसतीवरीषूपवसन्ति स उपवसथः[‡] ॥ ७ ॥

स यस्या गृहीता अभ्यस्त मियात्[§] । तत्र प्राय-

---

* 'एद्धि'–इति ख ।
† 'वः'–इति ग, घ ।
‡ 'यः'–इति ग, घ ।
§ 'यात्'–इति ग, घ ।

श्चित्तिः क्रियते यदि पुरेजानः स्यान्निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः* पुरा गृहीता भवन्ति यद्यु ऽअनीजानः स्याद्य एन मीजान उपावसितो वा पर्यवसितो वा स्यात्तस्य निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति ॥ ८ ॥

यद्यु ऽएतदुभयं न विन्देत्[†]। उल्मुषी मेवादायोपपरेयात्ता मुपर्युपरि धारयन् गृह्णीयाद्धिरण्यं वोपर्युपरि धारयन् गृह्णीयात् तदेतस्य रूपं क्रियते य एष तपति ॥ ९ ॥

अथातो गृह्णात्येव। हविष्मतीरिमा आप इति यज्ञस्य ह्यासु रसः प्राविशत्तस्मादाह हविष्मतीरिमा आप इति हविष्माँ३[‡] ऽआविवासतीति हविष्मान् ह्येना यजमान आविवासति तस्मादाह हविष्माँ३ ऽआविवासतीति ॥ १० ॥

हविष्मान् देवो ऽअध्वर इति। अध्वरो वै यज्ञस्तद्यस्मै यज्ञाय गृह्णाति तꣳ हविष्मन्तं करोति तस्मादाह हविष्मान् देवो ऽअध्वर इति ॥ ११ ॥

---

* 'तस्यैताः'–इति ख। † 'विन्देत'–इति ख।

‡ 'हविष्मांर॥'–इति ग, घ। एव मिह्योत्तरचापि सर्वत्र।

हविष्मां३ ऽअस्तु सूर्य इति। एतस्मै वै गृह्णाति य एष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्मादाह हविष्माँ३ ऽअस्तु सूर्य इति ॥ १२ ॥

ता आहृत्य जघनेन गार्हपत्यꣳ सादयति। अग्नेर्वो-ऽपन्नगृहस्य सदसि सादयामीत्यग्नेर्वोऽनार्त्तगृहस्य सदसि सादयामीत्येवैतदाहाथ यदाग्नीषोमीयः पशुः सन्तिष्ठते-ऽथ परिहरति व्युत्क्रामतेत्याहाग्रेण हविर्द्धाने यजमान आस्ते ता आदत्ते ॥ १३ ॥

स दक्षिणेन निष्क्रामति। ता दक्षिणायाꣳ श्रोणौ सादयतीन्द्राग्न्योर्भागधेयी स्थेति विश्वेभ्यो ह्येना देवेभ्यो गृह्णातीन्द्राग्नी हि विश्वे देवास्ताः पुनरा-हृत्याग्रेण पत्नीꣳ सादयति स जघनेन पत्नीं पर्येत्य ता आदत्ते ॥ १४ ॥

स उत्तरेण निष्क्रामति। ता उत्तरायाꣳ श्रोणौ सादयति मित्रावरुणयोर्भागधेयी स्थेति नैवꣳ सादये-दतिरिक्त मेतन्नैवꣳ सम्पत्सम्पद्यत ऽइन्द्राग्न्योर्भागधेयी स्थेत्येव ब्रूयात्तदेवानतिरिक्तं तथा सम्पत्सम्पद्यते ॥ १५ ॥

गुप्त्यै वा ऽएताः परिह्रियन्ते। अग्निः पुरस्तादथैताः समन्तं पल्यञ्चन्ते नाष्ट्रा रक्षाꣳस्यपघ्नन्त्यस्ता आग्नीध्रे

सादयति विश्वेषां देवानां भागधेयी स्थेति तदासु विश्वान् देवान्त्संवेशयत्येते वै वसतां वरं तस्माद्व-सतीवर्यो नाम वसताꣳ ह वै वरं भवति य एव मेतद्वेद ॥ १६ ॥

तानि वा ऽएतानि सप्त यजूꣳषि भवन्ति । चतुर्भि-र्गृह्णात्येकेन जघनेन गार्हपत्यꣳ सादयत्येकेन परिहर-त्येकेनाग्नीध्रे तानि सप्त यच्च वै वाचः* प्रजातानि च्छन्दाꣳसि सप्तपदा वै तेषां परार्ध्या शक्वर्येता मभि-सम्पदं तस्मात्सप्त यजूꣳषि भवन्ति ॥ १७ ॥ ३ ॥

॥ इति सप्तमप्रपाठके तृतीयं ब्राह्मणम् [९. २.] ॥

अथ सोमाभिषवार्थं वसतीवरीग्रहणं विधातु माह— "यत्र वै यज्ञस्येत्यादि। यस्मिन् काले यज्ञरूपस्य विष्णोः वधार्थं देवैः प्रेषिता उपदीका धनुर्ज्याच्छेदनेन तच्छिरो विच्छिन्नम्, स कालो "यत्र वै यज्ञस्य"-इत्यनेन परामृश्यते। तत्प्रकारः प्रवर्ग्ये प्रपञ्चितः[१]। पुरा 'यत्र' यस्मिन् काले 'यज्ञस्य' 'शिरः' 'अच्छिद्यत' छिन्न मभूत्, तस्मिन् काले छिन्नशिरसो यज्ञस्य रसोऽद्रवत्। 'रसः'

---

* 'वाचं'-इति ख।

१— ब्राह्मणप्रवक्रेति शेषः। स च परस्ताद् (१४. १. १.) द्रष्टव्यः।

'द्रुत्वा' धावित्वा यतः उदकानि 'प्रविवेश', 'तेनैव रसेन' 'एतत्' इदानी मपि यथापूर्वं स्यन्दनस्वभावाः 'आपः' 'स्यन्दन्ते'। 'त मेव' छिन्नशिरस्कात् यज्ञात् उद्भूत मेव 'रसम्' इदानी मप्सु 'स्यन्द-मानं' प्रवहन्तं 'मन्यन्ते' अभिज्ञाः[1] ॥ १ ॥

अथ वसतीवरीग्रहणं विधत्ते– "स यद् वसतीवरीरच्छैतीति। 'अच्छैति' अभिमुखं गच्छति। 'त मेव रसं पुनराहृत्य यज्ञे सन्दधाति'। वसतीवरीग्रहणकालः सूत्रे उक्तः– "अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणम्"-इति[2] ॥ २ ॥

गृहीतानां सवनत्रयार्थं विभाग माह– "ता वै सर्वेषु सवनेषु विभजतीति ॥ ३ ॥

ग्रहीतव्यानि उदकानि विशिनष्टि– "ता वै स्यन्दमानाना मिति[3]। 'हि' यस्मात् 'सः' यज्ञरसः 'ऐत्' अस्रवत्, अथ ततो गच्छन्तीना मेवापां सम्बन्धिनीः 'गृह्णीयात्' ॥ ४ ॥

स्यन्दमानग्रहणे उपपत्त्यन्तर माह– "गोपीथाय वा इत्यादि। यज्ञरसानाम् 'अन्यत्' प्रवाहोदकव्यतिरिक्तं 'सर्वम्' 'इलयति' इत-स्ततश्चलति। 'इदं'-शब्दार्थं विशिनष्टि– "यदिदं किञ्चेति। 'यत् किञ्च' 'इदं' परिदृश्यमानं जगत्। इदं-शब्दोक्तानां मध्ये प्रसिद्धं किञ्चिदिहोदाहरति– "अपि योऽयं पवत इति। 'योऽयं वायुः 'पवते' गच्छति, सोऽपि नियतचलनवान्। 'एता एव' 'नेलयन्ति'

---

१— तदेतदुद्धृतं पुरस्तात् ५१५ पृ० १५ पं०।
२— का० श्रौ० सू० ८. ९. ७ क।
३— का० श्रौ० सू० ८. ९. ७ ख।

न प्रतिविवर्त्तते[1]। यद्यपि स्यन्दमानाना मितरेषां च पदार्थानां चलनं साधारणम्, तथापि स्यन्दमानानां व्यावृत्तेरपेक्षितत्वात् इलन मितस्ततश्चलनं विवक्षितम्। 'स्यन्दमानानाम्' एकरूपेण प्रवहन्तीना मपां तथाविधचाञ्चल्याभावात् 'गोपीथाय गृह्णीयात्' ॥ ५ ॥

"दिवा गृह्णीयादिति[2]। दिवाग्रहणस्याभिप्राय माह— "पश्यन् यज्ञस्य रसं गृह्णातीति। दर्शनपूर्वकग्रहणे सति यज्ञरसस्य परि-ज्ञातत्वात् तथाविधाभिरद्भिः क्रियमाणोऽभिषवः साङ्गो भवती-त्यभिप्रायः। दिवाग्रहणस्य प्रयोजनान्तर माह— "एतस्मै वै गृह्णाति य एष तपतीति। कथ मेतदर्थतेति तत्र हेतु माह— "विश्वेभ्यो ह्येना देवेभ्यो गृह्णातीति। यस्माद् विश्वेभ्यो देवेभ्यो गृह्णाति। तेषा मत्र कथं सम्भावनेति तत्राह— "रश्मयो ह्यस्य विश्वे देवा इति। सूर्यस्य चन्द्रवद्विभूतिरूपाणां विश्वेषां देवानां रश्म्यात्मनावस्थानादित्यभिप्रायः। अतो रश्मिरूपाणां विश्वेषां देवा-नाम्, तदधिपतेः सवितुश्च दिवैव सम्भवाद् दिवैव गृह्णीयादित्यर्थः। किञ्चैष आदित्यो दिवैव प्रकाशमानो भवति, तस्मादपि दिवैव गृह्णीयात् ॥ ६ ॥

अस्तमयात् पूर्वकालीनं ग्रहणं प्रशंसति— "एतद्ध वा इत्यादि। अग्नीषोमीयेऽहनि रात्रौ विश्वेषां देवानां प्रातर्यष्टव्यत्वात्, तत्-पूर्वम् 'उपक्लृप्तेन' सम्पन्नेनैव 'आवसथेन' आवसथ मावासस्थानम्, तत्तदादिकं सर्वं यज्ञोपकरण मुपलक्ष्यते, तत् संस्करोति, तेन पूजोपकरणेन सम्भावयति। 'एतत् ह वै' एतत् खलु अतिथिभूतानां

---

१— 'प्रतिनिवर्त्तन्ते'–इति च। २— का० श्रौ० सू० ८. ९. ७ ग।

विशेषां देवाना मागमनात् पूर्वं यदि चैव ग्रहण मस्ति, 'तत्' तत्स्थानीय मित्यर्थः। "एतद्धविः प्रविशन्तीति। सोमरसेष्वनुप्रवेशात् हविः सम्पद्यते॥

प्रसङ्गादुपवसथशब्दनिर्वचनं दर्शयति— "त एतासु वसतीवरीषूपवसन्तीति। उपवसन्त्यासु वसतीवरीषु देवा अस्मिन् काले इत्युपवसथः, उपवासकाल इत्यर्थः॥ ७॥

वसतीवरीग्रहणात् प्राक् अस्तमये सति तद्ग्रहणोपाय माह— "स यस्यागृहीता अभ्यस्तमियात्, तत्र प्रायश्चित्तिः क्रियत इति। प्रायश्चित्तिभिर्दिवाग्रहणाकरणे दोषस्पर्शाभावोपायः क्रियत इत्यर्थः। तत्प्रकारः प्रदर्श्यते— "यदीति। स यजमानो 'यदि' 'पुरेजानः' इष्टप्रथमसोमयागः 'स्यात्', स 'निनाह्यात्' स्वगृहस्थितप्रभूतघटादेः सकाशात् 'गृह्णीयात्'; 'ताः' आपः 'पुरा' अस्तमयात् पूर्वं तस्य 'गृहीता भवन्ति'; प्रथमानुष्ठानेऽस्तमयात् पुरा गृहीतत्वादित्यभिप्रायः[1]। स्वयम् 'अनीजानः' चेद्, 'यः' 'एनं' यजमानम्[2] 'ईजानः' इष्टवान्, 'उपवसितः'[3] समीपे गृहे अवस्थितः, 'पर्यवसितो वा' दूरगृहस्थितो वा 'स्यात्', 'तस्य' 'निनाह्याद्' घटादेः सकाशाद् 'गृह्णीयात्'। एवं सति 'ताः पुरा गृहीता भवन्ति'[4]। "ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात्"—इति[5] श्रुत्यन्तरम्॥ ८॥

---

१— का० श्रौ० सू० ८. ९. ८।

२— 'एनम्=यजमानम्'—इति सूत्रविरुद्धम्, महीधरमतविरुद्धञ्च।

३— 'उपावसिते (!)'—इति क। ४— का० श्रौ० सू० ८. ९. ९।

५— तै० सं० ६. ४. २. ३।

तदुभयासम्भवे आह— "यद्यु एतदुभयं न विन्देदित्यादिना। 'उल्कुषीम्' उल्का मित्यर्थः। 'एतस्य'-इत्यस्य व्याख्यानम्— "य एष तपतीति। उल्काया हिरण्यस्य च सूर्यवर्णसाम्यात् तद्रूपकरणम्। अत्र सूत्रम्— "अस्तमितश्चेत् निनाह्यात् पुरेजानश्चेदनीजानो ऽन्यस्यापि समीपावसितस्य पुरेजानस्योभयाभाव ऽउल्कुषीꣳ हिरण्यं वोपर्युपरि धारयन् हविष्मतीरिति"-इति[1] ॥ ९ ॥

मन्त्रं विधत्ते— "अथातो गृह्णात्येव हविष्मतीरिमा आप इति[2]। 'इमाः' गृह्यमाणाः 'आपः' 'हविष्मतीः' अभिषूयमाणेन सोमरूपान्नेन हविषा, स्वासु प्रविष्टेन यज्ञरसरूपेण हविषा वा तद्वत्यः। एताभिर्निष्पन्नेन सोमेन हविषा 'हविष्मान्', 'यजमानः' 'आविवासति' परिचरति एता वसतीवरीः ॥

"हविष्मान् देवो अध्वर इतीति। 'देवः' द्योतमानः 'अध्वरः' हिंसारहितः 'यज्ञः' गृह्यमाणैर्वसतीवरीलक्षणैर्हविर्भिः 'हविष्मान्' भवति ॥

"हविष्माँ२॥ ऽअस्तु सूर्य इतीति। ग्रहणस्य देवार्थत्वात्, विश्वेषां देवानां रश्मिरूपत्वात्, तद्वान् सूर्योऽपि गृह्यमाणैर्वसतीवरीलक्षणैः हविर्भिः हविष्मान् भवति ॥

प्रतिपादं विभज्य व्याचष्टे— "हविष्मतीरिमा आप इति यज्ञस्य ह्यासु रसः प्राविशत् तस्मादाह हरिष्मतीरित्यादिना ॥ १०, ११, १२ ॥

"ता आहृत्येति[3]। "अग्नेर्वोऽपन्नगृहस्येति[4]। 'अपन्नगृहस्य'

---

१— का० श्रौ० सू० ८. ९. ८–१०।  २— वा० सं० ६. २३. १।
३— का० श्रौ० सू० ८. ९. ११।  ४— वा० सं० ६. २४. १।

अपतितगृहस्य, अग्नीर्णगृहस्येत्यर्थः ; तस्य 'अग्नेः' 'सदसि' स्थाने 'सादयामि'। 'अथ यदाग्नीषोमीयः पशुः' 'सन्तिष्ठते' पत्नीसंयाजान्तः समाप्तो भवति। 'अथ' तदा 'परिहरति' वसतीवरीर्वेदेः परितो नयेत्। वेदिमध्ये स्थिता दीक्षिताः! 'व्युत्क्रामत' 'इत्याह'। "त्रिरिति कात्यायनः[१]। 'हविर्द्धाने' हविर्द्धानस्य पुरोदेशे 'यजमानः आस्ते'। "उत्तरवेदि मपरेण यजमानः (आस्ते)"-इति[२] सूत्रम् ॥ १३ ॥

"स दक्षिणेन निष्क्रामतीति। 'ताः' अध्वर्युरादाय, 'दक्षिणेन' द्वारेण प्राग्वंश मतिक्रम्य[३], उत्तरवेद्या दक्षिणश्रोणौ 'सादयति'[४] "इन्द्राग्न्योर्भागधेयी स्थ"-'इति'[५]। भागधेय्यौ। मन्त्रं व्याचष्टे— "विश्वेभ्यो ह्येना इति। "ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहु-रग्निः सर्वा देवता इति हि तैत्तिरीयकश्रुतिः[६]। अत्रैव काण्डे— "देवाना मुदु स्म दीक्षितानाम्"-इत्यत्र विदुरपक्षैर्विरक्षस्तमै-रस्यैव रूप मसामेति[७] देवाना मग्निरूपधारणसाधारण्याच्चाग्नेः सर्व-

---

१— "अस्तमिते संस्थाप्य व्युत्क्रामतेत्याह त्रिः"—इति का० श्रौ० सू० ८. ६. १४। "व्युत्क्रामतेति प्रैषं त्रिर्ब्रुयात् ; त्रिरित्येतच्छाखान्तरात्"— इति तद्वृत्तौ या० दे०।

२— का० श्रौ० सू० ८. ६. १६। "उपस्थे सोमं कृत्वा"—इति शाखान्तरीयो विधिस्तु तत्सूत्रान्ते विद्यते।

३— 'प्राग्वंशान्निष्क्रम्य'—इति क।

४— का० श्रौ० सू० ८. ६. १८। ५— वा० सं० ६. २४ २।

६— तै० सं० १. ८. १ सा० भा० द्रष्टव्यम्।

७— अन्यत्र च तै० ब्रा० ३. २. ५. १० द्रष्टव्यम्।

देवमयत्वम्। इन्द्रस्य तु देवाधिपतित्वं प्रसिद्धम्। अत इन्द्राग्न्योर्भागधेयी स्थेत्यभिधानम्॥

"ताः पुनराहृत्याग्रेण पत्नीं सादयतीति[1]। पत्न्याः पश्चाद्देशेन 'पर्येत्य' पत्न्याः पुरोदेशेऽवस्थिताः 'ताः' वसतीवरीः ('आदत्ते'[2]॥ १४॥) आदाय, 'उत्तरेण' मार्गेण 'निष्क्रामति'। निष्क्रम्य, उत्तरवेदेरुत्तरश्रोणौ सादयेत्[3]॥

उत्तरश्रोणौ[4] सादने कश्चिन्मन्त्रं निर्दिश्य, तस्य वक्ष्यमाणसम्पदतिरेकेण प्रातिकूल्य मभिधाय, दक्षिणवेदिश्रोणिसादनमन्त्र मेव सम्पदनुकूलत्वात् सिद्धान्तयति— "मित्रावरुणयोर्भागधेयी स्थेति[5] नैवं सादयेदित्यादिना[6]। 'एवं' यस्मादयं मन्त्रः 'अतिरिक्तः' अधिकः, अतो वक्ष्यमाणा सप्तपदोपेत-शक्करीच्छन्दः-प्राप्तिलक्षणा 'सम्पत्' 'न सम्पद्यते'; "इन्द्राग्न्योः"-इत्यनेनैव[7] चेदनतिरेकात् सम्पद्यते॥१५॥

सर्वतः परिहरण मुत्तरवेदेरपरिहरणञ्च प्रशंसति— "गुप्त्यै वा एताः परिह्रियन्त इति। अपां वज्रत्वेन रक्षोविघातकत्वात् सर्वतः परिहरणेन यज्ञस्य रक्षस्सकाशात् सर्वतो गुप्तिर्भवति। साक्षाद्रक्षो-

---

१— का० श्रौ० सू० ८. ९. १९।

२— का० श्रौ० सू० ८. ९. २०, २१।

३— नास्त्येतत् पदं क-पुस्तके।

४— नास्त्येतत् पदं क-पुस्तके।

५— वा० सं० ६. २४. ३।

६— का० श्रौ० सू० ८. ९. २२।

७— वा० सं० ६. २४ २।

द्वेषिणोऽग्नेः पुरस्ताद् वर्त्तमानत्वात् न तदपेक्षा, पुरस्तात् परिहारापेक्षा नास्ति। 'पल्यङ्घन्ते' परितोऽङ्घन्ते, क्रियन्त इत्यर्थः ॥

उत्तरश्रोणितस्वादाय आग्नीध्रमण्डपे "विश्वेषां देवाना मिति[1] मन्त्रेण सादयेत्[2]। 'तत्' तेन, "विश्वेषां देवानाम्"-इतिमन्त्रपाठेन ॥

संवेशनप्रसङ्गात् वसतीवरीशब्दं निर्वक्ति– "एते वै वसतां वरं तस्माद् वसतीवर्यो नामेति। 'वसतां' क्वचित् क्वचित् स्थानेषु निवसतां मध्ये 'एते' खलु देवाः 'वरम्', एतेषां वासो वरं श्रेष्ठ इत्यर्थः। वसतां देवानां श्रेष्ठत्वावेदकत्वात् वसतीवर्य इति नाम निष्पन्नम्। यद्वा एतेषु 'एताः' आपः 'वसतां' विश्वेषां देवानां 'वरम्' उत्कृष्टं स्थान मिति वसतीवर्य इति नाम ॥

उक्तार्थज्ञं प्रशंसति– "वसतां ह वै वरं भवतीति ॥ १६ ॥

वसतीवरीग्रहणप्रभृतीना माग्नीध्रसादनान्तानां मन्त्राणां या सप्तसङ्ख्या, तां शक्करीत्वसम्पत्त्या प्रशंसति– "तानि वा एतानि सप्त यजूंषीत्यादिना। "चतुर्भिर्गृह्णातीत्यादि। सङ्ख्याविभागस्तु स्पष्ट एव[3]। "यत्र वै वाचः प्रजातानि छन्दांसीति। वाचः सकाशात् छन्दसा मुत्पत्तिः सोमाहरणप्रस्तावे "वागेव सुपर्णी"-इत्युक्त्वा "तथेति सा छन्दांसि ससृजे"-इति प्राक् प्रतिपादिता[4]। 'तेषां'

---

१— वा० सं० ६. २४. ४। २— का० श्रौ० सू० ८. ६. २३।

३— न तु स्पष्टोऽपि तु बहुविचार्य इति ध्येयम्।

४— पुरस्तात् ५ प्र० १ ब्रा० २–८ क० (३६१पृ० ११पं०—३६२पृ० २पं०)। "छन्दांसि सौपर्णेयाः"-इति च तै० सं० ६. १. ६. १।

मध्ये 'परार्द्ध्या' परार्द्धे भवा श्रेष्ठा 'शक्करी' सप्तपदसङ्ख्यावरूपा ऋक् निर्दृत्ता[1] ॥ १७ ॥ ३ [९. २.] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे नवमेऽध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् . )

तान्त्सम्प्रबोधयन्ति* । तेऽप उपस्पृश्याग्नीध्र मुपसमायन्ति त ऽआज्यानि गृह्णते गृहीत्वाज्यान्यायन्त्यासाद्याज्यानि ॥ १ ॥

अथ राजान मुपावहरति । इयं वै प्रतिष्ठा जनूरासां प्रजाना मिमा मेवैतत्प्रतिष्ठा मभ्युपावहरति त मस्यै तनुते त मस्यै जनयति ॥ २ ॥

अन्तरेणेषे ऽउपावहरति । यज्ञो वा ऽअनस्तन्न्वेव यज्ञान्न बहिर्द्धा करोति ग्रावसु सम्मुखेष्वधिनिदधाति क्षत्रं वै सोमो विशो ग्रावाणः क्षत्र मेवैतद्विश्यध्यूहति

---

१— एतावदेवौपवसथ्य मुपदिष्ट मतः परं सौत्यं कर्मोपदेक्ष्यते ।

* 'न्ति'—इति ग, घ ।

तद्युत्सम्मुखा भवन्ति विश मेवैतत्सम्मुखां क्षत्रिय मभ्युविवादिनीं करोति तस्मात्सम्मुखा भवन्ति ॥ ३ ॥

स उपावहरति । हृदे त्वा मनसे त्वेति यजमानस्यै-तत्कामायाह हृदयेन हि मनसा यजमानस्तं कामं कामयते यत्काम्या यजते तस्मादाह हृदे त्वा मनसे त्वेति ॥ ४ ॥

दिवे त्वा सूर्याय त्वेति । देवलोकाय त्वेत्येवैतदाह यदाह दिवे त्वेति सूर्याय त्वेति देवेभ्यस्त्वेत्येवैतदाहोर्द्ध्व मिम मध्वरं दिवि देवेषु होत्रा यच्छेत्यध्वरो वै यज्ञ ऊर्द्ध्व मिमं यज्ञं दिवि देवेषु धेहीत्येवैतदाह ॥ ५ ॥

सोम राजन्विश्वास्त्वं प्रजा उपावरोहेति । तदेन मासां प्रजाना माधिपत्याय राज्यायोपावहरति ॥ ६ ॥

अथानुसृज्योपतिष्ठते । विश्वास्त्वां प्रजा उपावरोह-न्त्वित्ययथायथ मिव वा ऽएतत्करोति यदाह विश्वास्त्वं प्रजा उपावरोहेति क्षत्रं वै सोमस्तत्पापवस्यसङ्करोति तद्वेद मनु पापवस्यसङ्क्रियतेऽथात्र यथायथं करोति यथा-पूर्वं यदाह विश्वास्त्वां प्रजा उपावरोहन्त्विति तदेन माभिः प्रजाभिः प्रत्यवरोहयति तस्माद क्षत्रिय मायन्त मिमाः प्रजा विशः प्रत्यवरोहन्ति त मधस्तादुपासत ऽउपसन्नो होता प्रातरनुवाक मनुवक्ष्यन् भवति ॥ ७ ॥

अथ समिध मभ्यादधदाह । देवेभ्यः प्रातर्य्यावभ्यो-ऽनुब्रूहीति छन्दाꣳसि वै देवाः प्रातर्यावाणश्छन्दाꣳ-स्यनुयाजा देवेभ्यः प्रेष्य देवान्यजेति वा ऽअनुयाजै-श्चरन्ति ॥ ८ ॥

तदु हैक ऽआहुः । देवेभ्योऽनुब्रूहीति तदु तथा न ब्रूयाच्छन्दाꣳसि वै देवाः प्रातर्यावाणश्छन्दाꣳस्यनुयाजा देवेभ्यः प्रेष्य देवान्यजेति वा ऽअनुयाजैश्चरन्ति तस्मादु ब्रूयाद्देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीत्येव* ॥ ९ ॥

अथ यत्समिध मभ्यादधाति । छन्दाꣳस्येवैतत्समिन्धे-ऽथ यद्धोता प्रातरनुवाक मन्वाह छन्दाꣳस्येवैतत्पुनरा-प्याययत्ययातयामानि करोति यातयामानि वै देवै-श्छन्दाꣳसि छन्दोभिर्हि देवाः स्वर्गं लोकꣳ समा-श्नुवत न वा ऽऋच स्तुवते न शꣳसन्ति तच्छन्दाꣳस्येवै-तत्पुनराप्याययत्ययातयामानि करोति तैरयातया-मैर्यज्ञं तन्वते तस्माद्धोता प्रातरनुवाक मन्वाह ॥ १० ॥

तदाहुः । कः प्रातरनुवाकस्य प्रतिगर ऽइति जाग्रद्वै-वाध्वर्युरुपासीत स यन्निमिषति स हैवास्य प्रतिगरस्तदु तथा न कुर्याद्यदि निद्रायादपि कामꣳ स्वप्यात्स यच्च

---

* 'वृ'-इति ग, घ ।

होता प्रातरनुवाकं परिदधाति तत्प्रचरणीति स्रुग्भवति तस्यां चतुर्गृहीत माज्यं गृहीत्वा जुहोति ॥ ११ ॥

यत्र वै यज्ञस्य शिरोऽच्छिद्यत। तस्य रसो द्रुत्वापः प्रविवेश तु मदः पूर्वेद्युर्वसतीवरीभिराहरत्यथ योऽत्र यज्ञस्य रसः परिशिष्टस्त मेवैतदच्छैति ॥ १२ ॥

यद्वेवैता माहुतिं जुहोति। एत मेवैतद्यज्ञस्य रस मभिप्रस्तृणीते त मारुन्धे याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति ता एवैतत्प्रीणाति ता अस्मै तृप्ताः प्रीता एतं यज्ञस्य रसꣳ सन्नमन्ति ॥ १३ ॥

स जुहोति। शृणोत्वग्निः समिधा हवं म ऽइति शृणोतु म ऽइद मग्निरनु मे जानात्वित्येवैतदाह शृण्वन्त्वापो धिषणाश्च देवीरिति शृण्वन्तु म ऽइद मापोऽनु मे जानन्त्वित्येवैतदाह श्रोता ग्रावाणो विदुषो न यज्ञ मिति शृण्वन्तु म ऽइदं ग्रावाणोऽनु मे जानन्त्वित्येवैतदाह विदुषो न यज्ञ मिति शृण्वन्तु म इदं ग्रावाणोऽनु मे जानन्त्वित्येवैतदाह व्विदुषो न यज्ञ मिति विद्वाꣳसो हि ग्रावाणः शृणोतु देवः सविता हवं मे स्वाहेति शृणोतु म इदं देवः सवितानु मे जानात्वित्येवैतदाह सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतद्यज्ञस्य रस मच्छैति ॥ १४ ॥

अथापरं चतुर्गृहीत माज्यं गृहीत्वा*। उदङ् प्रयन्नाहाप इष्य होतरित्यप इच्छ होतरित्येवैतदाह तद्यदतो होतान्वाहैत मेवैतद्यज्ञस्य रस मभिप्रस्तृणीते त मारब्ध ऽएतानु† चैवैतदनुतिष्ठते नेदेनानन्तरा‡ नाष्ट्रा रक्षाꣳसि हिनसन्निति ॥ १५ ॥

अथ सम्प्रेष्यति। मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधनिन एताग्नीध्रात्वाले व्वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेति सम्प्रैष एवैषः§ ॥ १६ ॥

त ऽउदञ्चो निष्क्रामन्ति। जघनेन चात्वाल मग्रेणाग्नीध्रꣳ स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ते वै सह पत्नीभिर्यन्ति तद्यत्सह पत्नीभिर्यन्ति ॥ १७ ॥

यत्र वै यज्ञस्य शिरोऽच्छिद्यत। तस्य रसो द्रुत्वापः प्रविवेश त मेते गन्धर्वाः सोमरक्षा जुगुपुः ॥ १८ ॥

ते ह देवा ऊचुः। इय मु न्वेवेह नाष्ट्रा यदिमे गन्धर्वाः कथं न्विम मभयेऽनाष्ट्रे यज्ञस्य रस माहरेमेति ॥ १९ ॥

---

* 'त्वा'—इति ग, घ।

† 'ऽएता उ'—इति ख, डा०-वेबर-दृष्टश्च।

‡ 'नेदेना अन्तरा'—इति सायणसम्मत इति डा०-वेबरः।

§ 'षः'—इति ग, घ।

ते होचुः। योषित्कामा वै गन्धर्वाः सहैव* पत्नीभिरयाम ते पत्नीष्वेव गन्धर्वा गर्द्धिष्यन्त्यथैत मुभयेऽनाष्ट्रे यज्ञस्य रस माहरिष्याम इति ॥ २० ॥

ते सह पत्नीभिरीयुः। ते पत्नीष्वेव गन्धर्वा जगृधुरथैत मुभयेऽनाष्ट्रे यज्ञस्य रस माजह्रुः ॥ २१ ॥

तथो ऽएवैष एतत्। सहैव पत्नीभिरेति ते पत्नीष्वेव गन्धर्वा गृध्यन्त्यथैत मुभयेऽनाष्ट्रे यज्ञस्य रस माहरति† ॥ २२ ॥

सोऽपोऽभिजुहोति। एताꣳ ह वा ऽआहुतिꣳ हुता मेषु यज्ञस्य रस उपसमैति तां प्रत्यत्तिष्ठति त मेवैतदाविष्कृत्य गृह्णाति ॥ २३ ॥

यद्वेवैता माहुतिं जुहोति। एत मेवैतद्यज्ञस्य रस मभिप्रस्तृणीते त मारुन्धे त मपो याचति याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति ता एवैतत्प्रीणाति ता अस्मै तृप्ताः प्रीता एतं यज्ञस्य रसꣳ सन्नमन्ति ॥२४॥

स जुहोति। देवीरापो ऽअपान्नपादिति देव्यो ह्याप स्तस्मादाह देवीरापो ऽअपान्नपादिति यो व ऊर्म्मिर्हविष्य इति यो व ऊर्मिर्यज्ञिय इत्येवैतदाहेन्द्रियावान्मदिन्तम इति व्वीर्यवानित्येवैतदाह यदाहेन्द्रिया-

* 'सह'-इत्येव ग, घ। † 'ति'-इति ग, घ।

वानिति मदिन्तम इति स्वादिष्ठ इत्येवैतदाह तं देवेभ्यो देवत्रा दत्तेत्येतदेना अयाचिष्ट यदाह तं देवेभ्यो देवत्रा दत्तेति शुक्रपेभ्य इति सत्यं वै शुक्रꣳ सत्यपेभ्य इत्येवैतदाह येषां भाग स्थ स्वाहेति तेषा मु ह्येष भागः* ॥ २५ ॥

अथ मैत्रावरुणचमसेनैता माहुति मुपप्लावयति। काषिंरसीति यथा वा ऽअङ्गारोऽग्निना सातः स्यादेव मेषाहुतिरेतया देवतया साता भवति राजानं वा ऽएताभिरद्भिरुपस्रक्ष्यन् भवति या एता मैत्रावरुणचमसे व्वज्रो वा आज्यꣳ रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमꣳ हिनसानीति तस्माद्वा ऽअपप्लावयति ॥ २६ ॥

अथ गृह्णाति। समुद्रस्य त्वाक्षित्या ऽउन्नयामीत्यापो वै समुद्रोऽप्स्वेवैतदक्षितिं दधाति तस्मादाप ऽएतावति भोगे भुज्यमाने न क्षीयन्ते तदन्वेकधनानुन्नयन्ति तदनु पान्नेजनान् ॥ २७ ॥

तद्यन्मैत्रावरुणचमसेन गृह्णाति। यत्र वै देवेभ्यो यज्ञोऽपाक्रामत्त मेतद्देवाः प्रैषैरेव प्रैष मैच्छन् पुरोरुग्भिः प्रारोचयन्निविद्भिर्न्यवेदयंस्तस्मान्मैत्रावरुणचमसेन गृह्णाति ॥ २८ ॥

---

* 'ग'–इति ग, घ।

त ऽआयन्ति। प्रत्युपतिष्ठतेऽग्नीच्चात्वाले व्वसतीवरीभिश्च होतृचमसेन च स उपर्युपरि चात्वालꣳ सꣳस्पर्शयति व्वसतीवरीश्च मैत्रावरुणचमसं च स मापो ऽअद्भिरग्मत स मोषधीभिरोषधीरिति यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाद्याहृतस्त मेवैतदुभयꣳ सꣳसृजति ॥ २९ ॥

तद्धैके*। ऐव मैत्रावरुणचमसे व्वसतीव्वरीर्नयन्त्या मैत्रावरुणचमसाद्वसतीवरीषु यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाद्याहृतस्त मेवैतदुभयꣳ सꣳसृजाम इति व्वदन्तस्तदु तथा न कुर्याद्यद्वा ऽआधवनीये समवनयति तदेवैष उभयो यज्ञस्य रसः सꣳसृज्यतेऽथ होतृचमसे व्वसतीवरीर्गृह्णाति निग्राभ्याभ्यस्तद्यदुपर्युपरि चात्वालꣳ सꣳस्पर्शयत्युतो वै देवा दिव मुपोदक्रामं†-स्तद्यजमान मेवैतत्स्वर्ग्यं पन्थान मनुसञ्ज्ञापयति ॥ ३० ॥

त ऽआयन्ति। तꣳ होता पृच्छत्यध्वर्यो ऽवेरपा३ ऽइत्युविदोऽपा३ ऽइत्येवैतदाह तं प्रत्याहोतेव नन्नमुरित्युविद मथो मेऽनꣳसतेत्येवैतदाह ॥ ३१ ॥

स यद्यग्निष्टोमः स्यात्‡। यदि प्रचरण्याꣳ सꣳस्रवः

---

* 'के'–इति ग, घ।  † 'मुपोदक्रामं'–इति ग, घ।

‡ 'स्यात्'–इति ग, घ।

परिशिष्टोऽलꣳ होमाय स्यात्तं जुहुयाद्यद्यु नालꣳ होमाय स्यादपरं चतुर्गृहीत माज्यं गृहीत्वा जुहोति य मग्ने पृत्सु मर्त्य मवा व्वाजेषु यं जुनाः* । स यन्ता शश्वतीरिषः स्वाहेत्याग्नेय्या जुहोत्यग्निर्वा ऽअग्निष्टोमस्तदग्नावग्निष्टोमं प्रतिष्ठापयति मर्त्तवत्या पुरुषसम्मितो वा ऽअग्निष्टोम एवं जुहुयाद्यद्यग्निष्टोमः स्यात् ॥ ३२ ॥

यद्युक्थ्यः स्यात् । मध्यमं परिधि मुपस्पृशेत्त्रयः परिधयस्त्रीण्युक्थान्येतैरु हि तर्हि यज्ञः प्रतितिष्ठति यद्यु ऽअतिरात्रो वा षोडशी वा स्यान्नैव जुहुयान्न मध्यमं परिधि मुपस्पृशेत्स मुद्यैव तूष्णी मेत्य प्रपद्येत तद्यथायथं यज्ञक्रतून् व्यावर्त्तयति ॥ ३३ ॥

अयुजा अयुजा एकधना भवन्ति । त्रयो वा पञ्च वा पञ्च वा सप्त वा सप्त वा नव वा नव वैकादश वैकादश वा त्रयोदश वा त्रयोदश वा पञ्चदश वा द्वन्द्व मृह मिथुनं प्रजनन मथ य एष एकोऽतिरिच्यते स यजमानस्य श्रिय मभ्यतिरिच्यते स वा ऽएषाꣳ सधनं† यो यजमानस्य श्रिय मभ्यतिरिच्यते तद्यदेषाꣳ सधनं तस्मादेकधना नाम ॥ ३४ ॥ ४ ॥

॥ इति सप्तमप्रपाठके चतुर्थं ब्राह्मणम् [९. ३.] ॥

---

* 'नाः'–इति ग, घ ।  † 'सधुनं'–इति च डा०-वेबर-दृष्टः ।

अथ सुत्यादिवसप्रातःकालीनं सवनीयपश्वर्थप्रयोग माह— "तान्सम्प्रबोधयन्तीत्यादिना। 'तान्' ऋत्विजः रात्रेरपरभागे प्रबोधयेयुरध्वर्यवः। "अपररात्रे ऋत्विजः प्रबोधयन्ति"-इति[1] सूत्रम्। उदकोपस्पर्शनं विहितकर्मण उपलक्षणम्। "गृहीत्वाज्यान्यायन्तीति। अत्र प्रयोग उक्तः सूत्रे— "अप उपस्पृश्य शालाद्वार्ये परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणस्रुक्सम्मार्जनोद्वासनावेक्षणानि कृत्वाग्नीध्र उत्पूय पश्वाज्यग्रहणम्, आज्यान्यादाय सोमं चार्यन्त्याहवनीय इध्मप्रोक्षणादि करोति, अग्नीषोमीयवत् स्तरणम्, आज्यासादनात् कृत्वैवान्तरेणाढ्कसोम मद्रिषु सम्मुखेषु निदधाति हदे लेति"-इति[2] ॥ १ ॥

त मिमं सोमोपावहरणं समन्त्रकं विधत्ते— "अथ राजान मुपावहरतीति। अधिषवणचर्मोपरिप्रदेशं प्रति अधो नयेत्। अधःपातनं प्रशंसति— "इयं वै प्रतिष्ठा जनूरिति। 'आसाम्' उत्पत्तिमतीनां सर्वासां परिदृश्यमानानां 'प्रजानाम्' 'इयं' खलु भूमिः 'प्रतिष्ठा'। अस्य इदं 'जनूः' जन्मभूमिः। अस्यापि प्रजान्तःपातित्वात् 'इमां' 'प्रतिष्ठाम्' 'अभि' लक्ष्य 'एव' 'उपावहरति' उपावहरणं कृतवान् भवति। तथा सति 'तं' सोमम् 'अस्यै' अस्याः सकाशात् 'तनुते' विस्तारितवान् भवति, 'अस्यै' अस्याः सकाशात् उत्पादितवांश्च भवति ॥ २ ॥

उपावहरणमार्ग माह— "अन्तरेणेव इति। 'ईषे' आयतौ[3]

---

१— का० श्रौ० सू० ९. १. १। २— का० श्रौ० सू० ९. १. २–५।

३— 'आयत्यै'-इति च, डा-वेबरदृष्टस्य।

शकटदण्डौ। यज्ञसाधनसोमाश्रयत्वात् 'अनसः' शकटस्य यज्ञत्वम्। तयोरन्तरालादधः सुप्रावरोहणेन 'यज्ञाद्' हविर्द्धानात् बाह्यं न कृतवान् भवति। ग्राव्णां मध्ये स्थापनं विधाय प्रशंसति— "ग्रावसु सम्मुखेष्विति। सोमस्य वेदेषु क्षत्रियजातित्व मसकृदुक्तम्; ग्राव्णां तु बहुत्वात् शेषत्वेनोपसर्जनत्वाच्च विशो रूपत्वम्। मध्ये स्थापनेन यत् सर्वग्रावसाम्मुख्यम्, तत् प्रशंसति— "तद्यत् सम्मुखा भवन्तीति। 'क्षत्रियम्' 'अभि'लक्ष्य 'अभिवादिनीम्' अभिवादनशीलां 'करोति' ॥ ३ ॥

उपावहरणप्रकार मभिधायोपावहरणमन्त्र माह— "स उपावहरति[1] हृदे त्वा मनसे त्वेति[2]। हे सोम! त्वां 'हृदे' हरति। दूरस्थं विषयाभिमुखं स्वोपहित मात्मानं हरतीति वा। हृदय मन्तःकरणम्, तद्विशेषरूपं सङ्कल्पविकल्पात्मकं मनः, यजमानसम्बन्धिनोस्तयोरुभयोर्विषयः कामः, तस्य लाभार्थम् 'उपावहरामि'। कर्मकारकस्य द्विराम्नानाद् उपावहरामीति द्विरभ्यासः; अतो वाक्यद्वयम्; न व्याख्यानव्याख्येयभावः ( ४ )।

तथा 'दिवे' देवलोकाय त्वाम्। 'सूर्याय त्वा' एतद्रश्मिभूतानां देवाना मुपलक्षणम्। सर्वत्रोपावहरामीति योज्यम्। किञ्च हे सोम! 'ऊर्द्धम्' उपरि, तायमानत्वेनोन्नतम्, 'इमं' सोमयागं 'दिवि' द्युलोके 'देवेषु' 'यच्छ'; 'होत्राः' होत्रकाश्च देवेषु यच्छन्त्वित्यर्थः ( ५ )।

---

१— का० श्रौ० सू० ९. १. ५।

२— वा० सं० ६. २५. १।

तदर्थं हे 'सोम राजन्!' 'त्वं' 'विश्वाः प्रजाः' 'उप'लक्ष्य 'अवरोह' इति[१] (६)।

उपावरोहमन्त्रं विभज्य व्याचष्टे— "इदं त्वा मनसे त्वेति यजमानस्यैतत्कामायेत्यादिना। सूर्याय त्वेत्यत्र सूर्यशब्दः सर्वदेवतोपलक्षक इति व्याचष्टे— "देवेभ्यस्त्वेत्येवैतदाहेति। "रश्मयो ह्यस्य विश्वे देवाः"-इति[२] प्रागुक्तत्वादित्यभिप्रायः। "ऊर्द्ध्व मिम मित्यादेर्ब्राह्मणं स्पष्टम् ॥ ४, ५, ६ ॥

उपावहृतस्य सोमस्य समन्त्रक मुपस्थान माह— "अथानुसृज्योपतिष्ठत इति[३]। 'अनुसृज्य' वेष्टितं वस्त्रं विसृज्येत्यर्थः। "विश्वास्त्वा मिति[४]। मन्त्रार्थः स्पष्टः। "अयथायथ मिव वा इत्यादि। उपावहरतो यो विश्वास्त्वा मिति मन्त्रशेषः, तत्र विश्वाः प्रजा उद्दिश्य तुच्छजनवत् प्रतिचारकपुरुषनिष्पादितावरोहण मन्त्रेण स्वत एवावरोहणस्य प्रजाः प्रति सोमस्यापसर्जनलक्षणस्य च प्रतीतिः। तस्याश्च क्षत्रियभूतस्य सोमस्यानुचितत्वात् विश्वास्त्वा मित्यभिधानेन 'अयथायथम्' यथास्वरूपस्य यत् उचितं तस्य तद् वैपरीत्यं कृतं भवति। 'तत्' च 'पापवस्यसं' पापं च वसीयश्च पापवस्यसम्, साध्वसाधुमिश्रणम्। तन्मूलत्वेनेदानी मपि जनैः 'पापवस्यसं क्रियते'। अत उक्तवैलक्षण्येनोपस्थानमन्त्रे विश्वास्त्वा

---

१— वा० सं० ६. २६. १। एष मन्त्रोऽपि, पूर्वमन्त्रशेषत्वेन विवक्षितः।

२— ५३३ पृ० १० पं० द्रष्टव्य मिहैव पुरस्तात्।

३— "विश्वास्त्वा मिति विसृज्योपतिष्ठते"-इति का० श्रौ० सू० ८. ६।

४— वा० सं० ६. २६. २।

मित्यभिधानाद् विश्वाभिः 'प्रजाभिः' सोमोपावरोहणस्य कृतत्वात्, अवतरन्तं प्रति विश्वासां प्रजानां स्वस्वस्थानादवतरणस्योक्तत्वाद् वा नोक्तदोषावकाशः। 'अवरोहन्तु' अवरोहयन्त्वित्यर्थः। 'तस्मात्' त्वा मवरोहन्त्विति विधानात् होता राजानं 'प्रति' प्रजाना मुपक्षीणत्वसम्पादनात् इदानी मपि सम्पादयन्त मवरोहन्तं 'क्षत्रियं' सर्वाः 'प्रजाः' परिवाररूपाः 'अवरोहन्ति'। यद्वा 'आयन्तं' 'प्रति' सर्वाः 'प्रजाः' स्वस्वस्थानाद् 'अवरोहन्ति', तदनन्तरं राजान मुपरि कृत्वा 'अधस्तात् उपासते' प्रजाः। यद्वेदं पृथगेव वाक्यम्,— 'तम्' एव तीर्थम् 'अधस्तात् उपासते' ऋत्विजोऽध्वर्युप्रमुखाः॥

प्रातरनुवाकप्रयोग माह— "उपसन्नो होतेत्यादि। 'होता' 'उपसन्नः' स्वसूत्रोक्तप्रकारेण प्रातरनुवाकस्थाने उपविष्टः। होतर्युपसन्ने सति स एव प्रातरनुवाकसम्प्रैषकाल इत्यर्थः॥ ७॥

"अथ समिध मभ्यादधदिति[१]। "देवेभ्योऽनुब्रूहि"-इत्येवालम्, किं "प्रातर्यावभ्यः"-इतिविशेषणेनेत्याशङ्क्य तदुपयोगं दर्शयति— "छन्दांसि वै देवा इत्यादिना। प्रातःकाले यान्ति यज्ञं गच्छन्तीति 'प्रातर्यावाणः'। ते चानुयाजदेवास्तोभयेऽपि 'छन्दांसि' एव, गायत्र्यादिच्छन्दोरूपाः। एवं सति अनुयाजच्छन्दोदेवानां प्रैषानुवचनसमये "देवेभ्यः प्रेष्य देवान् यज"-'इति' सर्वत्र देवशब्देन व्यवहारादत्रापि तथैव प्रैषे सति, अत्रापि "छन्दोदेवान् यज"-इति

---

१— "प्राग् वाचं प्रवदितोः प्रातरनुवाकोपाकरणं देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति समिध मादधत्"—इति का० श्रौ० सू० ९. १. १०।

प्रैषात् अनुयाजदेवताच्छन्दांस्यपि आगमिष्यन्तीति तद्व्यावर्त्तनाय "देवेभ्यः प्रातर्यावभ्यः"-इति विशेषणेन भवितव्य मित्यर्थः ॥ ८ ॥

"तदु हैक आहुरिति। अत्र देवेभ्य इत्येवालं किं प्रातर्यावभ्य इति विशेषणेनेति 'एके' शाखिनो ब्रुवते। 'तदु' 'तथा' उक्तप्रकारेण 'न ब्रूयात्'। तेषां मतातिक्रमे उपपत्तिस्तु अनुयाजव्यावृत्तिसिद्धिरेवेत्याह– "छन्दांसि वै देवा इत्यादि। अत्र सूत्रम्– "देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति समिध मादधाति, देवेभ्य इत्येके"-इति[1] ॥ ९ ॥

प्रातरनुवाकोपक्रमाङ्गभूतं समिदाधानं छन्दोदेवतासमिन्धनरूपत्वेन प्रशंसति– "अथ यत् समिध मभ्यादधातीति[2]। होतृकर्त्तव्यं प्रातरनुवाकानुवचनं छन्दसां पुनराप्यायनरूपत्वेन प्रशंसति– "अथ यद्धोता प्रातरनुवाक मन्वाहेति। तेनाप्यायनेन 'छन्दांसि' एव 'अयातयामानि' अगतसाराणि 'करोति'। उक्तस्याप्यायनस्य सार्थकत्वाय गतसारत्वप्रसक्तिं दर्शयति– "यातयामानि वा इति। देवैः हृतानीति शेषः। "छन्दोभिर्हि देवाः स्वर्गं लोक मिति। स्वर्गार्थ मुपयुक्तत्वात् तेषां यातयामत्वप्राप्तिः। तदेव यातयामत्वं प्रातरनुवाकस्य स्तुतशस्त्रत्वाभिधानेन समर्थयते– "न वा अत्रेति। स्तौति शंसति वोभयोरभावात् अनुवचनाभिधानाच्च निगयति– "तस्माद्धोता प्रातरनुवाक मिति[3] ॥ १० ॥

---

१— का० श्रौ० सू० ९. १. ११। २— का० श्रौ० सू० ९. १. १० ख॥
३— "सुब्रह्मण्याञ्च प्रेष्यति"–इति चेह का० श्रौ० सू० ९. १. १२।

प्रातरनुवाकस्य प्रतिगर-विषये केषाञ्चिन्मतं प्राप्तिपूर्वक मुदाहृत्य निराचष्टे— "तदाहुः कः प्रातरनुवाकस्येति। केचन महर्षयः एवं ब्रुवते,— होतुः प्रातरनुवाककाले अध्वर्युः विनिद्रः सनिमेषं करोति। सनिमेषव्यापार एव (प्रतिगरणक्रियमाणत्वात्[1]) प्रतिगरस्थानीय इति। 'तदु तथा न कुर्यात्' निद्राभङ्गं निमेषं च न कुर्यादित्यर्थः। तर्हि किं कुर्यात्? 'यदि निद्रा आयात्' निद्रामात्मन इच्छेत्, 'अपि कामं' 'स्वप्यात्' स्वापं कुर्यात्। अत्र सूत्रम्— "प्रातरनुवाकं जाग्रदुपासीताध्वर्युः, स्वप्याद्वा"-इति[2] ॥

अत्र मध्ये "अग्नीदैन्द्र मेकादशकपाल मित्यादि[3]-सूत्रोक्तः सवनीयनिर्वापः, ग्रहचमसपात्राणा मासादनप्रयोगश्च द्रष्टव्यः[4] ॥

एकधनाख्याना मुदकाना मानयनार्थं यः प्रचरण्या होमोऽस्ति, तं विधाय प्रशंसति— "स यत्र होतेति। 'यत्र' यस्मिन् समये 'स होता' 'प्रातरनुवाकं' 'परिदधाति', परिधानीयाम् "अभूदुषा"-इत्येतां[5] ब्रूयात्, 'तत्' तदा 'प्रचरणी'। प्रचरन्त्यनया जुह्वपभृतोर्व्यापारदशाया मिति 'प्रचरणी'। सा 'स्रुग् भवति'। 'तस्यां[6] चतुर्गृहीत माज्यं गृहीत्वा' 'जुहोति' जुहुयात्[7]। प्रातरनुवाकपरिधान-प्रचरणीहोमयोरभिन्नकर्तृकत्वात् कालार्थसम्प्रयोगः ॥ ११ ॥

---

१— नास्त्येतत् पदं छ-पुस्तके। २— का० श्रौ० सू० ९. १. १३, १४।
३— का० श्रौ० सू० ९. १. १५ (०लं निर्वपति)।
४— का० श्रौ० सू० ९. १. १६–२. २३। ५— ऋ० सं० ५. ७५. ९।
६— 'तया'-इति छ। ७— का० श्रौ० सू० ९. ३. १ क।

होमं प्रशंसति— "यत्र वै यज्ञस्येति[1]। 'हुत्वा' गत्वा 'रसः' यज्ञरसः सः 'अपः' 'प्रविवेश'। यः प्रविष्टो यज्ञरसः 'पूर्वेद्युः' वसतीवर्यरूपेणावशिष्टोऽस्ति, 'त मेव' रसम् 'अच्छ' अभिमुखीकृत्याभिगच्छति। पशुहोमाभावे यज्ञरसहरणार्थगमनासम्भवात् प्रचरण्याज्याहुतिहोम एव यज्ञरसाभिमुखगमन मित्यभिप्रायः॥ १२॥

आहुतिप्रस्तरणात्मनापि प्रशंसति— "यद्वेवैता माहुतिं जुहोतीति। 'यद्वु एव' यदेव। 'एतत्' एतेन होमेन 'एत मेव' अवशिष्ट मेव 'यज्ञस्य रसम् अभिप्रस्तृणीते' रसस्य स्तरणं कृतवान् भवति। तेन च 'त मारब्धे' स्वाधीनं कृतवान् भवति। न केवल मेतदेव, अपि च 'याभ्यो देवताभ्यः' अग्न्यादिभ्यः 'एता माहुतिं जुहोति', 'ता एव' 'एतत्' एतेन होमेन 'प्रीणाति'। 'सचमन्ति' प्रापयन्ति॥ १३॥

होममन्त्रं विच्छिद्यानूद्य व्याचष्टे— "स जुहोति[2] शृणोत्वग्निरित्यादिना[3]। 'अग्निः', 'आपः', 'धिषणाः' वाचः, 'देवीः' देव्यः, 'विदुषो न ग्रावाणः', 'सविता' च, मे 'हवम्' आह्वानं 'यज्ञ मिमं शृण्वन्तु'— इति सङ्ग्रहार्थः। अत्र सर्वत्र "शृणोतु" 'शृण्वन्तु'-इति, "अनुजानातु" 'अनुजानन्तु'-इति चार्थपरतया व्याख्यातम्। 'श्रोता ग्रावाणः'-इत्यत्र "द्व्यचोऽतस्तिङः"-इति[4] दीर्घः। 'विदुषः'-इत्येतद् ग्रावविशेषणतया व्याचष्टे— "विद्वांसो हि ग्रावाण इति। प्रथमा-

---

१— श्रुत मिद माख्यान मिहैव पुरस्तात् ( ५३२ पृ॰ १० पं॰ )।

२— का॰ श्रौ॰ सू॰ ९. ३. १ ख।

३— वा॰ सं॰ ६. २६. २।  ४— पा॰ सू॰ ६. ३. १३५।

बहुवचने छान्दसं द्वितीयाबहुवचनम् । चरमपादे सवितृशब्दप्रयोगस्य तात्पर्य माह— "सविता वै देवानां प्रसवितेति ॥ १४ ॥

"अथापरं चतुर्गृहीत मिति[1] । पूर्वं मेकदारग्रहणस्योक्तत्वादपर मित्युक्तम् । चत्वारि गृहीतानि ग्रहणानि यस्याज्यस्य तच्चतुर्गृहीतम् । अप्सु होमार्थं गृहीत्वा उदङ्मुखं गच्छन् यजमानः प्रैषान् ब्रूयात् ॥

तत्र प्रथमप्रैष मुक्त्वा व्याचष्टे— "अप इष्य होतरिति"-इत्यादि[2] । हे 'होतः!' 'अपः' प्रति 'इष्य' इच्छ, अपः प्रतिगमनोचितं प्रदेवत्रेति[3] अपोनप्त्रीय[4] मनुब्रूहीत्यर्थः । इष्यतेरिच्छतिरर्थ इति व्याचष्टे— "अप इच्छ होतरित्येवैतदाहेति । पदं व्याख्याय तात्पर्य माचष्टे— "तद्यदमो होतान्वाहेति । गतोऽर्थः । "एता उ चैवैतदाहेति । 'उ'-शब्दोऽप्यर्थे । अपि च 'एताः' एकधनाख्या अप उद्दिश्य 'एतत्' अनुतिष्ठते । एतदित्युक्तम्, किं तदित्याह— "नेदेना इति । 'एनाः' अपः । 'नाष्ट्रा' नाशकानि 'रक्षांसि' 'हिनसन्' हिंस्युः । नेदिति परिभवे । "नेत्येष इदित्येतेन सम्प्रयुज्यते परिभवे"-इति नैरुक्तम्[5] । अतस्तासां हिंसा माभूदित्यर्थः ॥ १५ ॥

---

१— का० श्रौ० सू० ९. ३. २ क ।

२— का० श्रौ० सू० ९. ३. २ ख । होतारं प्रत्यध्वर्युराह ।

३— "प्रदेवत्रा"—इत्याद्यपोनप्तृदेवताकं सूक्त मपोनप्त्रीयम् ( ऋ० सं० १०. ३०. ) । ऐ० ब्रा० २. ३. १ द्रष्टव्यम् ।

४— 'आपोनप्त्रीयम्'—इति क-पुस्तके ।

५— निरु० १ अ० ३ पा० ६ ख० ।

अन्यान् प्रैषान् दर्शयति— "अथ सम्प्रेष्यतीति। "मैत्रावरुणस्य चमसाध्वर्यवेहीति[1]। दश चमसाध्वर्यवः चमसप्रोक्तारः, तेषु यो मैत्रावरुणस्य चमसाध्वर्युः, स सम्बोध्यते। 'एहि' उदकानयनार्थ मागच्छेति॥

"नेष्टः पत्नीरुदानयेति[2]। हे 'नेष्टः!' त्वं 'पत्नीः' पान्नेजनोद-भाराहरणार्थम् 'उदानय'॥

"एकधनिन एतेति[3]। एकधना उदकानि, तेषां धारका' कुम्भा वा; प्रत्यगेकधनानयुग्मानित्यासादनाभिधानात्; तेषां ग्रही-तारः 'एकधनिनः' 'एत' आगच्छत॥

"अग्नीच्चात्वाल इति[4]। हे 'अग्नीत्!' त्वं पूर्वेद्युर्गृहीताभिः वस-तीवरीभिः', 'होतृचमसेन' 'च' युक्तः सन्, चात्वालदेशे यावदागमनं 'प्रति' 'उपतिष्ठासै' उपतिष्ठेति निर्द्दिष्टः॥

एतेन मन्त्राश्चेद् व्याख्यातव्याः विधयश्चेत् स्तोतव्या इत्याशङ्काह— "सम्प्रैष एवैष इति। 'एषः' "मैत्रावरुणस्य चमसाध्वर्यो"-इत्यादिकः कर्त्तव्यः 'सम्प्रैष एव' विस्मृतिपरिहारार्थं प्रेषण मित्यर्थः॥ १६ ॥

तेषां जलानयनार्थं निर्गमनमार्ग माह— "त उदञ्चो निष्क्राम-न्तीति। आग्नीध्रचात्वालयोरन्तरालदेशेन उदग्देशेन। तत्र नोप-लभ्यन्ते कथ मित्यत आह— "स यस्यां ततो दिशीति। निर्गमने

---

१— का० श्रौ० सू० ९. ३. ३। इति चमसाध्वर्युम्।

२— का० श्रौ० सू० ९. ३. ४। इति नेष्टारम्।

३— का० श्रौ० सू० ९. ३. ५। 'एकधनिनः' ऋत्विजः सर्वे।

४— का० श्रौ० सू० ९. ३. ६।

एव उदङ्नियमः। गमनसमये पत्नीसाहित्यं विधाय तदाख्यानमुखेन प्रशंसति— "सह पत्नीभिर्यन्तीति[1]— ॥ १७ ॥

"यत्र वै यज्ञस्येत्यादि। पुरा किल देवैर्यज्ञशिरश्छेदादुद्गतं रसं पलाय्य अप्सु निविष्टम्, तं रसं गन्धर्वाः सोमपालकाः ररक्षुः— ॥ १८ ॥

"ते ह देवा इति। 'ते देवा ऊचुः'— 'इमे गन्धर्वाः' एव 'नाष्ट्राः' नाशकरूपाः, 'कथम्' 'अनाष्ट्रे' नाशरहिते देशे 'रसं' यज्ञरसम् 'आहरेम' 'इति'— ॥ १९ ॥

एवं विचार्य— "ते ह्योचुर्योषित्कामा इति। गन्धर्वा योषित्प्रियाः, तद्वयं पत्नीभिः सहिता एव गच्छामः, ते च गन्धर्वाः पत्नीषु काङ्क्षन्ति, तस्मिन् समये वय मभयेऽनाष्ट्रे यज्ञरस माहरिष्याम इति ॥ २० ॥

"ते सह पत्नीभिरीयुरिति। ताभिः सह गताः, ते च तथैव तास्वाकाङ्क्षां कृतवन्तः। तस्मिन् समये देवाः यज्ञरसम् 'आजह्रुः' ॥ २१ ॥

"तथो एवैष एतदिति। यथा पुरा, इदानी मपि तथैव। तदेतेन पत्नीभिः सह गमनेन एते गन्धर्वाः पत्नीषु काङ्क्षां कुर्वन्तो भवन्ति, तथा अबाधितस्थले रस माहृतवान् भवति ॥ २२ ॥

प्रचरणीगृहीतस्याज्यस्याप्सु होमं विधाय प्रशंसति— "सोऽपोऽभिजुहोतीति[2]। 'कृता माहुतिम्' अनुसृत्य 'एषः' अनुप्रविष्टः

---

१— "सहगमनमात्र मत्र विधीयते"—इति या० दे० का० सू० ६. ६. ७।
२— का० श्रौ० सू० ६. ३. ७।

'यज्ञस्य रसः' 'उपसमेति' अभिमुखं सम्प्राप्नोति। एतस्यैव व्याख्यानम्— "तां प्रत्युत्तिष्ठतीति। 'त मेव' रसम् 'एतत्' एतेन होमेन 'आविष्कृत्य' उदकेष्वनुप्रविष्टं प्रादुर्भाव्य गृहीतवान् भवति ॥ २३ ॥

प्रकारान्तरेणापि प्रशंसति— "यद्धैवैता माहुतिं जुहोतीति। न केवलं रसार्थं प्रस्तरणं किन्तु तं प्रवर्द्धन्तं रस मारूढवान् भवति। किञ्च 'तम्' अपेक्षितं यज्ञरसम् 'अपः' उदकानि 'याचति', 'उ' अपि च 'याभ्यः देवताभ्यः एताम् आहुतिं जुहोति', 'ता एव' 'एतत्' एतेन 'प्रीणाति'। 'तृप्ताः' 'प्रीताः' च 'ताः' 'अस्मै' यजमानाय 'एतं यज्ञस्य रसं' 'सन्नमन्ति' सन्नमयन्ति, यजमानाधीनं कुर्वन्ति ॥ २४ ॥

मन्त्रं विधाय विच्छिद्य व्याचष्टे— "स जुहोतीति। "देवीराप इति[1]। हविष्य इति पदं व्याचष्टे— "यो व ऊर्मिर्हविष्य इति, यो व ऊर्मिर्यज्ञिय इत्येवैतदाहेति। हविश्शब्देन तत्साध्यो यज्ञो लभ्यते; द्रव्यदेवतयोर्हि यज्ञस्वरूपत्वात्। इन्द्रियशब्दस्य वीर्य मर्थ इति व्याचष्टे— "इन्द्रियावान् मदिन्तम इति, वीर्यवानित्येवैतदाहेति। स्पष्ट मेतत्। तत्रैव वाक्ये मदिन्तमशब्दस्यार्थ माह— "मदिन्तम इति, स्वादिष्ठ इत्येवैतदाहेति। यत् स्वदन्त मुन्मादयतीति। "तं देवेभ्यः"-इतिभागस्य प्रार्थनायां तात्पर्य मिति व्याचष्टे— 'एतत्' एतेन 'अयाचिष्ट', 'यदाह तं देवेभ्यो देवत्रा दत्तेति'। "लोट् च"-इति[2] लोटो विध्याद्यर्थेषु मध्ये प्रार्थनाया

१— वा० सं० ६. २७. १।

२— पा० सू० ३. ३. १६२।

सम्भवात् 'एतत्' एतेन मन्त्रभागेन 'एनाः' अपः 'अयाचिष्ट' देवतार्थं याचितवान् भवति। "देवेभ्यः"-इत्यस्य यत् "शुक्रपेभ्यः"-इति विशेषणम्, तस्य तात्पर्य माह— "सत्यं वै शुक्रम्, सत्यपेभ्य इत्येवैतदाहेति। शुक्रं दीप्तम्, रसाख्यं वस्तु, तत् सत्यम्। सोमद्वारेण सत्यस्यामृतत्वधर्मस्य साधनत्वात् सत्य मित्युच्यते। तादृशस्य पातृभ्य इत्येतदेवैतत् शुक्रपेभ्य इति वाक्य माहेत्यर्थः। "येषां भाग स्थ स्वाहा"-इति चरमभागस्य तात्पर्य माह— "तेषा मु ह्येष भाग इति। 'एषः' अपां शुक्ररसरूपो भागः, 'तेषा मु' तेषां शुक्रपानां देवानां 'भागः' प्रतिनियतांशः खलु; अतो येषा मिति मन्त्रे निर्द्दिष्ट इत्यभिप्रायः॥

मन्त्रस्याय मर्थः।— हे 'देवीः' देव्यः! 'आपः!' हे 'अपान्नपात्' न पातयति तत्[1], 'यः' अयं 'वः' युष्माकं सम्बन्धी 'ऊर्म्मिः' प्रवृद्धः 'हविष्यः' रसः, 'इन्द्रियावान्' "मन्त्रे सोमाश्वेन्द्रियेत्यादिना[2] दीर्घः, इन्द्रियवान्, 'मदिन्तमः' मादयितृतमः, 'तं' रसं 'देवत्रा' "देवमनुष्येत्यादिना[3] सप्तम्यर्थे त्रा-प्रत्ययः। देवेषु मध्ये 'शुक्रपेभ्यो देवेभ्यः' 'दत्त' प्रयच्छत। हे आपो यूयं 'येषां' देवानां 'भागः' 'स्थ' भवथ, तदर्थं 'स्वाहा' इदं द्रव्यं स्वाहुत मस्त्विति॥ २५॥

हुताया आहुत्या अपसारणं समन्त्रकं विधत्ते— "अथ मैत्रावरुणचमसेनेति[4]। तत्र मन्त्रः— "कार्षिरसीति[5]। हे हुताज्य-

---

१— निरु० ८. २. २, १०. २. ५, ऋ० सं० १. १४३ सा० भा० द्रष्टव्यम्।
२— पा० सू० ६. ३. १३१। ३— पा० सू० ५. ४. ५६।
४— का० औ० सू० ६. ३. ८। ५— वा० सं० ६. २८. १।

पदार्थ ! त्वं 'कार्षिः' कृषेर्देवतायाः, कर्षणस्य भक्षणस्य वा सम्बन्धी 'असि'। अतस्त्वां 'समुद्रस्य' समुन्दनरूपस्योदकस्य 'अक्षित्यै' अक्षीणतायै 'त्वा' त्वाम् 'अपनयामि' अपसारयामि[1]। उक्तस्याप-सारणस्य प्रयोजकं स्नातत्व माह— "यथा वा अङ्गारोऽग्निना स्नातः स्यादिति। 'स्नातः' भक्षितः ; 'अग्निना' भक्षितः 'अङ्गारः' 'यथा' करीषभावेन त्याज्यो भवति, 'एवम्' 'एषा आकृतिः' 'एतया' अब्देवतया 'स्नाता भवति'। सोमहिंसापरिहारत्वेनापि परित्यक्तव्य मित्याह— "राजानं वा एताभिरिति। 'मैत्रावरुणचमसे' 'याः' 'एताः' इदानीं गृह्यमाणा आपः सन्ति, 'एताभिः' अद्भिः 'उपसृक्ष्यन्' अभिषवकाले सोमस्य संसर्गं करिष्यन् 'भवति' ; अत एव "आधवनीये समवनयति"-इति वक्ष्यते[2] ; आधवनीये संसृष्टस्योदकस्य सोमरसेन संसृज्यमानत्वात्। "वज्रो वा आज्यम्"-इत्यादि, प्रागसकृद् व्याख्यातम्[3], "घृतं खलु वै देवा वज्रं कृत्वेत्यादिप्रदर्शनेन[4] ॥ २६ ॥

समन्त्रकं मैत्रावरुणचमसेनोन्नयनं विधत्ते— "अथ गृह्णाति

---

१— 'उन्नयामि' इत्येव मूलपाठः। 'गृह्णामि'—इति च तदर्थः कृतो महीधरेण, सूत्रे विनियोगस्य तथाविध एव, अनुपदं वक्ष्यति चेहोत्तरस्यां कण्डिकायां तथैव। नास्ति चैतन्मन्त्रस्येह व्याख्याने कश्चिदुपयोगः। कार्षिरसीत्येव ह्येको मन्त्र इह विनियुक्तः।

२— इहैव त्रिंश्यां कण्डिकायां द्रष्टव्यम् ( ५५१ पृ० १० पं० )।

३— १का० ४प्र० ४ब्रा० ४क० ( १ भा० ३६२ पृ० ७ पं० )।

४— तै० सं० ६. ३. ७. १६।

समुद्रस्य त्वेति[1]। यद्यप्यत्र मैत्रावरुणचमसेनेति न श्रुतम्, तथापि "समुद्रस्य त्वेति तेन गृह्णाति[2]"-इतिसूत्राद् गम्यते। अपां सङ्घात्मकत्वात् समुद्रस्य "आपो वै समुद्रः"-इत्येकदेशस्य कृत्स्नात्मना स्तुतिः। 'एतत्' एतेन "समुद्रस्य त्वाक्षित्यै"-इतिपाठेन 'अप्सु एव' 'अक्षितिम्' अक्षय मक्षीणत्वं 'दधाति' स्थापितवान् भवति। 'तस्मात्' "अक्षित्यै"-इत्युक्तत्वात् 'एतावति भोगे भुज्यमाने' स्थावरजङ्गमात्मकजगत्पर्याप्तेऽपि भोगे सर्वैर्भुज्यमानेऽपि 'न क्षीयन्ते' क्षयं न प्राप्नुवन्ति, अजस्रं प्रवहन्त्येव। "तदन्वित्यादि। होतृचमसोन्नयनानन्तर मेकधनाना मुन्नयनम्[3], ततः पान्नेजनानां पत्न्या इति[4] ॥ २७ ॥

सन्त्वितरेषां चमसेषु किं मैत्रावरुणचमसेनेत्यत आह— "तद्यन्मैत्रावरुणचमसेनेति। यस्माद् देवेभ्योऽपक्रान्तं यज्ञम्, एतेन मैत्रावरुणाख्येनर्त्विजा 'प्रैषैः' तत्प्रतिगमनसाधनैः आह्वानवाक्यैः 'प्रैषं' यज्ञस्य गमनम् 'ऐच्छन्'; 'निविद्भिः' निवेदनसाधनैः "अग्निर्देवेद्धः"-इत्यादिभिः[5] वाक्यैः 'न्यवेदयन्' परस्परं निवेदितवन्तः; 'पुरोरुग्भिः' 'पुरः' याज्यानुवाक्याभ्यां पुरस्तात् 'रुचिम्' इच्छां जनयन्ति देवताया इति पुरोरुचो "वायुरग्रेगाः"-

---

१— वा० सं० ६. २८. २।

२— का० श्रौ० सू० ९. ३. ९। 'तेन मैत्रावरुणचमसेन'—इति तत्र वृत्तिः।

३— का० श्रौ० सू० ९. ३. १०।

४— "पान्नेजनांश्च पत्न्यो द्वौ-द्वौ"—इति का० श्रौ० सू० ९. ३. ११।

५— निविदः १-१२ पदानि, ऐ० ब्रा० २. ५. २ प्रपत्य विहितानि।

इत्याद्याः[1], ताभिः 'प्रारोचयन्' प्ररोचना मजनयन्। अतो मैत्रावरुणस्य प्रैषादिसाधनत्वात् तदीयश्चमसः प्रशस्त इत्यर्थः। "तस्मात् मैत्रावरुणचमसेन गृह्णातीति॥ २८॥

अप्पभरणानन्तर मनुष्ठेयं विधत्ते— "त आयन्तीति। पुनर्देवयजनं प्रति आगच्छेयुः। 'अग्नीत्' च निर्गमनकाले सम्प्रेषितप्रकारेण 'चात्वाले' 'वसतीवरीभिः' अद्भिः 'होतृचमसेन च' युक्तः सन् प्रत्युपस्थानं कुर्यात्। यदुक्तं सूत्रकृता— "प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च संस्पर्शयति समाप इति, इतरस्मिन् व्यानयन्त्येके, मैत्रावरुणचमसे प्रथम मिति[2], तदिदं सर्वं विधत्ते— "स उपर्युपरि चात्वालं संस्पर्शयति, वसतीवरीश्च मैत्रावरुणचमसश्चेति। स्पष्टम्॥

तत्र मन्त्र माह— "स मापो अद्भिरिति[3]। 'आपः' मैत्रावरुणचमसगताः, 'अद्भिः' होतृचमसस्थाभिर्वसतीवरीभिः 'समग्मत' सङ्गता अभवन्। तथा 'ओषधीः' ओषध्यः, वर्द्धनीयाः व्राह्यादिरूपाः, 'ओषधीभिः' व्रीह्यादिरूपाभिः 'समग्मत'[4]। यद्वा, उभयत्र

---

१— पुरोरुचः १–७ ऋचः, वा० सं० १७. ३१–३७, ऐ० ब्रा० ३. १. ६ नामोल्लेखमात्रेण विहिताः।

२— का० श्रौ० सू० ९. ३. १२, १३, १४।

३— वा० सं० ६. २८. ३।

४— " 'ओषधीः' ओषधयो मुद्गमसूरादिकाः, 'ओषधीभिः' व्रीहियवादिभिः 'समग्मत' सङ्गच्छन्ताम्, अपां कारणभूतत्वात् ओषधीना मपि योगोऽस्तु"—इति महीधरः।

ओषधिशब्देन प्रकृता मैत्रावरुणहोतृचमसगता आपो विवक्ष्यन्ते। "यश्चासौ पूर्वेद्युरित्यादि, स्पष्टम् ॥ २९ ॥

अत्र केषाञ्चित् साक्षात् उदकसंसर्जनपक्ष मुदाहृत्य तदभिप्राय मप्याविष्कृत्य तस्यान्यथासिद्धिलप्रदर्शनेन निराचष्टे— "तद्धैक इति। 'ऐव[1] नयन्ति'-इति सम्बन्धः, आनयन्त्येवेत्यर्थः। 'आ मैत्रावरुणचमसाद् वसतीवरीषु' उपसर्गवशात् नयन्तीत्यनुषज्यते। एवं कुर्वतां पूर्वेद्युराहृतस्य यज्ञरसस्य, अद्याहृतस्य च संसर्ग एवोऽपेक्षितः, स उपरिष्टात् आधवनीये समवनयनाद् भविष्यति, अतः 'तत् तथा न कुर्यात्' इति ॥

यदुक्तं[2] "होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः इति, तदेतदाह— "अथ होतृचमस इति। आग्नीध्रहस्तस्थं होतृचमस मध्वर्युरादाय पूर्वेद्युराहृताः 'वसतीवरीः' अध्वर्युः 'गृह्णाति'। कस्मै उपयोगाय? 'निग्राभ्याभ्यः', होतृचमसे निगृह्यमाणत्वात् "निग्राभ्या"-इति सञ्ज्ञा[3]; निग्राभ्यासु च्यावयति, निग्राभ्यासु संसिञ्चति, इत्येवमर्थाय ॥

पूर्वं यदुक्तं "यश्चासौ पूर्वेद्युरित्यादि, संसर्गस्य चात्वालोपरिभावित्वम्, तत् प्रशंसति— "तद्यदुपर्युपरि चात्वाल मिति। 'अतः'

---

१— 'एवं'-इति च।

२— सूत्रकृतेति शेषः। का० श्रौ० सू० ९. ३. १५।

३— "अध्वर्युर्होतृचमसे वसतीवरीः कृत्वा आसिच्य यजमानाय समर्पयति, तास्त्वाध्वर्युणा यजमानाय समर्पितास्तमसस्था आपो निग्राभ्यसञ्ज्ञका अभिषवार्थाः; ताभ्य एव च ग्रहा अपि ग्रहीष्यन्ते"-इति या० दे०।

अस्मात् चात्वालोपरिप्रदेशात् 'देवा दिव मुपोदक्रामन्', 'तत्' तस्मात् कारणात् 'एतत्' एतेन चात्वालोपरिसंस्पर्शेन 'यजमानम्' अयं स्वर्गस्य पन्था इति 'पन्थानम्' 'अनुसङ्ख्यापयति' अनुक्रमेण सङ्ख्यापयति, सम्यक् प्रख्यापयतीति यावत् ॥ २० ॥

"त आयन्तीति। अथाध्वर्यु मुद्दिश्याब्विषयं होतुः प्रश्न मव- तारयति— "तं होता पृच्छत्यध्वर्योऽवेरपा३ इति। 'तम्' अध्वर्युं होता 'पृच्छति', हे 'अध्वर्यो!' 'अपः' उदकानि 'अवेः' लब्ध- वानसि। प्लुतिः प्रश्नार्थे[1]। "अवेः"-इत्यस्य 'अविदः' इत्यर्थ इति व्याचष्टे— "अविदोऽपा३ इत्येवैतदाहेति॥

अथाध्वर्योर्होतारं प्रति प्रतिवचन माह— "तं प्रत्याहोतेव नन्नमुरितीति[2]। वय मिदानीं न केवल मपो लब्धार एव, अपि च 'नन्नमुः' अत्यर्थ मानता अभवन्। प्रतिवचनस्य तात्पर्य माह— "अविद मथो मेऽनंसतेत्येवैतदाहेति। 'अविदम्' अपो लब्धवानस्मि 'अथो' अपि च 'मे' आपः 'अनंसत' आनता आगता अभूवन् 'इत्येव' 'एतत्' उत्तररूपं वाक्यम् 'आह' ॥ २१ ॥

यदुक्तं सूत्रकृता— "प्रचरणीसंस्रव मग्निष्टोमे जुहोत्यभावे चतु- र्गृहीतं य मग्न इति, उक्थ्ये प्रथमं परिधि मालभते, प्रविशत्यवा- न्यत्र"-इति[3], तदेतत् क्रमेण दर्शयन्नादावग्निष्टोम माह— "स

---

१— पा० सू० ८. २. १००।

२— "होत्रा पृष्टः"-इत्यादि का० श्रौ० सू० ९. ३. १५।

३— का० श्रौ० सू० ९. ३. १६, १७, १८।

यद्यग्निष्टोमः स्यादिति। 'सः' वर्त्तमानः क्रतुरग्निष्टोमसंस्थश्चेत् 'प्रचरण्यां' यः 'संस्रवः' अवशिष्टः 'होमाय' 'अलम्' पर्याप्तः 'स्यात्', तदा 'तम्' एव 'जुहुयात्'; नो चेत् पुनश्च 'चतुर्गृहीत माज्यं' 'गृहीत्वा' "य मग्ने पृत्सु"-इति[1] मन्त्रेण जुहुयात् ॥

मन्त्रस्याय मर्थः।— हे 'अग्ने !' 'यम्' 'मर्त्यं' मनुष्यं 'पृत्सु' सङ्ग्रामेषु 'अवाः' रक्षसि, तथा 'वाजेषु' अन्नेषु निमित्तभूतेषु 'यम्' मर्त्यं 'जुनाः' जवतिर्गत्यर्थः प्राप्तवानसि, 'सः' उभयविषयो जनः 'शश्वतीः' शाश्वतीः 'इषः' अन्नानि 'यन्ता' प्राप्तवान् भवति; 'स्वाहा' सुहुत मस्तु ॥

मन्त्रस्याग्नेयत्वं प्रकृते ज्योतिष्टोमकर्मणि सङ्गत मिति व्याचष्टे— "आग्नेय्या जुहोतीति। "अग्निर्वा अग्निष्टोम इति। यज्ञायज्ञीयस्यान्तिमस्तोत्रस्याग्निदेवताकत्वात्[2] अग्निष्टोमोऽग्निः; ततोऽग्न्यात्मक मग्निष्टोम माग्नेय्या होमेन 'अग्नौ' एव प्रतिष्ठापितवान् भवति। मन्त्रे यत् मर्त्तलिङ्गकत्वम्, तत् प्रशंसति— "मर्त्तवत्या; पुरुषसम्मितो वा अग्निष्टोम इति। "द्वौ स्तोमौ प्रातस्सवनं वहतो यथा प्राणश्चापानश्च"-इत्युपक्रम्य तैत्तिरीयके "पुरुषसम्मितो वा एष यज्ञ इति[3] श्रुतत्वात् पुरुषसम्मितत्व मस्य यतः, अत एवैतया मर्त्तवत्या

---

१— वा० सं० ६. २९. १।

२— ता० ब्रा० ६ अ० १ ख०—८ अ० ७ ख० पर्यन्तं द्रष्टव्यम्। तच्चैतदन्त्यखण्डस्तु विशेषतो द्रष्टव्यः।

३— त० सं० ७. १. १. १ द्रष्टव्यम्।

होमो युक्त इत्यर्थः। निगमति— "एवं जुहुयाद् यद्यग्निष्टोमः स्यादिति ॥ ३२ ॥

"यद्युक्थ्यः स्यान्मध्यमं परिधि मुपस्पृशेदिति[१]। अग्नेः परितो निधीयमानाः परिधयः। प्राच्यां दिशि सूर्य्यस्यैव परिधित्वात् ते त्रय एव। 'उक्थानि' अग्निष्टोमादुपरि उक्थ्यसंस्थे क्रतौ स्तोतव्यानि 'त्रीणि' उक्थस्तोत्राणि। अस्तु त्रित्वम्, किं तत इत्याह— "एतैरु हि तर्हीति। यतः 'एतैः' उक्थैः यज्ञः 'प्रतितिष्ठति', अतस्त्रिषु परिधिषु 'मध्यमं परिधिं' पश्चाद्दिग्गतं प्रचरण्या 'उपस्पृशेत्' ॥

अतिरात्रषोडशिनोस्तु कथ मित्यत आह— "यद्यु अतिरात्रो वा षोडशी वा स्यादिति[२]। तत्रोभयत्र होम मुपस्पर्शनं च न कुर्यात्, किन्तु 'समुद्यैव' "य मग्ने पृत्सु"-इति मन्त्र मुक्त्वैव 'तूष्णी मेत्य' देवयजनं 'प्रपद्येत'। 'तत्' तथा सति क्वचित् होमः, क्वचित् परिधिसंस्पर्शः, क्वचित् तूष्णी मिति 'यथायथं' पृथक्प्रकारेण 'यज्ञक्रतून्' अग्निष्टोमादिकान् 'व्यावर्त्तयति' परस्पर-व्यावृत्तान् करोति ॥

तथाच तैत्तिरीयकम्— "यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ निमार्ष्टि, यद्यतिरात्रो यजुर्वदन् प्रपद्यते यज्ञक्रतूनां व्यावृत्त्यै"-इति[३]। कात्यायनस्तु अतिरात्रषोडशिनौ प्रति विकल्प

---

१— "उक्थ्ये प्रथमं परिधि मालभते"-इति (श्रौ० ९. ३. १७) विचार्यम्।

२— "प्रविशत्येवान्यत्र"-इति का० श्रौ० सू० ९. ३. १८।

३— तै० सं० ६. ४. ४. १४।

मुक्तवान्— "एराश्वालम्भनं वा षोडशिनि, ऋदिरतिरात्रे"-इति[1] ॥ ३ २ ॥

इदानीमेकधननामघटानामयुग्मसङ्ख्याविकल्पमाह— "अयुजा अयुजा एकधना भवन्तीति। वक्ष्यमाणं त्रिपञ्चादिपक्षबहुत्वाभिप्रायेण वीप्सा। 'अयुजाः' त्रि-पञ्चादयः। तानेवायुग्मविकल्पानुदाहरति— "त्रयो वा पञ्च वेत्यादिना। त्रयो वा पञ्च वेत्येको ऽयुग्मविकल्पः, पञ्च वा सप्त वेत्यपरः। एव मुत्तरेष्वपि द्रष्टव्यम्। तथा चासादनप्रस्तावे कात्यायनः— "प्रत्यगेकधनानयुग्मानुदहरणांस्त्रिप्रभृत्या पञ्चदशभ्यः"-इति[2] ॥

अथ युग्मसङ्ख्या एकधनशब्दनिर्वचनं प्रदर्शयन् प्रशंसति— "द्वन्द्व मह मिथुनं प्रजनन मथ य एष एकोऽतिरिच्यत इत्यादिना। एषु विकल्पेषु मध्ये यदि त्रयस्तदा द्वावेकं द्वन्द्वं तृतीयोऽतिरिच्यते; यदि पञ्च, तदा द्वे द्वन्द्वे पञ्चमोऽतिरिच्यते। एवं सप्त-नवैकादश-त्रयोदश-पञ्चदशस्वपि योज्यम्। तत्र यत् 'द्वन्द्वं' तत् 'मिथुनम्', तच्च यजमानस्य पुत्रपौत्रादिप्रजननरूपम्; 'य एषोऽतिरिच्यते' तृतीयादिकः, 'सः' सर्वोऽपि 'यजमानस्य' 'श्रियम्' 'अभि'लक्ष्य 'अतिरिच्यते'। 'स वै' सोऽतिरिक्तः 'एषां' विकल्पितानां युग्मानां 'सधनम्' समान मेक मेव धनम्; तदन्तःपातित्वात्। यस्मादपां सधन मासीत् अतिरिक्तः, 'तस्मात्'

---

[1]— का० श्रौ० सू० ९. ३. १९, २०।
[2]— का० श्रौ० सू० ९. २. २३।

अयुग्मसङ्ख्याका उदकविशेषा[1] एकधननामकाः सम्पन्नाः । अत एकधनात्मकत्वात् अयुग्मसङ्ख्याका एकधनाः प्रशस्ता इति[2] स्तुतिः ॥ ३४ ॥ ४ [९. ३.] ॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे नवमाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम्. )

अथाधिषवणे पर्युपविशन्ति । अथास्याᳪं हिरण्यं बध्नीते द्वयं वा ऽइदं न तृतीय मस्ति सत्यं चैवान्टतं च सत्यमेव देवा अन्टतं मनुष्या अग्निरेतसं व्वै हिरण्यᳪं सत्येनाᳪंशूनुपस्पृशानि सत्येन सोमं पुराहणानीति तस्माद्वा ऽअस्याᳪं हिरण्यं बध्नीते* ॥ १ ॥

---

१— तादर्थ्यात्तच्छब्द्यायादुदहरणाः कलशाश्चैकधनशब्दप्रतिपाद्या भवन्ति ।

२— तथाच अग्निष्टोमे त्रयः पञ्च वा, अत्यग्निष्टोमेऽपि तावन्त एव, उकथ्ये पञ्च वा सप्त वा, षोडशिनि सप्त वा नव वा, वाजपेये नव वैकादश वा, अतिरात्रे एकादश वा त्रयोदश वा, अप्तोर्यामे त्रयोदश वा पञ्चदश वेति एकधनाख्या उदहरणाः कलशा भवन्तीति ॥

* 'बध्नीवे'—इति ग, घ ।

अथ ग्रावाण मादत्ते । ते वा ऽएतेऽश्ममया ग्रावाणो भवन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तच्छरीरेणैवैन मेतत्समर्द्धयति कृत्स्नं करोति तस्मादश्ममया भवन्ति घ्नन्ति वा ऽएन मेतद्यदभिषुण्वन्ति त मेतेन घ्नन्ति तथात उदेति तथा सञ्जीवति तस्मादश्ममया ग्रावाणो भवन्ति ॥ २ ॥

त मादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या माददे रावासीति सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैन मेतदा दत्तेऽश्विनो-र्बाहुभ्या मित्यश्विनावध्वर्यू तत्तयोरेव बाहुभ्या मादत्ते न स्वाभ्यां पूष्णो हस्ताभ्या मिति पूषा भागदुघस्तत्तस्यैव हस्ताभ्या मादत्ते न स्वाभ्यां व्वज्रो वा ऽएष तस्य न मनुष्यो भर्त्ता त मेताभिर्देवताभिरादत्ते ॥ ३ ॥

आददे रावासीति । यदा वा ऽएन मेतेनाभिषुण्व-न्त्यथाहुतिर्भवति यदाहुतिं जुहोत्यथ दक्षिणा ददात्ये-तद्ध्येष द्वयꣳ रासत ऽआहुतीश्च दक्षिणाश्च तस्मादाह रावासीति ॥ ४ ॥

गभीर मिम मध्वरं कृधीति । अध्वरो व यज्ञो महान्त मिमं यज्ञं कृधीत्येवैतदाहेन्द्राय सुषूतम मितीन्द्रो

वै यज्ञस्य देवता तस्मादाहेन्द्रायेति सुषूतम मिति सुसुततम* मित्येवैतदाहोत्तमेन पविनेत्येष वा ऽउत्तमः पवियत्सोमस्तस्मादाहोत्तमेन पविनेत्यूर्ज्जस्वन्तं मधुमन्तं पयस्वन्त मिति रसवन्त मित्येवैतदाह यदाहोर्ज्जस्वन्तं मधुमन्तं पयस्वन्त मिति[†] ॥ ५ ॥

अथ व्वाचं यच्छति। देवा ह वै यज्ञं तन्वानास्ते ऽसुररक्षसेभ्य आसङ्गाद्बिभयाञ्चक्रुस्ते होचुरुपांशु यजाम व्वाचं यच्छामेति त ऽउपांश्वयजन् वाच मयच्छन् ॥ ६ ॥

अथ निग्राभ्या आहरति। तास्वेनं व्वाचयति निग्राभ्या स्थ देवश्रुतस्तर्पयत मा मनो मे तर्पयत व्वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन्निति रसो वा ऽआपस्तास्वेवैता माशिष माशास्ते सर्वञ्च म ऽआत्मानं तर्पयत[‡] प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा व्वितृषन्निति स य एष उपांशुसवनः स व्विवस्वानादित्यो निदानेन सोऽस्यैष व्यानः[§] ॥ ७ ॥

---

* 'सुसुतम'–इति ग, घ।

† 'मिति'–इति ख, 'मिति'–इति ग, घ।

‡ 'तर्पयत'–इति ग, घ।

§ 'नः'–इति ग, घ।

तु मभिमिमीते। घ्नन्ति वा ऽएन मेतद्यदभिषुण्वन्ति तु मेतेन घ्नन्ति तथात उदेति तथा सञ्जीवति यद्वेव मिमीते तस्मान्माचा मनुष्येषु माचो यो चाप्यन्या माचा॥ ८॥

स मिमीते। इन्द्राय त्वा व्वसुमते रुद्रवत ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति व्वसुमते रुद्रवत इति तदिन्द्र मेवानु व्वसूंश्च रुद्रांश्चाभजतीन्द्राय त्वादित्यवत ऽइति तदिन्द्र मेवान्वादित्यानाभजतीन्द्राय त्वाभिमातिघ्न ऽइति सपत्नो वा* ऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्यो-द्धार एव मस्यैष ऽऋते देवेभ्यः॥ ९॥

श्येनाय त्वा सोमभृत ऽइति। तद्गायत्र्यै मिमीतेऽग्नये त्वा रायस्पोषद ऽइत्यग्निर्वै गायत्री तद्गायत्र्यै मिमीते स यद्गायत्री श्येनो भूत्वा दिवः सोम माहरत्तेन सा श्येनः सोमभृत् तेनैवास्या एतद्वीर्येण द्वितीयं मिमीते† ॥ १०॥

अथ यत् पञ्च कृत्वो मिमीते। संव्व‡त्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संव्व§त्सरस्य तं पञ्चभिराप्नोति तस्मात् पञ्च कृत्वो मिमीते॥ ११॥

---

* 'वा'–इति ग, घ। † 'मिमीते'–इति क।

‡, § 'सव्व'–इति ख।

तु मभिमृशति। युत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां युदुरावन्तरिक्षे। तेनास्मै यजमानायोरु राये कृध्यधि दात्रे व्वोच ऽइति यत्र वा ऽएषोऽग्रे देवानां हविर्बभूव तद्वेक्षाञ्चक्रे मैव सर्व्वेणैवात्मना देवानां हविर्भूव मिति स एतास्तिस्रस्तनूरेषु लोकेषु व्विन्यधत्त ॥ १२ ॥

तद्वै देवा असृजत*। तेऽस्यैतेनैवैतास्तनूरामुवन्त्स कृत्स्न एव देवानां हविरभवत्तथो ऽएवास्यैष एतेनै†वै-तास्तनूराप्नोति स कृत्स्न एव देवानां हविर्भवति तस्मा-देव मभिमृशति ॥ १३ ॥

अथ निग्राभ्याभिरुपसृजति। आपो ह वै वृत्रं जघ्नु-स्तेनैवैतद्वीर्य्येणापः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किञ्चन प्रतिधारयते‡ ता ह स्व मेव व्वशञ्चेरुः कस्मै नु व्वयं तिष्ठेमहि याभिरस्माभिर्वृत्रो हत इति सर्व्वं वा ऽइद मिन्द्राय तस्थान मास यदिदं किञ्चापि योऽयं पवते ॥ १४ ॥

स इन्द्रोऽब्रवीत्। सर्व्वं वै म ऽइदं तस्थानं यदिदं किञ्च तिष्ठध्व मेव म ऽइति ता होचुः किं नस्ततः स्यादिति

---

* 'त'–इति ग, घ। † 'एतेनै'–इति ग, घ।

‡ 'प्रतिधारयति'–इति ग, घ। 'प्रतिधारयते'–इति सा०-सम्मतश्च।

प्रथमभक्ष एव वः सोमस्य राज्ञ इति तथेति ता अस्मा ऽअतिष्ठन्त तास्तस्याना उरसि न्यगृह्णीत तद्यदेना उरसि न्यगृह्णीत तस्मान्निग्राभ्या नाम तथैवैना* एतद्यजमान उरसि निगृह्णीते स आसा मेष प्रथमभक्षः सोमस्य राज्ञो यन्निग्राभ्याभिरुपसृजति ॥ १५ ॥

स उपसृजति । श्वात्रा स्थ वृत्रतुर इति शिवा ह्यापस्तस्मादाह श्वात्रा स्थेति वृत्रतुर इति वृत्रꣳ ह्येता अघ्नन्राधो गूर्त्ता अमृतस्य पत्नीरित्यमृता ह्यापस्ता देवीर्देवत्रेमं यज्ञं नयतेति नात्र तिरोहितमिवास्त्युपहूताः सोमस्य पिबतेति तदुपहूता एव प्रथमभक्षꣳ सोमस्य राज्ञो भक्षयन्ति ॥ १६ ॥

अथ प्रहरिष्यन्[†] । यं द्विष्यात्तं मनसा ध्यायेदमुष्मा ऽअहं प्रहरामि न तुभ्य मिति यो न्वेवेमं मानुषं ब्राह्मणꣳ हन्ति तं न्वेव[‡] परिचक्षतेऽथ किं य एतं देवो हि सोमो घ्नन्ति वा ऽएन मेतद्यदभिषुण्वन्ति त मेतेन घ्नन्ति तथा त उदेति तथा सञ्जीवति तथानेनस्यं भवति यद्यु न द्विष्यादपि तृण मेव मनसा ध्यायेत्तथो ऽअनेनस्यं भवति ॥ १७ ॥

---

* 'ता'–इति ग, घ । † 'ष्यन्'–इति ग, घ ।

‡ 'तन्वेव'–इति क, ख ; 'तꣳन्वेव'–इति च दृष्टो डा०-वेबरेण ।

स प्रहरति। मा भेर्मा संविक्था इति मा त्वं भैषीर्मा संविक्था अमुष्मा ऽअहं प्रहरामि न तुभ्य मित्येवैतदाहोर्ज्जं धत्स्वेति रसं धत्स्वेत्येवैतदाह धिषणे वीड्वी सती वीडयेथा मूर्ज्जं दधाथा मितीमे ऽएवैतत् फलके आहुरित्यु हैक ऽआहुः किन्नु तत्र योऽप्येते फलके भिन्द्यादिमे ह वै द्यावापृथिवी ऽएतस्माद्वज्राद्युद्यतात् सꣳरेजेते तदाभ्या मेवैन मेतद्द्यावापृथिवीभ्याꣳ शमयति तथेमे शान्तो न हिनस्त्यूर्ज्जं दधाथा मिति रसं दधाथा मित्येवैतदाह पाप्मा हतो न सोम इति तदस्य सर्व्वं पाप्मानꣳ हन्ति ॥ १८ ॥

स वै त्रिरभिषुणोति। त्रिः सम्भरति चतुर्न्निग्राभ मुपैति तद्दश दशाक्षरा वै विराड् वैराजः सोमस्तस्माद्दश कृत्वः सम्पादयति ॥ १९ ॥

अथ यन्निग्राभ मुपैति। यत्र वा ऽएषोऽग्रे देवानाꣳ हविर्ब्बभूव तद्धेमा दिशोऽभिदध्यावाभिर्द्दिग्भिर्म्मिथुनेन प्रियेण धाम्ना सꣳस्पृशेयेति त मेतद्देवा आभिर्द्दिग्भिर्म्मिथुनेन प्रियेण धाम्ना समस्पर्शयन् यन्निग्राभ मुपायंस्तथो ऽएवैन मेष एतदाभिर्द्दिग्भिर्म्मिथुनेन प्रियेण धाम्ना सꣳस्पर्शयति यन्निग्राभ मुपैति ॥ २० ॥

स उपैति। प्रागपागुदगधराक्सर्व्वतस्त्वा दिश आधा-

वन्त्विति तदेन माभिर्द्दिग्भिर्मिथुनेन प्रियेण धाम्ना सꣳस्पर्शयत्यम्ब निष्पर समरीर्विदा मिति योषा वा ऽअम्बा योषा दिशस्तस्मादाहाम्ब निष्परेति समरीर्विदा मिति प्रजा वा ऽअरीः सम्प्रजा जानता मित्येवैतदाह तस्माद्या अपि व्विदूर मिव प्रजा भवन्ति स मेव ता जानते तस्मादाह समरीर्व्विदा मिति* ॥ २१ ॥

अथ यस्मात्सोमो नाम । यत्र वा ऽएषोऽग्रे देवानाꣳ हविर्बभूव तद्धेक्षाञ्चक्रे मैव सर्व्वेणैवात्मना देवानाꣳ हविर्भूव मिति तस्य या जुष्टतमा तनूरास ता मप-निदधे तद्वै देवा अस्पृण्वत ते होचुरुपैवैतां प्रवृहस्व सहैव न एतया हविरेधीति तां दूर ऽइवोपप्रावृहत स्वा वै म ऽएषेति तस्मात्सोमो नाम† ॥ २२ ॥

अथ यस्माद्यज्ञो नाम । घ्नन्ति वा ऽएन मेतद्यदभि-षुण्वन्ति तद्यदेनं तन्वते तदेनं जनयन्ति स तायमानो जायते स यन् जायते तस्माद्यञ्ज्ञो यञ्ज्ञो‡ ह वै नामै-तद्यद्यज्ञ इति ॥ २३ ॥

---

* 'मिति'–इति ख, 'मि॒ति॒'–इति ग, घ ।

† 'नाम'–इति ख, 'ना॒म॒'–इति ग, घ ।

‡ 'यं जायते तस्माद्यंज्ञो यंज्ञो'–इति क, ख ; डा०-वेबरेण चैकत्र दृष्टः ।

तद्धैता मपि व्वाच मुवाद। त्व मङ्ग प्रशंꣳसिषो देवः शविष्ठ मर्त्त्यम्। न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते व्वच इति मर्त्त्यां हैवैतद् भवन्नुवाच* त्व मेवेतो जनयितासि नान्यस्त्वदिति† ॥ २४ ॥

अथ निग्राभ्याभ्यो ग्रहान्विगृह्णते। आपो ह वै व्वृत्रं जघ्नुस्तेनैवैतद्वीर्य्येणापः स्यन्दन्ते स्यन्दमानानां वै व्वसतीवरीर्गृह्णाति व्वसतीवरीभ्यो निग्राभ्या निग्राभ्याभ्यो ग्रहान्विगृह्णते तेनैवैतद्वीर्य्येण ग्रहान्विगृह्णते होतृचमसाद् योषा वा ऽऋग्घोता योषायै वा ऽइमाः प्रजाः प्रजायन्ते तदेन मेतस्यै योषाया ऽऋचो होतुः प्रजनयति तस्मा-द्धोतृचमसात् ॥ २५ ॥ ५ ॥

॥ इति सप्तमप्रपाठके पञ्चमं ब्राह्मणम् [९. ४.] ॥

इत्थ मभिषवसाधनाना मपां ग्रहण मभिधाय, अथ सोमा-भिषवप्रयोगं वक्तु मुपक्रमते— "अथाधिषवणे पर्य्युपविशन्तीति[१]। 'अधि' उपरि सूयेते इत्यधिषवणे दारुमये फलके, तयोरुपरि ते 'उपविशन्ति'। उपवेशनप्रकारः सूत्रे दर्शितः— उत्तरौ तावध्वर्यु-

---

* 'भगवन्नुवाच'–इति सा०-सम्मतः पाठ इति डा० वेबरः।

† 'दिति'–इति ख, 'द्ऽिति'–इति ग, घ।

१— एतदेवोद्धृतं कात्यायनेन, श्रौ० सू० ९. ४. १. द्रष्टव्यम्।

यजमानौ, पूर्वोऽध्वर्युः, अपरेण परीत्येतरे त्रयः, दैवस्य त्वेत्यादिना[1]। 'इतरे' अध्वर्युपुरुषा इत्यर्थः। हिरण्यबन्धनं विधाय, तत् सत्यरूपत्वेन प्रशंसति— "अथास्यां हिरण्यं बध्नीते द्वयं वा इदं न तृतीय मस्तीत्यादिना। 'अस्याम्' अनामिकाङ्गुल्या मित्यर्थः। द्वयं वेत्यादि प्रागसकृद् व्याख्यातम्[2]। अग्नेतत्वं हिरण्यस्येत्थं श्रूयते— "आपो वरुणस्य पत्नय आसन्, ता अग्निरभ्यध्यायत्, ताः समभवत्, तस्य रेतः परापतत्, तद्धिरण्य मभवदिति[3]। अध्वर्योर्मनुष्यत्वेनानृतरूपत्वात् सत्यभूतस्याग्निरेतस्य हिरण्यस्याचाभिषवसमये स्पर्शनेनानृतबाधात् 'सत्येन' 'अंशून्' सोमांशून् 'उपस्पृशानि', 'सत्येन' 'सोमम्' 'पराहणानि' अभिषुणोमीत्यभिप्रायेण हिरण्यं बध्नीयात् ॥ १ ॥

"अथेति। 'अथ' अंशुग्रहाभिषवार्थम् 'अध्वर्युः ग्रावाण मादत्ते'[4]। अभिषवसाधनस्य ग्राव्णोऽश्ममयत्वं विधाय प्रशंसति— "ते वा एत इति। सोमस्य देवत्वसमर्थनाय "दिवि ह्यीति। 'हि'-शब्दः "तृतीयस्या मितो दिवि सोम आसीत्"-इत्यादि[5]श्रुत्यन्तरप्रसिद्ध्यर्थः। तस्य द्युस्थस्य सोमस्य वृत्रत्वप्रकारः प्राग् वर्णितः[6]। तस्य वृत्रीभूतस्य सोमस्य 'शरीरं' परिदृश्यमानाः 'गिरयः', तदवयवाः

१— का० श्रौ० सू० ९. ४. २, ३, ४, ५।

२— १. १. १. ४, ५. २. २३ (१ भा० ६, ४१८ पृ०)।

३— तै० सं० ५. ५. ४. १।    ४— का० श्रौ० सू० ९. ३. ५ क।

५— तै० सं० ३. ५. ७. २. (३ भा० ३४६ पृ०)।

६— ३प्र० ४ब्रा० १३क० (२०४पृ० ५पं०)।

'अश्मानः'। अतः 'एतत्' एतेन गाव्णा मश्ममयत्वकरणेन 'एनं' सोमं समृद्धं कृतवान् भवति। न हि स्वशरीरं स्वस्य बाधकं भवति, अतस्तेनाभिषवेनापि समृद्धिरेवेत्यर्थः। किञ्चापरावयविनौ विश्लिष्टाविदानीं सोमाभिषवव्याजेन सम्बन्धयन् सोमं 'कृत्स्नं' सकलं कृतवान् भवति। किञ्चाभिषवो नामास्य वधः, तं कुर्वन्तोऽप्येते अश्ममया ग्रावाणः तदवयवत्वात् 'न घ्नन्ति' न हिंसन्ति। 'अतः' 'अस्मात्' अभिषवस्थानात् सोमः 'उदेति' पुनरुदितो भवति। तथैव 'सञ्जीवति' च पुनः सम्यग् जीवोपेतो भवति। "तस्मादिति पुनरुपसंहारः ॥ २ ॥

अथ तत्र मन्त्रं विधाय व्याचष्टे— "त मादत्ते देवस्य त्वेत्यादिना[1]। गत मेवैतत्। "पूषा भागदुघ इति। "दुहेः कब् घश्च"-इति[2] कप् घकारश्च। किं कारणं सवित्राद्यभिधानम्? उच्यते— "वज्रो वा, एष इति। 'एषः' ग्रावा प्रक्षेपसाधनत्वसाम्यात् सारवत्त्वाच्च 'वज्रः', 'अतः' 'तस्य' अस्य देवः 'भर्त्ता' स्वामी 'न मनुष्यः'; यत एव मतः 'तं' ग्रावाणम् 'एताभिः' सवित्रादिभिः 'देवताभिः' 'आदत्ते' अध्वर्युः[3] ॥ ३ ॥

"आददे रावासीति[4]। मन्त्रभागे ग्रावाणं सम्बोध्य त्वं रावासीति मन्त्रोऽभिधत्ते। तस्य तथात्वं कुत इत्याशङ्क्य परम्परया भविष्यतीत्युपपादयति— "यदा वा एन मेतेनाभिषुण्वन्तीत्यादिना। अभिषवाभावे आहुत्यसम्भवात्, आहुत्यभावे दक्षिणाना मप्रसक्तेः

---

१— वा० सं० ६. ३०. १ क। २— पा० सू० ३. ३. ७०।
३— का० श्रौ० सू० ९. ४. ५ क। ४— वा० सं० ६. ३०. १ ख।

'आऊतीश्च दक्षिणाश्च' इति 'एतद्' द्वयम् 'एषः' ग्रावा 'रासते' ददाति। अतो रासत इति रावेति; रासतेर्दानार्थात्[1] रावशब्दो निष्पन्न इत्यभिप्रायेन मन्त्रो 'रावासीति आह' इत्यर्थः॥ ४॥

गभीर मिम मध्वर मिति[2]। मन्त्रं व्याचष्टे— योऽयम् 'अध्वरः' सः 'यज्ञः' 'वै' एव, उभौ शब्दौ पर्यायावित्यर्थः। यदतिशुम्फितत्वेन महत्, तद् 'गभीरम्' इति लोके व्यवह्रियते; अतो गभीरे महत्त्वदर्शनात् 'इमम् अध्वरं महान्तं कृधि' 'इत्याह' मन्त्रः। सुषूतम मित्यत्र सुसुततम मिति वक्तव्ये तकारलोपो दीर्घ-श्छान्दस इत्यभिप्रायेण व्याचष्टे— "सुषूतम मिति सुसुततम मित्ये-वैतदाहेति। पवि-शब्दस्य वज्रादौ प्रसिद्धत्वात् अत्र सोमार्थ इति व्याचष्टे— "एष वा उत्तमः पविः, यत् सोम इति। पवतिर्गति-कर्मा[3]। पवति, दशापवित्रे स्रवतीति पविः सोमः। अथ वा पवि-वद् वज्ररूपत्वात् पविः सोमः। सोमः 'इति' यदस्ति, 'एषः' सोमः 'उत्तमः पविः' खलु; सोमपानेन प्रबलस्येन्द्रस्य वृत्रादिवधश्रव-णाद्। अत्र मधुररसानां वाचका ये ऊर्ज-मधु-पयः-शब्दाः, तेषां तात्पर्यतो रस एवार्थ इति व्याचष्टे— "ऊर्जस्वन्तं पयस्वन्त मित्या-दिना। अत्रोर्जमधुपयसां रसविशेषरूपत्वात् सामान्यविशेषरूपा-दिति भावः। नैते माधुर्यार्थतया प्रसिद्धाः, अतः कथं त एवं सङ्गच्छन्त इत्यस्या आशङ्काया अपनोदनाय पुनर्निर्देशः कृतः— "यदाहोर्जस्वन्तं मधुमन्तं पयस्वन्त मितीति॥

१— निघण्टौ ३. २२. ५ द्रष्टव्यम्। २— वा० सं० ६. ३०. १ ग।
३— निघ० २. १४. १०८।

मन्त्रस्याय मर्थः ।— हे ग्रावन् ! त्वं 'रावासि', अतस्त्वां 'सवितुः देवस्य' अनुज्ञायां सत्याम् 'अश्विनोर्बाहुभ्यां' 'पूष्णो हस्ताभ्याम्' 'आददे' । उक्तो बाह्वादिभागः । 'इमम्' 'अध्वरं' यज्ञं 'गभीरं' महान्तं 'कृधि' कुरु । 'इन्द्राय' इन्द्रार्थं 'सुषूतमं' सुष्ठभिषुतं कुरु । 'उत्तमेन पविना' सोमेन युक्तं चेम मध्वरम् ऊर्जादेराश्रयभूत-रसोपेतं कुर्विति ॥ ५ ॥

"अथ वाचं यच्छतीति । वाग्यमनार्थवादो "देवा ह वा इत्यादिः, प्राग्व्याख्यातः । वाग्यमनस्यावधिः सूत्रे दर्शितः— "(देवस्य त्वेत्यभि मादाय) वाचं यच्छति प्राग्घिङ्कारात्"-इति[1] ॥ ६ ॥

यदुक्तं सूत्रकृता— "निग्राभ्यासु वाचयति उरस्येना निगृह्य निग्राभ्यास्थेति[2] । तदिद माह— "अथ निग्राभ्या आहरति, तास्वेनं वाचयति निग्राभ्या स्थ देवश्रुत इत्यादिना । 'तासु' आगतासु 'एनं' यजमानं 'निग्राभ्या स्थ' इत्यादि-मन्त्रं[3] 'वाचयति' अध्वर्युः । हे आपः ! 'देवश्रुतः' देवेषु प्रसिद्धाः सत्यो यूयं 'निग्राभ्याः स्थ इन्द्रेणोरसि गृहीतत्वात् । वक्ष्यति हि— "तद्यदेना उरसि न्यगृ-ह्णीत, तस्मान्निग्राभ्या नाम"-इति[4] । तादृश्यो यूयं 'मा' मां 'तर्प-यत' प्रीणयत ॥

सङ्गृह्योक्त मवयवशोऽभिधत्ते— "मनो म इत्यादिना[5] ।

---

१— का० श्रौ० सू० ९. ४. ५ ख ।

२— का० श्रौ० सू० ९. ४. ७ । ३— वा० सं० ६. ३०. २ ।

४— अनुपद मिहैवोपरिष्टात् पञ्चदश्यां कण्डिकायां द्रष्टव्यम् ( ५७८ पृ० ) ।

५— वा० सं० ६. ३१. १ । पूर्वमन्त्रस्यैव शेषोऽयम् ; इह विनियोगानन्य-श्रुतेः । संहितायान्तु भिन्न एवायं मन्त्र इति प्रतीयते ।

'आत्मानं' शरीरम्। 'प्रजां' पुत्रादिकाम्। 'गणान्' बन्धुभृत्यादीन्। युष्माभिस्तर्पिता अस्मदीयाः 'गणाः' 'मा विहृषन्' विवृद्धतृष्णा मा भूवन्। आपः खल्व मेव तर्पणसाधनं द्रव्यम्, तर्पयितव्यास्तु बहवः, अतस्तासां तादृशी शक्तिः कुत इत्याशङ्कायामाह— "रसो वा आपस्तास्वेवैता माशिष माशास्त इति। अपां रसरूपत्वात् तास्वस्वेवैतां तृप्तिरूपा माशिष माशास्ते; अतः सारवता आशासनं युक्तम्। मन आदिकं सर्व मपि सङ्गृह्यानुवदति— "सर्वं च म इति। आत्मान मित्यादिर्विविच्यानुवादः॥

"उपांशुसवने सोमं मिमीत[1] इन्द्राय त्वा वसुमत इत्यादि[2]-सूत्रोक्त मर्थं दर्शयति— "य एष उपांशुसवनः, स विवस्वानादित्यो निदानेन, सोऽस्यैष व्यान इति। उपांशुग्रहार्थः सोमोऽभिषूयते येन, स 'उपांशुसवनः' पाषाणः; 'सः' 'निदानेन' मूलकारणविचारेण विवस्वत्सञ्ज्ञक आदित्य एव; तस्यैवैतदात्मनावस्थानात्। 'स एष' 'अस्य' यज्ञस्य 'व्यानः'; प्राणापानरूपयोरुपांश्वन्तर्यामयोर्मध्ये स्थाप्यत्वात्। "अथ यः प्राणापानयोः सन्धिः स व्यानः"-इति[3] श्रुतेरस्य व्यानत्वम्। उपांशुसवन इति वैदिकी सञ्ज्ञा, व्यवहारार्था, तदुपांशुसवनेन मिश्रयतीत्येवमर्था॥ ७॥

"त मभिमिमीत इति। 'तम्' उपांशुसवनम् 'अभि' तस्योपरि सोमं 'मिमिते' क्रयकालीनमानेन सोमं संस्कुर्यात्। "घ्नन्ति

---

१— का० श्रौ० सू० ६. ४. ८। २— वा० सं० ६. ३२. १—५।
३— छा० उ० १. ३. ३।

वा इत्यादिरूपोपांशुसवनपरिमानार्थवादवद् व्याख्यायमानस्य ग्रावोपरिभावं प्रशस्येदानीं मानं प्रशंसति— "यद्देव मिमीते तस्मान्मात्रा मनुष्येष्विति। 'उ'-शब्दोऽप्यर्थः। यापि मात्रा सोमे कृता, 'तस्मात्' सोमस्य मितत्वात् 'मनुष्येषु' व्यवहारार्थं प्रस्थ-कुडवाढक-द्रोणादिका 'मात्रा' सम्पन्ना। "यो चापि"-इत्यत्र उकारः प्रश्लेषः। 'अपि च' 'या उ' च 'अन्या मात्रा' एकद्वीत्यादिसङ्ख्याप्रयुक्ता, सापि सोममानप्रयुक्तेत्यर्थः ॥ ८ ॥

सोमोन्माने मन्त्रं विधाय व्याचष्टे— "स मिमीत इन्द्राय त्वा वसुमत इत्यादिना[१]। इन्द्रस्य विशेष्यतया निर्दिशस्य वसुरुद्राणां तद्विशेषणतया निर्दिशस्य च प्रयोजन माह— "इन्द्रो वै यज्ञस्य देवतेत्यादिना। 'यज्ञस्य' सोमयागस्य 'इन्द्रो देवता'; "प्रातःसुत मपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते। सम्रूभुभिः पिबस्व रत्नधेभिः"-इत्यादिमन्त्रात्[२] सवनत्रयेऽपि इन्द्रस्य प्राधान्यात् "इन्द्रो वै यज्ञस्य देवता"-इत्युक्तम्। 'वसुमते रुद्रवते' इत्यादौ वस्वादेरिन्द्रविशेषत्वप्रतीतेः इन्द्रप्रधानभूतं मुख्यं भागिनं कृत्वा वस्वादीनपि 'अन्वाभजति' पश्चाद्भागिनः करोति, इन्द्रस्यानुचरान् कृतवान् भवतीति यावत्। "इन्द्राय त्वाभिमातिघ्ने"-इत्यत्राभिमातिशब्दः सपत्न मभिधत्त इत्याह— "सपत्नो वा अभिमाति रिति। "इन्द्राय त्वाभिमातिघ्ने"-इत्यत्र देवतान्तरसम्बन्धवैधुर्यं प्रशंसति— "सोम्योद्धारो यथा श्रेष्ठस्येति। यथा धान्यादिभागसमये मुख्यस्य राज्ञो

१— पूर्वलिखिते १-२ टीप्पन्याविहापि सङ्गच्छेते।

२— ऋ० सं० ४. ३५. ७।

देयो भागः प्रातिस्विकः,[1] तं प्रथम मेवापोद्धृत्य पश्चात् स्वं स्व मंशं विभजन्ति; एवं रुद्रवस्विन्द्रेभ्यः देवतान्तरसहभाव मन्तरेण केवल उद्धारः कृतो भवति। श्रेष्ठत्वे वीज मभिमातिहन्तृत्वम्। यतोऽय मभिमातिहाः, अत उद्धारार्ह इत्यभिप्रायः ॥ ९ ॥

"श्येनाय त्वेति। 'श्येनाय त्वा'-'अग्नये त्वा'—इति वाक्यद्वयस्य तात्पर्य माह— "तद् गायत्र्यै मिमीत इति। 'सोमभृते श्येनाय' इति सोमोन्माने कृते गायत्र्यर्थत्वं कथं स्यादित्याशङ्क्य तदुपपादयति— "स यद् गायत्री श्येनो भूत्वा दिवः सोम माहरदिति। अन्वर्थमितस्य, गायत्र्यर्थत्वं तु स्पष्टत्वाद् ब्राह्मणे उपेक्षितम्। तत्रेत्य मेवावगन्तव्यम्— "अग्नेर्गायत्र्यभवत्"-इतिमन्त्रवर्णात्[2] गायत्र्या निदान मग्निः; अतो जन्यजनकयोरभेदोपचारे गायत्र्यर्थता स्यादित्यभिप्रेत्य "तद् गायत्र्यै मिमीते"-इत्युक्तम् ॥ १० ॥

मानगतपञ्चसङ्ख्यां प्रशंसति— "अथ यत् पञ्च कृत्वो मिमीत इति। "एकमन्त्राणि कर्माणीति न्यायस्यौत्सर्गिकत्वात् मन्त्राणां पञ्चत्वात्तत्व मपीति पञ्च कृत्व इत्यर्थसिद्धम्। गवामयनादिसत्रस्य संवत्सरसम्मितयज्ञत्वं प्रसिद्धम्। 'तस्मात्' 'पञ्च कृत्वः' मानं प्रशस्तम्। "इन्द्राय त्वा वसुमते रुद्रवत इति पञ्चकृत्वः प्रतिमन्त्रम्"-इति[3] सूत्रम् ॥ ११ ॥

---

१— प्रातिस्विकः स्वकीयोऽसाधारणः।

२— "अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सम्बभूव। अनुष्टुभा सोम उक्थैर्महस्वान् बृहस्पतेर्बृहती वाच मावत्" ऋ० सं० १०. १३०. ४।

३— का० श्रौ० सू० ६. ४. ८।

मितस्य सोमस्य समन्त्रक मभिमर्शनं विधत्ते— "त मभिमृशति[1] यत्ते सोम दिवि ज्योतिरिति[2]। हे सोम! 'ते' तव 'यत्' 'ज्योतिः' द्युतिमत्त्वं 'दिवि' अस्ति, यत्' च 'पृथिव्यां' ज्योतिः वल्लीरूपः सोमः, 'यद्' अपि 'उरौ' विस्तीर्णे 'अन्तरिक्षे' षोडशकलात्मकः, 'तेन' सर्वेण तव स्वरूपेण सहितः सन् 'अस्मै' अभिषुण्वते 'यजमानाय' 'राये' तस्य धनार्थम् 'उरु कृधि' प्रभूतं कुरु। तव शरीर मिति शेषः। 'दात्रे' हविःप्रदात्रे 'अधिवोचः' यजमानेन वचन मधिवचनम्, मदीयोऽयं सर्वथा अनुग्राह्य इति प्रब्रूहीत्यर्थः॥

सोमस्य लोकान्तरस्थाय्यंशस्य यत् परिग्रहाभिधानम्, तदाख्यायिकामुखेन प्रशंसति— "यत्र वा एषोऽग्रे देवाना मित्यादिना। 'यत्र' यत्काले 'अग्रे' सृष्टेः प्राक् 'देवानां' 'हविः बभूव' सोमः, 'तत्' तदा अहं 'सर्वेणात्मना' 'देवानां' 'हविः' 'मा भूवम्' न भवामि 'इति' विचार्य, 'एषु' त्रिषु 'लोकेषु' स्वाः 'तनूः' 'विन्यधत्त' विभज्य स्थापितवान्॥ १२ ॥

"तद्वै देवा अस्पृण्वतेति। 'तद्' वृत्तान्तं 'देवाः' 'अस्पृण्वत'। "स्पृ प्रीतिबलनयोः"[3]। बलोपलक्षितव्यापारं कृतवन्तः, ज्ञातवन्त इत्यर्थः। 'ते' देवाः 'अस्य' अग्नेः 'एताः' लोकत्रयस्थिताः 'तनूः' 'एतेन' "यत् ते दिवि ज्योतिः"-इत्यादिमन्त्रेण 'आप्नुवन्' प्राप्त-

---

१— का० श्रौ० सू० ९. ४. ९।　　२— वा० सं० ६. ३३. १।

३— "स्पृ प्रीतिपालनयोः। प्रीतिचलनयोरित्यन्ये। चलनं जीवन मिति स्वामी"–इति सि० कौ० स्वा० प० १३ धा०।

वन्तः। 'सः' 'कृत्स्न एव' अविकल एव 'देवानां हविरभवत्'। "तथो एवेत्यादि, दृष्टान्तवाक्यवद् व्याख्येयम्। "तस्मादेवेति निगमयति ॥ १३ ॥

अथ निग्राभ्योदकैः सोमसेचनं विधत्ते— "अथ निग्राभ्याभिरुपसृजतीति[1]। मिश्रयेदित्यर्थः। मिश्रण माख्यामुखेन प्रशंसति— "आपो ह वै वृत्रं जघ्नुरित्यादिना। 'तेनैव वीर्येण' केनाप्यवध्यो वृत्रोऽस्माभिर्हत इत्येवमात्मकेन 'एतत्' इदानी मपि 'आपः' 'स्यन्दन्ते' वेगेन गच्छन्ति। यस्मादेवं तस्मात् 'स्यन्दमानाः' 'एनाः' आपः 'न किञ्चन' वस्तु, लोष्टकाष्ठपाषाणादिकं 'प्रतिधारयति' प्रतिबध्नाति, किन्तु, 'ताः' आपः 'स्व मेव वशं' स्वतन्त्रं यथा भवति तथा विश्रम्भेण 'चेरुः' अगच्छन्। तेषां स्वातन्त्र्ये कारण माह— "कस्मै नु वयं तिष्ठेमहि, याभिरस्माभिर्वृत्रो हत इतीति। सर्वस्यापि लोकस्य घातको वृत्रः, सोऽप्यस्माभिर्घातितः; अतो 'वयं' 'कस्मै' अन्यस्मै 'तिष्ठेमहि' आत्मानं प्रकाशयेमेति। इत्य मपां स्वातन्त्र्यं प्रतिपाद्य, तासा मिन्द्राधीनत्वं प्रतिपादयति— "सर्वं वा इद मिन्द्राय तस्थान मासेति। 'तस्थानम्' इति तिष्ठतेः कानचि[2] रूपम्। कैमुतिकन्यायसिद्ध्यर्थं माह— "अपि योऽयं पवत इति। 'योऽयं' दुर्वहत्वेन प्रसिद्धो वायुः 'पवते', सोऽपि इन्द्राधीनः स्थितवान् किल, किमु वक्तव्य मेतत् सर्वं मिन्द्रवशे स्थित मिति ॥ १४ ॥

---

१— का० श्रौ० सू० ६. ४. १२।

२— पा० सू० ३. २. १०५, १०६।

"स इन्द्रोऽब्रवीदिति। अथ 'स इन्द्रः' एवम् 'अब्रवीत्'। 'यत्' 'किञ्च' 'इदं' भूतजातं 'मे' मदर्थं स्थितम्, अतो यूय मपि 'तिष्ठध्व मेव' न गच्छत 'इति'। अथ तेन तथोक्ताः 'ताः' आपः, वयं तिष्ठेमहि, 'नः' अस्माकं 'ततः' 'किं' लब्धं 'स्यात्'? 'इति' अब्रुवन्। अथ तासा मिन्द्रः 'सोमस्य राज्ञः प्रथमभक्षे' इतरेभ्यो देवेभ्यः प्राक्, अभिषवकाले 'एव' 'वः' अस्तु 'इति' प्रादात्। 'ताः' अस्तु 'तथेति' अङ्गीकृत्य 'अस्मै' इन्द्राय 'अतिष्ठन्त'॥

प्रसङ्गात् निग्राभ्यशब्दनिर्वचन माह— "तास्तस्थाना उरसि न्यगृह्णीत इति। इन्द्रेणोरसि निगृहीतत्वात् 'निग्राभ्याः' इति तासा मपां नाम सम्पन्नम्। "हृग्रहोर्भश्छन्दसि"-इति[1] हकारस्य भत्वम्। निग्राह्या इत्यर्थः। कर्मणि कृत्यः। तथैवैताः एतद्यजमान उरसि निगृह्णीत इत्यर्थः। अत्र विधिरुन्नेयो निगृह्णीयादिति॥

न चात्र प्रथमभक्षः श्रूयत इत्याशङ्क्य अभिषवकाले ताभिः संसर्ग एव भक्ष इत्याह— "स आसा मेष इति॥ १५॥

उपसर्ग मन्त्र मभिधाय व्याचष्टे— "स उपसृजति श्वात्रा स्थ वृत्रतुर इत्यादिना[2]। श्वात्र-शब्दस्याभिप्राय माह— "शिवा ह्याप इति। यद्यपि "श्वात्र मिति क्षिप्रनाम[3], "आशु अतनं भवति"-इति निरुक्तम्[4], तथाप्यक्षरसामान्यान्निर्ब्रूयादितिन्यायेन[5] श्वात्र-

---

१— पा० २. ३. २ सू० वा० १। २— वा० सं० ६. ३४. १।
३— निघ० ४. २. १४। ४— निरु० ५. १. ३।
५—"अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्न त्वेव न निर्ब्रूयात्"—
इत्यादि निरु० २. १. १ द्रष्टव्यम्।

शब्दविशेषणेन शिवशब्दप्रतिभानात् अपां च सर्वाप्यायनरूपत्वेन शिवत्वप्रसिद्धेः "श्वात्रा स्थेत्यभ्युक्त मित्यर्थः। यस्मात् 'एताः' आपः 'वृत्र मघ्नन्' तस्माद् 'वृत्रतुर इति' मन्त्रो ब्रूते। तुर्वी हिंसार्थः[१]। वृत्रं तुर्वन्ति घ्नन्तीति वृत्रतुरः। 'अमृतस्य' 'पत्नीः' पालयित्र्यः। यदि यूय ममृता न भवेयुः, तर्हि तादृशीना मपां स्वामित्व मेव नोपपद्यत इत्यनया प्रसिद्ध्या "अमृता ह्यापः"-इति ब्राह्मणम्। प्रसिद्धिवाचकं हि-शब्द माह— "ता देवीर्देवत्रेति। मन्त्रभागस्य स्पष्टार्थता माह— "नात्र तिरोहित मिवास्तीति। इदानीन्तनं सोमपानविषय मुपक्रानम् "उपहूताः सोमस्य पिबतेति मन्त्राभिधानादायात मिति दर्शयति— "उपहूता एव प्रथमभक्षं सोमस्य राज्ञो भक्षयन्तीति॥

मन्त्रस्याय मर्थः सम्पन्नः।— हे निग्राभ्या आपः! यूयं 'श्वात्राः स्थ' शिवा भवथ, 'वृत्रतुरः' वृत्रस्य हिंसकाः स्थ, 'राधः' धनस्य 'गूर्त्ताः' उद्यमयित्र्यः। "गुरी उद्यमने[२]", "नसत्तनिषत्तेत्यादिना[३] निपातितो गूर्त्त-शब्दः। 'अमृतस्य' 'पत्नीः' पालयित्र्यः स्थ। अतस्तादृशमहिमोपेताः 'देवीः' हे 'देव्यः! देवत्रा' देवान् प्रति 'इमं यज्ञं' सोमात्मकं 'नयत' प्रापयत, 'उपहूताः' अनुज्ञाताः सत्यो यूयं 'सोमस्य' सोमं पिबतेति मन्त्रार्थः॥

"श्वात्रा स्थेत्यासिञ्चति निग्राभ्याः"-इति[४] कात्यायनः॥ १६॥

---

१— धा० पा० ५७० धा०। २— तु० आ० १५ धा०।

३— पा० सू० ८. २. ६१। ४— का० श्रौ० सू० ९. ४. १२।

यदुक्तं तेन "प्रहरिष्यन् द्वेष्यं मनसा ध्यायेदमुष्मा अहं वज्रं प्रहरामि, न तुभ्यं सोमेति, अभावे तृणं माभेरिति प्रहरत्येवं त्रिः"-इति[1], तदिद माह— "अथ प्रहरिष्यन्नित्यादिना। 'अमुष्मै' द्वेष्ट्रे; अत्र सोमशर्म्मण इति द्वेष्टुर्नाम मनसा गृह्णीयात्, 'प्रहरामि' प्रक्षिपामि, पाषाणरूपं वज्र मिति शेषः। हे सोम! 'न तुभ्य मिति'।

नैव प्रहरणं चेत् को वध इति, तत्राह— "यो न्वेवेमं मानुषं ब्राह्मण मिति। अत्यन्तदोषाविष्करण मितीमं ब्राह्मण मिति विशेषितम्। 'तं' ब्राह्मणस्य हन्तारं 'परिचक्षते' 'न्वेव' खल्वेव। 'परिख्यानं' दूष्यत्वेन वर्जनम्, 'अथ' 'किं', वक्तव्य मिति शेषः। 'एतं' माहात्म्यवन्तं पुरोवर्त्तिनं यो हन्ति, तं परिचक्षत इति किमु-तेत्यर्थः। कैमुतिकन्यायस्य वीज माह— "देवो हि सोम इति। हि-शब्दो "देवो वै सोमः"-इत्यादिश्रुतिप्रसिद्धिद्योतनार्थः। अस्तु तथा, यदि हन्तिः स्यात्, सैवात्र कुत इत्यत आह— "घ्नन्ति वा एन मिति। प्राग् व्याख्यात मिव। 'एते' शत्रुनामग्रहणपूर्वक मभिषुण्वन्तः 'तं' सोमं 'न घ्नन्ति'। 'तथा' द्वेष्यत्वभावनायां सत्याम्। 'अतः' अस्माद्धननसकाशात्, अस्मात् स्थानाद्वा। 'तथा' सति अभिषोतुरध्वर्य्योः 'अनेनस्यं भवति' न विद्यते एनः पापं यस्य स अनेनाः, तस्य भावः अनेनस्यम्॥

द्वेष्याभावे तत् कथ मित्याशङ्क्याह— "यद्यु न द्विष्यादपि तृण मेव मनसा ध्यायेदिति। अमुष्मै तृणाय वज्रं प्रहरामि, हे सोम! न तुभ्य मिति ध्यायेदित्यर्थः॥ १७॥

---

[1]— का० श्रौ० सू० ९. ४. १३—१६ क।

प्रहरण मनूद्य मन्त्रं विधाय व्याचष्टे— "स प्रहरति माभेरित्यादिना[1]। मा भेरिति पदं व्याकुर्वन्नेव द्वेष्यत्वभावनायां यत् प्रयोजनं प्रागुक्तम्, तदेव माभेरिति मन्त्रभागस्यापि तत्पर्य मिति व्याचष्टे— "माभेर्मा संविक्था इति, मा त्वं भैषीर्मा संविक्था अमुष्मा अहं प्रहरामि, न तुभ्य मित्येवैतदाहेति। 'एतत्' माभेरिति मन्त्रवाक्यम्। ऊर्क्-शब्दस्यान्ननामसु[2] पाठात् अत्रान्नसारो रसो विवक्षित इति व्याचष्टे— "रसं धत्स्वेत्येवैतदाहेति। "धिषणे वीड्वी"-इतिमन्त्रभागस्य धिषणफलके अर्थ इति केषाञ्चिदाचार्याणां मतम्; तन्मतं निराकर्त्तु मुदाहरति— "इमे एवैतत् फलके आहुरित्थु हैक आहुरित्यादिना। प्रथमम् 'आहुः'-इतिशब्दस्य पदानि 'धिषणे'-इत्यादीनि। 'एतत्' एतस्मिन् वाक्ये 'इमे' सोमाधारभूते 'फलके' ब्रुवते इत्यर्थः। 'इति' अमु मर्थ मेकशाखिन आहुः। 'नु' प्रश्ने। 'किं' 'तत्र' त्वदभिमते, विद्यत इति शेषः। विद्यत एवेत्याशङ्क्याह— "योऽप्येते फलके भिन्द्यादिति। यद्येते च द्वे स्यातां, तर्हि कदाचिदपि भग्ने स्याताम्, अतः किन्नु तत्रेत्यर्थः॥

इदानीं स्वाभिमत मर्थं सोपपत्तिकं दर्शयति— "इमे ह वै द्यावापृथिवी इत्यादिना। अत्र धिषणे अनूद्येते, तयोर्दार्ढ्य माशास्यते, तच्च सति शैथिल्यकारणे उपपद्यते; अतस्तत्प्रसक्ति माह— "एतस्माद् वज्रादुद्यतात् संरेजेत इति। वज्रवद्धिंसकात् अभिषवायोद्यतशस्त्रसकाशात् 'इमे द्यावापृथिवी' 'संरेजेते' कम्पेते। 'द्यावा-

---

१— वा० सं० ६. ३५. १। २— निघ० २. ७. १५।

पृथिवीभ्याम्' इति चतुर्थीद्विवचनम्। 'एतत्' इदानीम्, आभ्यामर्थाय 'एनं' यज्ञं 'शमयति' शान्तं करोति, यथासौ उत्क्षेकावचेपाभ्यां द्यावापृथिव्यौ न हिनस्ति तथा करोति। 'तथा' सति, "धिषणे विड्वि वीळयेथाम्"-इत्यभिधाने सति 'शान्तः' असौ यज्ञ इति 'इमे' द्यावापृथिव्यौ 'न हिनस्ति', प्रोत्साहनेन तयोर्दृढत्वस्य प्राप्तत्वादिति भावः। गत ऊर्ग्यर्थवादः। "पाप्मा हतो न सोम इति तदस्य सर्वं पाप्मानं हन्तीत्यार्थवादिकं फलं मा मा सन्ताप्त मिति च देवताभूतस्य सोमस्याभिषवरूपो वधोऽध्वर्य्योरेव सम्भावित इति तस्यैवेति मन्तव्यम् ॥ १८ ॥

यदुक्तं कात्यायनेन— "एवं त्रिरभिषुणोति[१]"-इति, तदिदं त्रित्वं विधाय सम्भरणनिग्राभोपायनयोः सङ्ख्यया सह समुच्चित्य प्रशंसति— "स वै त्रिरभिषुणोतीत्यादिना। 'त्रिः सम्भरति' त्रिः सन्निषीदयति। निग्राभोपायनम् प्रागपादित्यादिमन्त्रजपः; तत् चतुर्वारं कर्त्तव्यम्। 'तत्' मिलित्वा 'दश' सम्पद्यन्ते; विराट्छन्दसश्च दशाक्षराणि; सोमोऽपि विराट्सम्बन्धी; "पञ्च कृत्वो यजुषा मिमीते, पञ्चकृत्वस्तूष्णी मिति दशसङ्ख्यया मितत्वात्; अतो वैराजस्य सोमस्य समत्वाय अभिषवादिगता दशसङ्ख्या प्रशस्ता। ततोऽत्र सम्भरणत्रित्वस्य निग्राभोपायनचतुष्टयस्य च विधिर्निर्द्देशादेव द्रष्टव्यः[२] ॥ १९ ॥

---

१— का० औ० सू० ६. ४. १६ स्व।

२— त्रिरभिषवे प्रहारसङ्ख्या का० औ० ६. ४. १७—१६ सूत्रेषु द्रष्टव्या, इहापि चतुर्थकाण्डे (१. १. १४, १६.) किञ्चिद् वक्ष्यति।

अथ निग्राभोपायन मनूद्य प्रशंसति— "अथ यन्निग्राभ मुपैति, यत्र वा एषो ऽग्रे देवानां हविर्बभूवेत्यादिना । "इमा दिशो-ऽभिदध्याविति । अभिध्यानं मैथुनविषयं ध्यानम् । अभिध्यानप्रकार माह— "आभिर्दिग्भिरिति । 'मिथुनेन' तद्योगेन, 'प्रियेण' दिशा मभिमतेन, 'धाम्ना' मम शरीरेण 'संस्पृशेयेति' । यद्वा, 'दिग्भिः मिथुनेन प्रियेण धाम्ना' दिशां मिथुनार्हेण प्रियेण धाम्ना शरी-रेण संस्पृशेयेति व्याख्येयम् । एवङ्कामयमानस्य सोमस्य निग्राभो-पायनेन 'देवाः' 'आभिर्दिग्भिः' सह 'मिथुनेन प्रियेण धाम्ना' 'समस्पर्शयन्' संयोग मकारयन्, निग्राभ्योपायन मेव संस्पर्श इत्यर्थः । "तयो एवैन मिति, दार्ष्टान्तिकं वाक्यम् दृष्टान्तवद् व्याख्येयम् । यद्वा, पूर्वत्र सञ्ज्ञाविधिः सः, "यन्निग्राभ मित्यत्र तु यच्छब्द मुपेत्त्य विधिरवगन्तव्यः ॥ २० ॥

तत्र मन्त्रं विधाय प्रशंसति— "स उपैति[1] प्रागपागित्या-दिना[2] । अपाञ्चतीत्यपाक्, प्रतीची दिक् । "अधरागिति, उदक्-प्रतियोगिनी दक्षिणा दिगुच्यते[3] ॥ २१ ॥ ॥ २२ ॥

अथ सोमस्याभिषवसम्भरणादिप्रसङ्गाद् यज्ञनामनिर्वचनं दर्श-यति— "अथ यस्माद् यज्ञो नामेति । 'यस्मात्' प्रवृत्तिनिमित्तात् यज्ञस्य 'यज्ञः' 'इति' 'नाम' अभूत् । तस्योत्तरम्— "घ्नन्तीत्यादि । अभिषवेन हतम् 'एनं' सोमं 'तन्वते' सम्भरणग्रहणहोमादिना

---

१— का० श्रौ० सू० ९. ४. २० । २— वा० सं० ६. ३६. १ ।

३— पा० सू० ५. ३. ३० द्रष्टव्यम् ।

विस्तारयन्तीति यावत्, तदेव तस्य पुनरुत्पादनम्। 'सः' सोमः 'तायमानः' सन् 'जायते', अतो यत् परम्परया आकृतिभावं गच्छन् 'जायते' पुनः पुनः सम्भवति; अतो यन् जायत इति 'यन्जः'। अतो वस्तुतो 'यन्जः'-इति तस्य 'नाम', 'तद् यज्ञ इति' परोक्षेण व्यवहरति[1] ॥ २३ ॥

उक्तार्थसंवादत्वेन सोमप्रार्थनारूपं मन्त्रसंवादं दर्शयति— "तद्वैता मपि वाच मुवाद, त्व मङ्ग प्रशंसिष इति[2]। 'तत्र' तस्मिन्नभिषवकाले 'एतां' प्रार्थनारूपां त्वमङ्गेति 'वाचम्' 'उवाद' उक्तवान्। हे 'शविष्ठ!' अतिशयेन बलवन्! 'अङ्ग' हे इन्द्र! 'देवः' 'त्वं' 'मर्त्यं' मरणधर्माणं मां सोमं 'प्रशंसिषः' प्रशस्तं कुरु, आकृत्यात्मना विस्तारयन् देवात्मना पुनरुत्पादयेत्यर्थः। "शंसु स्तुतौ[3]", "सिब्बहुलं लेटि"-इति[4] सिप्, आर्द्धधातुकत्वादिट्,[5] "इतश्च लोपः,"-इतीकारलोपः[6], "लेटोऽडाटौ"-इत्यडागमः[7]। अस्त्वन्यो देवः किमिन्द्रप्रार्थनयेति तत्राह— "हे 'मघवन्!' तत् 'त्वत्तः 'अन्यः' 'मर्डिता' सुखयिता 'न अस्ति', यत एवम् अतः 'ते' तुभ्यं

---

१— "यज्ञः कस्मात्? प्रख्यातं यजतिकर्मेति नैरुक्ताः, याच्ञो भवतीति वा, यजुरुन्नो भवतीति वा, बहुकृष्णाजिन इत्यौपमन्यवः, यजूंष्येनं नयन्तीति वा"—इति निरु० ३. ४. २।

२— वा० सं० ६. ३७. १।

३— धा० प० ७२८ धा०।

४— पा० सू० ३. १. ३४।

५ — पा० सू० ७. २. ३५।

६— पा० सू० ३. ४. ९७।

७— पा० सू० ३. ४. ९४।

'वचः' प्रशंसाप्रार्थनारूपम् 'ब्रवीमि'। अस्य मन्त्रस्य तात्पर्य माह— "मर्त्यो हैवैतद् भवन्नुवाच,[1] त्व मेवैतो जनयितासि नान्यस्त्वदिति। स्पष्टोऽर्थः ॥ २४ ॥

अथ निग्राभ्याभ्योऽद्भ्यो होतृचमसेन ग्रहणम्, तत् प्रशंसति— "अथ निग्राभ्याभ्यो ग्रहान् विगृह्णत इति[2]। 'निग्राभ्याः' अभिषव-समये सोमोपसर्गायोपयुक्ता आपः। कथं ताभ्यो ग्रहण मिति पर-म्परयेति दर्शयति— "आपो ह वै वृत्रं जघ्नुरित्यादिना। वीर्यवत्यः स्यन्दमाना आपः, ताभ्यो वसतीवरीणां ग्रहणम्, ताभ्यश्च होतृ-चमस-निग्राभ्याणां ग्रहणम्, निग्राभ्याभ्यः सकाशात् सोमरसद्वारा ग्रहान् विगृह्णते। तदा 'तेनैव' वृत्रवधप्रयुक्तसामर्थ्येनैव 'एतत्' एतेन निग्राभ्याभ्यो 'ग्रहान् विगृह्णते'। तच्च ग्रहणं होतृचमससका-शाद् भवति; होतृचमसं दशापवित्रस्योपरि धारयित्वा, तत्र सोम-रस मासिच्य, धारां सम्पाद्य ग्रहणात्। 'योषा वै' स्त्री खलु 'ऋक्', सैव 'होता'; ऋचः शस्त्राद्यवयवरूपायाः होतृप्रयोज्यत्वात् अभेदविवक्षया ऋग्घोतेति सामानाधिकरण्यम्। "तदेन मेतस्या इति। 'एतस्यै योषायै' षष्ठ्यर्थे चतुर्थी[3]। एतस्या योषायाः ऋग्घोतृ-लक्षणायाः सम्बन्धितया 'एनं' सोमम् 'एतद्' एतेन होतृचमसाद् ग्रहणेन 'प्रजनयति' पुनरुत्पादयति। "तस्माद्धोतृचमसादिति।

---

१— 'भगवन्नुवाच(!)'–इति च।

२— का० श्रौ० सू० ९. ४. २०, २१, २२।

३— पा० २. ३. ६२ सू० वा० १।

